( ग्रन्थरत्नाङ्कः ३० )

# श्रीतत्त्वार्थदीपः।

श्रीमद्वेदव्याससूत्रितशुद्धाद्वैतसिद्धान्तप्रवर्तकाचार्य-

चूडामणिश्रीमद्वल्लभदीक्षितप्रकटितः

स्वकृततत्त्वार्थदीपप्रकाशसहितः

## निबन्ध इति प्रसिद्धः

प्राचीनग्रन्थप्रसिद्धिकर्त्रा

यदुवंश्येन लक्ष्मीदासात्मजगोवर्द्धनदासेन

मथुरावास्तव्यभट्टरमेशशास्त्रितनुजशीघ्रकविनन्दकिशोरशास्त्रितः संशोध्य

मोहमय्याम्

'निर्णयसागर' मुद्रालये मुद्रयित्वा प्रसिद्धिं नीतः।

अस्य पुस्तकस्य सर्वेऽधिकाराः प्रसिद्धिकर्त्रा स्वाधीना रक्षिताः।

विक्रमाब्दाः १९६१, शालिवाहनशकाब्दाः १८२६, क्रिस्ताब्दाः १९०४

॥ श्रीः ॥

# गोवर्धनदासलक्ष्मीदासप्राचीनग्रंथरत्नमाला.

---

| रत्नांक. | ग्रन्थनाम | न्योछावर रु आ | डा ह आ |
|---|---|---|---|
| १ | षट्स्वर्परकाव्य, भा मा पंडितश्री गट्टूलालजीकृत टीकासहित संस्कृत (द्वितीयावृत्ति) | | |
| २ | स्तोत्रकलाप भाग १ लो, संस्कृत (सांप्रत दुष्प्राप्य) | ॥= | ɟ॥ |
| ३ | अद्भुतरामायण, श्रीकृष्णकर्णामृतसहित संस्कृत | ० | ० |
| ४ | श्रीकृष्णचरित्रपूर्णोदयेन्दुनाटक प्राकृत महाराष्ट्रभाषा (सांप्रत दुष्प्राप्य) | १ | ɟ=॥ |
| ५ | स्तोत्रकलाप भाग २ रो, संस्कृत (सांप्रत दुष्प्राप्य) | ० | ० |
| ६ | श्रीरामदासचरित्राची बखर, प्राकृत महाराष्ट्रभाषा (सांप्रत दुष्प्राप्य) | ० | ० |
| ७ | महीपतिकृत संतविजयग्रंथ, प्राकृत महाराष्ट्रभाषा ओवीबद्ध | ० | ० |
| ८ | हिंडिंबवधाख्यान, प्राकृत महाराष्ट्रभाषा कवितावद्ध (सांप्रत दुष्प्राप्य) | ३ | ɟ॥ |
| ९ | महाअग्निगृहशतक, प्राकृत गुजरातीभाषा कवितावद्ध (सांप्रत शिलक नथी) | ० | ० |
| १० | आनन्दरामायण, मूल, संस्कृत श्लोकसंख्या १७००० का | ० | ० |
| ११ | भ्रान्तिवारणदर्पण, हिंदीभाषा (दयानन्दमतखंडन) | ५ | ॥ |
| १२ | विठ्ठलपचरत्न संस्कृत नित्यपाठाय गुटका | १ | ɟ॥ |
| १३ | शिवाबावनी और छत्रसालदशक हिंदुस्थानी (कविभूषणकृत) | १ | ɟ॥ |
| १४ | भ्रमरगीत, व्रजभाषा कवितानिवद्ध, श्रीनंददासजीप्रणीत | १ | ɟ॥ |
| १५ | गोपीगीत, संस्कृत महाराष्ट्र गुजरभाषामें समश्लोकी | ɟ≡ | ɟ॥ |
| १६ | स्वप्न तथा आयुष्यनिर्णय, गुजराती टीकासाथे | ɟ= | ɟ॥ |
| १७ | पल्लीपतन तथा शरटारोहणफलनिर्णय, गुजराती टीकासाथे | १ | ɟ॥ |
| १८ | बृहत्स्तोत्रसरित्सागर भाग १ ला, संस्कृत (१० पचरत्नोंका संग्रह) | १ | ɟ॥ |
| १९ | विसनबावनी, हिंदीभाषा कवितानिवद्ध वदान्ग्रंथ | १ | ɟ॥ |
| २० | बृहत्स्तोत्रसरित्सागर भाग १ ला संस्कृत (आवश्यकस्तोत्रा २३७ ग्रंथसंग्रह) | ɟ= | ɟ॥ |
| २१ | कृष्णाभिसारकाव्य तथा बालमुकुंदस्तोत्र, सटिप्पण संस्कृत | ३ | ɟ≡॥ |
| २२ | चोरासी वैष्णवनकी वार्ता विविधविषयान्वित व्रजभाषा | १ | ɟ॥ |
| २३ | श्रीव्याससूत्रसहित पुष्टिमार्गीय ३३ ग्रंथको गुटका, संस्कृत सूक्ष्माक्षरमें | १ | ≡ |
| २४ | आर्द्राच (सूतक) निर्णय निर्भयरामभट्टकृत व्रज तथा गुजराती भाषाटीका साथे | १ | ɟ॥ |
| २५ | शिवराजभूषणकाव्य, हिंदीभाषानिवद्ध अलंकारग्रंथ कविभूषणकृत | ॥ | ɟ- |
| २६ | रत्नाख्यान तथा मूलपुरुष, गो० श्रीहरिरायजीकृत-टीका जरथा साथ गुजराती टीकासाथे | १ | ɟ- |
| २७ | यमाख्यान तथा मूलपुरुष, गो० श्रीद्वारकेशजीकृत घोळ गरबा साथे बालबोध लिपिमां | ॥ | ɟ- |
| २८ | श्रीवल्लभाख्यानजन्मचरित्र, गुजराती भाषामां चित्रसाथे | ॥ | ɟ- |
| २९ | द्रव्यशुद्धि, गो० श्रीपुरुषोत्तमजीमहाराजकृत संस्कृत मूल और व्रजभाषा तथा गुजराती भाषानी टीकासाथे | १ | ɟ॥ |
| ३० | श्रीमद्वल्लभाचार्यजीकृत श्रीतत्त्वार्थदीप (निबन्ध) | १॥ | ɟ= |
| | उप ( लिए ... ग्रंथ पंडित श्रीगट्टूलालजी धर्मपुस्तकालय ' मुम्बई, मंदिरमें मिल है | ४ | । |

# ( निबन्धभूमिका )

अहो महच्चित्रं यदतिक्रान्तेऽप्यल्प एव काले संप्रदायेऽत्र समूलमिव वैदुष्यं तिरोहितमिव । प्रत्याययन्ति तदेतद्भिन्नभिन्नान्यदृष्टानि विलक्षणान्यशुद्धपाठान्वितानि पुस्तकान्येव न च तान्यल्पमतिना केवलं स्वप्रतिभास्फुरितेन समीकर्त्तुं शक्यानि पारम्परिकगुरुमुखतः सकलग्रन्थाध्ययनस्य सुचिरतः समुत्सृष्टत्वात् । अतो निसर्गत एव निखिलशास्त्रानुस्यूतत्वादतिगहनानामाचार्यवाचां रहस्यमजानन्मितमतिः कोनाम जनस्तान्यस्खलितं शोधयितुं झम्पामपि सम्पादयेत् । भुवमधिवसत्सु श्रीभारतमार्त्तण्डेषु कैश्चित्प्रमाद्यद्भिरपरैरसूयातिमिरान्धैरन्यैरनभिज्ञैरितरैः पण्डितमानिभिरनिशं संचारार्होऽपि पन्था न कैश्चिदकण्टयितुं कामित इति महती वेदना नः ॥ इतोऽप्यधिकं तु ते दुःखाकुर्वन्ति किल कतिपये साम्प्रदायिककालाक्षरिका य एवमतिदुरवगममाचार्यवाचां हृदयमविदन्तोऽप्यनभिज्ञभावुकमण्डलमधिगम्य विभक्त्यर्थमात्रविवरणेन स्वं महत्तमयन्तः सद्भक्तिभावभावनीयेऽत्र संप्रदायरहस्ये किं पारम्परिकगुरूपदेशैः किमुवा पाण्डित्येनेत्यादिविषविषमया स्ववाचा विद्वत्सु तदीयविश्वासमुन्मूलयन्तः साम्प्रदायिकमवशिष्टमपि कंचिदुन्मेषं न सहन्त इव । इत्थमिदानीं साम्प्रदायिकवैदुष्यस्य नितान्तमन्तर्हितत्वात्कश्चिदभिलापुकश्चिकीर्षन्नपि निराविलतां ग्रन्थानां निजमभिलषितं पूरयितुं कथं नाम प्रभवेत् । एवं वस्तुस्थितावपि कश्चन भाटियाख्यक्षत्रियकुलकलशजलधिकलानिधेर्निजवैभवतुलितधनदनिधेर्मुम्बापुरीवास्तव्यात्सकलसद्गुणस्तव्याल्लक्ष्मीदासश्रेष्ठिमहाशयात्प्रसूतः स्वशैशवे प्रभूतसमनुभूतसर्वविधसम्पत्तिसौख्योऽपि कालेन दुरदृष्टदृष्टिदष्टो विलीनपीनसर्वपूर्वविभवोऽभिनवश्चारुदत्त इव सन्तमसुञ्चन् पन्थानमतिक्रान्तनव्यभव्ययुवभावोऽपि निजनन्दनवदनारविन्ददर्शनसुखमलभमानः केवलं सहधर्मिणीसहचरः सुखं स्वधर्ममनुतिष्ठन्निव सन्मुम्बापुर्यां जीर्णोद्धारमतिपुण्यं कृत्यं मन्यमानः सुगृहीतनामधेयोऽस्मदीयमकृत्रिममित्रं गोवर्द्धनदासवर्मा श्रेष्ठी संप्रति तिरोहितान् भृशमुपयोगिनः श्रीवल्लभाचार्यसंप्रदायग्रन्थान् विपुलेन स्वव्ययेन मुद्रयन् सुजनश्लाघनीयाया यशःश्रियो भाजनमभूदिति विदितमेव बहूनाम् ॥ नाहमेकमपि सम्प्रदायग्रन्थमवशेषयिष्याम्यङ्कनादिति सुदृढधृतोत्साहः स एष शोधनकर्मणि बहुशो विदुषः सन्निधाप्य प्राचिरुपपदात्मनः काञ्चिदतिशायिताम् । संप्रति तु तेन श्रीवल्लभाचार्यकृततत्त्वार्थदीपः सप्रकाशो मुद्रयितुमारेभे नियुक्तोऽहमस्य च शोधनकर्मणि । अथ प्रवर्त्तमानेप्यस्मिन् सार्थे तत्कालप्रवृत्तातिकरालकालरूपसान्निपातिकग्रन्थिज्वरेण पलायमानेषु नगरजनेषु मुद्रालयकार्यमपि कथञ्चन मन्दमन्दं निरवाह्यत । अत्रान्तरे शकस्यास्य षट्पञ्चाशवत्सरे पूर्वोदितसद्गुणगणः स एष श्रेष्ठी गोवर्द्धनदासवर्मा सकलानप्यस्मान् सहनिजमनोरथैरपहाय प्रणयीनभूत्व परलोकस्य । अथ भवति बहुतमे गणरात्रे गणनापात्रे सहजमित्रमस्य प्रशस्यचरितोऽसद्गुरूणामन्तेवासी विट्ठलदासगुप्तः सकलं स्वसुहृत्कार्यं स्वसात्कुर्वन्मामप्ययुयुजदिह भूयोपि शोधनकर्मणि, मया तु मिथः संवादाय चत्वारि पुस्तकानि संगृह्य शोधितः सन्दर्भोऽयम् । प्राप्तपुस्तकेष्वाद्यं मूलमात्रमतिशुद्धं नन्दपड्रसविधु १६६९ संवल्लिखितं श्रीमद्गोस्वामिश्रीदेवकीनन्दनाचार्याणां तदाश्रितात्सत्सुहृद्वरश्रीशङ्करदयालुशास्त्रिहस्ततोऽधिगतम् । द्वितीयं सप्रकाशमति

केषांचित्प्रकरणानां विवरणानि च विहितवद्भिः श्रीकल्याणरायैः प्रसिद्धतमश्रीहरिरायाणां जनकैः प्रणीतातिसूक्ष्मा काचित्ककठिनस्थलटिप्पणीत्येकम् ॥ सप्तसु श्रीप्रभुचरणपुत्रेषु तार्तीयीकश्रीबालकृष्णतः पुरुषगणनया पञ्चमैस्तद्वंश्यैर्नवलक्षपरिमितश्लोकप्रौढसन्दर्भसमूहकारैर्भारतवर्षे भूयः कृतदिग्विजयैर्महापण्डितैः श्रीपुरुषोत्तमचरणैः प्रणीतः स्वपितृश्रीपीताम्बरकृतितया प्रसिद्धिं नीतः शास्त्रार्थगहनतया कठिनो विषमपदविवृतिरूप आवरणभङ्ग इति द्वितीयम् ॥ श्रीपुरुषोत्तमचरणानां चरित्रमवसरे वक्ष्यते। श्रीप्रभुचरणसमये तैलङ्गदेशादिहागतयोस्तत्परिग्रहश्रीरुक्मिण्याः सोदरयोर्गोविन्दभट्टश्रीकृष्णभट्टयोर्मध्ये द्वितीयस्य वंश्यैर्भागरोदीत्युपनामकैर्मधुसूदनभट्टपुत्रैर्लालूभट्टेतिनाम्ना प्रसिद्धैः श्रीबालकृष्णभट्टैर्जयपुरमहाराजश्रीजयसिंहदेवसमये तत्प्रीतये प्रमेयरत्नार्णवादिग्रन्थनिर्मातृभिः कृता निबन्धयोजनेति तृतीयम् ॥ तत्राद्यायाः टिप्पण्याः पुस्तकद्वयं मध्ये मध्ये त्रुटितं मन्निकटेऽस्ति तथापि पुस्तकद्वयसंमेलने प्रथमं प्रकरणं पूर्णमुपलब्धमिति तदत्रैव तत्त्वदीपप्रकाशादधो मुद्रयिष्यते ॥ इमे श्रीकल्याणरायास्तु विक्रमार्कशकस्य सप्तदशे शतके त्रयोविंशे (१६२३) वर्षे मार्गशीर्षकृष्णसप्तम्यां प्रोद्भूताः। सति पुस्तकान्तरसाहाय्येऽपि सा मुद्रयिष्यते। आवरणभङ्गस्तु विस्तीर्णः कठिनश्चेति तज्ज्ञापनोपयोगि सूक्ष्मव्याख्यानं विधाय यथावसरं पुरस्तान्मुद्रितः स्यात् ॥ योजनायास्त्वेकमेव पुस्तकं मदन्यर्णेऽस्ति तदपि वर्णचणपाणिप्रमादपूरितमिति तत्पुस्तकान्तरोपलम्भाय प्रयत्यते। यदा तदासाद्येत तदा सापि मुदा मुद्रणादुन्मुद्रिता स्याल्लोकलोचनगोचरीभावाय ॥ क्वचित्क्वचिन्निबन्धैकदेशेष्वेव केषांचिल्लघुव्याख्यानानि प्रकीर्णकानि सन्ति। तेष्वावश्यकान्येव यथोपलम्भं मुद्रयिष्यन्ते। विदितमेवैतद्विदुषां यथा सम्प्रति संप्रतीतिविरहिणां प्रारब्धवशात्परंपराप्राप्तप्रचुरपुस्तकप्रचयानां स्वयं तान्यनुपयुञ्जानानां परेभ्यश्च प्रेक्षणार्थमप्यददानानां बहूनां पुस्तककीनाशानां हस्तपतितानि प्रशस्तान्यपि पुस्तकानि यक्षवित्ततामापद्यामन्दमुन्दुरूणां घुणानां कीटकान्तराणां चोपभोगभाजनानि भवन्तीति ॥ परिचितचराणामपि ग्रन्थानामशङ्कमङ्कनं तु प्रतिद्वयमेलनमन्तराक्षरानुपूर्वीषु संतोषाभावान्नोचितमिति संमतं मतिमताम् ॥ अतोऽङ्कनकर्मीकरिष्यमाणनिबन्धार्थनिर्णयार्थमेकं नूतनं नातिविस्तीर्णं सत्स्नेहभाजनं नाम व्याख्यानं योजनावरणभङ्गयोः स्थितान्गुरुपरम्परातः श्रुतान्स्वबुद्धौ स्वाचार्यैर्दर्शितांश्चाशयानसंशयान्संकलय्य कृतं निवेद्यते पुरतः प्रेक्षावताम् ॥ इह मूलविवरणं च तथा सरलतरसरस्वत्या करिष्यते यथा दुर्गमस्तत्स्थलावरणभङ्गोऽप्येतच्चिन्तनेन सुलभाभिप्रायः प्रायः स्यात् ॥ मम किल स्वप्रौढिप्रख्यापनाय नायमुद्योगः किंतु स्वाचार्यादीनां प्राचां वाचां परिचरणाभिलाषपूरणायैवेति विदांकुर्वन्तु सुधियः ॥ किंच भोभो निर्मत्सरसरलसरससहृदयाः सहृदयाः सहजदयासमुदयाच्छुभवन्तो भवन्तो मम प्रमादक्षमार्थं सन्त्येवासकृदभ्यर्थिता बहुत्र मया ॥ यथा।

> मयान्धभावाच्छ्रुतिमात्रवेदिना करैः परेषां निखिलं विलेखितम्।
> नैकान्तिकी मानुषमेमुषी च तन्मम क्षमध्वं स्खलितानि पण्डिताः ॥

अपिच।

> सरसतपानिनो हंसा नूनं नालीकवल्लभाः। गुणं गृह्णीत मा दोषं नीरक्षीरविवेकिनः ॥

इति शुभम्।

---

# अथ सप्रकाशतत्त्वदीपस्य सूचिकापत्रम् ।

॥ श्रीः ॥

॥ श्रीकृष्णाय नमः ॥

# अथ तत्त्वार्थदीपः प्रारभ्यते.

तत्र

## प्रथमं शास्त्रार्थप्रकरणम्.

नमो भगवते तस्मै कृष्णायाऽद्भुतकर्मणे ॥
रूपनामविभेदेन जगत् क्रीडति यो यतः ॥ १ ॥

॥ अथ तत्त्वार्थदीपप्रकाशः ॥

सर्वोद्धारप्रयत्नात्मा कृष्णः प्रादुर्बभूव ह ॥ तथात्वं येन संसिध्येत्तदर्थं व्यास उक्तवान् १
श्रीभागवतमत्यंतं सर्वेषां सुखदायकम् ॥ तस्याऽपि तत्त्वं येनैव सिध्येदिति विचार्य हि २
अग्निश्चकार तत्त्वार्थदीपं भागवते महत् ॥ तच्चापि येन संसिध्येद्व्याख्यानं तन्निरूप्यते ३
श्रीभागवततत्त्वार्थं प्रकटीकरिष्यन् प्रथमं शास्त्रार्थोपनिबंधनलक्षणं मंगलमाचरति **नम इति** ॥ भगवति जीवैर्नमनमेव कर्तव्यं नाधिकं शक्यमिति सिद्धांतः ॥ "किमासनं ते गरुडासनाय किं भूषणं कौस्तुभभूषणाय ॥ लक्ष्मीकलत्राय किमस्ति देयं वागीश किं ते वचनीयमस्ति" इत्यादिवाक्यैः परमकाष्ठापन्नं वस्तु नमस्यत्वेन निर्दिशति ॥ **भगवत इति** ॥ पुरुषोत्तमायेत्यर्थः ॥ तत्सिद्ध्यै लोकवेदप्रसिद्धिमाह ॥ **तस्मा इति** ॥ मतभेदेन तस्याऽन्यथाकल्पनाव्यावृत्त्यर्थमाह ॥ **कृष्णायेति** ॥ स एव परमकाष्ठापन्नः कदाचिज्जगदुद्धारणार्थमखंडः पूर्ण एव प्रादुर्भूतः कृष्ण इत्युच्यते ॥ ननु पूर्वं साधनानि सिद्धान्येव सर्वत्र तत्रानधिकारेण साधनाभावे भगवानप्यवतीर्य किं करिष्यतीत्याशंकायामाह ॥ **अद्भुतकर्मण इति** ॥ भगवतोऽद्भुतकर्मत्वमग्रे व्युत्पाद्यम् ॥ असाधनं साधनं करोतीत्यादि ॥ एवं साक्षाद्भगवत्त्वे हेतुमुक्त्वा तस्य लीलामाह ॥ **रूपेति** ॥ रूपनामविभेदेन यः क्रीडति रूपनामविभेदेन यो जगत् रूपनामविभेदेन यतो जगदिति ॥ अनेन क्रीडायां स्वातंत्र्यमुक्तम् ॥ निर्लेपत्वायाह ॥ एतादृशं जगद्यत इति ॥ एवं ज्ञानेन मुच्यंत इति संक्षेपः ॥ १ ॥

त० दी०— सात्त्विका भगवद्भक्ता ये मुक्तावधिकारिणः ॥
भवांतसंभवा दैवात्तेषामर्थे निरूप्यते ॥ २ ॥

त० प्र०— विस्तरेण वक्तुं प्रथमतोऽधिकारिणमाह ॥ **सात्त्विका इति** ॥ स्वभावप्र-

कृत्यपेक्षया अधिकं विहितमलौकिकं ये कुर्वंति ते सात्त्विकाः ॥ तत्रापि भगवत्सेवकाः सेवापराः ॥ तत्रापि ये निष्कामास्त एव मुक्तावधिकारिणः ॥ तत्रापीश्वरेच्छया अंतिमजन्मनि जाताः शरीरं गृहीतवंतः ॥ तेषां यथांतिमत्वं सिध्यति तथोपायो निरूप्यत इत्यर्थः ॥ वक्ता स्वस्य तादृशज्ञानप्राप्तौ प्रकारमाह ॥ २ ॥

त० दी०— भगवच्छास्त्रमाज्ञाय विचार्य च पुनःपुनः ॥
यदुक्तं हरिणा पश्चात्संदेहविनिवृत्तये ॥ ३ ॥

त० प्र०— भगवच्छास्त्रमाज्ञायेति ॥ अन्यथाऽनाप्तत्वं स्यात् ॥ भगवच्छास्त्रं भागवतं गीता पंचरात्रं चेति ॥ तस्य सर्वतो ज्ञानं भगवत्कृपादिनेति शेषः ॥ तथाप्यापाततः प्रतिपन्नं न प्रमाणमिति विचारमाह ॥ पुनः पुनर्निश्चयानंतरमपि ॥ ननु शतशोपि विचारितं जीवबुद्ध्या अप्रमाणं कदाचिद्भवतीति तदर्थमाह ॥ यदुक्तमिति ॥ हरिणा सर्वदुःखहर्त्रा श्रीजगन्नाथेन पुरुषोत्तमस्थितेन मोहकसर्वशास्त्रोत्पत्त्यनंतरं यन्निर्धारकवाक्यमुक्तं तदपि ज्ञात्वेति ॥ ३ ॥

त०दी०—एकं शास्त्रं देवकीपुत्रगीतमेको देवो देवकीपुत्र एव ॥
मंत्रोऽप्येकस्तस्य नामानि यानि कर्माप्येकं तस्य देवस्य सेवा ॥४॥

त० प्र०—तदेवाह ॥ एकं शास्त्रमिति ॥ अत्राऽऽख्यायिका पारंपर्योदेवाऽवगंतव्या देवकीपुत्रेण गीतं गीता ॥ गीतायां भगवद्वाक्यान्येव शास्त्रमित्यर्थः ॥ वेदानामपि तदुक्तप्रकारेणैवार्थनिर्णयः ॥ उपास्यनिर्धारमाह ॥ एको देव इति ॥ मूलभूतोयमित्यर्थः ॥ सर्वदा स्मरणार्थं साधनमाह ॥ मंत्रोप्येक इति ॥ कर्तव्यमाह ॥ तस्येति ॥ न मनुष्यत्वेन ज्ञातव्य इति ॥ देव इति सेवैव कर्तव्या ॥ शास्त्रमवगत्य मनोवाग्देहैः कृष्णः सेव्य इत्यर्थः ॥ ४ ॥

त० दी०— इत्याकलय्य सततं शास्त्रार्थः सर्वनिर्णयः ॥
श्रीभागवतरूपं च त्रयं वच्मि यथामति ॥ ५ ॥

त० प्र०—एवं स्वयं ज्ञात्वा लोकज्ञापनार्थं शास्त्रं कथयन् बुद्धिसौकर्यार्थं प्रकरणत्रयमाह ॥ इत्याकलय्येति ॥ सततमिति मध्ये विरोधिज्ञानाभावः ॥ शास्त्रार्थो गीतार्थः ॥ सर्वस्याऽपि ज्ञानादेर्निर्णयो द्वितीयः ॥ असंभावनाविपरीतभावनानिवृत्त्यर्थं द्वितीयं प्रकरणम् ॥ शास्त्रार्थस्य संक्षेपरूपत्वाद्विस्तारार्थं भागवतरूपं तृतीयं प्रकरणम् ॥ यत्र भागवतं रूप्यते ॥ चकारान्मीमांसाद्वयभाष्यं प्रकरणानि भागवतटीका च गृहीता ॥ त्रयमेतदुपदेशान्यायेन कथयामि ॥ ५ ॥

त० दी०— वेदांते च स्मृतौ ब्रह्मलिंगं भागवते तथा ॥
ब्रह्मेति परमात्मेति भगवानिति शब्द्यते ॥
त्रितये त्रितयं वाच्यं क्रमेणैव मयाऽत्र हि ॥ ६ ॥

त० प्र०— परिभाषामाह ॥ वेदांतेति सार्धेन ॥ निर्गलितवस्तुज्ञापकं लिंगं ब्रह्मेत्यादिपदं तत्र सिद्धं मयापि परमकाष्ठापन्नवस्तुबोधार्थं तत्तत्प्रकरणे वक्तव्यमित्यर्थः॥६॥

त० दी०— वेदाः श्रीकृष्णवाक्यानि व्याससूत्राणि चैव हि ॥
समाधिभाषा व्यासस्य प्रमाणं तच्चतुष्टयम् ॥ ७ ॥

त०प्र०— अस्मिन् शास्त्रे परिभाषामुक्त्वा प्रमाणमाह॥ वेदा इति॥ शब्द एव प्रमाणम् ॥ तत्राप्यलौकिकज्ञापकमेव तत्त्वतः सिद्धप्रमाणभावं प्रमाणम् ॥ वेदाः सर्व एव कांडद्वयस्थिता अर्थवादादिरूपा अपि॥ स्मृतित्वेन कृष्णवाक्यानि वेदत्वेऽपि पृथगुक्तानि ॥ व्याससूत्राणि चकाराज्जैमिनिसूत्राणि च॥एवकारेण व्यासूत्राविरोधेनैव तदंगीकरणम् ॥ हि युक्तश्चायमर्थ उपजीव्यत्वात्॥ व्यासस्य समाधिभाषा भागवतम्॥ तत्रापि यन्न लौकिकरीत्या वदति ॥यथा "अथोपस्युपवृत्तायाम्" इत्यादिनापि॥ परमतरीत्या ॥ "श्रुतं द्वैपायनमुखात्" इत्यादि ॥ यावत्समाधौ स्वयमनुभूय निरूपितं सा समाधिभाषा ॥ एतच्चतुष्टयमेकवाक्यतापन्नं प्रमाजनकमित्यर्थः ॥ ७ ॥

त० दी०— उत्तरं पूर्वसंदेहवारकं परिकीर्तितम् ॥
अविरुद्धं तु यत्त्वस्य प्रमाणं तच्च नान्यथा ॥
एतद्विरुद्धं यत्सर्वं न तन्मानं कथंचन ॥ ८ ॥

त० प्र०— ननु चतुर्णां क्वोपयोगः, एकेनैव चरितार्थत्वाच्चेत्याशंक्याह॥ उत्तरमिति उत्तरोत्तरं पूर्वपूर्वस्य संदेहवारकं प्रकर्षेण कीर्तितम् ॥ यथा ॥ "अपाणिपादो जवनो ग्रहीता" इत्यत्र किं प्राकृतपाणिपादरहितं ब्रह्म आहोस्वित्सामान्यनिषेध इति संदेहे "सर्वतः पाणिपादं तत्" इत्यादिगीतावाक्यं निर्णायकम् ॥ तथा गीतायां "नित्यः सर्वगतस्थाणुः" "ममैवांशो जीवलोके" इत्यादिषु संदेहे सूत्रैर्निर्णयः ॥ "उत्क्रांतिगत्यागतीनामपि" ॥इत्यादिभिः ॥ तथा "जन्माद्यस्य यतः" इति संदेहे "अन्वयव्यतिरेकतः" इति भागवतेन निर्णयः ॥ एतदविरोधेनैव मन्वादीनां प्रामाण्यमाह॥ अविरुद्धमिति ॥ वेदादिना अविरुद्धमेव मन्वादिकं प्रमाणम् ॥ क्वचित्संवादः क्वचिद्विरोध इत्युभयसंभवे अप्रमाणमेवेत्याह ॥ एतद्विरुद्धमिति ॥ ८ ॥

१ त्वेन.

त० दी०— अथवा सर्वरूपत्वान्नामलीलाविभेदतः ॥
विरुद्धांशपरित्यागात्प्रमाणं सर्वमेव हि ॥ ९ ॥

त० प्र०—एवं पूर्णज्ञानोदयावधि यद्ग्राह्यं प्रमाणत्वेन तन्निरूप्य तदनंतरं यत्प्रमाणं तदाह ॥ अथवेति ॥ वाङ्मात्रमेव प्रमाणम् ॥ अर्थस्य भगवद्रूपत्वात् ॥ तदेवाह ॥ सर्वरूपत्वादिति ॥ रूपलीलावन्नामलीलायां विभेदानां वक्तव्यत्वात् ॥ नानाविधानि वाक्यानि प्रवृत्तानि ॥ विरुद्धवाक्यत्वेनैव परस्परं भासमानेष्वविरोधप्रकारमाह ॥ विरुद्धांशपरित्यागादिति ॥ विरुद्धांशपरित्यागो द्विधा वक्तव्यः ॥ भगवत्सामर्थ्येनाऽलौकिकप्रकारेण भगवतः सर्वरूपत्वेन वा ॥ अतो युक्त एवाविरोधः ॥ ९ ॥

त० दी०— द्वापरादौ तु धर्मस्य द्विपरत्वाद्द्वयं प्रमा ॥
विरुद्धवचनानां च निर्णयानां तथैव च ॥ १० ॥

त० प्र०—उक्तमानचतुष्टयविरोधे मन्वादिस्मृतीनामप्रामाण्यमेवेत्युक्तं तन्न युक्तम् ॥ "यद्वै किंचन मनुरवदत्तद्भेपजम्" ॥ इति ॥ श्रुतेर्मन्वादीनामुक्तमानविरोधेपि प्रामाण्यस्याऽवश्यवाच्यत्वादित्यत आह ॥ द्वापरादौ त्विति ॥ चोदनाविषयत्वेनाऽवश्यकर्तव्यताकत्वेनाऽभिमतोऽर्थोऽत्र धर्मशब्देनोच्यते तस्य द्वे श्रुतिस्मृती उभे अपि परे प्रमापिके यस्य तादृशत्वात् ॥ द्वयं श्रुतिस्तत्संवादिन्यसंवादिनी च मन्वादिस्मृतिश्चैतद्द्वयमपि प्रमाणमित्यर्थः ॥ यद्वा पूर्वोक्तधर्मस्योक्तरीत्या द्विपरत्वाच्छ्रुतिः संवादिन्यसंवादिन्यपि स्मार्तं धर्मे कर्तव्यताज्ञानं प्रमेत्यर्थः ॥ विरुद्धयोरविरोधव्याख्यापनार्थं सांप्रतं लौकिकं दृष्टांतमाह ॥ विरुद्धवचनानामिति ॥ यथा स्मृतिवाक्यानि परस्परं विरुद्धानि स्मृतिकारैरविरोधप्रकारेण निर्णीयंते ॥ तथा निर्णयानामपि परस्परविरुद्धानां वैष्णवस्मार्तादिभेदेनाविरोध इत्यर्थः ॥ १० ॥

त० दी०— यज्ञरूपो हरिः पूर्वकांडे ब्रह्मतनुः परे ॥
अवतारी हरिः कृष्णः श्रीभागवत ईर्यते ॥ ११ ॥

त० प्र०—अत्र प्रमाणचतुष्टये श्रुतिः सूत्राण्येका कोटिः ॥ गीता भागवतं चाऽपरा स्पष्टैव ॥ तत्रोभयत्र प्रमेयभेदाभावे द्वयनिरूपणार्थं भेदे विरोध इति कथमेकवाक्यतेत्याशंक्य द्वयं समर्थयितुमाह ॥ यज्ञरूप इति ॥ "यः सर्वज्ञः सर्वशक्तिः" इति श्रुतेर्ज्ञानक्रियोभययुतः सर्वेषामर्थः ॥ तत्र क्रियायां प्रविष्टः क्रियारूपो यज्ञात्मा पूर्वकांडार्थः ॥ ज्ञाने प्रविष्टो ज्ञानात्मा ब्रह्मरूप उत्तरकांडार्थः ॥ तनुशब्दः साकारप्र-

१ यागम्.

ह्मप्रतिपादनाय ॥ परे उत्तरस्मिन् कांडे क्रियाज्ञानं च द्वयं प्रकटीकृत्य योऽवतीर्णः कृष्णः स श्रीभागवते विशिष्टो निरूप्यते॥अतः खंडशो निरूपणं वेदे ॥ भागवते तु समुदायेन निरूप्य तस्य लीला अनेकविधा निरूप्यंत इत्येकार्थत्वेपि पृथक् वचनं युक्तमित्यर्थः ॥ ११ ॥

त० दी०— सूर्यादिरूपधृक् ब्रह्मकांडे ज्ञानांगमीर्यते ॥
पुराणेष्वपि सर्वेषु तत्तद्रूपो हरिस्तथा ॥ १२ ॥

त० प्र०— वेदे पुराणे च क्वचिदन्यार्थप्रतिपादनमाशंक्य तेषामंगत्वमित्यभिप्रायेणाऽऽह ॥ सूर्यादिरूपधृगिति ॥ ब्रह्मकांडे ज्ञानसिद्ध्यर्थमुपासना निरूप्यंते ॥ तच्चित्तशुद्धिद्वारैवेति केचित् ॥ फलादानद्वारा माहात्म्यप्रतिपादनेन भक्तिद्वारेति सिद्धांतः॥ तथा पुराणोक्तानां दुर्गागणपतिप्रभृतीनां विशिष्टशेषत्वमावरणदेवतात्वेन तथाऽपि भिन्नार्थत्वमाशंक्य तत्तद्रूपो हरिस्तथेत्युक्तम् ॥ साधनरूपः फलरूपश्च स्वयमेवेत्येकवाक्यता ॥ १२ ॥

त० दी०— भजनं सर्वरूपेषु फलसिद्ध्यै तथापि तु ॥
आदिमूर्तिः कृष्ण एव सेव्यः सायुज्यकाम्यया ॥ १३ ॥

त० प्र०— अत्राऽवांतरनिर्णयं वक्तुं भक्तिमार्गे विशेषमाह ॥ भजनं सर्वरूपेष्विति ॥ ज्ञानमार्गे न कोपि विशेषः ॥ क्वापि सर्वस्यापि पूर्णब्रह्मत्वात्॥ वक्ष्यति च "अखंडं कृष्णवत्सर्वम्" इति ॥ भक्तिमार्गे तु न तथा यथा भगवान् जगत्कृतवान् तथा स्वार्थं भक्तिमार्गमपि पृथक् कृतवान् ॥ विभूतिरूपेषु साधनानि फलानि च व्यवस्थया कृतानि पूर्णफलदानं च स्वस्मिन् ॥ अतो भजनं मूलरूप एव कर्तव्यम् ॥ ततः किं स्यादित्याशंक्याऽऽह ॥ सायुज्यकाम्ययेति ॥ "ब्रह्मविदाप्नोति परं तदेषाभ्युक्ता सत्यं ज्ञानमनंतं ब्रह्म यो वेद निहितं गुहायां परमे व्योमन् सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता" इति श्रुतेः ॥ "ब्रह्मविदाप्नोति परम्" इत्यत्र यत्सायुज्यं मुख्यतया निरूपितं तत्कामनायां सत्यां कृष्ण एव सेव्यः ॥ कृष्णपदेन च बहिर्भजनमेव मुख्यमिति निरूपितम् ॥ "यो वेद निहितं गुहायाम्" इति तु ज्ञानमार्गे ॥ १३ ॥

त० दी०— निर्गुणा मुक्तिरस्माद्धि सगुणा साऽन्यसेवया ॥
ज्ञानेपि सात्त्विकी मुक्तिर्जीवन्मुक्तिरथापि वा ॥
ज्ञानी चेद्भजते कृष्णं तस्मान्नास्त्यधिकः परः ॥ १४ ॥

त० प्र०— ननु सर्वत्रैव तत्तद्देवतासायुज्यं फलत्वेन श्रूयते ॥ ततो विशेषः क इति चेत्तत्राह ॥ **निर्गुणा मुक्तिरस्माद्धीति** ॥ सायुज्यं मुक्तिर्निर्गुणे सायुज्ये निर्गुणा भवति सगुणे सगुणा ॥ भगवद्व्यतिरिक्ताः सर्व एव कालपर्यंतं सगुणाः ॥ कालोपि गुणानुरोधीति स गुणप्रायः ॥ अक्षरस्य प्रकारस्तु वक्तव्यः ॥ "मन्निष्ठं निर्गुणं स्मृतम्" इति "तं भजन्निर्गुणो भवेत्" इति वाक्यात् ॥ कृष्णसायुज्यमेव निर्गुणा मुक्तिः ॥ अक्षरज्ञानमार्गयोरेकत्वाद्द्वयमेकेन समाधत्ते ॥ **ज्ञानेपि सात्त्विकी मुक्तिरिति** ॥ ज्ञानमार्गः सगुण एव "सत्त्वात्संजायते ज्ञानम्" इति वाक्यात् ॥ अत एव ज्ञानिनो भीताः संसाराद्विरक्ता भवंति ॥ एवं ज्ञानमार्गे प्रवृत्तस्य सगुणत्वमुपपाद्य ज्ञानसंपत्तियुक्तस्य न सगुणत्वमित्याशंक्याऽऽह ॥ **जीवन्मुक्तिरथापि वेति** ॥ वेत्यनादरे ॥ मुख्यपक्षे "समासेनैव कौंतेय" इति वाक्यसंदर्भे ब्रह्मभावनानंतरं भक्तिर्भवतीति गुणातीत एव प्रवेशः "ते प्राप्नुवंति मामेव" इति वाक्यात् ॥ तदभावे केवलं जीवन्मुक्ता भवंतीति सनकादितुल्याः सगुणा एव ॥ इममत्र विशेषं वक्तुं भगवानाह ॥ **सर्वभूतहिते रता इति** ॥ अत एव शुकादीनां भक्तिमार्गोपदेशनद्वारा सर्वभूतहिताचरणं यस्तु पूर्वं ज्ञानमार्गे प्रवृत्तः प्राप्तज्ञानः कृष्णसेवार्थं यतते तन्निष्ठां परित्यज्य स महानित्याह ॥ **ज्ञानी चेद्भजते कृष्णमिति** ॥ यद्यपि ज्ञानमार्गेपि विषयो निर्गुणस्तथापि मार्गः सगुण इति भक्तिमार्गस्योत्कर्षः ॥ क्रियाशक्तेरिंद्रियाणां च वैफल्यं ज्ञानमार्गे ॥ तस्माद्भक्तिमार्गानुसारेण कृष्ण एव सर्वेषां सेव्य इति निरूपितम् ॥ १४ ॥

त० दी०— **बुद्धावतारे त्वधुना हरौ तद्वशगाः सुराः ॥**
**नानामतानि विप्रेषु भूत्वा कुर्वंति मोहनम् ॥**
**यथाकथंचित्कृष्णस्य भजनं वारयंति हि ॥ १५ ॥**

त० प्र०— नन्वेवं सति कथं न सर्वे सेवंत इत्याशंकायामाह ॥ **बुद्धावतार इति** ॥ तुशब्दः शंकां वारयति कलिकालस्वभावतः सर्वोत्कृष्टः स्वल्पसाधनेनापि महाफलप्रदः ॥ अतो दैत्यव्यामोहार्थं भगवान् बुद्धोऽवतीर्णः सर्वप्रमाणमूलभूतं वेदं दूषितवान् ॥ ततः पुराणादिमार्गदूषणार्थं तद्वशगाः सुरा अपि तथा निषिद्धवेशमाश्रित्य ब्राह्मणानां बुद्धिनाशार्थं तेष्वेवाऽवतीर्य मोहनार्थं नानामतानि कुर्वंति काणादन्यायमायावादादिरूपाणि ॥ वाक्पेशलत्वान्मोहनरूपत्वम् ॥ ननु तेषां शास्त्राणां मुक्तिः

१ समाहृतम् ।

फलं तथैव तत्र तत्र प्रतीयते तत्कथं मोहनफलमिति चेत्तत्राह ॥ **यथाकथंचिदिति** ॥ वैदिके मार्गे जागरूके पौराणिके च तेनैव मार्गेण स्वयमृषित्वं देवत्वं च प्राप्ताः किमित्यन्यथा वेदविरोधेन शास्त्रमवादिषुर्यदि मुक्तिरेव संपाद्या स्यात् ॥ अतः सिद्धे राजमार्गेपि पुनः स्वयमतिक्लेशेन यच्छास्त्राणि कृतवंतः, अतो ज्ञायते मोहार्थमेव शास्त्रकरणम् ॥ नापि तथाकरणे भगवतो विसम्मतिर्भगवतैव तथा ज्ञापनात् ॥ "त्वं च रुद्र महाबाहो मोहशास्त्राणि कारय ॥ अतथ्यानि वितथ्यानि दर्शयस्व महाभुज ॥ प्रकाशं कुरु चाऽऽत्मानमप्रकाशं च मां कुरु ॥" 'इति वाराहवचनं ब्रह्मांडोक्तं तथापरम् ॥ अमोहाय गुणा विष्णोराकारश्चिच्छरीरता ॥ १ ॥ निर्दोषत्वं तारतम्यं मुक्तानामपि चोच्यते ॥ एतद्विरुद्धं यत्सर्वं तन्मोहायेति निश्चयः ॥ २ ॥' उक्तं पद्मपुराणे च शैव एव शिवेन तु ॥ यदुक्तं हरिणा पश्चादुमायै प्राह तद्वरः ॥ "त्वानाराध्य तथा शंभो ग्रहीष्यामि वरं सदा ॥ द्वापरादौ युगे भूत्वा कलया मानुषादिषु ॥ स्वागमैः कल्पितैस्त्वं च जनान्मद्विमुखान्कुरु ॥ मां च गोपय येन स्यात्सृष्टिरेषोत्तरोत्तरा" एतदभिसंधायाह ॥ **यथाकथंचित्कृष्णस्येति** ॥ ते ह्यलौकिकद्रष्टार एवं मायावादाद्यनुसारेण शास्त्रे कृते लोका भगवद्बहिर्मुखा भविष्यंतीति तथा कृतवंत इत्यर्थः ॥ १५ ॥

त० दी०—अयमेव महामोहो हीदमेव प्रतारणम् ॥
यत्कृष्णं न भजेत्प्राज्ञः शास्त्राभ्यासपरः कृती ॥
तेषां कर्मवशानां हि भव एव फलिष्यति ॥ १६ ॥

त० प्र०—ननु मुग्धाश्चेत्संसारेऽपि भ्रांता इव पशुपुत्रादिषु कथं न मुग्धा जायंते तत्राह ॥ **अयमेव महामोह इति** ॥ न ह्यल्पार्थे तेषां प्रवृत्तिः ॥ महामोहस्त्वयमेव यत्क्रियाज्ञानशक्तिसद्भावेऽपि कृष्णं न भजेत् ॥ परप्रतारणं चैतदेव ॥ यतस्तं महांतं मन्वाना अभजंतं दृष्ट्वा स्वयमपि न भजंते ॥ **प्राज्ञ इति** ज्ञानशक्तिप्राबल्यम् ॥ **शास्त्राभ्यासपर इति** मिथ्याज्ञानाभिनिवेशः साधनसंपत्तिर्वा ॥ **कृतीति** क्रियासामर्थ्यम् ॥ एवं शास्त्रकरणाद्बहवो विमुखा जाता इति निरूप्य तथापि भगवत्सेवकोक्तप्रकारेण प्रवृत्ता इति सत्फलमेव भविष्यतीत्याशंक्याऽऽह ॥ **तेषां कर्मवशानां हीति** ॥ नहि शास्त्रकर्तारो बलात्कंचन प्रवर्तयंति नापि महांत एत इति कश्चित्तत्र प्रवर्तते ॥ किं तु दुरदृष्टवशात्तदुक्तेर्थे श्रद्धा जायते ॥ अन्यथा सर्वसंमतं

१ मिति. २ त्त्वलौ.

वेदं परित्यज्य तत्र कथं प्रवृत्ताः स्युः ॥ अतः प्रारब्धवशादेव तत्र प्रवृत्ताः संसारमेव फलमाभूतसंप्लवं प्राप्स्यंति ॥ "सृष्टिरेषोत्तरोत्तरा" इति वाक्यात् ॥ भगवद्विरोधाचरणे तु नरकेऽपि पातः ॥ भवः संसारो दुःखात्मकः फलिष्यति ॥ १६ ॥

त० दी०— ज्ञाननिष्ठा तदा ज्ञेया सर्वज्ञो हि यदा भवेत् ॥
कर्मनिष्ठा तदा ज्ञेया यदा चित्तं प्रसीदति ॥
भक्तिनिष्ठा तदा ज्ञेया यदा कृष्णः प्रसीदति ॥ १७ ॥

त०प्र०— ननु तानि शास्त्राणि ज्ञानप्रतिपादकानि कचित्कर्मप्रतिपादकानि चित्तशुद्ध्यर्थं कचिद्भक्तिप्रतिपादकानि च कथं मोहप्रतिपादकानीत्याशंक्याह ॥ ज्ञाननिष्ठेति सार्द्धेन॥ यत्तत्वमस्यादिवाक्योपदेशेनैवाऽपरोक्षं ज्ञानमुत्पद्यत इति ज्ञानदुर्बलान् व्यामोहयितुमुक्तवंतस्तच्च ज्ञानम् ॥ तथा सति सर्वज्ञता स्यात् ॥ "यस्मिन् विदिते सर्वमिदं विदितम्" इति कर्मणीव ज्ञानेपि निदर्शनानामुक्तत्वात् ॥ यथा कारीर्याम्श्वमूत्रणादिकम् ॥ यथा वा दीर्घसत्रारंभेऽपूपदाहः ॥ तथा ज्ञानेपि सर्वज्ञत्वं तेजोपि निदर्शनं तस्मान्नैतज्ज्ञानमिति ज्ञातव्यमित्येतदर्थमाह ॥ **सर्वज्ञो हि यदा भवेदिति** ॥ नापि तदुक्तप्रकारेण कर्माणि फलं प्रयच्छंति यजधातोर्भगवत्पूजार्थस्य स्वरूपाज्ञानेन वृथाकरणात् ॥ यज्ञादीनामनित्यत्वभावनाच्च श्रुत्युक्तप्रकारेण पदार्थज्ञाननिराकरणाच्च ॥ अतो यागादिकमपि कृत्वा लुब्धा एव भवंति न चित्तशुद्धिं लभंते ॥ तथा भक्तिमार्गमपि ज्ञानशेषतयोपदिशंति ज्ञानपर्यंतं च तत्करणमित्याहुः ॥ भावनाकल्पितत्वं च विपर्यस्याऽहुः ॥ अतो भगवदर्थं भगवान्न सेव्यत इति न कृष्णस्तुष्यति यदि सा भक्तिर्भवेत्कृष्णस्तुष्येत् "भक्त्यैव तुष्टिमभ्येति" इति वाक्यात् ॥ तस्मात्तदुक्तप्रकारो व्यर्थ इत्यर्थः ॥ १७ ॥

त० दी०— निष्ठाभावे फलं तस्मान्नास्त्येवेति विनिश्चयः ॥
निष्ठा च साधनैरेव न मनोरथवार्तया ॥ १८ ॥

त०प्र०— ननु मुख्यफलाभावे तदुक्तप्रकारेण गौणं फलं भविष्यतीत्याशंक्याऽऽह ॥ **निष्ठाभाव इति** ॥ नहि महागृहारंभे सामि कृते ततः किंचित्फलमस्ति ॥ न वा नदीतरणार्थं प्रवृत्तो हस्तमात्रावशिष्टेपि निमग्नः पारगमनं फलं प्राप्नोति ॥ नन्वनेनाग्रे निष्ठैव भविष्यतीति चेत्तत्राह ॥ **निष्ठा च साधनैरेवेति** ॥ वेदोक्तैरेव न तु प्रतिष्ठार्थव्याख्यानमनोरथवार्तया ॥ १८ ॥

त० दी०— स्वाधिकारानुसारेण मार्गस्त्रेधा फलाय हि ॥

त० दी०— अधुना ह्यधिकारास्तु सर्व एव गताः कलौ ॥
कृष्णश्चेत्सेव्यते भक्त्या कलिस्तस्य फलाय हि ॥ १९ ॥

त० प्र०—ननु त्रितयं किंचित्किंचिदनुष्ठितं फलं साधयिष्यतीत्याशंक्याह ॥ स्वाधिकारानुसारेणेति ॥ मार्गगता एव ज्ञानादयः फलदाः ॥ यथा गोदोहनादयः कर्मगता एव तथा तत्साधनादिसहिता एव ते ज्ञानादयः फलदाः, अन्यथा प्रकरणभेदेन तन्निरूपणं न स्यात् ॥ ततः किमत आह ॥ अधुनेति ॥ कालवशादेवाधिकारा निवृत्ता न साधनैः कर्तुं शक्यंते ॥ नन्वेवं सति मुख्यभक्तिमार्गेपि समः समाधिरिति चेत्तत्राह ॥ कृष्णश्चेदिति ॥ अवतीर्णो हि भगवान् सर्वमुक्त्यर्थमिति प्रमेयबलेनैव फलिष्यतीति स्वाधिकाराभावेपि ततः फलं भविष्यतीत्यर्थः ॥ चेदिति सेवायां दुर्लभत्वमुक्तम्, भक्त्या न तु विहितत्वेन ॥ कलिस्तस्येति ॥ कालस्त्वगुण एवेत्यर्थः ॥ "कलौ तद्धरिकीर्तनात्" इति वाक्यात् ॥ अतोऽधिकारेणाऽनधिकारेण वा कृष्णभजनं कर्तव्यमिति सिद्धम् ॥ १९ ॥

त० दी०— सर्वेषां वेदवाक्यानां भगवद्वचसामपि ॥
श्रौतोर्थो ह्ययमेव स्यादन्यः कल्प्यो मतांतरैः ॥ २० ॥

त० प्र०—अत्र सर्वेषां प्रमाणानामेकवाक्यतामाह ॥ सर्वेषामिति ॥ श्रौतोऽभिधया निरूपितः ॥ अन्यस्तत्तन्मतानुसारेणोक्तः कल्प्यो न वाचनिकः ॥ २० ॥

त० दी०—कृष्णवाक्यानुसारेण शास्त्रार्थं ये वदंति हि ॥
ते हि भागवताः प्रोक्ताः शुद्धास्ते ब्रह्मवादिनः ॥ २१ ॥

त० प्र०—नन्वत्र द्वयं निरुक्तं वेदा भगवद्वाक्यानि च ॥ तत्रैकेनैव शास्त्रार्थनिष्पत्तावन्यवैयर्थ्यमित्याशंक्याऽऽह ॥ कृष्णवाक्यानुसारेणेति ॥ शास्त्रार्थं वेदार्थं भगवद्वाक्यानि वाक्यशेषरूपाणि संदेहे निर्णायकानि ॥ एवं वक्तारो भागवता भगवत्संबंधिनो विद्वांसः ॥ अनेन भक्ता इत्युक्तम् ॥ त एव च शुद्धाः कर्मिणो यथोक्तकर्मज्ञानात् ॥ त एव च ज्ञानिनो ब्रह्मवादिनः, यथोक्तब्रह्मस्वीकारात् ॥२१॥

त० दी०— एतन्मतमविज्ञाय सात्त्विका अपि वै हरिम् ॥
मतांतरैर्न सेवंते तदर्थं ह्येष उद्यमः ॥ २२ ॥

त० प्र०—नन्वेतदुभयं पूर्वमेव वर्तत इति ॥ किं भवतो ग्रंथकरणप्रयासेनेत्याह ॥ एतन्मतमिति ॥ मतं सिद्धांतः ॥ सात्त्विका इति स्वरूपयोग्यता ॥ अभजने येषां शा-

१ स्वधिकारास्तु इत्यपि क्वचित् । २ सेव ।

स्त्रांतरमेव प्रयोजकं न तु स्वभावस्तेषा मतनिराकरणेन प्रवृत्तिः संपाद्यत इत्यर्थः२२

त० दी०— प्रपंचो भगवत्कार्यस्तद्रूपो माययाऽभवत् ॥
तच्छक्त्याऽविद्यया त्वस्य जीवसंसार उच्यते ॥ २३ ॥

त० प्र०— एवं स्वप्रवृत्तिमुपपाद्य बाधकशास्त्राणां निवृत्त्यर्थं शास्त्रमारभते॥ प्रपंचेति ॥ प्रपंचमेव मिथ्येत्युक्त्वा शुद्धं भजनं वारयंति ॥ तथाऽन्ये जीवं व्यापकमुक्त्वा॥ अत उभयनिराकरणार्थं जीवजडयोः स्वरूपमुच्यते ॥ अयं प्रपंचो न प्राकृतः ॥ नापि परमाणुजन्यः ॥ नापि विवर्तात्मा ॥ नाप्यदृष्टादिद्वारा जातः ॥ नाप्यसतः सत्तारूपः ॥ किं तु भगवत्कार्यः परमकाष्ठापन्नवस्तुकृतिसाध्यः ॥ तादृशोपि भगवद्रूपः॥ अन्यथा असतः सत्ता स्यात् ॥ सा चाऽग्रे वैनाशिकप्रक्रियानिराकरणे निराकरिष्यते ॥ वैदिकस्त्वेतावानेव सिद्धांतः ॥ वैष्णवानुसारेण किंचित्साधनमधिकमाह ॥ "माययाऽभवत्" इति ॥ माया हि भगवतः शक्तिः सर्वभवनसामर्थ्यरूपा तत्रैव स्थिता ॥ यथा पुरुषस्य कर्मकरणादौ सामर्थ्यं तेन स्वसामर्थ्येनान्यानुपजीवनेन स्वात्मरूपप्रपंचं कृतवानिति फलितम् ॥ अत्र संसारप्रपंचयोर्भेदाज्ञानात्केचिन्मुग्धा भवंति तन्मोहनिराकरणाय भेदं निरूपयंति ॥ अविद्ययेति ॥ अविद्याऽपि तच्छक्तिर्मुख्यासु द्वादशशक्तिषु गणनात् ॥ "श्रिया पुष्ट्या गिरा" इति वाक्यात् ॥ एवं सति "स वै नैव रेमे तस्मादेकाकी न रमते स द्वितीयमैच्छत् सहैतावानास" इति श्रुतौ रमणार्थमेव प्रपंचरूपेणाविर्भावोक्तेर्वैचित्र्यं विना तदसंभवो यतः ॥ तत्तस्माद्धेतोरस्य भगवतः शक्त्या विद्यया जीवस्य संसार उच्यते न तु जायते अभिमत्यात्मकत्वात् ॥ असत्त्वेनाऽस्य गणनात् ॥ अज्ञानं भ्रमः ॥ असदित्यादिशब्दा अहंममेतिरूपे संसार एव प्रवर्तते न तु प्रपंच इत्यर्थः ॥ तस्य ब्रह्मात्मकत्वात् ॥ इदमुक्तं भवति ॥ वस्तुतस्तु "स वै नैव रेमे" इत्यादिश्रुतिभ्यो रमणार्थमेव प्रपंचरूपेणाऽऽविर्भावात्तदंतःपातिपुरुषरूपेण तत्कृतसाधनरूपेणाविर्भूय तत्फलरूपेण चाऽऽविर्भवन् क्रीडति भगवान् ॥ एवं सत्यहमेतत्कर्मकर्तैतज्जनितं फलं च ममाहमेतस्य भोक्तेत्यादिज्ञानानि स्वस्य स्वक्रियायास्तत्फलस्य चाऽब्रह्मत्वेन ज्ञानाद्भ्रमरूपाणीति मंतव्यम् ॥ स चाऽहंताममतात्मकोऽविद्यया क्रियते ॥ तत्त्वज्ञाने मत्युक्तरूपत्वज्ञानान्निवर्तते न तु प्रपंचो ब्रह्मात्मकत्वात् ॥ ननु प्रपंचात्मकस्य घटादेर्दंडमुद्गरात्मकेन तेन तिरोभावव‍च्चत्वज्ञानात्मकेन तेन संसा-

१ इतुरयं न विद्यामि।

रात्मकस्य तस्य तिरोभाव इत्यपि सुवचमतो नाऽविद्याहेतुकत्वमसत्त्वं वा संसारस्य वाच्यम् ॥ प्रपंचमध्यपातित्वेन ब्रह्मात्मकत्वात् ॥ नचैवं संसारस्य नित्यतापत्त्या मुक्त्युच्छेद इति वाच्यम् ॥ यत्कालावच्छेदेन यस्मिन्पुरुषे संसाररूपेणाऽऽविर्भावस्त-दवच्छेदेन संसारित्वं तस्योच्यते मुक्तिरूपेणाविर्भावे तु मुक्तत्वमित्युपपत्तेः ॥ यथा घटादिप्वामदशायां श्यामरूपेणाविर्भावे तथात्वव्यवहारः पक्वे रक्तत्वव्यवहारस्त-द्रूपेणाऽऽविर्भावात्तथेति ॥ न च "अविद्यया बंधः" इति श्रुत्यादिप्रसिद्धेर्नैवमिति वाच्यम् ॥ दंडघटादिसमानयोगक्षेमत्वात्प्रसिद्धेः ॥ "एवं शुद्धो ब्रह्मवादः सिद्धो भवति सन्मते ॥ अन्यस्याणोरपि प्राप्तौ मायापक्षो न किं भवेत् ॥ १ ॥" न भवेत् ॥ श्रुतितो हि प्रपंचस्य ब्रह्मतोच्यते ॥ तस्य नित्यत्वादाविर्भावतिरोभावावुच्येते ॥ तौ च विद्यमानस्यैव वस्तुनः संभवतो नासतः ॥ सतश्च नासत्त्वम् ॥ तथा च संसार-स्याऽविद्याहेतुकत्वमेव श्रुतिर्वदति न प्रपंचवद्ब्रह्मरूपताम् ॥ प्रपंचरूपेणाविर्भाव-मुक्त्वा यदविद्यया संसारमाह विद्यया तदभावं चाह ॥ अतः प्रपंचभिन्नत्वमवश्यमू-रीकार्यं तथा सत्यऽसत्यत्वमेव संपद्यते संसारस्य यच्चोक्तं दंडमुद्गरघटादिसमान-योगक्षेमत्वमविद्याविद्याकृतबंधमोक्षयोरिति तत्राप्युच्यते ॥ स्यादेवं यदि प्रपंचम-ध्यपातित्वं स्यात्संसारस्य न चैवं कारणभेदात् ॥ न हि यौक्तिकमिदं शास्त्रं किं तु श्रौतमित्यास्तिकैस्तथैव मंतव्यमिति ॥ २३ ॥

त० दी०—संसारस्य लयो मुक्तौ न प्रपंचस्य कर्हिचित् ॥
कृष्णस्याऽऽत्मरतौ त्वस्य लयः सर्वसुखावहः ॥
पंचपर्वा त्वविद्या हि जीवगा मायया कृता ॥ २४ ॥

त० प्र०— अस्य स्वरूपं ज्ञानपर्यंतमेव तिष्ठतीति वक्तुमाह ॥ संसारस्य लयो मुक्ताविति ॥ उत्पत्तिप्रलययोर्भिन्नप्रकारत्वादुभयोर्भेदः ॥ मुक्त्यर्थं प्रपंचविलया-भावे कदापि न विलयः स्यादित्याशंक्याऽऽह ॥ कृष्णस्यात्मरताविति ॥ यदा स्वरतीच्छा तदा प्रपंचरूपं स्वस्मिन् विलाप्य रमते ॥ नन्वेवं सति जीवब्रह्मणोर्मु-क्तिप्रकार इव उक्त इति चेत्तत्राह ॥ सर्वसुखावह इति ॥ जीवानां तदा सुखार्थं प्रलयं करोति यथा रात्रिम् ॥ एवं भगवदिच्छां प्रपंचजननप्रलयकारणत्वेन निरूप्य जीवानामुत्पत्तिपूर्वकं मोक्षं निरूपयितुमाह ॥ पंचपर्वेति ॥ जीवसंसारहेतुभूताऽविद्या पंचपर्वा तेन संसारसर्वांशनिराकरणेन निराकृता भविष्यतीति तदर्थं भगवद्भजनं

१ क्वचित्तदापदं नास्ति ।

कर्तव्यमिति वक्तुं तान् प्रथममुक्तवान् ॥ जीवमेव गच्छति न त्वंशांतरं तस्या दुर्बलत्वायाह ॥ मायया कृतेति ॥ २४ ॥

त० दी०—आकाशवद्व्यापकं हि ब्रह्म मायांशवेष्टितम् ॥
सर्वतः पाणिपादांतं सर्वतोक्षिशिरोमुखम् ॥ २५ ॥

त० प्र०—जीवस्वरूपनिरूपणार्थं ब्रह्मणः सकाशाद्विस्फुलिंगादिवदुद्भवं वक्तुं कारणभूतब्रह्मस्वरूपमाह॥आकाशवदिति द्वाभ्याम्॥लोकदृष्ट्या दृष्टांतः॥ब्रह्मणो व्यापकत्वं बृहत्त्वात्॥ अन्यथा ब्रह्मपदप्रयोगो नोपपद्येत ॥ तद्व्यापकत्वमात्मरमणानंतरं तिरोहितमिव भवतीति मायया तादृशभावस्तेन वेष्टितं भवति तस्य स्वरूपमाह ॥ सर्वतः पाणिपादांतमिति॥ प्रमाणनिरूपणाय गीतावाक्यमुच्यते ॥ सर्वत्र प्रदेशे पाणयः पादा अंता यस्य गतिकृतिलक्षणे क्रिये सर्वत्र स्वेच्छया परिच्छेदावभानं चोक्तम् ॥ सर्वतोक्षिशिरोमुखमिति ॥ ज्ञानप्राधान्यभोगाश्च सर्वत्रोक्ताः ॥ २५॥

त० दी०—सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति ॥
अनंतमूर्ति तद्ब्रह्म ह्यविभक्तं विभक्तिमत् ॥ २६ ॥

त० प्र०—नामप्रपंचार्थमाह ॥ सर्वतःश्रुतिमल्लोक इति ॥ सर्वतः शृणोतीत्यर्थः ॥ एतादृशस्य परिच्छेदः संभविष्यतीत्यत आह ॥ सर्वमावृत्य तिष्ठति ॥ एते धर्माः प्रपंचोत्पत्त्यनंतरमेव स्पष्टा भवंति तथापि तेषां नित्यत्वख्यापनाय प्रथमतो वचनं सर्वत्र परिच्छेदस्य प्रयोजनमाह ॥ अनंतमूर्ति तद्ब्रह्मेति ॥ अनंतपदस्येममेवार्थं ज्ञापयितुं हिशब्दः॥ तर्हि खंडशः स्यादित्याशंक्याह ॥ अविभक्तमिति ॥ अनंतमूर्तिष्वपि न परं विभेदः केवलमिच्छया तावन्मात्रप्रकटनार्थं विभक्तिमत् २६

त० दी०—बहु स्यां प्रजायेयेति वीक्षा तस्य ह्यभूत्सती ॥
तदिच्छामात्रतस्तस्माद् ब्रह्मभूतांशचेतनाः ॥ २७ ॥
सृष्ट्यादौ निर्गताः सर्वे निराकारास्तदिच्छया ॥
विस्फुलिंगा इवाग्नेस्तु सदंशेन जडा अपि ॥ २८ ॥

त० प्र०—एतत्स्वरूपमुक्त्वा ततः सृष्टिं वक्तुं तदिच्छां कारणत्वेनाह ॥ बहु स्यामिति ॥ अनेकत्वमुचनीचत्वं च भावयामास भावना तस्य सती विषयाव्यभिचारिणी ततो यज्जातं तदाह ॥ तदिच्छामात्रत इति ॥ तस्मादेव ब्रह्मभूता न तु योगयत्नेनाविर्भूताः, अंशाः साकाराः सूक्ष्मपरिच्छेदाः, चेतनाश्चित्प्रधानाः सर्वे अ-

१ संभावी । २ कारण । ३ नीचत्वेन ।

संख्याताः सृष्ट्यादौ प्रथमसृष्टौ ततः साकारा भगवद्रूपा अपि उच्चनीचभावेच्छया निर्गता इति निराकारा जाताः॥ निर्गमने दृष्टांतमाह॥विस्फुलिंगा इवाग्नेरिति॥ "यथाग्नेः क्षुद्रा विस्फुलिंगा व्युच्चरंति" इति श्रुतेः ॥ एवं जीवोद्गममुक्त्वा जडोद्गममाह ॥ सदंशेनेति ॥ सत्प्राधान्येन ॥ २७ ॥ २८ ॥

त० दी०– आनंदांशस्वरूपेण सर्वांतर्यामिरूपिणः ॥
सच्चिदानंदरूपेषु पूर्वयोरन्यलीनता ॥ २९ ॥

त० प्र०–अंतर्याम्युद्गममाह ॥ आनंदांशस्वरूपेणेति ॥ यथा जीवानां नानात्वं तथान्तर्यामिणामप्येकस्मिन् हृदये हंसरूपेणोभयप्रवेशात् ॥ भेदस्तु जीवेपि नास्तीति न काप्यनुपपत्तिः ॥ त्रैविध्ये हेतुमाह ॥ सच्चिदानंदरूपेष्विति ॥ सति चिदानंदधर्मयोस्तिरोभावः ॥ चित्यानंदस्य ॥ २९ ॥

त० दी०– अत एव निराकारौ पूर्वावानंदलोपतः ॥
जडो जीवोंतरात्मेति व्यवहारस्त्रिधा मतः ॥ ३० ॥

त० प्र०–आनंदांशतिरोभावस्यापि ज्ञापकमाह ॥ अत एव निराकाराविति भगवदाकारश्चतुर्भुजत्वादिराकारशब्देनोच्यते ॥ लोपस्तिरोभावः ॥ एवं स्वरूपे वैजात्यमुक्त्वा नामतोपि वैजात्यमाह ॥ जड इति ॥ सर्वस्यापि भगवत्त्वे जडादिपदप्रयोगो व्यवहारः ॥ ३० ॥

त० दी०– विद्याविद्ये हरेः शक्ती माययैव विनिर्मिते ॥
ते जीवस्यैव नान्यस्य दुःखित्वं चाऽप्यनीशता ॥ ३१ ॥

त० प्र०–एवं त्रैविध्यमुपपाद्य चिदंशानां जीवानां संसारप्रकारमाह ॥ विद्याविद्येति ॥ मोक्षोऽप्येकः सर्ग इति विद्याया अपि निरूपणम् ॥ आत्मनः स्वरूपलाभो विद्यया देहलाभोऽविद्ययेति ॥ उभयोर्जीवधर्मत्वं व्यावर्तयति ॥ हरेः शक्तीति ॥ तेन भगवदिच्छयैव तयोराविर्भावतिरोभावयोर्हेतुरित्युक्तम् ॥ अनयोर्मायाधीनत्वमाह ॥ माययैव विनिर्मित इति ॥ तेन "मामेव ये प्रपद्यंते" इति वाक्यात् भक्तौ सत्यामविद्यापि निवर्त्स्यति[1] विद्यापि, अन्यथा नित्यमुक्तता न स्यात्॥ ते उभे जीवरूपस्यैवांशस्य भवतो नान्यस्य जडांशस्यांतर्यामिणो वा जीवस्यैव दुःखितत्वमनीशितृत्वं च॥३१॥

त० दी०– स्वरूपाज्ञानमेकं हि पर्व देहेंद्रियासवः ॥
अंतःकरणमेषां हि चतुर्धाऽध्यास उच्यते ॥ ३२ ॥

१ निवर्त्स्यति ।

त० दी०—पंचपर्वा त्वविद्येयं यद्बद्धो याति संसृतिम् ॥
विद्ययाऽविद्यानाशे तु जीवन्मुक्तो भविष्यति ॥ ३३ ॥

त० प्र०—अविद्यायाः पंचपर्वाण्याह ॥ स्वरूपाज्ञानमिति ॥ अंतःकरणाध्यासः प्राणाध्यास इंद्रियाध्यासो देहाध्यासः स्वरूपविस्मरणं चेति पंच पर्वाणि यस्यां संपूर्णायां जातायामन्यधर्मैर्बद्धो जन्ममरणे प्राप्नोतीत्यर्थः ॥ अविद्यां निरूप्य विद्यां निरूपयति ॥ विद्ययेति ॥ निद्रावदविद्यापगमे न जीवस्य जन्ममरणे ॥३२॥३३॥

त० दी०—देहेंद्रियासवः सर्वे निरध्यस्ता भवंति हि ॥
तथाऽपि न प्रलीयंते जीवन्मुक्तगताः स्फुटम् ॥ ३४ ॥

त० प्र०—तदा तस्मिन् जन्मनि गृहीतानां देहादीनां विलयाभावमाह ॥ देहेंद्रियासव इति ॥ अध्यास एव गच्छति न स्वरूपं प्रपंचमध्यपातात् ॥ अध्यासाभावे स्थितिर्न स्यादित्याशंक्याह ॥ तथा न प्रलीयंत इति ॥ स्वबुद्ध्या लीनवत्प्रतिभानेपि न सर्वेषां बुद्ध्या तथा प्रतिभानम् ॥ ३४ ॥

त० दी०—आसन्यस्य हरेर्वापि सेवया देवभावतः ॥
इंद्रियाणां तथा स्वस्य ब्रह्मभावाल्लयो भवेत् ॥ ३५ ॥

त० प्र०—देहादीनां स्थितौ सुप्तप्रतिबुद्धन्यायेन कदाचित्पुनरध्यासः स्यात् ॥ अतस्तेषां विलयप्रकारमाह ॥ आसन्यस्येति ॥ "आसन्यसेवायामिंद्रियाणां देवतात्वम्" इति श्रुतिः "स वाचमेव प्रथमामत्यमुच्यत" इत्यादि ॥ हरेः सेवया सर्वमिति भगवच्छास्त्रं भगवतो मुखमग्निः स्वस्य वागिंद्रियमग्निश्चेद्भगवन्मुखत्वमापद्यते ॥ एवं सर्वेषामाध्यात्मिकानामाधिदैविकत्वं तदा संघातस्य लय इत्यर्थः॥स्वस्य जीवभावे स्थिते कदाचित्संघातांतरं संपादयेदिति जीवस्य ब्रह्मभावमाह ॥ स्वस्य ब्रह्मभावादिति ॥३५॥

त० दी०—आनंदांशप्रकाशाद्धि ब्रह्मभावो भविष्यति ॥
सायुज्यं वाऽन्यथा तस्मिन् उभयं हरिसेवया ॥
एवं कदाचिद्भगवान्साक्षात्सर्वं करोत्यजः ॥ ३६ ॥

त० प्र०—ब्रह्मभावप्रकारमाह ॥ आनंदांशेति ॥ तिरोहितस्याविर्भावो ब्रह्मभावः ॥ तथा जडेऽपि ॥ तत्र भगवदिच्छैव केवला प्रयोजिका तस्या अनियतत्वात् ॥ सायुज्यं वा भवति ॥ अन्यथा संघाते गच्छेत् ॥ सायुज्यब्रह्मभावौ हरि-

१ नीतो मुच्यते ।

सेवयैव भवतो नाऽऽसन्यसेवया ॥ एवमेकंप्रकारेण सृष्टिमुक्त्वोपसंहरति ॥ एवं कदाचिदिति ॥ साक्षात्सर्वोत्पत्तिप्रकारोयम् ॥ ३६ ॥

त० दी०— कदाचित्पुरुषद्वारा कदाचित्पुनरन्यथा ॥
कदाचित्सर्वमात्मैव भवतीह जनार्दनः ॥ ३७ ॥

त० प्र०—श्रुतौ नानाविधाः सृष्टिप्रकाराः साक्षात्परंपराभेदेन तत्र सर्वेषां संग्रहार्थं सृष्ट्यंतराण्याह ॥ कदाचित्पुरुषद्वारेति ॥ पुराणेषु पुरुषद्वारा सृष्टिः प्रसिद्धा॥ पुरुषादीना द्वारत्वमेव ॥ अन्यथा चतुर्मूर्तिप्रकारेण स प्रकारः पंचरात्रे प्रसिद्धः ॥ एवं श्रुतिपुराणतंत्रेषु सृष्टिमुक्त्वा "स आत्मानमेवावेदहं ब्रह्मास्मीति" "तस्मात्सर्वमभवत्" इत्यादिषु साक्षात्प्रपंचरूपता निरूपिता तामाह ॥ कदाचिदिति ॥ इहेति ॥ सृष्टिभेदेषु जनार्दन इति लीलार्थं जीवानां क्लेशमसहमानः ॥ अस्मिन्पक्षेनाऽऽनंदांशादेरितरोभावः ॥ ३७ ॥

त० दी०— महेंद्रजालवत्सर्वं कदाचिन्माययाऽसृजत् ॥
तदा ज्ञानादयः सर्वे वार्तामात्रं न वस्तुतः ॥ ३८ ॥

त० प्र०—स्वप्नादिसृष्टिसंग्रहार्थमाह ॥ महेंद्रजालवत्सर्वमिति ॥ मायया केवलया न तु स्वयं तत्र प्रविष्टः ॥ तत्सृष्टौ न कोपि पुरुषार्थ इत्याह ॥ तदा ज्ञानादय इति संति ज्ञानादयः परं वार्तामात्रम् ॥ न तु फलसाधकाः ॥ ३८ ॥

त० दी०— वियदादि जगत्सृष्ट्वा तदाविश्य द्विरूपतः ॥
जीवांतर्यामिभेदेन क्रीडति स्म हरिः क्वचित् ॥ ३९ ॥

त० प्र०—वैदिकीमपरामपि सृष्टिमाह ॥ वियदादीति ॥ आकाशं सृष्ट्वा तद्द्वारा वायुमित्यादि ॥ अस्मिन्नपि पक्षे जडानां पूर्ववदेव व्यवस्था ॥ जीवांतर्यामिभेदे भिन्ने भिन्नं प्रकारमाह ॥ तदाविश्येति ॥ पूर्वकल्पेषु जीवांतर्यामिणोः प्रवेशः, अस्मिन् कल्पे प्रविष्टस्य जीवांतर्यामिभाव इति ॥ एवं षड्भेदानुक्त्वा षड्गुणैर्भगवतो लीलेयमित्याह ॥ क्रीडति स्मेति ॥ ३९ ॥

त० दी०— अचिंत्यानंतशक्तेस्तद्यदेतदुपपद्यते ॥
अत एव श्रुतौ भेदाः सृष्टेरुक्ता ह्यनेकधा ॥ ४० ॥

त० प्र०—एकः कथमनेकधा सृष्टिं करोतीत्याशंक्याह॥ अचिंत्यानंतशक्तेरिति॥ अचिंत्या अनंताः शक्तयो यस्येति॥ यदेतत्सर्वमुक्तं तदुपपद्यते ॥ अस्मिन्नर्थे श्रुतेस्ता-

१ एकेन । २ स्तु य इति क्वचित् ।

त्पर्यमाह ॥ अत एवेति ॥ श्रुतौ नानाप्रकरणेषु सृष्टिभेदाः सहस्रशो निरूपिताः॥४०॥

त० दी०— यथाकथंचिन्माहात्म्यं तस्य सर्वत्र वर्ण्यते ॥
भजनस्यैव सिद्ध्यर्थं तत्त्वमस्यादिकं तथा ॥ ४१ ॥

त० प्र०— अनेकधा सृष्टिकथनस्य प्रयोजनमाह ॥ यथाकथंचिदिति ॥ वेदानां भगवन्माहात्म्यप्रतिपादकत्वं "वंदिनस्तत्पराक्रमैः" इतिवाक्यात् ॥ तत्सृष्टिभेदकथने भवतीति सृष्टिभेदा निरूप्यंते ॥ वस्तुतस्तु सृष्टिकर्तृत्वेपि न भगवतो माहात्म्यं महाराजाधिराजस्य चलितुं ज्ञानमिव ॥ तथापि लोकप्रतीतौ तन्माहात्म्यं भवतीति यथाकथंचिद्वर्ण्यते ॥ माहात्म्यज्ञानस्योपयोगमाह ॥ भजनस्यैव सिद्ध्यर्थमिति ॥ भक्तिसिद्ध्यर्थं भक्तेरंशद्वयमिति द्वितीयांशमपि ॥ प्रतिपादयतीति तथा लक्ष्यत इत्यर्थः ॥ द्वितीयांशमाह ॥ तत्त्वमस्यादिकं तथा कथयति ॥ ४१ ॥

त० दी०— माहात्म्यज्ञानपूर्वस्तु सुदृढः सर्वतोधिकः ॥
स्नेहो भक्तिरिति प्रोक्तस्तया मुक्तिर्न चाऽन्यथा ॥ ४२ ॥

त० प्र०— भक्तिस्वरूपमाह ॥ माहात्म्येति ॥ स्नेहो भक्तिः ॥ रतिर्देवताविषयिणी भाव इत्यभिधीयते ॥ रतिः स्नेहः, देवत्वं माहात्म्यम्, तदात्मत्वेन ज्ञाते भवति तेन भजनार्थमेवात्मत्वेन निरूपणं माहात्म्यं चोच्यते ॥ अन्यथा वाक्यद्वयं ब्रह्मप्रकरणे व्यर्थं स्यात् ॥ ब्रह्मस्वरूपज्ञानेनैव पुरुपार्थसिद्धेः ॥ तच्छाब्दज्ञानमप्रयोजकम् ॥ इदानींतनेपु व्यभिचारदर्शनात् ॥ साक्षात्कारस्तु ब्रह्माधीनः ॥ प्रसन्नं तदाविर्भवतीति लोकरीत्याऽवगम्यते ॥ श्रुतिश्च पुरुषार्थपर्यवसानं कथयति ॥ अतः स्वरूपज्ञानं विधाय तस्य पुरुषार्थत्वमुक्त्वा तदाविर्भाव एव फलं सिद्ध्यतीत्याविर्भावार्थं प्रेमसेवां निरूपयंती अवज्ञानादिदोषाभावाय माहात्म्यं च सुदृढस्नेहायाऽऽत्मत्वं चाऽऽह ॥ "तत्त्वमसि" इत्यत्र शास्त्रपर्यवसानमग्रे निराकरिष्यते ॥ ४२ ॥

त०— पंचात्मकः स भगवान् द्विपडात्मकोऽमृतपंचद्वयीशतसहस्रपरामितश्च ॥
एकः समोऽप्यखिलदोपसमुज्झितोपि सर्वत्र पूर्णगुणकोपि वहूपमोऽभूत्॥४३

त० प्र०— एवं कियतीनां श्रुतीनामेकवाक्यतामुक्त्वा सर्वासामेकवाक्यतां वक्तुं भगवतो रूपाणां संग्रहश्लोकावाह ॥ पंचात्मकेति ॥ अग्निहोत्रादिपंचात्मकः ॥ तत्साधनदेशकालद्रव्यकर्तृमंत्रात्मकस्त्रिविधमंत्रब्राह्मणोपनिषदात्मकः पंचप्राणभूतायात्मकश्च ॥ तेनैतावन्निरूपिकाणां श्रुतीनामेकवाक्यता सिद्ध्यति ॥ अग्रेपि तथा देहे च पंचात्मकः ॥ ध्यानार्थं प्रादेशमात्र आश्रयार्थमंगुष्ठमात्रः ॥ स्वामित्वा-

र्थमक्षिस्थितः फलार्थं सर्वदेहस्थित आनंदमयो वैश्वानरः शिरसि प्रतिष्ठितः सर्वार्थ इति ॥ तथा पंचकोशात्मकश्चोपासनार्थः ॥ तावतापि सर्वासां नैकवाक्यतेत्यभिप्रे-त्याह ॥ **द्विषडात्मकोऽभूदिति** ॥ द्वादशसूर्यात्मको मासात्मकः पुरुषात्मकोऽहीना-त्मकोऽग्न्यात्मकश्चेति ॥ अन्येपि द्वादशधा भिन्ना ज्ञातव्याः ॥ ततोऽपि प्रकारांतर-माह ॥ **पंचदशीति** ॥ दिगात्मको देवात्मक इंद्रियात्मको लीलात्मकस्तथान्येऽपि दशात्मकाः स्वयमूह्या अवतारादयः ॥ ततोऽप्यपूर्तिरित्यधिकमाह ॥ **शतसहस्र-परामितश्चेति** ॥ चत्वारो भेदा उत्तरोत्तरमधिका अमिता असंख्याता विभूतिरूपाः सर्वे ज्ञातव्याः ॥ एवं भगवतः सप्तधा रूपभेदा उक्ताः ॥ तेषु भगवान् भिन्न इ-त्याशंक्याऽऽह ॥ **एक इति** ॥ सर्वेषु रूपेष्वेक एव योगिवत् ॥ प्रादेशांगुष्ठादिमात्रेषु न्यूनाधिकभावमाशंक्याह ॥ **समोपीति** ॥ क्वचिदन्यथा प्रतीतिमाशंक्याह ॥ **अ-खिलदोषसमुज्झितोपीति** ॥ ऐश्वर्यादितारतम्यमाशंक्याह ॥ **सर्वत्र पूर्णगुणको-पीति** ॥ ऐश्वर्यादिगुणाः सर्वेषु रूपेषु पूर्णास्तथा सति कथं वैलक्षण्यप्रतीतिस्तत्राह ॥ **बहूपमोऽभूदिति** ॥ नरवत्, प्रादेशवत्, शांतवत्, क्रूरवत् इति ॥ ४३ ॥

**त०—निर्दोषपूर्णगुणविग्रह आत्मतंत्रो निश्चेतनात्मकशरीरगुणैश्च हीनः ॥**
**आनंदमात्रकरपादमुखोदरादिः सर्वत्र च त्रिविधभेदविवर्जितात्मा ४४**

त० प्र०—एवं विभूतिमुपपाद्य स्वरूपमुपपादयति ॥ **निर्दोषेति** ॥ यादृशं मू-लरूपं तादृशमेव सर्वमिति मंतव्यम् ॥ गुणाः शांतिज्ञानादयस्ते लोके दोषसहिता दृष्टाः ॥ महतोपि यथा "ज्ञानं क्वचित्तत्र न संगवर्जितम्" इति ॥ तथा तपः क्रोध-सहितम् ॥ तथा धर्मो दयारहितः ॥ तथा न भगवति किं तु निर्दोषाः पूर्णा गुणा विग्रहरूपा यस्य विग्रहपदेन परस्परविरुद्धा अपि लोकदृष्ट्या भासंत इति ज्ञातव्यम् ॥ गुणाधीनत्वमाशंक्याह ॥ **आत्मतंत्रेति** ॥ देहेंद्रियादीनां कार्यप्रती-तेर्लौकिकवद्देहेंद्रियाणि भविष्यंतीत्याशंक्याह ॥ **निश्चेतनात्मकेति** ॥ चकारात्तत्तद्ध-र्मैरपि हीनः ॥ तर्हि कथमाकारप्रतीतिस्तत्राह ॥ **आनंदमात्रकरपादमुखोदरा-दिरिति** ॥ आनंदो ब्रह्मवादे आकारसमर्पकः ॥ अत एव पुरुषेष्वपि सर्वांतर आ-नंदमयो निरूपितः ॥ तद्वस्तुसर्वात्मकमिति वदन्नाह ॥ **सर्वत्र च त्रिविधभेदवि-वर्जितात्मेति** ॥ जीवजडांतर्यामिषु सर्वत्रैव तदनुस्यूतं कारणत्वादिति ॥ तस्य कारणता च निरूपिता ॥ ४४ ॥

त० दी०— तस्य ज्ञानाद्धि कैवल्यमविद्याविनिवृत्तितः ॥
वैराग्यं सांख्ययोगौ च तपो भक्तिश्च केशवे ॥ ४५ ॥

त० प्र०— एतन्निरूपणस्य प्रयोजनमाह ॥ तस्य ज्ञानाद्धि कैवल्यमिति ॥ गुणोपसंहारन्यायेन श्लोकद्वयोक्तधर्मयुक्तं ब्रह्म चेद्विजानीयात्तदा ब्रह्मविद्भवति ततः कैवल्यं संघातात्पृथग्भावं मोक्षं वा प्राप्नोति ॥ तत्र दृष्टं द्वारमाह ॥ अविद्याविनिवृत्तित इति ॥ पूर्वोक्तज्ञानमविद्यां निवर्तयत् मोक्षं साधयतीत्यर्थः ॥ तज्ज्ञानमपरोक्षरूपमिति ॥ विद्यायाः पंचपर्वाणि तत्साधनान्याह ॥ वैराग्यमिति ॥ आदौ विषयवैतृष्ण्यम्, ततो नित्यानित्यवस्तुविवेकपूर्वकं सर्वपरित्यागः, तत एकांतेऽष्टांगयोगः, ततो विचारपूर्वकमालोचनं तपः, एकाग्रतया स्थितिर्वा ॥ ततो निरंतरभावनया परमं प्रेम ॥ ४५ ॥

त० दी०— पंचपर्वेति विद्येयं यथा विद्वान् हरिं विशेत् ॥
सत्त्वसृष्टिप्रवृत्तानां देवानां मुक्तियोग्यता ॥ ४६ ॥

त० प्र०— एवं साधनसंपत्तौ पंचपर्वा विद्या संपद्यते ॥ यया विद्यया कृत्वा जातसाक्षात्कारस्तं प्रविशेदित्याह ॥ यथा विद्वान् हरिं विशेदिति ॥ अत्र स्वरूपयोग्यतारूपमधिकारमाह ॥ सत्त्वेति ॥ ये सात्त्विका दैव्यां संपदि जाता विष्णुपजीविनः सर्वदा तेषां मुक्तिर्भविष्यति नान्येषामिति ज्ञातव्यम् ॥ ४६ ॥

त० दी०— तीर्थादावपि या मुक्तिः कदाचित्कस्यचिद्भवेत् ॥
कृष्णप्रसादयुक्तस्य नाऽन्यस्येति विनिश्चयः ॥ ४७ ॥

त० प्र०— अनेनैव प्रकारेण मुक्तिर्नान्येनेति वक्तुं देशादिपक्षे तदंगे मुक्तिर्भाक्तेत्याह ॥ तीर्थादावपीति द्वाभ्याम् ॥ काश्यादितीर्थेषु मुक्तिः प्रसिद्धा ॥ "तत्रांते तारकं ब्रह्म व्याचष्टे" इत्यादिवाक्यैः ॥ शुद्धानां ब्रह्मोपदेश इत्यलौकिकोपदेशसाधकत्वं न व्यभिचरति तदाह ॥ कदाचित्कस्यचिद्भवेदिति ॥ सर्वेषामेवोपदेशोऽस्तीति नेत्येत्याह ॥ कृष्णप्रसादयुक्तस्येति ॥ प्रसन्नो भगवाँस्तद्द्वारा मोचयति तीर्थादीनां माहात्म्यार्थम् ॥ यथाऽजामिलो नाम्ना ॥ अतः प्रसादार्थं प्रेमांतानि कर्तव्यानि कदाचित्प्रेमरहितोऽपि तीर्थे सम्यक्प्रकारेण मुक्तिसूत्रकेन म्रियत इति चेत्तत्राह ॥ नान्यस्येति ॥ तस्यापि पूर्वमेव साधनसंपत्तिः सिद्धा वासनावशात्परं प्राकृतत्वं भगवदिच्छया तस्मान्न व्यभिचार इत्यर्थः ॥ ४७ ॥

त० दी०— सेवकं कृपया कृष्णः कदाचिन्मोचयेत्क्वचित् ॥
तन्मूलत्वात्स्तुतिस्तस्य क्षेत्रस्य विनिरूप्यते ॥ ४८ ॥

त० प्र०—तर्हि तीर्थादेः कोपयोग इति चेत्तत्राह ॥ सेवकमिति ॥ सेवकमेव पूर्वं तथाभूतं तत्रापि कृपयैव तत्रापि कृष्ण एव कर्ता साधनं व्यापारश्चोक्तः ॥ काल-देशावाह ॥ कदाचित् क्वचिदिति ॥ अनेन कालस्यापि तत एव प्रशंसेति ज्ञापि-तम् ॥ स्तुतानि तीर्थादीनि भगवदंगत्वाद्दैत्यकृतविघ्ननाशकानि भवंतीति लोकप्रवृ-त्यर्थं मुक्तिसाधकानीत्युच्यंते ॥ तत्र स्थित्वा शुद्धे काले साधनानि साधयेदिति ॥ ४८ ॥

त० दी०— तस्मात्सर्वं परित्यज्य दृढविश्वासतो हरिम् ॥
भजेत श्रवणादिभ्यो यद्विद्यातो विमुच्यते ॥ ४९ ॥

त० प्र०— अतः केवलतीर्थाद्याश्रयं परित्यज्य यथा भगवति स्नेहो भवति तथा यत्नं कुर्यादित्याह ॥ तस्मादिति ॥ हरिभजनेपि कदाचिन्मोक्षो न भवेदित्याशंकां परित्यज्य दृढविश्वासं कृत्वा श्रवणादिभ्यो हेतुभ्यः श्रवणादिभिर्भजेत् ॥ ततो मु-च्यत एवेति पुनरुक्तम् ॥ ४९ ॥

त० दी०— ब्रह्मानंदे प्रविष्टानामात्मनैव सुखप्रमा ॥
संघातस्य विलीनत्वाद्भक्तानां तु विशेषतः ॥ ५० ॥
सर्वेंद्रियैस्तथा चांतःकरणैरात्मनाऽपि हि ॥
ब्रह्मभावात्तु भक्तानां गृह एव विशिष्यते ॥ ५१ ॥

त० प्र०—इदानीं कैमुतिकन्यायेन प्रेमभक्तेः फलमाह ॥ ब्रह्मानंदे प्रविष्टा-नामिति द्वाभ्याम् ॥ साधनं भक्तिर्मोक्षः साध्यः ॥ तथापि साधनदशैवोत्तमा ॥ तत्र हेतुर्यो विमुच्यते स संघातं परित्यज्य ब्रह्मणि लीयते, ब्रह्मभावं वा प्राप्नोति ॥ तस्य स्वरूपानंदः स्वरूपेण वा आनंदानुभवः ॥ स्वतंत्रभक्तानां तु गोपिकादितु-ल्यानां सर्वेंद्रियैस्तथांतःकरणैः स्वरूपेण चाऽऽनंदानुभवः ॥ अतो भक्तानां जीव-न्मुक्तापेक्षया भगवत्कृपासहितगृहाश्रम एव विशिष्यते ॥ ५० ॥ ५१ ॥

त० दी०— मोहार्थशास्त्रकलिलं यदा बुद्धेर्विभिद्यते ॥
तदा भागवते शास्त्रे विश्वासस्तेन सत्फलम् ॥ ५२ ॥

त० प्र०— नन्वेवं सति साधनफलयोरुत्कृष्टत्वात्कथं सर्वोपि न भक्तिमार्गे प्र-विशतीति चेत्तत्राह ॥ मोहार्थशास्त्रकलिलमिति ॥ भगवच्छास्त्रव्यतिरिक्तानि

१ सुख । २ भेव । ३ अतः इति नास्ति ।

मोहार्थानि ॥ तान्येव कलौ मानमर्हंति ॥ अतस्तेषां दर्शनेन बुद्धौ कलिलमुत्पद्यते तच्चेद्विभिद्यते भगवत्कृपया तदैव भागवते शास्त्रे विश्वासः ॥ एतदुक्तं सर्वथा सत्यमिति ॥ ततस्तदनुसारेण प्रवृत्तः सत्यं फलं प्राप्नोतीत्यर्थः ॥ ५२ ॥

त० दी०— जीवस्त्वाराग्रमात्रो हि गंधवद्व्यतिरेकवान् ॥
व्यापकत्वश्रुतिस्तस्य भगवत्त्वेन युज्यते ॥ ५३ ॥

त० प्र०— एवं सत्प्रकरणमुक्त्वा चित्प्रकरणमाह ॥ जीवस्त्विति ॥ तुशब्दः प्रकरणभेदकः ॥ जीवस्यादौ परिमाणमुच्यते ॥ आराग्रमात्रेति ॥ "आराग्रमात्रो ह्यपरोपि दृष्टः" इति श्रुतेः ॥ व्रीहेरग्रभाग आरः ॥ नन्वेतावाँश्चेत्कथं सर्वदेहव्यापिचैतन्योपलंभस्तत्राह ॥ गंधवद्व्यतिरेकवानिति ॥ विशेषेणातिरिच्यत इति व्यतिरेको द्रव्यापेक्षयाधिकदेशः ॥ यथा गंधः पुष्पापेक्षयाधिकदेशं व्याप्नोति तथा चैतन्यगुणः सर्वदेहव्यापीत्यर्थः ॥ गंधवतः कमलादेरिव वा स्थूलगुणयुक्तः, न तु तदन्यथानुपपत्त्या तावत्परिमाणः ॥ वैदिके शास्त्रे वाचनिक्येव व्यवस्था ॥ नाऽव्यवांतरपरिमाणे नित्यता भवति ॥ यथा भगवतः प्रादेशमात्रस्य अंगुष्ठपर्वमात्रस्य हंसाकृतेर्वा ॥ आराग्रमात्र एव हंसाकृतिः ॥ ननु "नित्यः सर्वगतः स्थाणुः" इति वाक्याद् व्यापको भविष्यतीत्याशंक्याऽऽह ॥ व्यापकत्वश्रुतिस्तस्येति ॥ भगवदावेशे भगवद्धर्मव्यापकत्वादयस्तत्र श्रूयंते न तु जीवो व्यापकः ॥ ५३ ॥

त० दी०— आनंदांशाभिव्यक्तौ तु तत्र ब्रह्मांडकोटयः ॥
प्रतीयेरन् परिच्छेदो व्यापकत्वं च तस्य तत् ॥ ५४ ॥

त० प्र०— ननु "ब्रह्मविद् ब्रह्मैव भवति" इति वाक्यादाराग्रमात्रत्वं न वास्तवमिति चेत्तत्राह ॥ आनंदांशाभिव्यक्ताविति ॥ ब्रह्मत्वेऽपि नाऽधिकपरिमाणता वक्तव्या ॥ अण्वपि ब्रह्म व्यापकं भवति ॥ यथा कृष्णो यशोदाक्रोडे स्थितोपि सर्वजगदाधारो भवति ॥ तथा जीवस्याप्यानंदांशश्चेदभिव्यक्तस्तदा तस्मिन् ब्रह्मांडकोटयो भवंति ॥ अतः परिच्छेदेपि व्यापकत्वसिद्धेर्न तदनुरोधेनाधिकपरिमाणत्वमंगीकर्तव्यमित्याह ॥ परिच्छेदो व्यापकत्वं च तस्य तदिति ॥ अलौकिकेषु धर्मेषु प्रमाणमेवानुसर्तव्यं न लौकिकी युक्तिः ॥ अतो व्यापकत्वेपि नाराग्रमात्रत्वं दोषाय ॥ ५४ ॥

त० दी०— प्रकाशकं तच्चैतन्यं तेजोवत्तेन भासते ॥
[illegible] पैर्ग्राह्यं न प्रकाश्यं च केनचित् ॥ ५५ ॥

प्रकाशकं तच्चैतन्यमिति ॥ प्रकाशकं तद्रूपं तस्य

चैतन्यगुणो वा ॥ तेन तेजोवद्भासते ॥ ततो ज्योतिः प्रयोगः ॥ "वृत्रस्य देहान्निष्क्रांतमात्मज्योतिः" इति, तथा "चैद्यदेहोत्थितं ज्योतिः" इति ॥ नैतावता तेजःप्रकृतित्वं तेजसोपि ब्रह्मप्रकृतित्वादेव तथात्वम् ॥ अत एव न रूपवत्त्वादिकमाशंकनीयम् ॥ लोकप्रमाणागोचरत्वं धर्ममाह ॥ **न प्राकृतैंद्रियैर्ग्राह्यमिति** ॥ रूपाद्यभावात्संनिकर्षाभावाच्च ॥ "यन्न स्पृशंति न विदुः" इति वाक्यात् ॥ नापि केनचित्प्रकाश्यम् ॥ यथा सूर्येण प्रकाशितो घटश्चक्षुषा गृह्यते ॥ न तथेंद्रियग्रहणार्थं किंचित्प्रकाशकमस्तीत्यर्थः ॥ ५५ ॥

त० दी०— योगेन भगवद्दृष्ट्या दिव्यया वा प्रकाशते ॥
आभासप्रतिबिंबत्वमेवं तस्य न चाऽन्यथा ॥ ५६ ॥

त० प्र०— ननु तर्हि "पश्यतां सर्वलोकानाम्" इत्यादि कथमुपपद्येतेति चेत्तत्राह ॥ **योगेनेति** ॥ त्रेधा तद्दर्शनं, योगेन साधितं मनः पश्यति दृष्टिस्तु या भगवंतं पश्यति दिव्या ज्ञानदृष्टिश्च पश्यति नाऽन्यथा तद्दर्शनमित्यर्थः ॥ एवं स्वमते जीवस्वरूपमुक्त्वा "एकधा दशधा चैव दृश्यते जलचंद्रवत्" इति वाक्याद्ब्रह्मप्रतिबिंबो ब्रह्माभासो वा जीव इति कश्चिन्मन्यते तन्मतनिराकरणायाऽऽह ॥ **आभासप्रतिबिंबत्वमिति** ॥ यद्यपि तद्वाक्यं ब्रह्मवाक्यम् ॥ तेनैव ब्रह्म नानारूपं चंद्रदृष्टांतेनोच्यते ॥ एकस्य नानात्वमेव तुल्यत्वे दृष्टांतार्थो न प्रतिबिंबत्वम् ॥ "प्रतिमुखस्य यथा मुखश्रीः" इत्यत्रापि तथा ॥ स्वाधारस्वभावानुविधायित्वे सति संमुखस्थितार्थानुविधायित्वेन प्रतीतियोग्यो हि प्रतिबिंबः ॥ स चेतरविलक्षणः, अतः प्रतिबिंबरूपमेकं भगवतः स्वतंत्रमिति मंतव्यम् ॥ तत्रापि मानाद्यभावात्तदर्थं प्रयत्नाकरणात् ॥ अत एव "समो मशकेन समो नागेन" इति श्रुतेः सर्वानुविधायित्वमपि संगच्छते ॥ अतो मूलसेकः शाखायामपि गच्छतीतिवत्प्रतिबिंबेपि तथा मानमस्तीत्येतावन्मात्रमभिप्रेत्योच्यते आभासत्वं प्रतिबिंबत्वं च न तु मुख्याभासवत्तस्याऽलीकं स्वरूपमित्यर्थः ॥ "यदस्ति यन्नास्ति" इति वाक्याद्भगवतः सर्वं रूपमुपपद्यते न त्वन्यस्येति भावः ॥ यथा महाराजस्य सर्वरूपं सर्वा च कृतिर्न दोषाय ५६

त० दी०— आनंदांशतिरोधानात्तत्तद्वत्त्वेन भासते ॥
मायाजवनिकाच्छन्नं नाऽन्यथा प्रतिबिंबते ॥ ५७ ॥

त० प्र०—आभासप्रतिबिंबत्वे प्रयोजकं रूपमाह ॥ **आनंदांशतिरोधानादिति** ॥ एतत्तिरोधानात्तज्जीवत्वं भासते ॥ तेन आनंदांशेनाऽऽविर्भूतेन युक्तं सत्तद्ब्रह्मव-

द्वभासत इत्यर्थः ॥ अंशद्वयस्य विद्यमानत्वात्सदंशस्फूर्तावाभासत्वमुभयोः स्फूर्तौ प्रतिबिंबत्वं त्रितयस्फूर्तौ ब्रह्मत्वमिति निर्णयः ॥ न तु लौकिकाभासत्वम् ॥ तथा सत्यलीकता स्यात् ॥ अतो मायावादिव्यतिरिक्तास्तं तथा न मन्यंत इति ॥ मिथ्यावादं युक्तिबाधितं दूषयति ॥ मायाजवनिकाच्छन्नमिति ॥ अवश्यं प्रतिबिंबसिद्ध्यर्थं व्यवधानं कल्पनीयम्॥ तन्मायादिकमेव भवतीति ॥ मायाजवनिकाच्छन्नं न प्रतिबिंबते॥ यथा तिरस्करिण्यां विद्यमानायां पुरुषो न प्रतिबिंबते ॥५७॥

त० द०— तत्र वृत्तेर्द्वासुपर्णीश्रुतेरपि विरुध्यते ॥
गुहां प्रविष्टावित्युक्तेर्भगवद्वचनादपि ॥ ५८ ॥

त० प्र०— दूषणांतरमाह ॥ तत्र वृत्तेरिति ॥ यो यत्र वर्तते स तत्र न प्रतिबिंबते ॥ उपरिस्थित एव भ्रांत्या प्रतीत आकाशः प्रतिबिंबते ॥ वस्तुतस्तु प्रभामंडलस्यैव रूपवतः प्रतिबिंबः ॥ तथा भ्रांत्या प्रतीतनीलरूपस्याऽपि गंधर्वनगरवत्॥ वस्तुसामर्थ्याच्चथा प्रतीतिः ॥ सर्वथा दर्पणरेखावत्तत्र विद्यमानं न प्रतिबिंबते ॥ दूषणांतरमाह ॥ द्वासुपर्णाश्रुतेरिति ॥ "द्वा सुपर्णा सयुजौ सखायौ समानं वृक्षं परिषस्वजाते॥ तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति" इति श्रुतेरिति॥ तयो रन्यः पिप्पलं स्वाद्वत्तीति वाक्यात् ॥ प्रतिबिंबस्य क्रियाबिंबस्य च तूर्ष्णीभावो विरुध्यते प्रतिबिंबक्रियाया बिंबाधीनत्वादेकत्रास्थितेश्च ॥ श्रुत्या च तथा बोध्यत इति प्रतिबिंबकल्पना श्रुतिविरुद्धा ॥ न्यायविरोधमाह ॥ भगवद्वचनादपीति ॥ "ममैवांशो जीवलोक इति" ॥ "उत्क्रामंतं स्थितं वापि" इति च ॥५८॥

त० दी०— जीवहानिस्तदा मुक्तिर्जीवन्मुक्तिर्विरुध्यते ॥
लिंगस्य विद्यमानत्वादविद्यायां ततोऽपि हि ॥ ५९ ॥

त० प्र०— एवं प्रमाणैर्बाधित्वा युक्तिभिर्बाध्यते ॥ जीवहानिरिति द्वाभ्याम् ॥ प्रतिबिंबपक्षे जीवहानिर्मुक्तिः स्यात् ॥ आत्महानमपुरुषार्थ इति मोक्षस्याऽपुरुषार्थत्वमापद्येत ॥ अलीकता वाऽसुरब्रह्मविद्यायां स्थापिता ॥ दूषणांतरमाह ॥ जीवन्मुक्तिर्विरुध्यत इति ॥ तत्र हेतुर्लिंगस्य विद्यमानत्वादिति ॥ क प्रतिबिंब इति वक्तव्यमंतःकरणेऽविद्यायां वा उभयोरशुद्धत्वात्प्रतिबिंब एव नोपपद्यते॥ अस्तु वा तथापि लिंगपक्षे उपाधेर्विद्यमानत्वात्संसार एव ॥ तदभावे परममुक्तिरेव न तु कथंचिज्जीवन्मुक्तिरित्यर्थः ॥ ततोऽप्यविद्यायां प्रतिबिंबो विरुध्यत इत्याह ॥ अविद्यायामिति ॥ ५९ ॥

त० दी०—अधिष्ठातुर्विनष्टत्वान्न देहः स्पंदितुं क्षमः ॥
प्रारब्धमात्रशेषत्वे सुषुप्तस्येव न व्रजेत् ॥ ६० ॥

त० प्र०—अथ जीवन्मुक्तो मुक्त एवेति चेत्तत्राह॥ अधिष्ठातुर्विनष्टत्वादिति॥ देहः स्पंदितुं चलितुं न समर्थः स्यात् ॥ "दैवादुपेतमुत दैववशादपेतम्" इति न्यायेन चलतीति चेत्तत्राह ॥ प्रारब्धमात्रशेषत्व इति ॥ तत्राधिष्ठाता वर्तत एव परं नानुसंधत्ते प्रारब्धं देहविद्यमानतामेव संपादयति ॥ नाऽधिकं भोजनादि कार्यं सुषुप्तौ तथोपलंभनात् ॥ तस्माज्जीवो नाऽऽभासो न वा प्रतिबिंबः ॥ ६० ॥

त० द०—तत्त्वमस्यादिवाक्यस्य शोधितस्यापि युक्तितः ॥
न विद्याजनने शक्तिरन्यार्थं तच्च कीर्तितम् ॥ ६१ ॥

त० प्र०—जीवब्रह्मणोरैक्यान्यथानुपपत्त्या "तत्त्वमसि" इति वाक्यानुरोधेन बिंबप्रतिबिंबयोरैक्यं युक्तमिति तथात्वं कल्प्यत इत्याशंकां निराकुर्वन् "तत्त्वमसि" इति वाक्यं न महावाक्यमित्याह ॥ तत्त्वमसीति ॥ इदं वाक्यं श्वेतकेतूपाख्याने वर्तते तत्रोपक्रमे "अपि वा तमादेशमप्राक्षो येनाऽश्रुतं श्रुतं भवति" इत्यादिना एकविज्ञानेन सर्वविज्ञानं प्रतिज्ञातम् ॥ तदेकमेव चेत्सर्वं भवेत्तदोपपद्यते "यथा सुवर्णखंडाः सुवर्णकार्यं च सर्वं सुवर्णमिति सुवर्णज्ञानेन तद्विज्ञानं भवति ॥ तदर्थं "सदेव सौम्य" इत्यारभ्य निरूपितम् "ऐतदात्म्यमिदं सर्वं" "तत्सत्यम्" "स आत्मा" "तत्त्वमसि"इति संपूर्णं महावाक्यम्॥ जडस्य सर्वस्यापि तदात्मकत्वमुक्तम् जडगतदोषाश्च तत्र परिहृतास्तत्सत्यमिति ॥ पूर्वोत्तरयोर्जडजीवयोः सदात्मकत्वे मध्ये हेतुमाह ॥ स आत्मेति ॥ एवं जडस्य तदात्मकत्वमुक्त्वा जीवस्याऽप्याह ॥ तत्त्वमसीति ॥ उपदेशश्चायम् "आवृत्तिरसकृदुपदेशात्" इति ब्रह्मसूत्रात्॥ अतः संपूर्णं महावाक्यमुपदेशः ॥ तत्र यथा "ऐतदात्म्यम्" इत्यत्र न भागत्यागलक्षणा सदंशे तथोत्तरत्रापि चिदंशेऽवगंतव्यम् ॥ नापि श्वेतकेतुरवतारः पूर्वं स्तब्धत्वादिदोषकीर्तनाद्विरोधाच्च ॥ अतो ब्रह्मवाक्यत्वात्तदेकशस्तत्त्वमसीति जीवब्रह्मणोरैक्यं न बोधयति वाक्यभेदप्रसंगादुपक्रमविरोधात् ॥ केचित् "अष्टपदानि महावाक्यम्" इत्याहुः ॥ तदपि तथा ॥ अतत्त्वमसीति च्छेदस्तु न वैदिकानां संमतः ॥ अतो नाऽस्य विद्याजनने शक्तिः ॥ अन्यार्थकीर्तनात् ॥ ६१ ॥

१ उपपादयति ।

त० दी०— ब्रह्मणः सर्वरूपत्वमवयुज्य निरूपितम् ॥
अलौकिकं तत्प्रमेयं न युक्त्या प्रतिपद्यते ॥ ६२ ॥

त० प्र०—तदेवाह ॥ ब्रह्मणः सर्वरूपत्वमिति ॥ अवयुज्य जडजीवौ पृथक्कृत्य सर्वं ब्रह्मेति वक्तुं जीवस्य ब्रह्मता निरूपिता ॥ नन्वस्तु वाक्यभेदः ॥ तथा सत्येतावन्मात्रं जीवस्य ब्रह्मतां बोधयति तच्च साक्षादनुपपन्नं सद्भागत्यागलक्षणया अखंडमेव वाक्यार्थं बोधयिष्यतीति चेत्साधु बुद्धिमतां बकबंधप्रयासो वृत्तः॥ उपदेशफलमायुष्मतां किं वृत्तमित्यनुसंधेयम् ॥ ब्रह्मभावेनाऽधिकधर्माभावात् ॥ देहादिभेदबोधनेनाऽपि दोषनिराकरणसंभवाच्च ततो व्यर्थः प्रकरणभेदमप्यंगीकृत्य महावाक्यत्वेनोपदेशप्रयासः ॥ तर्हि श्रुतिः कथमुपदिशतीति चेत्तत्राह ॥ अलौकिकं तत्प्रमेयमिति ॥ लौकिकं हि लोकयुक्त्याऽवगम्यते ब्रह्म तु वैदिकम् ॥ वेदप्रतिपादितार्थबोधो न शब्दसाधारणविधया भवति ॥ ६२ ॥

त० दी०—तपसा वेदयुक्त्या च प्रसादात्परमात्मनः ॥
विद्यां प्राप्नोत्युरुक्लेशः क्वचित्सत्ययुगे पुमान् ॥ ६३ ॥

त० प्र०—किं त्वन्यत्साधनमस्तीत्याह ॥ तपसेति ॥ तपः पूर्वांगं, वेदयुक्तिः सहकारिणी, भगवत्प्रसादो मुख्यं कारणम् ॥ क्वचिद्देशविशेषे ॥ सत्ययुगे काले पंचांगसंपत्तौ वाक्यार्थबोधो भवति ॥ अन्यथा "कं ब्रह्म खं ब्रह्म" इत्युपाख्याने कथमुपदेशमात्रेणैव बोधः कथमिदानींतनानामबोधः ॥ ६३ ॥

त० द०— सर्वज्ञत्वं च तस्येष्टं लिंगं तेजोप्यलौकिकम् ॥
तत्प्राप्तावपि नो मुक्तिर्जाग्रत्स्वप्नवदुद्भवः ॥
अविद्याविद्ययोस्तस्माद्भजनं सर्वथा मतम् ॥ ६४ ॥

त० प्र०—इदानींतनानामपि बोध इति चेत्तत्राह ॥ सर्वज्ञत्वं चेति ॥ स्वार्थं सर्वज्ञत्वं लिंगं परार्थमलौकिकं तेज इति ॥ ननु तथापि वाक्यार्थज्ञान एवेश्वरप्रसादादेर्भक्तेश्चोपयोग उक्त इति चेत्तत्राह ॥ तत्प्राप्तावपि नो मुक्तिरिति ॥ उपनिषद्भिर्महावाक्यार्थविद्याप्राप्तावपि ब्रह्मभावः सायुज्यं वा न तस्य दृष्टांतेन तथाभावस्य कालपरिच्छेदात् ॥ यथा जागरणस्वप्नौ परस्परोपमर्दनेनाऽऽविर्भवतस्तिरोभवतश्च तथैवाऽविद्याविद्ये अतो विद्योपमर्दनेनाऽविद्या पुनराविर्भविष्यतीति व्यर्थः प्रयासः ॥ तस्मात्स्वतंत्रभक्त्यर्थं सायुज्यार्थं च सर्वथा भजनं मतम् ॥ ६४ ॥

१ नाऽविद्या ।

त० दी०— सच्चिदानंदरूपं तु ब्रह्म व्यापकमव्ययम् ॥
सर्वशक्ति स्वतंत्रं च सर्वज्ञं गुणवर्जितम् ॥ ६५ ॥

त० प्र०— एवं जीवप्रकरणं समाप्य ब्रह्मप्रकरणमाह ॥ सच्चिदानंदरूपमिति ॥ ब्रह्मेति धर्मिनिर्देशः परब्रह्मवाचकः ॥ ब्रह्मपदार्थमाह ॥ व्यापकमिति ॥ गुणोपसंहारन्यायेन "अविनाशी वाऽरेऽयमात्माऽनुच्छित्तिधर्मा" इति श्रुतेरव्ययम् ॥ सर्वशक्तीति ॥ "यः सर्वज्ञः सर्वशक्तिः" इति श्रुतेः सर्वशक्ति ॥ निर्धर्मकत्वे सर्वेषामनुपास्योऽप्राप्योऽफलश्च स्यात् ॥ अत एव स्वतंत्रम् ॥ यो हि निरवधिज्ञानक्रियाशक्तियुक्तः स स्वतंत्रो भवति ॥ चकारात् "सर्वस्य वशी सर्वस्येशानः" इतिश्रुतेः ॥ सर्वं वशे समानयति गुणवर्जितं प्राकृतगुणरहितम् ॥ एव षड्धर्मा निरूपिताः ॥६५॥

त० दी०— सजातीयविजातीयस्वगतद्वैतवर्जितम् ॥
सत्यादिगुणसाहस्रैर्युक्तमौत्पत्तिकैः सदा ॥ ६६ ॥

त० प्र०— तत्र व्यापकत्वं नाम देशाद्यपरिच्छिन्नत्वम् ॥ तद्वस्तुपरिच्छेदेनोपपद्यत इति त्रितयपरिच्छेदाभावायाऽऽह ॥ सजातीयेति ॥ जीवाः सजातीयाः ॥ जडा विजातीयाः ॥ स्वगता अंतर्यामिणः ॥ त्रिष्वपि भगवाननुस्यूतः ॥ त्रिरूपश्च भवतीति तैर्निरूपितं द्वतं भेदस्तद्वर्जितम् ॥ अत्र बुद्धिरवतारेष्विव कर्तव्या ॥ एवं भगवत्त्वमुपपाद्य तंत्रोक्तान् गुणानाह ॥ सत्यादिगुणसाहस्रैरिति ॥ "सत्यं शौचं दया क्षांतिः" इत्यादिश्लोकैः सत्यादयो गुणा निरूपिताः ॥ ते चौत्पत्तिकाः सदा सृष्टिप्रलयादावपि ॥ ६६ ॥

त० दी०— सर्वाधारं वश्यमायमानंदाकारमुत्तमम् ॥
प्रापंचिकपदार्थानां सर्वेषां तद्विलक्षणम् ॥ ६७ ॥

त० प्र०— पुनः श्रुत्युक्तान् गुणानुपसंहरति पूर्वोक्तानां वैदिकत्वाय ॥ सर्वाधारमिति ॥ "सेतुर्विधरणः" इति श्रुतेः ॥ गीतायां मायासंबंधस्योक्तत्वान्मायाधीनो भवेदित्याशंक्याह ॥ वश्यमायमिति ॥ साकारतामाह ॥ आनंदाकारमिति ॥ उत्तममक्षरादपि ॥ यद्यपि कारणधर्मा एव कार्ये भवंति ॥ तथापि कार्यगतत्वेनाऽन्यथाप्रतीतेस्तद्व्यावृत्त्यर्थमाह ॥ प्रापंचिकपदार्थानामिति ॥ ६७ ॥

त० दी०— जगतः समवायि स्यात्तदेव च निमित्तकम् ॥
कदाचिद्रमते स्वस्मिन् प्रपंचेऽपि क्वचित्सुखम् ॥ ६८ ॥

त० प्र०— एवं स्वरूपधर्मानुक्त्वा कार्यमाह ॥ जगतः समवायि स्यादिति ॥

सर्वस्यापि जगतः कार्यरूपस्य ब्रह्मैव समवायि कारणं तस्मिन्नेवोतं प्रोतं गार्गीब्राह्मणे प्रसिद्धं तदेव निमित्तकारणम् ॥ चकारात्कर्तृ च ॥ तस्य प्रपंचनिर्माणे हेतुमाह ॥ कदाचिद्रमत इति ॥ यदा स्वस्मिन् रमते तदा प्रपंचमुपसंहरति ॥ यदा प्रपंचे रमते तदा प्रपंचं विस्तारयति ॥ प्रपंचभावो भगवत्येव लीनः प्रकटीभवतीत्यर्थः ॥६८॥

त० दी०—यत्र येन यतो यस्य यस्मै यद्यद्यथा यदा ॥
स्यादिदं भगवान् साक्षात्प्रधानपुरुषेश्वरः ॥ ६९ ॥

त० प्र०—कार्यादिभावः कश्चिदन्य इत्याशंक्य ब्रह्मवादस्वरूपमाह ॥ यत्र येनेति ॥ सर्वविभक्तीनां प्रकारस्य च भगवानेवार्थः ॥ प्रकृतिपुरुषौ कालश्च स एव॥६९॥

त० दी०—यः सर्वत्रैव संतिष्ठन्नंतरः संस्पृशन्न तत ॥
शरीरं तं न वेदेत्थं योऽनुविश्य प्रकाशते ॥
सर्ववादानवसरं नानावादानुरोधि तत् ॥ ७० ॥

त० प्र०—एवं पूर्वस्थितिमुक्त्वा पश्चात्स्थितिमाह ॥ यः सर्वत्रैवेति ॥ सर्वेष्वेव पदार्थेषु कार्येषु स्वयं तिष्ठंस्तान्यंतरयति स्वमध्ये स्थापयतीत्यर्थः ॥ तथा स्वयमाधाराधेयभावं प्राप्नुवदपि तन्न स्पृशति ॥ तर्हि ज्ञानेन तथा भवतीति चेन्नेत्याह शरीरमिति ॥ तत्सर्वमेव शरीरत्वेन मन्यते तस्य च ज्ञापकं भवति सर्वं तथापि न स्पृशति तर्हि शरीरमेव भगवंतमानंदनिधित्वात्स्पृशेदिति चेत्तत्राह ॥ शरीरं कर्तृ ब्रह्म न वेदेति ॥ इत्थममुना प्रकारेण योऽनुविश्य प्रकाशते ॥ "यः पृथिव्यां तिष्ठन् पृथिवीमंतरो यमयति यस्य पृथिवी शरीरं यं पृथिवी न वेद स आत्मा अंतर्याम्यमृतं यः पृथिव्यां तिष्ठन्" इत्यादिश्रुतेः ॥ श्रुत्यादिभेदेषु नानाप्रकारेण प्रतिपादितत्वादन्योन्यविरोधाच्च किंचित्प्रमाणं ब्रह्मणि भविष्यतीत्याशंक्याह ॥ सर्ववादानवसरमिति ॥ वस्तुतः श्रुतौ नानावाक्यानामेकवाक्यता निरूपिता ॥ सर्वभवनसामर्थ्येन विरुद्धधर्माश्रयत्वान्नैवंवादिनां वाक्यानि तत्तदंशवाक्यपराणि भवितुमर्हंति ॥ तेषां तथाहृदयाभावादतः सर्वे वादाः स्वभ्रांतिपरिकल्पितत्वेन वस्तुस्पर्शाभावादनवसरपराहता एव ॥ वस्तुवादिनां हृदयं यथा तथा वाक्यानां सरस्वतीरूपत्वात्कथं नैकवाक्यतेत्याशंक्याह ॥ नानावादानुरोधि तदिति ॥ एकैको वादो ब्रह्मण एकैकधर्मप्रतिपादकैकैकवाक्यदीप इति ॥ भगवांस्तान् सर्वानेवाऽनुसरति ॥ ७० ॥

१ अनुमादिनाम । इत्यपि पाठः ॥

त० दी०— अनंमूर्ति तद्ब्रह्म कूटस्थं चलमेव च ॥
विरुद्धसर्वधर्माणामाश्रयं युक्त्यगोचरम् ॥ ७१ ॥

त० प्र०— तत्र ब्रह्मणि विरुद्धधर्माः संतीति ज्ञापनार्थमाह ॥ अनंतमूर्तीति ॥ अनंता मूर्तयो यस्य ब्रह्म एकं व्यापकं च तेनानेकत्वमेकत्वे च निरूपितम् ॥ एवं गुणविरोधमुक्त्वा क्रियाविरोधमाह ॥ कूटस्थं चलमेव चेति ॥ एवकारः सगुणादिभेदविज्ञापनार्थः ॥ चकारोऽनुक्तविरुद्धधर्मसंग्रहार्थः ॥ वाक्येष्विवाऽत्रापि स्वरूपे विरोधमाशंक्य समाधानार्थं स्पष्टमाह ॥ विरुद्धसर्वधर्माणामिति ॥ ब्रह्मैव हि सर्वाधारम् ॥ यथा भूमिः ॥ सहजविरुद्धानामपि मूपकादिजीवानां कारणगत एव धर्मः पृथिव्यां भासते ॥ विशेषेण लौकिकयुक्तिस्तत्र नास्ति ॥ तदगम्यत्वादित्याह युक्त्यगोचरमिति ॥ ७१ ॥

त० दी०— आविर्भावतिरोभावैर्मोहनं बहुरूपतः ॥
इंद्रियाणां तु सामर्थ्याददृश्यं स्वेच्छया तु तत् ॥ ७२ ॥

त० प्र०— नन्ववतारेषु भगवत्त्वश्रुतेर्लौकिकप्रमाणविषयत्ववल्लौकिकयुक्तिविषयत्वमपि कुतो नेत्याशंक्याह ॥ आविर्भावतिरोभावैरिति ॥ आविर्भावोऽवतारो मत्स्यादिरूपेण प्राकट्यम् ॥ तिरोभावोऽवतारसमाप्तिः ॥ ते च बहुप्रकाराः स्थावरेभ्यो जंगमेभ्यः स्वतोपि भवंति ॥ ते सर्वे प्रकारा मोहका एव नटवद्बहुरूपत्वात्॥ अन्यथा लौकिकयुक्तेर्लंघनं न स्यात् ॥ नहि मत्स्योऽन्हा योजनशतं वर्धते ॥ नापि क्षणेन पर्वताकारो भवति वराहः ॥ अतो लौकिकबुद्धिविषयत्वम् ॥ नट इव भ्रांतम् ॥ अतो न लौकिकयुक्तिगोचरत्वमित्यर्थः ॥ तथापि कृष्णादयः सर्वैं दृष्टा अपि कथं लौकिकप्रमाणाविषयत्वं तत्राह ॥ इंद्रियाणां तु सामर्थ्यादिति ॥ चक्षुर्न स्वसामर्थ्येन भगवंतं विषयीकरोति ॥ किं तु भगवदिच्छयैव मां सर्वे पश्यंत्विस्येतद्रूपया तद्दृश्यम् ॥ ७२ ॥

त० दी०— आनंदरूपे शुद्धस्य सत्त्वस्य फलनं यदा ॥
तदा मरकतश्याममाविर्भावे प्रकाशते ॥ ७३ ॥

त० प्र०— ननु रूपवद्द्रव्यं चाक्षुषमिति महत्त्वादुद्भूतरूपत्वाच्च कुतो न चाक्षुषत्वं तत्राह ॥ आनंदरूपे इति ॥ आनंदरूपे आनंद एव ब्रह्मणि रूपस्थानीयः ॥ तत्र शुद्धसत्त्वस्य देवतारूपस्य भगवदिच्छया भगवदासनत्वेन स्फुरितस्य श्यामत्वात् ॥ तस्य प्रतिफलनेनाऽऽनंदो नीलमेघवद्भासत इत्यर्थः ॥ यथा स्फटिको ज॰

पाकुसुमेन श्वेतपाषाणेषु प्रतिष्ठोपि स्फटिको जपाकुसुमलौहित्यं गृह्णन् पाषाणेभ्यो वैशिष्ट्यमात्मनः प्रतिपादयति ॥ तथा ब्रह्मापि जगति गुणेषु प्रकटीभवत्तच्छ्यामत्वादि गृह्णन् ब्रह्मत्वमपि ख्यापयतीति भावः ॥ सत्त्वरजस्तमसां नीलरक्तश्वेतरूपतेति गुणावतारवाक्यैर्निर्णीयते ॥ ७३ ॥

त० दी०— चतुर्युगेषु च तथा नानारूपवदेव तत् ॥
उपाधिकालरूपं हि तादृशं प्रतिबिंबते ॥ ७४ ॥

त० प्र०—उपपत्त्यंतरमाह ॥ चतुर्युगेषु च तथेति ॥ "कृते शुक्लश्चतुर्बाहुः" इति वाक्यात् ॥ अन्यथा नियतं रूपं न स्यात् ॥ तत्रापि हेतुमाह ॥ उपाधीति ॥ उपाधिकालः सत्त्वादिदेवतारूपः ॥ तस्य रूपं ब्रह्मणि प्रतिबिंबते कालविशेषे रूपविशेषस्तदाधारत्वेन ब्रह्मणि स्फुरितो ब्रह्मरूपत्वं संपादयतीत्यर्थः ॥ ७४ ॥

त० दी०— अथवा शून्यवद्गाढं व्योमवद्ब्रह्म तादृशम् ॥
प्रकाशते लोकदृष्ट्या नाऽन्यथा दृक् स्पृशेत्परम् ॥ ७५ ॥

त० प्र०—एवं प्रतिफलनेन ब्रह्मत्वं प्राकृतरूपवत्त्वं च साधयित्वा प्रकारांतरेण रूपवत्त्वं साधयति ॥ अथवेति ॥ यथा मेघादिरहिते देशे आकाशे नीलिमा प्रतीयते ॥ चक्षू रूपवद्द्रव्यं गृह्णत्तदभावे दूरं गतं सन्नीलमिव पश्यति ॥ तथांधकारम् ॥ नैतावता आकाशे अंधकारे वा रूपमस्ति ॥ तथा ब्रह्माप्यऽतिगाढं गंभीरं तथा नीलमिव भातीत्यर्थः ॥ अनेनाऽचाक्षुषत्वमपि स्थापितं भवति ॥ पूर्वापेक्षया अयं पक्षो महानिति ज्ञापयितुमाह ॥ नान्यथा दृक् स्पृशेत्परमिति ॥ "परांचि खानि" इति श्रुतेः ॥ परं चक्षुर्न स्पृशति अन्यथा परत्वमेव न स्यादिति ॥ यद्वा एवं नीलरूपत्वेन निराकारत्वं ब्रह्मण्यायातीत्यरुच्या पक्षांतरमाह ॥ अथवेति ॥ उक्तव्याख्यानेपि तथा ॥ एवं नीलिमभानोपपत्तावपि पीतवसनादिभानानुपपत्त्यपरिहारादप सिद्धांतत्वाच्च व्याख्यानांतरमुच्यते ॥ ब्रह्म तादृशं यादृशं दृश्यते तादृशमेव तद्वदित्यर्थः ॥ तत्राऽनेकरूपत्वेनाऽब्रह्मत्वमाशंक्य निरस्यति दृष्टांतेन ॥ गाढं घनीभूतं सैंधवं लवणमिति यावत् ॥ तद्यथांतर्बहिश्चैकरूपरसं तथा ब्रह्माऽनेकरूपत्वेन भासमानमपि शुद्धमेवेत्यर्थः ॥ स यथा सैंधवघन इत्यादिधर्मिग्राहिकमानाच्चतादृगेव मंतव्यमिति भावः ॥ तर्हि "परांचि खानि" इति श्रुतेर्दृग्विषयत्वानुपपत्तिरित्यत आह ॥ शून्यवद्व्योमवल्लोकदृष्ट्या ब्रह्म न प्रकाशत इति शून्यगृहादौ वस्त्वभावादेव यथा न किंचिद्दृश्यं भवति तथेत्यर्थः ॥ दर्शनं हि द्वेधा तदर्थप्राक-

त्वेन साधारण्येच्छया वा ॥ तत्राद्याभाववत्स्त्रयंदृष्टांतस्तेषामासुरभावाद्यथोक्तब्रह्मानंगीकारात्तादृक् तत्तान् प्रत्यसदिवेति भावः॥ यद्वा शून्यं तम उच्यते ॥ तेन तद्ब्रह्मादिर्लक्ष्यते तत्र यथा सदपि वस्तु प्रकाशकाभावान्न भाति ॥ तथेदमनुग्रहाभावात्तथेत्यर्थः ॥ अनवतारदशायां तथेच्छाभावाद्व्योमवत्तथेत्यर्थः ॥ रूपाभावाद्यथा तदयोग्यं तथेदमपीति भावः ॥ इच्छा तत्र रूपस्थानीया ज्ञेया ॥ दर्शने हेतुमाह ॥ अन्यथा उक्तवैपरीत्येन तदनुग्रहतदिच्छाभ्यां दृक् परं हरिं स्पृशेदित्यर्थः ॥ यद्वा ॥ जलेन न शून्या अशून्याः ॥ सजलमेघा इति यावत् ॥ तद्व्योमवच्च श्यामं स्वरूपं लोकदृष्ट्या यत्प्रतीयते तद्ब्रह्म न तूपाधिरौपाधिकं चेत्यर्थः ॥ नन्वत्रोपपत्तिः केत्यत आह ॥ तादृशमिति ॥ तद्वस्त्वेव तथेत्यर्थः ॥ न हि वस्तुस्वरूपमुपपत्तिमपेक्षत इति भावः ॥ उपपत्तिमथाह ॥ अन्यथा यदि शुद्धं ब्रह्म न स्यात्तदा अदृक् न विद्यते दृक् ज्ञानं यस्य स तथा पशुपक्षिवृक्षादि परं प्रकृतिकालाद्यतीतं न स्पृशेन्न प्राप्नुयादित्यर्थः ॥ अथवा अन्यथा शत्रुत्वेन ज्ञानं यस्य स पूतनादिः प्रकृत्याद्यतीतं न प्राप्नुयादित्यर्थः ॥ अस्य तर्करूपत्वादापादकं यदि ब्रह्म न स्यादिति रूपमर्थादेव प्राप्यत इति नोक्तम् ॥ ७५ ॥

त० दी०— आत्मसृष्टेर्न वैषम्यं नैर्घृण्यं चापि विद्यते ॥
पक्षांतरेऽपि कर्म स्यान्नियतं तत्पुनर्बृहत् ॥ ७६ ॥

त० प्र०— एवं लौकिकत्वदोषं परिहृत्य कर्तृत्वेन वैषम्यनैर्घृण्ये प्राप्ते परिहरति॥ आत्मसृष्टेरिति ॥ "स आत्मानं स्वयमकुरुत" इति श्रुतेः ॥ जगति नानाविधान् सृजन्नपि न विषमो भवति ॥ नापि क्रूरं कर्म कुर्वन् निर्घृणो भवति ॥ चकारादन्येपि दोषाः परिह्रियंते ॥ अत्र मतांतरमाशंक्य परिहरति ॥ पक्षांतरेपीति "वैषम्यनैर्घृण्येन सापेक्षत्वात्" इति बादरायणः ॥ कर्मसापेक्षत्वान्न विषम इत्याह ॥ तथा सति कर्म नियतं नियामकं भवेत् ॥ परं तत्कर्म किमिति विचारणीयम् ॥ ब्रह्म चेत्स दोषस्तदवस्थ अन्यच्चेद्ब्रह्मणस्तत्सापेक्षत्वादसमर्थत्वम् ॥ तद्धेतोरेवास्त्विति न्यायेन कर्मण एव तत्समाधाने ईश्वरकारणता न संभवेत् ॥ हेतुव्यपदेशश्च विरुद्ध्येत नापि लोकवद्दूषणस्थापनं युक्तम् ॥ अत आत्मसृष्टेरित्येव हेतुः ॥ सूत्रं तु लोकबुद्ध्यनुसारि ॥ अन्यथा "फलमत उपपत्तेः" इत्यधिकरणं विरुध्येत ॥ ७६ ॥

त० दी०— स एव हि जगत्कर्ता तथाऽपि सगुणो न हि ॥
गुणाभिमानिनो ये वै तदंशाः सगुणाः स्मृताः ॥
कर्ता स्वतंत्र एव स्यात्सगुणत्वे विरुध्यते ॥ ७७ ॥

त० प्र०—नन्वस्तु कर्मसापेक्ष एव कर्ता सगुणत्वादित्याशंक्याह ॥ स एव हि जगत्कर्तेति ॥ यस्तूच्चावचं सृजति स एव जगत्कर्ता ॥ नापि सगुणः ॥ हेतुसिध्यर्थं सगुणस्य लक्षणमाह ॥ गुणाभिमान इति ॥ 'गुणैः कृत्वाभिमानिनः' अनेन देहेंद्रियाभिमानाभावेपि गुणाभिमानमात्रेणैव सगुणत्वम् ॥ ते गुणाः सृष्ट्यादिहेतवोऽनधिष्ठिताः पुनर्न कुर्वंतीति गुणाधिष्ठात्र्यो देवता ब्रह्मादयः सगुणा उच्यंते तेषां स्वातंत्र्यमाशंक्याह ॥ तदंशा इति ॥ तत्र प्रमाणं स्मृता इति ॥ स्मृतिपुराणेषु तथा प्रसिद्धेरित्यर्थः ॥ भगवाँस्तु सर्वात्मा सर्वनियंता मूलकर्तेति न सगुणः ॥ बाधकमाह ॥ कर्ता स्वतंत्र एव स्यादिति ॥ ७७ ॥

त० दी०— केचिदत्रातिविमलप्रज्ञाः श्रौतार्थबाधनम् ॥
कृत्वा जगत्कारणतां दूषयंति हरौ परे ॥ ७८ ॥

त० प्र०—एवं स्वमतं स्थापयित्वा परमतनिराकरणाय भगवंतं सगुणं मन्यमानानुपहसति ॥ केचिदत्रेति ॥ अतिक्रांता विमला प्रज्ञा येभ्यः ॥ तत्र हेतुमाह ॥ श्रौतार्थबाधनमिति ॥ श्रुत्या अभिधया वृत्त्या योऽर्थः प्रतिपाद्यते प्रकरणानुरोधेन स एव श्रुत्यर्थः ॥ तत्र "सदेव सौम्येदमग्र आसीत्" "आत्मा वा इदमेक एवाग्र आसीत् ॥" "ब्रह्मविदाप्नोति परम्" "भृगुर्वै वारुणिः" इत्यादि ब्रह्मप्रकरणेषु निःसंदिग्धेषु ब्रह्मण एव केवलस्य जगत्कारणत्वं प्रतिपादितं तत्सामान्यादितरेष्वपि संदिग्धेषु व्यासैः सूत्रेषु तथैवार्थो निर्णीतः ॥ तदुभयं बाधित्वा वाक्याभासं युक्त्याभासंच पुरस्कृत्य ब्रह्मणो जगत्कारणतां दूषयति ॥ परो हरिः पुरुषोत्तमः परं ब्रह्मेति यावत् ॥ ७८ ॥

त० दी०— अनाद्यविद्यया बद्धं ब्रह्म तत्किल कारणम् ॥
स्वाविद्यया संसरति मुक्तिः कल्पितवाक्यतः ॥ ७९ ॥

त प्र०—तर्हि किं कारणमित्याशंकायामाह ॥ अनाद्यविद्ययेति ॥ अनादिरविद्या अहमज्ञ इत्यनुभवसिद्धाभावरूपा तेन बद्धं चैतन्यतदध्यासात् ॥ तदेतादृशं जगत्कारणं कार्यानुरूपस्यैव कारणस्य युक्तत्वात् ॥ कार्यं तु जगज्जडात्मकं हेयं तुच्छ-

१ मत्वा ।

निष्ठम् ॥ अतः कारणेनापि तथा युक्तेन भाव्यमिति युक्त्याभासः ॥ वस्तुतस्तु "सत्यं चाऽनृतं च सत्यमभवत्" इति "स आत्मानं स्वयमकुरुत" इति "प्रजायेय" इत्यादिवाक्यैः स्वतः प्रमाणभूतैर्निःसंदिग्धं प्रतिपाद्यते कार्यरूपस्य जगतो ब्रह्मत्वम् ॥ कुत्सितत्वं न क्वचिदपि ब्रह्मविदां हृदये भासते ॥ यथा स्वांगेषु पुरुषस्य पृथग्भान एव तथा प्रतीतेः ॥ अन्यथा बीजादीनां ब्रह्मत्वकथनं मलदृष्टांतेन बाधितं स्यात् ॥ तथा सति सर्वसन्मार्गनाशः ॥ तथा वाक्याभासाः ॥ "इंद्रो मायाभिः पुरुरूप ईयते" "अनृतापिधानाः" "वाचारंभणं विकारः" "मायां तु प्रकृतिं विद्यात्" इत्यादयः॥ एतेषां पदार्थप्राया मायावाक्यविरोधेन न वाक्यार्थे संगच्छते॥तथा च यथायथं मायाशब्देन क्वचिदिंद्रियवृत्तिः क्वचित्प्रथमं कार्यं सूक्ष्ममनृतशब्देन देहेंद्रियादिकम्॥"सत्यं चाऽनृतं च सत्यमभवत्" इति ब्रह्मण एव देहेंद्रियादिरूपत्वमात्मरूपत्वं च न त्वत्र स्वप्नादिदृष्टांतेन मिथ्यात्वं वक्तुं शक्यते ॥ बाधश्रवणाच्च मिथ्यादृष्टिर्नास्तिकता मायेत्यसुराः ॥ "असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम्" इत्यादिवाक्यैः साधकानि सहस्रशो वाक्यानि संति "स सभूतं स भव्यम्" इति हरिरेव जगदित्यादीनि अतोबाधितोऽप्यविद्यावादः केषांचिद्धृदये शमादिरहितानां चित्तदोषेण जगद्दुष्टमिति पश्यता प्रतिभातीत्याह ॥ किलेति ॥ तन्मते बंधमोक्षौ निरूपयति ॥ स्वाविद्ययेति ॥ चैतन्यमात्रनिष्ठया जलावरणमलरूपया ॥ आत्मानं बहिर्मुखः संसारिणं मन्यते ॥ तस्य च मोक्षस्तेनैव विद्यावत्त्वेन कल्पितगुरोरुपदेशवाक्यादिति ॥ ७९ ॥

त० दी०—एवं प्रतारणाशास्त्रं सर्वमाहात्म्यनाशकम् ॥
उपेक्ष्यं भगवद्भक्तैः श्रुतिस्मृतिविरोधतः ॥
कलौ तदादरो मुख्यः फलं वैमुख्यतस्तमः ॥ ८० ॥

त० प्र०—नन्वेवमेवास्तु शास्त्रार्थः को दोष इति चेत्तत्राह ॥ एवं प्रतारणाशास्त्रमिति ॥ यथा प्राणिनो भगवद्विमुखा भवंति तथोपायो रचितः ॥ न त्वत्र किंचिज्ज्ञातव्यमस्ति तत्र हेतुमाह ॥ सर्वमाहात्म्यनाशकमिति ॥ यद्धि सर्वोपास्यं तस्य माहात्म्यं नाशयति सर्वेश्वरः सर्वकर्ता सर्वकारणकारणरूप इत्यादिरूपम् ॥ तर्ह्येतन्मतं सर्वं लिखित्वा दूषणीयमिति चेन्नेत्याह ॥ उपेक्ष्यमिति ॥ असद्भावनया स्वस्यापि बुद्धिनाशः स्यात् ॥ अतस्तत्रोपेक्षैव कर्तव्या सुतरां भगवद्भक्तैर्भक्तिमार्गविरोधात् ॥ दूषणमाह ॥ श्रुतिस्मृतिविरोधत इति ॥ स्वप्रकरणपठितैः

१ अस्याग्रे सत्यं इति शेषः इत्यधिकं दृश्यते क्वचित् ।

"आनंदाद्ध्येव खल्विमानि भूतानि जायंते" इति "अहं सर्वस्य जगतः प्रभवः प्रलयस्तथा" इतिवाक्यसहस्रैर्मायावादो विरुध्यते ॥ सर्वेषामादरान्यथानुपपत्तिं परिहरति ॥ **कलौ तदादरो मुख्य इति** ॥ तत्राऽपि हेतुः ॥ **फलं वैमुख्यत इति** ॥ भगवद्वैमुख्यात्तमो भावि ॥ ८० ॥

त॰ दी॰— ज्ञाननाश्यत्वसिद्ध्यर्थं यदेतद्विनिरूपितम् ॥
तदन्यथैव संसिद्धं विद्याविद्यानिरूपणैः ॥ ८१ ॥

त॰ प्र॰— ननु स्यात्मज्ञानान्मोक्षः सिध्यत्विति प्रपंचनिवृत्त्यर्थं प्रपंचस्याऽज्ञानकार्यत्वमुच्यते ॥ यतो ज्ञानमज्ञानस्यैव नाशकमिति ॥ सकार्यामविद्यां विद्या नाशयत्विति ॥ जगतो मायिकत्वं प्रतिपाद्यत इति चेत्तत्राह ॥ **तदन्यथैव संसिद्धमिति** ॥ नहि ब्रह्मविद्यायां प्रपंचविलयोऽपेक्ष्यते तथा सति प्रलयवत्सर्वेषामनादरणीयता स्यात् अतो विद्याविद्यानिरूपणैः साधनशास्त्रैरेवाऽन्यथासिद्धमिति न तदर्थं प्रपंचविलयो वक्तव्यः ॥ "विद्यां चाऽविद्यां च" इत्यादिश्रुतयोऽत्राऽनुसंधेयाः ॥ हृदये स्वयं भासमानो भगवान् मोक्षं दास्यति किं प्रपंचविलयेनेति भावः ॥ ८१ ॥

त॰ दी॰— यन्मायिकत्वकथनं पुराणेषु प्रदृश्यते ॥
तदैंद्रजालपक्षेण मतांतरमिति ध्रुवम् ॥
नास्ति श्रुतिषु तद्वार्ता दृश्यमानासु कुत्रचित् ॥ ८२ ॥

त॰ प्र॰— ननु पुराणेषु मायिकत्वं श्रूयते प्रपंचस्य "विद्धि मायामनोमयम्" ॥ "त्वय्युद्भवाश्रयति" इत्यादिषु ततो लाघवान्मायावाद एव बुद्धिसौकर्यादंगीकर्तव्य इत्याह ॥ **यन्मायिकत्वकथनमिति** ॥ एवमनूद्य परिहृति ॥ **तदैंद्रजालपक्षेणेति**॥ सृष्टिभेदेष्वैंद्रजालपक्षो निरूपितः ॥ स एव पुराणेषु वैराग्यार्थं निरूप्यते ॥ अतो न वस्तुनिरूपकम् ॥ किंतु तन्मतांतरमसुरव्यामोहजनकम् ॥ पुराणानि भगवल्लीलाप्रतिपादकानि भगवच्चरित्रवद्दैत्यानां मोहमुत्पादयंति ॥ एवमेवैतत्रोपपत्तिमाह ॥ **नास्ति श्रुतिष्विति** ॥ यदि जगतो मायिकत्वं ज्ञानार्थं कर्मार्थं वाऽभिमतं स्यात्तदा कांडद्वयमध्ये क्वचिदुक्तं स्यात् ॥ ननु सर्वे वेदास्त्वया न ज्ञायंत इति ॥ कथं ज्ञायते नोक्तेति तत्राह ॥ **दृश्यमानास्विति** ॥ एकादश शाखाः सांप्रतं प्रचरंति तासु न दृश्यत इत्यर्थः ॥ ८२ ॥

---

१ एतदारभ्य दध्याने पर्यन्तमन्यत्र नास्ति।

त० दी०—वाचारंभणवाक्यानि तदनन्यत्वबोधनात् ॥
न मिथ्यात्वाय कल्प्यंते जगतो व्यासगौरवात् ॥ ८३ ॥

त० प्र०—नन्वस्ति सामशाखायामुत्तरकांडे वाचारंभणवाक्यमिति चेत्तत्राह ॥ **वाचारंभणवाक्यानीति** ॥ अत्रोपक्रमे "कतमः स आदेशः" इति प्रश्ने "यथैकेन मृत्पिंडेन" इत्यादिदृष्टांतैः सामान्यलक्षणप्रत्यासत्तिरिव निरूपिता ॥ दृष्टांते कार्यकारणयोरुभयोरपि प्रत्यक्षत्वम् ॥ दार्ष्टांतिके तु कार्यं प्रत्यक्षसिद्धं कारणं श्रुतिसिद्धम् ॥ कारणताप्रकारश्च तत्र कार्यकारणयोरभेदो बोधनीयः ॥ अन्यथैकविज्ञानेन सर्वविज्ञानं न स्यात् ॥ प्रकारभेदानामज्ञानात् ॥ अतः कार्यप्रकाराव्यवहारार्थं वाचा संकेतिता घटः पट इत्यादयो न तु तेन रूपेण तेषां वस्तुत्वम् ॥ तथा सत्येकविज्ञानेन सर्वविज्ञानं न भवेत् ॥ सत्यता तु मृत्तिकेत्येव कारणत्वेनैव ॥ अतः कार्याणां तदनन्यत्वमेव श्रुत्या बोध्यते न तु मिथ्यात्वं ॥ शुक्तिरजतवत् ॥ अन्यथा शुक्तिरजतादिकमेव दृष्टांतीक्रियेत ॥ नापि तत्र सामान्यलक्षणा संभवति प्रमाणानंतरूपत्वात् ॥ तस्माद्वाचारंभणवाक्यानि जगतो मिथ्यात्वाय न कल्प्यंते ॥ तथैवाह सूत्रकारः "तदनन्यत्वमारंभणशब्दादिभ्यः" इति ॥ ननु यथा व्यासो महांस्तथा शंकरादिरपि ततस्तद्विरोधात्कथमेवं निर्णयस्तत्राह ॥ **व्यासगौरवादिति** ॥ व्यासोऽस्माकं गुरुः, अतो व्यासाभिप्रेतविरुद्धं नांगीक्रियत इत्यर्थः ॥ ८३ ॥

त० दी०—ज्ञानार्थमर्थवादश्चेच्छ्रुतिः सृष्ट्यादिरूपिणी ॥
अनंगीकरणाद्युक्तं विधिमाहात्म्ययोर्न तत् ॥ ८४ ॥

त० प्र०—ननु सर्वेषां विचारो महान् ॥ तत्र सूत्रेपूक्तानुक्तद्विरुक्तचिंताया अपि वक्तव्यत्वात्कथमेकांततो निर्णयः ॥ सृष्ट्यादिवाक्यान्यर्थवादरूपाणि ॥ अतस्तेषां स्तावकत्वमेव मुख्यमिति ॥ सृष्ट्यादौ तात्पर्याभावाज्ज्ञानस्यैव फलसाधकत्वात्क्रियावत् ज्ञानस्यार्थवाक्यप्रयोजनाभावाद्वस्तुस्वरूपज्ञाने कार्यापेक्षया विवर्तस्य प्रयोजकत्वान्मिथ्यात्वमेव स्वीक्रियतामित्याह ॥ **ज्ञानार्थमिति** ॥ परिहरति ॥ **अनंगीकरणादिति** ॥ भवेदेतदेवं यदि मिथ्यावादिमते सृष्ट्यादिवाक्यैः सह महावाक्यस्यैकार्थता संभवति ॥ पूर्वकांडे विध्येकवाक्यतार्थवादानां "स्तुत्यर्थेन विधीनां स्युः" इति उत्तरकांडे ब्रह्मवादिनां माहात्म्यज्ञानेनैकवाक्यता ॥ अन्येषां तु न वेदांतेषु माहात्म्यज्ञानमुपयुज्यते नापि विधिः ॥ अत एकवाक्यताभावान्नैवमर्थः स्वीकर्तव्यः ॥ ८४ ॥

त० दी०—अपवादार्थमेवैतदारोपो वस्तुतो न हि ॥
दृढप्रतीतिसिद्ध्यर्थमिति चेत्तन्न युज्यते ॥ ८५ ॥

त० प्र०—नन्वस्त्वेकवाक्यतायां प्रकारोऽध्यारोपापवादः ॥ श्रुत्या प्रथमं जगज्जननमुक्त्वा कर्तृत्वभोक्तृत्वे ब्रह्मणि प्रतिपाद्य तद्द्वारा सोपाधिके ब्रह्मणि बुद्धौ सिद्धायां शाखारुंधतीन्यायेन पूर्वोक्तमपोह्य कर्तृत्वाद्यपेतं पश्चाद्ब्रह्म बोध्यत इत्याह ॥ **अपवादार्थमिति** ॥ एतस्य कर्तृत्वादेरारोपस्तस्य प्रयोजनम् ॥ **दृढप्रतीती** ॥ अतो न ब्रह्मणि वस्तुतः कर्तृत्वमिति चेन्नैवं वक्तुं युक्तम् ॥ ८५ ॥

त० दी०—मुख्यार्थबाधनं नास्ति कार्यदर्शनतः श्रुतेः ॥
ऐंद्रजालिकपक्षेऽपि तत्कर्तृत्वं नटे यथा ॥ ८६ ॥

त० प्र०—तत्र हेतुः ॥ **मुख्यार्थबाधनमिति** ॥ अपवादार्थं जगत्कथने तस्य प्रतीतिर्न स्यात् ॥ नहि जगत्प्रतीतिर्वेदसिद्धा येन प्रथमं बोधयति पश्चान्निषेधति॥ लोकसिद्धा ह्येषा ॥ तथा च कर्तारमेवाऽऽह ॥ जगदनूद्य कर्तृत्वं बोधयित्वा यदि निषेधं कुर्याद्यदा कार्यस्य विद्यमानत्वात्कर्त्रंतराभावाच्च बाधितविषया स्यात् ॥ सर्वतो बलवती ह्यन्यथाऽनुपपत्तिः ॥ वेदोपि स्वभ्रांतिकल्पित इति महत्साहसम् ॥ किंच स कल्पको नाऽस्मदादिः ॥ तथा सति पारंपर्यं नोपपद्येत ॥ "वैधर्म्याच्च न स्वप्नादिवत्" इति न्यायविरोधश्च ॥ अतः प्रपंचप्रतीतेर्विद्यमानत्वान्मुख्यार्थबाधनं नास्ति ॥ अथाऽऽग्रहिलतया मायासहितस्यैव कर्तृत्वमंगीक्रियेत प्रपंचस्य च मायिकत्वं तदा लौकिकमायिनो दृष्टांतीकर्तव्याः ॥ तत्र च तादृशं अदर्शनसामर्थ्यरूपं मंत्रादिना कर्तृत्वं नटे वर्तत एवेत्याह ॥ **ऐंद्रजालिकपक्षेपीति** ॥ दर्शनन्यायश्रुतिभिर्न जगतो मिथ्यात्वमिति भावः ॥ ८६ ॥

त० दी०—मुक्तिस्तदातिनष्टा स्यात्स्वप्नदृष्टगजेष्विव ॥
मायादीनां च कर्तृत्वं श्रुतिसूत्रैर्विबाध्यते ॥ ८७ ॥

त० प्र०—मिथ्यात्वांगीकारे बाधकमाह ॥ **मुक्तिस्तदेति** ॥ कृत्स्नस्य प्रपंचस्य कल्पितत्वे तन्मध्यपातान्मनुष्यादीनां मुक्त्यर्थं प्रयत्नो व्यर्थः स्यात् ॥ न हि मायायां प्रतीताः पारावताः कदाचिदपि मुच्यंते ॥ नापि स्वप्नदृष्टा गजाः ॥ अतोऽखिलजगत्साक्षी भगवानेव मुच्येत ॥ न त्वस्मदादयस्तन्मायापरिकल्पितत्वात् ॥ तथा सति व्यर्थः पारलौकिकप्रयासः ॥ अस्मदज्ञानपरिकल्पितत्वं तु मोहार्थमिति

१ निषिद्धयति।

पक्षद्वयेपि मायावादो बाधितः ॥ उपहितचैतन्यरूपभगवन्मायापक्षेऽस्मदज्ञानपरिकल्पनापक्षे च ॥ **स्वप्रवृत्तिविघातेन गुर्वादीनां च दूषणात् ॥ मायावादो न मंतव्यः सर्वव्यामोहकारकः** ॥ १ ॥ नन्वस्तु मायैव कर्त्री तदुपहितो जीवो वा ब्रह्म तूभयविवरूपमिति श्रुतौ तत्कर्तृत्वं बोध्यत इत्याशंक्याह ॥ **मायादीनां च कर्तृत्वमिति** ॥ "कथमसतः सज्जायेत" ॥ "ईक्षतेर्नाऽशब्दम्" ॥ "कामाच्च नाऽनुमानापेक्षा" "नेतरोऽनुपपत्तेः" इत्यादिश्रुतिसूत्रैर्मायायाः प्रकृते जीवस्य च कर्तृत्वं निषिध्यते ॥ ८७ ॥

त० दी०—अकर्तृत्वं च यत्तस्य माहात्म्यज्ञापनाय हि ॥
विरुद्धधर्मबोधाय न युक्त्यैकस्य वारणम् ॥ ८८ ॥

त० प्र०—ननु ब्रह्मणि कर्तृत्वनिषेधः श्रूयते अस्थूलादिवाक्यैः ॥ तथा निरंजनश्रुतिः ॥ "अकर्ता भोक्ता च" इति ॥ "अहंकारविमूढात्मा कर्ताऽहमिति मन्यते" इति ॥ एतदन्यथानुपपत्त्या कर्तृत्वस्य भ्रांतिसमानाधिकरणत्वं लोके दृष्टमिति दूषणभयाद्ब्रह्मणि कर्तृत्वं नांगीक्रियत इत्याशंक्याह ॥ **अकर्तृत्वं चेति** ॥ ब्रह्मण्यलौकिकं कर्तृत्वं वदन्नकर्तृत्वमाह लौकिककर्तृत्वनिषेधार्थम् ॥ अन्यथा "अहं सर्वस्य जगतः प्रभवः प्रलयस्तथा" इति स्वस्य पश्चात्कर्तृत्वमुच्यमानं विरुध्येत ॥ एतदेवाभिसंधाय केनचिदुक्तं "न प्रमाणमनाप्तोक्तिर्नादृष्टे कचिदाप्तता ॥ अदृश्यदृष्टौ सर्वज्ञः" इति ॥ अतो माहात्म्यज्ञापनार्थमेव अकर्तृत्वकथनम् ॥ यथा "पुरुष एवेदं सर्वम्" "उतामृतत्वस्येशानः" "एतावानस्य महिमा" इति हि शब्दार्थः ॥ माहात्म्यबोधनप्रकारमाह ॥ **विरुद्धधर्मबोधायेति** ॥ यत्रैव परस्परविरुद्धा धर्मा बोध्यंते स एव महान् ॥ ते च धर्मा उभये सत्याः ॥ अन्यथा माहात्म्यं न सिध्येन्नटवत् ॥ अतो युक्त्याऽन्यतरस्य न बाधः ॥ ८८ ॥

त० दी०—मायिकत्वं पुराणेषु वैराग्यार्थमुदीर्यते ॥
तस्मादविद्यामात्रत्वकथनं मोहनाय हि ॥ ८९ ॥

त० प्र०—पुराणं तु मित्रसंमतमिति लोकरीत्या बोधयत्कदाचिन्मायिकत्वं बोधयतीत्याह ॥ **मायिकत्वं पुराणेष्विति** ॥ आसक्तिनिवृत्त्यर्थं तथा बोध्यते ॥ अवांतरप्रकरणानुरोधाच्च तथाऽवसीयते ॥ उपसंहरति तस्मादिति ॥ ८९ ॥

त० दी०—असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम् ॥
अपरस्परसंभूतं किमन्यत्कामहैतुकम् ॥ ९० ॥

त० प्र०— अस्मिन्नर्थे भगवद्वाक्यं संमतिरूपमाह ॥ असत्यमप्रतिष्ठं त इति ॥ अतो यत्र कचिज्जगतो मिथ्यात्वमसत्यत्वं मायिकत्वमिति बोध्यते तदासुरमिति निश्चयः ९०

त० दी०— अखंडाद्वैतभाने तु सर्वं ब्रह्मैव नान्यथा ॥
ज्ञानाद्विकल्पबुद्धिस्तु बाध्यते न स्वरूपतः ॥ ९१ ॥

त० प्र०— ननु ब्रह्मवादेपि वाचारंभणवाक्यानुरोधाद्विकल्पानामसत्यत्वमंगीकर्तव्यमित्याशंक्याह ॥ अखंडाद्वैतभाने त्विति ॥ द्वेधा हि वेदांतानां बोधनप्रकारः ॥ प्रजायेयेतिवाक्यानुरोधाद्बनीचत्वं भगवानेव प्राप्त इति विकल्पबुद्धावपि ब्रह्मावगतिर्न विरुध्यते ॥ कचित्पुनर्विकारा वाचैवारब्धा इति कार्यांशमनादृत्य वस्तुस्वरूपविचारेण आविर्भावतिरोभावौ पृथक्कृत्य सन्मात्रं जगदिति बोधयंति ॥ तत्र प्रथमपक्षे संदेह एव नास्ति ॥ द्वितीयपक्षेपि न दूषणमिति तुशब्दः ॥ यदा अखंडाद्वैतभानं सुवर्णग्राहकवत्सत्वेनैव सर्वं गृह्णाति तदा अवांतरविकल्पविषयिणी बुद्धिर्घट इति पट इति सा बाध्यते सर्वत्र ब्रह्मैवेति बुद्धिर्भवति न तु स्वरूपतोपि घटादिपदार्थोपि धर्मी बाध्यत इत्यर्थः ॥ ९१ ॥

त० दी०— भिन्नत्वं नैव युज्येत ब्रह्मोपादानतः कचित् ॥
वाचारंभणमात्रत्वाद्भेदः केनोपजायते ॥ ९२ ॥

त० प्र०— ननु घटपटयोरद्वैतं नोपपद्यत इति प्रत्यक्षानुरोधाद्द्वैतमंगीकर्तव्यमित्याशंक्याह ॥ भिन्नत्वमिति ॥ कटककुंडलयोर्भेदो न सर्वथा भवति ॥ उपादानस्यैकत्वात् ॥ धर्मरूपत्वे एकस्यैवोभयं धर्मः ॥ तयोश्चोपादानाभेदाद्भेदो न युक्तिसहः ॥ प्रत्यक्षं तु अभेदेपि भेदं गृह्णाति द्विचंद्रादिवत् ॥ महतां तु प्रत्यक्षं तदपि न गृह्णाति ॥ अतः प्रमाणानुरोधाद्वाचारंभणमात्रत्वं पदार्थानामवगत्य सर्वत्र ब्रह्मावगतौ केन भेद उपजायत इत्यर्थः ॥ तस्माद्भेदानुरोधेनाऽपि ब्रह्मवादो न निराकर्तव्य इति भावः ॥ ९२ ॥

त० दी०— सांख्यो बहुविधः प्रोक्तस्तत्रैकः सत्प्रमाणकः ॥
अष्टाविंशतितत्त्वानां स्वरूपं यत्र वै हरिः ॥ ९३ ॥

त० प्र०— एवं मायावादं निराकृत्य सांख्यनिराकरणार्थमाह ॥ सांख्ये बहुविध इति ॥ ब्रह्मवाद एव प्रथमसृष्टानां पदार्थानां सांख्यायोगात्सांख्यमिति ॥ यन्मतं तद्ब्रह्मवाद एव प्रविशति ॥ स्वतंत्रतया यानि मतानि तान्यप्रामाणिकानि तत्रैकं स्थापयति ॥ नत्रैकेति मतां प्रमाणसिद्धः ॥ तस्य स्वरूपमाह ॥ अष्टाविंशतीति ॥ ९३॥

त० दी०— अन्ये सूत्रे निषिध्यंते योगोऽप्येकः सदाऽऽदृतः ॥
यस्मिन् ध्यानं भगवतो निर्बीजेऽप्यात्मबोधकः ॥ ९४ ॥

त० प्र०— अन्येषां दूषणप्रकारमाह ॥ अन्येति ॥ 'अन्येषां चानुपलब्धेः' न हि महत्तत्त्वं प्रकृतिर्वा जगति प्रतीयते ॥ नित्या वा प्रकृतिर्निरवयवा च कथं परिणमति ॥ अतः स्वभाववाद एव प्रकृतिवादोपि प्रविशति ॥ अन्यद्दूषणं भाष्ये विस्तरेणोक्तम् ॥ योगं निराकरोति ॥ योगोप्येक इति ॥ चित्तवृत्तिनिरोधो योगः स भगवद्ध्यानार्थमंगत्वेनोपयुज्यते ॥ स प्रामाणिकः ॥ यस्तु स्वतंत्रतया फलसाधकत्वेन प्रोक्तस्तथा सिद्धिहेतुर्ज्ञानात्मा च तथाऽन्ये देहेंद्रियादिसाधकास्तेऽप्रामाणिकाः सूत्रे च निषिध्यंते ॥ एतेन योगः प्रत्युक्त इति ॥ तदाह ॥ यस्मिन् ध्यानं भगवत इति ॥ अन्ये सूत्रे निषिध्यंत इत्यनुषंगः ॥ ध्यानाभावेप्यात्मबोधागभूतः प्रामाणिक एव ॥९४॥

त० दी०— वैराग्यज्ञानयोगैश्च प्रेम्णा च तपसा तथा ॥
एकेनापि दृढेनेशं भजन् सिद्धिमवाप्नुयात् ॥ ९५ ॥

त० प्र०— एवं परमतनिराकरणपूर्वकं स्वमतं स्थापयित्वा निरूपितस्य भक्त्युपयोगमाह ॥ वैराग्येति ॥ पंचांगयुक्तः पुरुषो भगवंतं भजेत् ॥ तत्र प्रथमं वैराग्यमंगम् ॥ तदभावे भगवदावेशाभावान्न भजनसिद्धिः ॥ द्वितीयं ज्ञानं सर्वपदार्थानां याथार्थ्यरूपं भगवतश्च ॥ तदभावे निश्चयाभावान्न प्रवृत्तिः ॥ योगोऽप्यंगम् ॥ मनसश्चांचल्ये भजनानुपपत्तेः ॥ तथा प्रेमाप्यंगं तदभावे भजनं स्वतः पुरुषार्थरूपं न भवेद्रसाभिव्यक्त्यभावात्तपोप्यंगं तदभावे देहादेरामत्वान्न भजनं सिध्यति तपसा च देहेंद्रियादीनां पाकः पंचानां समुदायो दुर्लभ इति गौणपक्षमाह ॥ एकेनाऽपीति ॥ दृढेनेति विशेषः ॥ ईशं समर्थं कृष्णम् ॥ सिद्धिं मोक्षम् ॥ ९५ ॥

त० दी०— ज्ञाने लयप्रकारा हि जगतो बहुधोदिताः ॥
मनसः शुद्धिसिद्ध्यर्थमेकः सांख्यानुलोमतः ॥ ९६ ॥

त० प्र०— एवमुत्पत्तिप्रकारेण परमतनिराकरणपूर्वकं स्वमतं स्थापयित्वा कालद्रव्यगुणैस्त्रिधैव प्रलयप्रकारेणापि परमतं निराकर्तुमाह ॥ ज्ञाने लयप्रकारा हीति ज्ञानमार्गे जगतो लयप्रकारा बहव उक्ताः ॥ ते सर्वे प्रकरणाभावान्मनसः शुद्ध्यर्थं ज्ञेयाः ॥ यतस्त्रिविध एवं संक्रमः कालेन नित्यः ॥ द्रव्येण संकर्षणमुखाग्निना नैमित्तिकः ॥ गुणैः प्राकृतिकः ॥ त एव प्रकारांतरमापन्ना भावनया साधिता आत्यंतिकश-

१ ऽभिव्यक्त्यत्रं । २ रित्य ।

द्वाच्या भवंति न चात्यंतिकोऽतिरिक्तः ॥ अहंताममतानाश एव विषयाणां नाशो-पचारात् ॥ ततोऽतिरिक्तकल्पनायां प्रमाणाभावः ॥ भावनया फलं भवतीति तदाह ॥ एकः सांख्यानुलोमतेति ॥ "अन्ने प्रलीयते मर्त्यः" इत्यादिना निरूपितः ॥ ९६ ॥

त० दी०— इंद्रियाणां देवतात्वभावनाप्रापणे तथा ॥
गोविंदासन्यसेवातः प्रापणं नान्यथा भवेत् ॥ ९७ ॥

त० प्र०— प्रकारांतरमाह ॥ इंद्रियाणामिति ॥ "वाचमग्नौ सवक्तव्याम्" इत्यादिना प्रापणेन तदंशमात्रस्य लयो भिन्नो भवतीति प्रकारमाह ॥ गोविंदास-न्यसेवात इति ॥ अयं लयो रूपांतरापादकः कार्यरूपः ॥ उत्पत्तिरेव न लय इति भावः ॥ ९७ ॥

त० दी०— अद्वयात्मदृढज्ञानाद्वैराग्यं गृहमोचकम् ॥
वागादिविलयाः सर्वे तदर्थं मनआदिषु ॥ ९८ ॥

त० प्र०—प्रकारांतरमाह ॥ अद्वयेति ॥ "वाचं जुहाव मनसि" इत्यादिना संघातस्य लयभावनयाऽद्वयात्मदृढज्ञानं भवति तस्य वैराग्यहेतुत्वं रागाभावस्य च संन्यासोपयोगः ॥ अत एव नकारेण लय उक्तः ॥ ९८ ॥

त० दी०— भावनामात्रतो भाव्या न हि सर्वात्मना लयः ॥
मनोमात्रत्वकथनं तदर्थं जगतः क्वचित् ॥ ९९ ॥

त० प्र०—एवं लयत्रयमुक्त्वा प्रकृतोपयोगमाह ॥ भावनामात्रत इति ॥ सर्वात्मना कालादिनेव न लयः ॥ "देहं मनोमात्रमिमं गृहीत्वा" इतिवाक्यानां बाधकत्वमाशंक्य तेषामपि वैराग्योपयोगित्वमित्याह ॥ मनोमात्रत्वकथनमिति ॥९९॥

त० दी०— भक्तिमार्गानुसारेण मतांतरगता नराः ॥
भजंति बोधयंत्येवमविरुद्धं न बाध्यते ॥
नैकांतिकं फलं तेषां विरुद्धाचरणात्क्वचित् ॥ १०० ॥

त० प्र०—एवं मतांतराणि निराकृत्य तेषां फलाभावं वक्तुं येन केनापि मार्गेण भगवद्भजनं चेत्फलाय भवेत् ॥ तदा नैकांततः स्वमतं साधकं भवतीति मार्गांत-रवर्तिनां भगवद्भजनेपि फलाभावमाह ॥ भक्तिमार्गानुसारेणेति सार्द्धेन ॥ नहि मायावादादिमते श्रीकृष्णादिर्व्यवहार्यत्वाद्ब्रह्म भवितुमर्हति ॥ सदानंदसंवित्स्वरूप-मिति ह्याहुः ॥ अतः स्वमते तथा पदार्थसिद्ध्यभावाद्भक्तिमार्गानुसारेणैव वदंतीति

१ सार्द्धेनेतिपदं नास्ति ।

ज्ञातव्यम् ॥ तदा तेषां प्रतितंत्रन्यायेनाभ्युपगमसिद्धांतो भवति ॥ तावता तेषां फलं भविष्यतीत्याशंक्याह ॥ **नैकांतिकमिति** ॥ कस्यचिद्भक्तेरेवातिशये नाममात्रेण मायावादित्वे बिल्वमंगलादीनामिव मोक्षो भवेदपि न तु स्वमतपक्षपाते ॥ अतो नैकांतिकं फलम् ॥ तत्र हेतुः ॥ **विरुद्धाचरणादिति** ॥ भगवति कदाचिदन्यथाभावनया स्वाज्ञानकल्पितत्वादिना ॥ १०० ॥

त० दी०—एवं सर्वं ततः सर्वं स इति ज्ञानयोगतः ॥
यः सेवते हरिं प्रेम्णा श्रवणादिभिरुत्तमः ॥ १०१ ॥

त० प्र०—एवं परमतं निराकृत्य स्वमते यथा भजनं तथा संकलीकृत्याह ॥ **एवं सर्वमिति** ॥ एवं सर्वं निश्चित्य सर्वं भगवत एव स एव च सर्वमिति गौणमुख्यज्ञानयुक्तः प्रेम्णा श्रवणादिप्रकारेण यो भजते स भक्तिमार्गे उत्तमः ॥१०१॥

त० दी०—प्रेमाभावे मध्यमः स्याज्ज्ञानाभावे तथादिमः ॥
उभयोरप्यभावे तु पापनाशस्ततो भवेत् ॥ १०२ ॥

त० प्र०—शास्त्रार्थज्ञानाभावेपि प्रेम्णा भजने मध्यमः ॥ प्रेमाभावे मध्यम इति वा ॥ ज्ञानाभावे तथा मध्यम इत्यर्थः ॥ आदिमो वा ॥ उभयाभावे श्रवणादीनां पापनाशकत्वं धर्मत्वं वा ॥ न तु भक्तिमार्ग इत्यर्थः ॥ १०२ ॥

त० दी०—तपोवैराग्ययोगे तु ज्ञानं तस्य फलिष्यति ॥
योगयोगे तथा प्रेम स्तुतिमात्रं ततोऽन्यथा ॥ १०३ ॥

त० प्र०—तपोवैराग्यसहितं चेच्छ्रवणादिकं भवेदन्यतरसहितं वा तदा जन्मांतरे ज्ञानं भविष्यतीति ज्ञातव्यम् ॥ "बहूनां जन्मनाम्" इति वाक्यात् ॥ योगसहितभजने प्रेम ॥ प्रथमस्य मध्यमत्वं मध्यमस्योत्तमत्वमिति क्रमः ॥ मार्गांगाभावे केवलश्रवणादीनां यत्परमपुरुषार्थसाधकत्वं निरूप्यते तद्भगवतः स्तोत्रनिरूपणं धन्योऽहमित्यादिवत् ॥ प्रमेयबलेन तेषां सिद्धिर्भवति चेद्भवतु नान्यथेत्यर्थः ॥ १०३ ॥

त०दी०—अर्थोयमेव निखिलैरपि वेदवाक्यै रामायणैः सहितभारतपंचरात्रैः॥
अन्यैश्च शास्त्रवचनैः सह तत्त्वसूत्रैर्निर्णीयते सहृदयं हरिणा सदैव ॥१०४॥

इतिश्रीकृष्णव्यासविष्णुस्वामिमतवर्तिश्रीवल्लभाचार्यविरचिते
तत्त्वदीपे शास्त्रार्थकथनं नाम प्रथमप्रकरणम् ॥ १ ॥

त० प्र०—एवं शास्त्रार्थमुक्त्वोपसंहरति ॥ अर्थोऽयमेवेति ॥ सर्वेषां प्रमाणाना-

१ तथा ।

मत्रैकवाक्यता ॥ अन्येषु वाक्याभासा एव ॥ रामायणानां बहुत्वं सर्वकल्पेष्वप्ये-वमेव प्रतिपादयंतीति ज्ञापनार्थम् ॥ भारतपंचरात्रयो रामायणशेषत्वं चरित्रप्रति-पादकत्वाविशेषात् ॥ अन्यानि शास्त्राणि पुराणरूपाणि ॥ तच्छेषत्वं भारतादेः ॥ तत्त्वसूत्राणि चतुर्लक्षणी मीमांसा तैः सर्वैरपि ज्ञानं प्रेमसहितं कर्तव्यमिति निर्णीय-ते ॥ अन्यथा चतुर्दशविद्यानां सरस्वतीरूपत्वादेकनिष्ठता न स्यात् ॥ तत्रापि स-हृदयम् ॥ भावोऽपि तस्या एकत्रैवेति ॥ अयमर्थः सरस्वतीभर्त्रैव ज्ञायत इति ह-रिणेत्युक्तम् ॥ कदाचिदन्यथा केचिद्वक्ष्यंतीति तन्निराकरणार्थं सदेति ॥ १०४ ॥

प्रमाणबलमाश्रित्य शास्त्रार्थो विनिरूपितः ॥ प्रमेयबलमाश्रित्य सर्वनिर्णय उ-च्यते ॥ १ ॥ इति श्रीतत्त्वदीपनिबंधटीकायां प्रकाशाख्यायां श्रीवल्लभाचार्यविर-चितायां प्रथमं शास्त्रार्थप्रकरणं समाप्तम् ॥ ॥ ॥ ॥ ॥ ॥

॥ शार्दूलविक्रिडितं वृत्तम् ॥

एतं वर्णचणैः कदर्थिततमं श्रीतत्त्वदीपं सह-
व्याख्यं वेदपुराणशास्त्रवचसामादर्शबिम्बायितम् ॥
चत्वारि प्रतिपुस्तकानि विदुषां संगृह्य भूरिश्रमा-
दित्थं नन्दकिशोरसंज्ञकसुधीरत्यन्तशुद्धं व्यधात् ॥१॥






# अथ तत्त्वार्थदीपनिबंधे

द्वितीयं

## सर्वनिर्णयप्रकरणं प्रारभ्यते.

॥ श्रीकृष्णाय नमः ॥

प्रमाणेन प्रमेयेन फलतः साधनेन च ॥ सर्वनिर्णयबोधाय द्वितीया प्रक्रियोच्यते ॥ १ ॥

त० दी०— पंचात्मकं द्विरूपं च साधनैर्बहुरूपकम् ॥
स्वानंददायकं कृष्णं ब्रह्मरूपं परं स्तुमः ॥ १ ॥

त० प्र०— तत्र प्रथमं वेदार्थरूपं भगवंतं मंगलार्थं स्तौति ॥ पंचात्मकमिति॥ अग्निहोत्रादिभेदेन पंचरूपत्वम् ॥ तेषां प्रकृतिविकृतिभेदेन द्विरूपत्वम् ॥ उभयो॰रनेकरूपत्वं वक्तुं साधनैर्बहुरूपत्वमाह ॥ साधनैरिति ॥ सर्वेषां समुदायफलमाह ॥ स्वानंददायकमिति ॥ धर्मस्वरूपेणैव फलदानं भविष्यतीत्याशंक्येश्वररूपेणैव फलदानमित्याह ॥ कृष्णमिति ॥ उत्तरकांडार्थमाह ॥ ब्रह्मरूपमिति ॥ स्वानंद-दायकं कृष्णमित्यत्रापि तयो रूपयोरुत्तरं श्रेष्ठमित्याह ॥ परमिति ॥ स्तुमः स्तोत्रमेव यथाज्ञानं कुर्मो न तु स ज्ञायत इत्यर्थः ॥ १ ॥

त० दी०— अग्निहोत्रं तथा दर्शपूर्णमासः पशुस्तथा ॥
चातुर्मास्यानि सोमश्च क्रमात्पंचविधो हरिः ॥ २ ॥

त० प्र०—पंचरूपाणि गणयति ॥ अग्निहोत्रमिति ॥ प्रमेयं निर्णीय हि बलं वक्तव्यं तच्च प्रमेयं द्विविधं प्रमाणानुरोधि स्वतंत्रं चेति ॥ तत्राऽऽद्यं निरूप्यते ॥ दर्शपू-र्णमासावेकः "परमेष्ठिनो वा एष यज्ञः" इत्यत्र तयोरेकत्वनिर्णयात् ॥ पशुर्निरूढः ॥ चातुर्मास्यानि स्वतंत्राणि ॥ सोमोऽग्निष्टोमः ॥ एते क्रमेणैव कर्तव्याः ॥ एतेषां क्रिया-रूपत्वेन भगवत्प्रीतिसाधकत्वं न भगवत्त्वमित्याशंक्याह ॥ पंचविधो हरिरिति ॥२॥

त० दी०— तत्साधनं च स हरिः प्रयाजादि स्रुगादि यत् ॥
प्राकृतं रूपमेतद्धि नित्यं काम्यं तु वैकृतम् ॥ ३ ॥

त० प्र०—साधनसाध्यरूपता नैकस्येत्याशंक्य सर्वत्र भगवत एव द्विरूपत्व-

१ पंचात्मको हरिः ।

मिति वक्तुमाह ॥ तत्साधनं च स हरिरिति ॥ साध्यरूपः स एव हरिः साध-
नरूपोपि ॥ चकारात्साधनसाधनरूपोऽपि ॥ साधनद्वैरूप्यं निरूपयति ॥ प्रयाजा-
दिस्रुगादीति ॥ यत्किंचित्तत्फलोपकारि स्वरूपोपकारि वा नाऽतोन्यदस्तीत्यर्थः ॥
गणितानां नाम्ना प्रसिद्धानां प्रकृतिरूपत्वमित्याह ॥ प्राकृतमिति ॥ एतदेव नित्यं
कर्म नित्यकाम्यव्यवस्था एषैव ॥ येंयावदुक्तं कर्तव्यं नियतफलं तन्नित्यं न तु
फलरहितम् ॥ अकरणे राजदंडवत्प्रत्यवायः ॥ न हि राजसेवायां फलाभावः ॥
एतत्प्रतिपादकत्वमेव मुख्यतया वेदस्य ॥ द्वितीयं रूपमाह ॥ काम्यं तु वैकृतमिति॥
कामनायामेव फलदं विकृतत्वात्स्वभावतो न नित्यफलं प्रयच्छति ॥ ३ ॥

त० दी०— ज्ञानिनस्तदभिव्यक्तौ कर्तुर्मोक्षः क्रमाद्भवेत् ॥
अन्यथा स्वर्गसौख्यं तु द्विरूपं तत्क्रमाद्भवेत् ॥ ४ ॥

त० प्र०—एवमुद्देशतो रूपद्वयं निरूप्य फलं निरूपयति ॥ ज्ञानिन इति ॥
भगवदानंदरूपं फलं ब्रह्मज्ञानयुक्तस्य यथोक्तकर्मकर्तुरेव ॥ तत्र हेतुः ॥ तदभिव्य-
क्तौ सत्यां पोढा विहितश्चेदभिव्यक्तो भवति तदेव फलं प्रयच्छतीति भावः ॥ म-
र्यादायां क्रममोक्ष एव फलं सद्यो मुक्तिस्त्वतिकृपया ॥ ब्रह्मज्ञानाभावे तु पंचात्म-
काद्भगवतः स्वर्गसुखं भवति भिन्नवाक्येप्वापि फलत्वेन निरूपणात् ॥ ४ ॥

त० द०— वाक्यशेषादात्मसुखं प्रसिद्धेर्लोक उच्यते ॥
यन्न दुःखेन संभिन्नं न च ग्रस्तमनंतरम् ॥
अभिलाषोपनीतं च तत्सुखं स्वःपदास्पदम् ॥ ५ ॥

त०प्र०—स च स्वर्गो द्विविध इत्याह वाक्यशेषादिति ॥ सुष्ठु अर्ज्यत इति स्वर्गः
सत्वाकारांतःकरणे सर्वहानिवृत्तौ यदात्मसुखं प्रकटीभवति तदग्निहोत्रादिसाध्यम्॥
सर्वदेवानामधिकृतानां तुष्टावाध्यात्मिकत्वे यागस्य जाते आत्मानंदः प्रकटो भव-
ति ॥ एतदभावे भौतिकत्वे स्वर्गलोको भवतीत्यर्थः॥ प्रसिद्धिर्लौकिकी॥ वाक्यशेष-
माह॥ यन्न दुःखेनेति॥ स्वर्गकाम इति सर्वत्र स्वर्गशब्दार्थः संदिग्धः॥ संदिग्धेषु
वाक्यशेषादिति वाक्यशेषः शास्त्रांतरे प्रसिद्धः ॥ दुःखानुभवसहितः सुखानुभवो
लौकिकः स्वर्गः ॥ अन्यथा अलौकिकत्वात्सुखानुभवश्चाऽनंतरमेव कालेन ग्रस्यते
त्रिक्षणावस्थायित्वाच्च तथा वैदिकः ॥ लौकिको ह्यभिलाषानंतरं प्रयत्नसंपाद्यः ॥
वैदिको न तथा तादृशम् ॥ ५ ॥

१ यथावदुक्तमेव कर्तव्यम्।

त० दी०– स्पर्द्धासूयादिदुःखानि स्वर्गिणां स्युः सदा ध्रुवम् ॥
प्रवृत्तिमार्गनिष्ठत्वान्न ध्रुवोपरि तद्गतिः ॥
न च स्वर्गादिलोकेषु वाक्यशेषोक्तमीर्यते ॥ ६ ॥

त० प्र०–सुखं किमित्याकांक्षायां विषयजन्यं तथा भवितुं नार्हति दुःखसंभेदकस्यावश्यकत्वात् ॥ नापि परमानंद ईश्वराधीनत्वादत आत्मसुखमेव तादृशं भवति तदाह ॥ स्पर्द्धेति ॥ स्वर्गलोके विद्यमानानामिंद्रादीनां स्पर्द्धादिकं श्रूयते तच्च दुःखरूपम् । न च ब्रह्मलोकः स्वर्गशब्दवाच्यः प्रवृत्तिमार्गनिष्ठत्वात् ॥ ज्ञानाभावेन केवलकर्मकरणं प्रवृत्तिमार्गः ॥ अत एव क्रममुक्तिमार्गे ते न गच्छंतीत्याह ॥ न ध्रुवोपरि तद्गतिरिति ॥ नापींद्रलोकेषु वाक्योक्तं सुखं संभवति अनुपपत्तेरुक्तत्वात्० अतः ॥६॥

त० दी०– अत आत्मसुखं वाक्ये वाच्यं तत्सत्त्वतो भवेत् ॥
शुद्धे सत्त्वगुणोद्रेदः स्वर्गः सत्त्वगुणोदयः ॥ ७ ॥

त० प्र०–पारिशेष्यादात्मसुखमेव वाक्यार्थः ॥ अत एव स्वर्गशब्दः स्वसाधने भगवता प्रयुक्त इत्याह ॥ तत्सत्त्वतो भवेत् ॥ सत्त्वगुणप्रवृद्धावेव तदात्मसुखं भवेत्सत्त्ववृद्धिश्च शुद्ध्या अतः पंचानामावृत्तेश्चोपयोगः ॥ भगवद्वाक्यमाह ॥ स्वर्गः सत्त्वगुणोदय इति ॥ सत्त्वगुणाद्वा उदयो यस्येति ॥ ७ ॥

त० दी०– अतस्तदेव हि फलं कामाभावेपि सिध्यति ॥
यागादेर्भगवद्रूपात्कामितं फलति स्फुटम् ॥ ८ ॥

त० प्र०–एतदात्मसुखस्वरूपफलं नित्यमाह ॥ अतस्तदेवेति ॥ तैः स्वभावत एव शुद्धिः संपाद्यत इति भोजने तृप्तिवन्न कामनामपेक्षते ॥ तर्हि विकृते कथं कामनापेक्षा तत्राह ॥ यागादेर्भगवद्रूपादिति ॥ आधिभौतिकं वा फलं कथमित्याकांक्षायामाह यागादेरिति ॥ भगवद्रूपत्वात्काम्यो नित्यो वा यागादिः कामितं फलति ॥ स्फुटमिति ॥ लौकिकं फलं यतः स्पष्टमेव कारीर्यादेः फलमनुभूयते ॥८॥

त० दी०– श्लिष्टप्रयोगाद्वेदस्य परोक्षकथनं मतम् ॥
बालानुशासनार्थाय रोचनार्थं तथा वचः ॥ ९ ॥

त० प्र०–ननु स्वर्गो नाम लोक एव ॥ "सुवर्गाय वा एतानि लोकाय हूयते इति । देवेभ्यो वै स्वर्गो लोकस्तिरोभवत्" इति । "सुवर्गो वै लोको नाकः" इति सर्वत्र स्वर्गलोक एव स्वर्गशब्दार्थस्तत्कथमुच्यते आत्मसुखं स्वर्ग इति ॥ सत्यम् ॥ अंगेषु स्वर्गशब्देषु लोकसामानाधिकरण्यात्तद्वाचकत्वं प्रधाने च वाक्यशेषस्य विद-

मानत्वादात्मसुखवाचकत्वमेव ॥ अन्यथा वाक्यशेषो व्यर्थः स्यात्संदेहाभावात् ॥ अतः स्वर्गशब्देनोभयमपि ग्राह्यम्॥ तर्हि वेदे प्रधानवाक्येषु निःसंदिग्ध एव स्वर्गशब्दः कथं न प्रयुज्यते तत्राह ॥ **श्लिष्टप्रयोगादिति** ॥ श्लिष्टप्रयोगार्थं तथा न प्रयोगः श्लिष्टप्रयोगस्य च फलं परोक्षकथनम्॥ परोक्षकथनस्यापि प्रयोजनं बालानुशासनम्॥तेषामनुशासनं रुच्युत्पादनमेव॥अतस्तथावचनं श्लिष्टप्रयोग इत्यर्थः॥९॥

**त० दी०—पशुबंधयाजी सर्वाँल्लोकानाप्नोति निश्चयः ॥**
**अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति ॥ १० ॥**

त० प्र०—पंचकर्माणि नित्यानि तत्र त्रिषु स्वर्गः फलम्॥ यथा ॥ "अग्निहोत्रं जुहुयात्स्वर्गकामः" "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" "ज्योतिष्टोमेन स्वर्गकामः" इति ॥ पशुबंधचातुर्मास्ययोस्तु न स्वर्गः फलं श्रूयत इति वक्तुं वाक्यद्वयमाह ॥ **सर्वाँल्लोकानिति** ॥ १० ॥

**त० दी०—अक्षय्यं सर्वलोकाख्यमात्मरूपं न चाऽन्यथा ॥**
**नित्ये स्वर्गः फलं नान्यत्पश्वादिर्विकृतौ फलम् ॥ ११ ॥**

त० प्र०—समाधानमाह ॥ **अक्षय्यमिति** ॥ "अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति" इत्यत्र "सर्वाँल्लोकान् पशुबंधयाज्यभिजयति" इत्यत्रापि यदक्षय्यशब्देन सर्वलोकशब्देनोच्यते तदात्मसुखमेव वाक्यशेषोक्तम् ॥ तदेव पंचानां नित्यानामेकं फलं भवति ॥ इतोपि हेतोः स्वर्गशब्देनात्मसुखं पंचात्मकस्य भगवत एकत्वादन्यथा लोकपक्षे नैतदुपपद्यत इत्यर्थः ॥ उपसंहरति ॥ **नित्ये स्वर्गः फलमिति** ॥ बालाबालभेदेनोभयमपि ॥ अन्यत्पश्वादिकं न नित्यस्य फलं विकृतौ तत्फलम् ॥ ११ ॥

**त० दी०—रूपं तदेव विकृतेः किंचित्साधनमन्यथा ॥**
**विकृताद्धि हरेः किंचिद्विकृतं फलमीर्यते ॥ १२ ॥**

त० प्र०—विकृतस्य कथं फलसाधकत्वमित्याशंक्याह ॥ **रूपं तदेव विकृतेरिति** ॥ तदेव भगवद्रूपं विकृतेरपि परं साधनं किंचिदन्यथा भवति ॥ तेन विकृतत्वं स च विकारो वेदोक्त इति सफलः ॥ तर्हि नित्यमेव फलं कुतो न साधयति तत्राह [illegible] ॥ १२ ॥

**त० [illegible] फलार्थं काम्यादीनां विधिः श्रुतौ ॥**
**[illegible] न नित्यं कर्म सिध्यति ॥ १३ ॥**

त० प्र०— ननु वेदे किमिति विकृतं विकारफलं चोक्तमित्याशंक्याह ॥ **नित्यकर्मप्रसिद्ध्यर्थमिति** ॥ तत्र साधकमाह ॥ **पशुपुत्राद्यभाव इति** ॥ १३ ॥

त० दी०— अंगेपि तत्फलं नित्ये ज्ञानादिभिरुदीर्यते ॥
यथाकथंचिन्नित्यस्य सिद्धिर्वेदेन बोध्यते ॥ १४ ॥

त० प्र०— नन्वेवमेव श्रुत्यभिप्राय इति किं प्रमाणं तत्राह ॥ **अंगेपीति** ॥ यतो वेदे नित्यांगेपु अप्प्रणयनादिप्वपि पश्वादिकं फलमुदीर्यते ॥ नहि एकस्य कर्मणः फलद्वयं संभवति ॥ अत एकस्यामावृत्तौ यजमानकामनया सांगस्यैव तस्य पश्वादिफलम् ॥ तथा ज्ञानादिभिरपि फलमुदीर्यते ॥ "य एवं वेद स पशुमान् भवति" इति ॥ तत्रापि कामनायामेव भवतीति मंतव्यम् ॥ तच्च ज्ञानं कर्मांगम् ॥ ननु कथमेवं वेदस्याभिप्रायोऽध्यवसीयते स्वतंत्रतयैव पश्वादीनां फलतास्त्विति चेत्तत्राह ॥ **यथाकथंचिदिति** ॥ नित्यस्याऽविकृतस्य भगवतो रूपस्य सिद्धिर्निष्पत्तिर्वेदेन बोध्यते ॥ १४ ॥

त० दी०— ध्यानादिभिर्यथामूर्तेरभिव्यक्तिः परात्मनः ॥
आधानादिक्रियातोऽभिव्यक्तिर्यज्ञस्वरूपिणः ॥ १५ ॥

त० प्र०— ननु कृतिसाध्यो यागादिः कथं नित्य इति चेत्तत्राह ॥ **ध्यानादिभिरिति** ॥ यथा ध्यानधारणादिभिर्भगवन्मूर्तेरानंदरूपस्याऽभिव्यक्तिस्तथा आधानादिसोमांतक्रियाभिर्वेदबोधितदेहचेष्टारूपाभिर्ध्यानादिसहिताभिर्यज्ञरूपिणोऽपि भगवतोऽभिव्यक्तिरित्यर्थः ॥ १५ ॥

त० दी०— दुःखाभावः सुखं चैव पुरुषार्थद्वयं मतम् ॥
मोक्षः कामस्तयोरंगं धर्मो ह्यर्थेन साधितः ॥ १६ ॥

त० प्र०—नन्वेवमर्थव्याख्याने कोऽभिप्रायस्तत्राह **दुःखाभावेति** ॥ पुरुषार्थपर्यवसायी वेदः पुरुषार्थाश्च चत्वारः, तत्र साक्षात्पुरुषार्थद्वयं सुखं दुःखाभावश्चेति ॥ तत्र सुख स्वर्गादिपदेनोच्यते ॥ दुःखाभावो मोक्षपदेन ॥ तयोः साक्षादगं धर्मः ॥ आत्मचिंतनस्यापि धर्मत्वात् ॥ ज्ञानसाध्यत्वं धर्मयोग एवेति मतम् ॥ अत एव न ज्ञानस्य पुरुषार्थेषु गणना ॥ धर्मस्य च साधनमर्थः ॥ एवं साक्षात्परंपरया चत्वारः पुरुषार्था भवंति ॥ अतः पश्वादिरर्थो यागसाधनम् ॥ यागश्च धर्मः कामसाधनं ज्ञानसहितो मोक्षसाधनं च ॥ अत एवं व्याख्यायत इत्यर्थः ॥ १६ ॥

१ रूपादिभि ।

त० दी०— साधनं च फलं चैव हरिर्वेदे निरूप्यते ॥
तदभिव्यक्तितः सर्वे पुरुषार्थस्वरूपतः ॥ १७ ॥

त० प्र०—उपसंहरति ॥ साधनं च फलं चैवेति ॥ उभयात्मको हरिर्वेदे निरूप्यते ततश्च वेदानुसारेण तदभिव्यक्तौ सत्यां सर्व एव पुरुषार्थः सिध्यति ॥ यतो भगवान् पुरुषार्थस्वरूपः ॥ १७ ॥

त० दी०— रूपप्रपंचकरणादासक्तस्वांशवारणे ॥
श्रुतिमात्मप्रसादाय चकारात्मानमेव सः ॥ १८ ॥

त० प्र०—एवं वेदार्थं निरूप्य वेदस्य स्वरूपं विनिरूपयन् प्रयोजनं चाऽऽह॥ रूपेति ॥ विचित्रो रूपप्रपंचः ॥ जीवाश्चांशाः ॥ अल्पानां विचित्रे भ्रमो भवत्येवाऽतस्तन्निवारणार्थं श्रुतिं चकार ॥ तस्याः स्वरूपमाह ॥ आत्मानमिति ॥ नन्वंतर्यामिणैव कथं न निवार्यंते तत्राह ॥ आत्मप्रसादायेति ॥ अंतःकरणप्रसादाय जीवांतर्यामिणौ पूर्वमेव हृदये प्रविष्टौ भोगभोजनार्थं तदनुभोगेन मालिन्यं चित्ते जातं नांतःस्थितेन दूरीकर्तुं शक्यमतो बहिःस्थितेन प्रवेशसमर्थेन तद्दूरीकर्तव्यमिति श्रुतिनिर्माणमित्यर्थः ॥ १८ ॥

त० दी०— इति नित्यः श्रुतेरर्थः सात्त्विकानां प्रकाशते ॥
उत्पन्नास्त्रिविधा जीवा देवदानवमानवाः ॥ १९ ॥

त० प्र०—इदमेव श्रुतेः प्रयोजनमित्याह ॥ इतीति ॥ अध्ययनादिना धर्मादिकमपि साधयति परं नित्योऽयमेवार्थः प्रयोजनम्॥अथवा पंचात्मको भगवान् वेदार्थ इति निरूप्य सर्वेषां तथा बुद्ध्यभावमाशंक्य तेषां दोषं कथयन् स्वोक्तमुपसंहरति ॥ इतीति ॥ सात्त्विकानामेवायमर्थः प्रकाशते न सर्वेषामित्यर्थः ॥ ननु सर्वे भगवदंशास्तत्र कथं केचन सात्त्विका अन्ये नेति व्यवस्था तत्राह ॥ उत्पन्ना इति ॥ "प्रजायेय" इति भगवदिच्छया विनिर्गतास्त्रिदंशा जीवास्तुल्या मा भवंत्विति भगवन्मायागुणैस्त्रिविधैस्ते व्याप्तास्त्रिविधरसभोगाय अन्यथा तामसवस्तूनां भोगो न स्यात् ॥ अत एव श्रुतौ "त्रयः प्राजापत्याः" इति देवा मनुष्या असुरा गणिताः ॥ पंचरात्रेपि "त्रिविधा जीवसंघास्तु देवमानुषदानवाः ॥ तत्र देवा मुक्तियोग्या मानुषेषूत्तमा अपि ॥ मध्यमा मानुषा ये तु सृतियोग्याः सदैव हि॥ अधमा निरयायैव दानवास्तु तमोलयाः" इति ॥ अतो जीवानां त्रैविध्यात्तदनुगुणा एवांतःकरणादयोपि तेषां भवंति ॥ १९ ॥

त० दी०— सर्वे वेदविदो जाताः स्वभावगुणभेदतः ॥
तेषां प्रकृतिवैचित्र्याच्छ्रुत्यर्थो बहुधोदितः ॥ २० ॥

त० प्र०—ततः किमत आह ॥ सर्वे वेदविद इति ॥ यथार्थं श्रुत्वापि ते यदा व्याचक्षते तदा स्वरुच्या वेदार्थं वर्णयंति स्वभावगुणानां भेदात् ॥ ततः किमत आह ॥ श्रुत्यर्थो बहुधोदित इति ॥ २० ॥

त० दी०— भावस्याऽज्ञानतः कर्ममात्रं केचिद्वदंति हि ॥
लोकप्रतीतं स्वीकृत्य कदाचिद्भगवान् वदेत् ॥ २१ ॥

त० प्र०—तानेव प्रकारानाह ॥ भावस्येति ॥ उपक्रमादिप्रकरणार्थस्य भावस्याऽज्ञानात्केवलं वाक्यार्थमेवाऽनुभूय क्रियामात्रं वेदार्थ इति केचिदाहुः ॥ ननु महतां वाक्यात्तथा न भविष्यतीत्याशंक्याह ॥ लोकप्रतीतमिति ॥ महांतो हि भगवदनुगुणाः ॥ भगवाँश्च सर्वमार्गप्रवर्तकः ॥ अतः कर्ममार्गवक्तॄननुसरति "एवं-त्रयीधर्ममनुप्रपन्नाः" इति "वेदवादरताः पार्थ" इति च ॥ "त्रैगुण्यविषया वेदाः" इति च ॥ अतो योगादिप्रचारार्थं प्रकारांतरापन्नश्रुत्यर्थनिंदया तथा बोधयतीति महांतोपि तमर्थं न निवारयंतीत्यर्थः ॥ २१ ॥

त० दी०— फलं तु सर्वमेवाऽत्र तदंशत्वाद्भविष्यति ॥
अतः कामनिषेधो हि क्वचिद्भगवतोदितः ॥ २२ ॥

त० प्र०—ननु फलविसंवादात्स्वयमेव त्यक्ष्यंतीत्याशंक्याह ॥ फलं त्विति ॥ यागानां भगवदंशत्वात्सर्वमेव कामितं फलं भवति न तु नित्यं तत् अतोऽन्यथा भगवता कामनिषेधो नोच्यतेत्याह ॥ अत इति ॥ "एतान्यपि तु कर्माणि संगं त्यक्त्वा फलानि च" इति वाक्यात् ॥ २२ ॥

त० दी०— यथोक्ते ह्यपुनर्जन्म ह्यन्यथा पुनरुद्भवः ॥
तदर्चिरादिधूमादिमार्गद्वयमुदीरितम् ॥
वैराग्यार्थं तदप्युक्तं पंचाग्निस्थापने श्रुतौ ॥ २३ ॥

त० प्र०—ननु वेदार्थश्चेदेक एव स्यात्कथं सहजाः फलत्वेन मार्गा भिन्नाः स्युः ॥ अर्चिरादिमार्गो धूमादिमार्गस्तृतीयो मार्गश्चेति ॥ अतो वेद एव तथा तथा वदतीति मंतव्यमित्याशंक्याह ॥ यथोक्तेति ॥ नाऽत्र वेदानुसारेण मार्गद्वयं किं त्वेक एव मार्गो वेदोक्तः ॥ तमाह ॥ यथोक्ते ह्यपुनर्जन्म ॥ अयथाज्ञानतः कर्मकरणाद्धूमादिमार्ग इत्याह ॥ अन्यथेति ॥ अनेन जायस्वेत्यपि मार्गः संगृहीतः ॥

"येन स्यात्सृष्टिरेषोत्तरोत्तरा" इति ॥ एवमेव शास्त्रकारैर्भगवता चाऽभिप्रेत्य "मार्गद्वयमुदीरितम्" न तूभयमपि साक्षाद्वेदाभिप्रेतमित्यर्थः ॥ नन्वस्य धूमादिमार्गस्य कथने किं फलं न हि भ्रममार्गाः केनचिदुच्यंते किं च धूमादिमार्गीयकर्मणोऽविहितत्वे तत्फलं न स्यान्न ह्यविहितस्य भ्रमप्रतिपन्नस्य फलं संभवीत्याशंक्याह ॥ वैराग्यार्थमिति ॥ तदपि भ्रमत्वेन प्रतिपन्नमपि जगति तस्य मार्गस्य प्रतीयमानत्वात् ॥ किंच पंचाग्निख्यापने श्रुतौ पंचाग्निख्यापनार्थं तदुक्तम्—पंचाग्न्युपासकस्य फलसिद्धये यथा वेदे लोकसिद्धोऽनूद्यते "धन्वन्निव प्रपा असि" इत्यादौ ॥ तथा भ्रमसिद्धोप्यनूद्यते इति ॥ यदुक्तं किंचेत्यादि तत्रोच्यते ॥ न ह्यत्रावैदिकत्वमुच्यते किं तु कर्मण्येव पश्वादावेव तात्पर्यं श्रुतेरिति प्रकारकस्तात्पर्यभ्रमः ॥ एतस्य भ्रमत्वं "वेदवादरताः" इत्यादिवाक्यैर्निंदितत्वेन ज्ञायते ॥ एवं सति तदुक्तिस्तु सर्वथा सन्मार्गविमुखस्यातिरागिणः पुंसः कथंचित्सन्मार्गे प्रवृत्त्यर्था ॥ तदुक्तं "रोचनार्था फलश्रुतिः" "यथा भैषज्यरोचनम्" इत्यादि तथा च तत्फलस्य निरूपणे तुच्छत्वज्ञानेन वैराग्यार्थं तन्निरूपणमिति ॥ २३ ॥

त० दी०—बहुप्रकारमेकं हि कर्म वेदे प्रकाश्यते ॥
भगवन्मूर्तितासिद्ध्यै ते सर्वे पूर्वजैर्धृताः ॥ २४ ॥

त० प्र०—एवं वेदं वेदार्थं च निरूप्य शाखाभेदानां स्वरूपमर्थं चाऽऽह ॥ ॥ बहुप्रकारमिति ॥ एको ज्योतिष्टोमो भगवत्त्वात्सहस्रमूर्तिर्यावता वेदेनोच्यते सैका शाखा ॥ सर्वेषां सर्वशाखाज्ञानं नास्तीति सामान्यधर्मसहित एव विशेषः सर्वत्रोच्यते ॥ तेन न सामान्यकथनेन पुनरुक्तिः ॥ यज्ञेषु भगवद्बुद्धिसिध्यर्थमनेकरूपनिरूपणं ते सर्वे विशेषप्रकाराः पूर्वजैर्मरीच्यादिभिर्धृताः ॥ २४ ॥

र्धा मूर्तेश्चतुर्थांशो यावता प्रतिपाद्यते तावंतं व्यासः पृथक् कृतवान् ॥ तस्य खंडस्य सहस्रमूर्तावप्युपयोग इति स एवांश एको यावता निरुक्तः सन् ऋगादीनामेका शाखेति तथा व्यासशिष्यैः कृतमित्यर्थः ॥ २५ ॥ २६ ॥

त० दी०—प्रकारभेदे पूर्वं तु विकल्पो हैच्छिको मतः ॥
अधुना नियतः शाखाभेदात्तत्तदधीतिषु ॥ २७ ॥

त० प्र०—इदानीमनुष्ठाने कः प्रकारः केनानुष्ठेयः किमिच्छया व्यवस्थया वेति संदेहे निर्णयप्रकारमाह ॥ प्रकारभेद इति ॥ ब्रह्मादीनामैच्छिक एव आधुनिकानां व्यवस्थित इत्यर्थः ॥ २७ ॥

त० दी०—कर्मवद्ब्रह्मभेदाश्च गीयंते बहुधार्षिभिः ॥
तेषां भिन्नतया पाठे उच्छेदो भवतीति हि ॥
कर्मशाखागताश्चैके निर्णयः पृथगेव हि ॥ २८ ॥

त० प्र०—पुरुषः षोढा विहित इति पंचात्मके कर्मणि निरुक्ते षष्ठांशस्यापेक्षा भवति तत्प्रतिपादकमुत्तरकांडं तच्च ब्रह्म तदप्यनंतरूपमन्यथा अनंतमूर्तित्वं न स्यात् अतो यत्रैव पंचात्मके यच्छिरो भवितुं युक्तं तत्प्रतिपादकोपनिषत्तत्रैव योजिता ॥ तथैव हौत्रादिकमपि ज्ञातव्यं तदेतदाह ॥ कर्मवद्ब्रह्मभेदा इति ॥ इदमलौकिकं भवतीत्यत्र प्रमाणमिवाऽऽह ॥ गीयंते बहुधर्षिभिरिति ॥ तेषामध्ययनसिद्ध्यर्थमाह ॥ तेषामिति ॥ तावतैव संपूर्णशाखाध्यायित्वे विध्यभावादुच्छेदो भवेत्तर्ह्येक एवार्थः प्रयोजनं वाच्यं च स्यात् ॥ अन्यथा एकवाक्यता न भवेदिति तत्राह ॥ निर्णयः पृथगेव हीति ॥ व्यासेन कृतस्तेषां पाठार्थमेवैकवाक्यतो निर्णयस्तु पृथगेव व्यासेन कृतः । अतो ज्ञायते वाक्यैकत्वं प्रयोजनैकत्वं च कांडद्वयस्य नास्तीति ॥ द्वितीयस्याप्यर्थावबोधपर्यंतमध्ययनं स्वाध्यायविधिनैव तस्यापि परिग्रहात् ॥ अन्यथा ब्रह्मणि संदेहाभावान्निर्णयो व्यर्थः स्यात् ॥ अतः कांडद्वयं भिन्नमप्येकत्र पठितमंशतः परस्परोकारार्थं च आधिभौतिकैर्यज्ञैश्चित्तशुद्धिर्वेदांतैर्जीवस्वरूपविज्ञानमिति ॥ मुख्यरूपत्वसिद्ध्यर्थं तु पृथङ्निर्णय इति हिशब्दार्थः ॥ २८ ॥

त० दी०—असंदिग्धोऽपि वेदार्थः स्थूणाखननवत्कृतः ॥
मीमांसानिर्णयैः प्राज्ञैर्दुर्बुद्धेस्तु ततो द्वयम् ॥ २९ ॥

त० प्र०—नन्वर्थावबोधेनैव निःसंदेहो जात इति किं निर्णयेन अर्थार्थावबोधेन संदेहनिवृत्तिस्तदा दुष्टा [illegible] ॥ असंदिग्धोऽपीति ॥ पाठद-

शायां यद्यपि न संदेहस्तथापि कालांतरे संदेहो भविष्यतीति लक्षणकरणवन्मीमांसा-करणम् ॥ तत्र लौकिको दृष्टांतः ॥ स्थूणाखननवदिति ॥ स्थूणा निखाताऽपि पुनरुद्धृत्य निखान्यते तथा निःसंदिग्धोपि संदेहमापद्य दार्ढ्याय निरूप्यते मीमांसा-निर्णयकारैः ॥ इदमुत्तमं प्रति तेषां प्रयोजनं सफलं भवति ॥ मंदमध्यमान् प्रति तु संदेहाभावो दार्ढ्यं चेति द्वयम् ॥ २९ ॥

त० दी०— जैमिनिः कर्मतत्त्वज्ञो निर्णयं पूर्व उक्तवान् ॥
व्यासः स्वयं हि सर्वज्ञ उत्तरे निर्णयं जगौ ॥ ३० ॥

त० प्र०— तत्र निर्णयकर्त्तारमाह ॥ जैमिनिरिति ॥ कर्मज्ञानं करणे हेतुः ॥ उ-त्तरत्र व्यासः ॥ असर्वज्ञेन तन्निर्णयः कर्तुमशक्य इति सर्वज्ञो व्यास उत्तरत्र कर्त्ता ३०

त० दी०— उभयोर्हि परिज्ञाने सर्ववेदार्थनिर्णयः ॥
निर्णयो बहुभिर्नष्टः पश्चाद्वक्ष्ये तयोर्गतिम् ॥ ३१ ॥

त० प्र०— अतः सर्ववेदार्थज्ञानायोभयं ज्ञातव्यमित्याह ॥ उभयो हीति ॥ ननु निर्णायके विद्यमाने कथं वेदार्थाज्ञानं कथं वा भगवद्भजनामिति तत्राह ॥ निर्णयो बहुभिर्नष्ट इति ॥ अन्यथा व्याख्यातृभिः श्रुतिसूत्रमविचार्य स्वेच्छया वदद्भिः ॥ तर्हि कथं निस्तारस्तत्राऽऽह ॥ पश्चादिति ॥ गतिमुद्धारप्रकारम् ॥ ३१ ॥

त० दी०— पुरुषो विहितः षोढा करौ पादौ शिरोंतरम् ॥
शिरो ब्रह्म हरिः पूर्वं यज्ञः पंचविधः स्वयम् ॥
अनंतमूर्तिर्भगवान् तेन शाखास्तथा कृताः ॥ ३२ ॥

त० दी०— तदाचाराल्लोकतश्च न्यायान्नित्यानुमेयतः ॥
प्रवृत्तिर्जीविका लोके व्यवहारो विशुद्धता ॥ ३४ ॥

त० प्र०— तस्य स्मरणस्याऽनुभव एव मूलम् ॥ स त्वनुभवो बहुधा जायत इत्याह ॥ **तदाचारादिति** ॥ पूर्वकल्पे यथाऽऽचारः स्थितः । यथा वा लोकव्यवहारस्तत्राऽपि देशभेदेन यो देशाचारो येन ऋषिणा स्मृतस्तेन तथोपनिबद्ध इति चकारार्थः॥ न्यायोऽपि मूलं सोऽपि पूर्वकल्पस्थितः॥ एते त्रयोऽपि व्यवहारोपयोगिनः॥ धर्मोपयोगिनीं स्मृतिमाह ॥ **नित्यानुमेयत इति** ॥ योगबलेन नित्यानुमेयवेदं स्मृत्वा यदवादिषुस्तदवश्यकृत्यम् ॥ चतुर्णां फलमाह ॥ **प्रवृत्तिरिति** ॥ आचाराल्लोके प्रवृत्तिः प्रकर्षेण स्थितिर्भवति लोकानुसारेण जीविका भवति । न्यायेन व्यवहारः नित्यानुमेयवेदोक्तेन विशुद्धता भवति ॥ अनेनैव वेदार्थे तस्या उपयोगः ॥ ननु प्रत्यक्ष एव वेदो मूलमस्तु किं नित्यानुमेयवेदेन अनुपलब्धेरिति चेत् उच्छन्नशाखाप्रच्छन्नशाखा वा मूलं भविष्यतीति मैवम्॥ व्यासादिभिरपि सर्ववेदद्रष्टृभिरप्यनुमानत्वेन निरूपणात् ॥ "अपि वा कर्तृसामान्यात्प्रमाणमनुमानं स्यात्" इति प्रत्यक्षवेदमूलत्वेनाऽनुमानं भवेत् ॥ अतः स्मृत्याऽनुमेय एव वेदो भवतीति नित्यानुमेय एव वेदो मूलम् ॥ अन्यथा वेदव्यासः "स्मृतिश्च" इति न वदेत् ॥ विद्यमाने प्रत्यक्षे वेदे किमिति व्यंतरितामुदाहरेत् ॥ ३४ ॥

त० दी०— संवादे चाऽन्यशेषत्वान्न स्मृत्यर्थं स्पृशेच्छ्रुतिः ॥
गृहादिरिव देहस्य धर्मस्योपकृतिः स्मृतिः ॥
उभयोः समवाये तु धर्मः पुष्टो न चाऽन्यथा ॥ ३५ ॥

त० प्र०— ननु दृश्यते स्मृतिसंवादी वेदभागः ॥ यथा "धन्वन्निव प्रपा असि" "नाऽप्सु मूत्रपुरीषं कुर्यात्" "न विवसनः स्नायात्" इत्यादि तत्राह ॥ **संवादे चाऽन्यशेषत्वादिति** ॥ वेदे हि प्रकरणं सर्वत्र नियामकम् ॥ "तस्मादाहिताग्निर्नाऽनृतं वदेत्" इति ॥ नहि आहिताग्नेरनृतनिषेधकं सर्वेषां भवति ॥ नाप्यबीष्टकोपधानकर्तुः । जले निष्ठीवनादिनियमः सर्वेषां भवति ॥ नापि प्रपायाः ॥ लोकसिद्धाया दृष्टांतार्थं कीर्तितायास्तदेव वाक्यं विधायकं भवति । वाक्यभेदप्रसंगात् ॥ यथा वेदेषु क्वचित्संवादो भिन्नशिष्याणां नाभागोपाख्यानादीनां तथा नित्यानुमेयवेदार्थेनाऽपीति न स्मृत्यर्थं श्रुतिः प्रत्यक्षा स्पृशतीत्यर्थः ॥ ननु किं स्मृत्येत्याशंक्या-

१ न चैकतः ।

ह ॥ गृहादिरिवेति ॥ देहस्थानीयो वैदिको धर्मः ॥ गृहस्थानीयः स्मार्तः ॥ उभाभ्यां जीवः सुखी नाऽन्यथा ॥ ३५ ॥

त० दी०— गर्भाधानादिसंस्काराः संध्योपास्त्यादिकं तथा ॥
नित्यश्राद्धादिकर्माणि पाकयज्ञादिकं तथा ॥ ३६ ॥

त० प्र०— नित्यानुमेयवेदमूलिकायाः स्मृतेरर्थमाह ॥ गर्भाधानादीति ॥ षोडश संस्काराः संध्योपासनं कालादिसहितम् ॥ न हि तादृशानुपूर्वीविशिष्टं "रक्षांसि ह वा पुरोऽनुवाकः" इत्यत्र वर्तते ॥ नित्यश्राद्धादिविधानं मासश्राद्धविधिः ॥ पाकयज्ञाः स्थालीपाकादयः ॥ आदिशब्देन वैश्वदेवादिकमपि गृह्योक्तमखिलमिति यावत् ३६

त० दी०— प्रायश्चित्तमिति ह्येष पंचधा धर्मसंग्रहः ॥
नित्यानुमेयवेदस्तु मूलं पंचविधस्य हि ॥ ३७ ॥

त० प्र०— प्रायश्चित्तं पातकादीनाम् ॥ ३७ ॥

त० दी०— व्रततीर्थादिकं काम्यं नित्यवद्बोध्यते क्वचित् ॥
पूर्वाचारेण संप्राप्तं पुराणं मूलमस्य हि ॥ ३८ ॥

त० प्र०— व्रततीर्थादीनामपि नित्यानुमेयो मूलं भविष्यतीत्याशंक्याह ॥ व्रततीर्थादिकमिति ॥ श्रुतिमूलत्वे ब्राह्मणानामपि नित्यं कर्तव्यानि स्युरिति काम्यमित्युक्तम् ॥ किं तु वेदानधिकृतानां तन्नित्यं भवतीति नित्यवद्बोध्यते ॥ तस्य च मूलं पुराणं तथा सति स्मृतित्वं कथमिति चेत्तत्राऽऽह ॥ पूर्वाचारेण संप्राप्तमिति ॥ न हि पुराणं दृष्ट्वा तस्य निर्माणं किं तु आचारादेव ॥ ३८ ॥

त० दी०— कृष्यादिजीविकाशास्त्रं पूर्वपर्याचारतः प्रमा ॥
करदंडादिशास्त्रस्य मूलं युक्तिः पुराविदाम् ॥ ३९ ॥

त० प्र०— इदानीमाचारः कुत्र मूलमित्याकांक्षायामाह ॥ कृष्यादीति ॥ षड्गवादिभागदानादिविधानं पूर्वपर्याचारतः प्राप्तं तथैव कर्तव्यं प्रमाणमित्यर्थः ॥ करदंडादेर्युक्तिमूलम् ॥ करोत्र कृषिव्यतिरिक्तः ॥ ३९ ॥

त० दी०— शुद्धिं केचित्पृथक् प्राहुः संस्कारः कस्यचिन्मतः ॥
देशकालद्रव्यकर्तृमंत्रकर्मविभेदतः ॥
षोढा शुद्धिः स्मृता साऽपि द्विधा ह्यन्योन्यतः स्वतः ॥ ४० ॥

त० प्र०— द्रव्यादिशुद्धौ विकल्पमाह ॥ शुद्धिमिति ॥ संस्कारपक्षे वेदो मूलं

पृथक्पक्षे आचार इति ॥ प्रसंगाच्छुद्धेः स्वरूपमाह ॥ देशकालेति ॥ षड्भिः शुद्धिः षण्णां च शुद्धिरिति द्विधा ॥ ४० ॥

त० दी०— सर्वशेषेयमाख्याता श्रुत्यर्थेऽपि विशेषतः ॥
धर्मः संपद्यते षड्भिरधर्मो ह्यन्यथा भवेत् ॥ ४१ ॥

त० प्र०— सर्वशेषत्वान्न वेदो मूलमित्यभिप्रायेणाऽऽह ॥ सर्वशेषेयमिति ॥ बाधकमाह ॥ धर्म इति ॥ ४१ ॥

त० दी०— कल्पसूत्रेषु वेदत्वं स्मृतित्वं च प्रतीयते ॥
अर्थतः कर्तृतश्चाऽपि तुल्यत्वात्पाठतः स्मृतिः ॥ ४२ ॥

त० प्र०— कल्पसूत्राणामृषिप्रणीतत्वात्स्मृतित्वमाशंक्य परिहरति ॥ कल्पसूत्रेष्विति ॥ व्यवस्थामाह ॥ अर्थत इति ॥ अर्थो वैदिकः ॥ स्वराद्यभावात्कर्तुः स्मरणाच्च स्मृतित्वम् ॥ ४२ ॥

त० दी०— सौकर्यार्थं कृतिस्तस्य संकलीकृत्य वर्णनात् ॥
तेनापि क्रियमाणस्तु धर्मः श्रौतो भवेद् ध्रुवम् ॥ ४३ ॥

त० प्र०—तर्हि अर्थस्य वैदिकत्वे को हेतुस्तत्राह ॥ सौकर्यार्थमिति ॥ कर्मज्ञानार्थमेव कल्पसूत्रं द्रष्टव्यं न तु तदुक्तत्वेन कर्तव्यमिति मुख्यः पक्षः ॥ गौणमाह ॥ तेनापीति ॥ आधुनिकानां संग्रहार्थमुक्तम् ॥ ४३ ॥

त० दी०— इष्टयोपासनकर्माणि न श्रौतानि कथंचन ॥
भेदाद्वैजात्यतश्चापि काल एकस्तयोः परम् ॥ ४४ ॥
कालबाधान्न कर्तव्यं स्मार्तं श्रौतो बली यतः ॥
पश्चाद्वा गौणकालेऽपि कर्तव्यमिति केचन ॥ ४५ ॥

त० प्र०— गृह्याणां श्रौतत्वमाशंक्य परिहरति ॥ इष्टीति ॥ इष्टिः स्थालीपाकः तत्र हेतुः॥ भेदादिति ॥ अग्न्यादि सर्वं श्रौतस्मार्तयोर्भिन्नं विजातीयं च ॥ तर्हि कथमेककालविधानं तत्राह ॥ काल एक इति ॥ तथाऽपि श्रौतस्य बलत्वाय निर्णयमाह ॥ कालबाधादिति ॥ मुख्ये कालबलिष्ठत्वाच्छ्रौतमेव कर्तव्यमतः कालस्य निमित्तस्याऽभावात्स्मार्तं न कर्तव्यम् ॥ अत एव सर्वाधानविधिः॥ पक्षांतरमाह ॥ पश्चादिति ॥ ४४ ॥ ४५ ॥

त० दी०— स्मार्तमात्रस्य करणादाभासो ब्राह्मणो भवेत् ॥
स्वर्गाभासाद्यपि फलं श्रौतमात्रेपि चाखिलम् ॥ ४६ ॥

त० प्र०—एवं श्रौतस्य बलिष्ठत्वायाऽसहायशूरता निरूपिता कश्चित्तथा स्मार्तस्यापि भविष्यतीत्याशंक्याह ॥ स्मार्तमात्रस्येति ॥ ब्रह्म वेदस्तद्वेत्तीति ब्राह्मणः॥ स्मृतिरपि वेदमूलिकेति व्यंतरितत्वात्प्रतिबिंबवदाभासो भवति ॥ अतो ब्राह्मणोपि तादृशस्याभासः फलं च तथेत्याह ॥ स्वर्गाभासेति ॥ चित्तशुद्धौ वासनाक्षयाभावो दैत्योपहतलोके च स्थितिरिति श्रौतेः ॥ तद्विपरीतमाह ॥ श्रौतमात्र इति ॥ अखिलं मुख्यम् ॥ ४६ ॥

त० दी०— ब्रह्मप्रकरणं स्मार्तकल्पसूत्रवदेव हि ॥
पुराणमूलकं चाऽपि ह्याश्रमाचारतोदितम् ॥ ४७ ॥

त० प्र०—स्मृतौ ब्रह्मनिरूपणं प्रत्यक्षोपनिषन्मूलकं भविष्यतीति प्रकारांतरमाह॥ ब्रह्मप्रकरणमिति ॥ तावान् भागः कल्पसूत्रवदिति तेनापि ब्रह्मज्ञानं फलायेति गौणपक्षः ॥ मुख्यमाह ॥ पुराणमूलकमिति ॥ ननु स्मृतिर्मुख्या पुराणापेक्षया बलिष्ठा वेदसमानाधिकरणात्कथं पुराणमुपजीवेदित्याशंक्याह ॥ आश्रमाचारतेति ॥ सर्वे आश्रमाः स्मार्तास्तेषामाचारनिरूपणप्रस्तावे चतुर्थाश्रमे ब्रह्मध्यानं मुख्यमिति पुराणे च तदुक्तमिति ततो गृहीतमुपनिषदर्थग्रहणे उपनिषत्त्वभंगाद्दोषः स्यात्, शाखान्यवस्था च भज्येत। अतः स्मार्तं ब्रह्मज्ञानं न वैदिकवत्फलसाधकम् ॥४७॥

त० दी०— पुराणं वेदवत्पूर्वसिद्धं सर्वोपयोगि तत् ॥
सर्वोपकरणानीव धर्मस्य नरगेहयोः ॥ ४८ ॥

त० प्र०—एवं स्मृतिमुपपाद्य पुराणनिर्णयमाह ॥ पुराणमिति ॥ तस्य वेदधर्मातिदेशः ॥ तेन धर्मार्थकाममोक्षा भक्तिश्चेति पंच नित्याः काम्याश्च विकृतास्तत्रापि देशादीनामंगत्वं पंचानामपि देशादिषट्कमंगं पृथक् व्यासस्य कर्तृत्वमाशंक्य निराकरोति ॥ पूर्वसिद्धमिति ॥ नित्यमित्यर्थः॥ तस्य प्रयोजनमाह॥ सर्वोपयोगीति॥ द्विविधा हि चत्वारोपि पुरुषार्था ईश्वरविचारिता जीवविचारिताश्च ॥ तत्रेश्वरविचारिता वैदिका जीवविचारिताः पौराणिका इति॥ अतः सर्वोपयोगित्वं वैदिकेष्युपयोगमाह॥ सर्वोपकरणानीवेति ॥ श्रौतो धर्मो देहस्थानीयः ॥ स्मार्त्तो गृहस्थानीयः ॥ उपकरणस्थानीयः पौराणिक इति ॥ उपकरणाभावे सर्वथा स्थितिर्न भवतीति ॥ ४८ ॥

त० दी०— तदज्ञाने सर्वमोदयं तेन तद्धृदयं स्मृतम् ॥
भावयुक्तस्य धर्मस्य प्रमितो तत्प्रयुज्यते ॥ ४९ ॥

---

१ श्रुतौ । २ इतिशब्दोयं पुस्तकांतरे नास्ति ।

त० प्र०— तस्याऽवश्यकत्वमाह ॥ तदज्ञान इति ॥ पुराणार्थाज्ञाने सर्वमौढ्यं बहिःपदार्थज्ञानाभावात् ॥ अत एव "श्रुतिस्मृती उभे नेत्रे पुराणं हृदयं स्मृतम्" इति हृदयत्वम् ॥ उपयोगस्थानमाह ॥ भावयुक्तस्येति ॥ वेदे यज्ञादय उक्तास्तेषामभिप्रायज्ञानं पुराणादेव कदाचित्कर्तव्यं कदाचिन्न कर्तव्यम् ॥ "कर्मणो ह्यपि बोद्धव्यम्" इतिवत् ॥ भावस्य ज्ञानं पुराणात् ॥ ४९ ॥

त० दी०— सर्वसृष्टिपदार्थानां यथार्थज्ञापनं ततः ॥
शाखाविभागवत्तस्य विभागः सोप्यनेकधा ॥ ५० ॥

त० प्र०— किं च सृष्टौ यावंतः पदार्थास्तेषां याथार्थ्यं पुराणादेवाऽवगंतव्यम् यथा "प्रह्लादो ह वै कायाधवः" इति कयाधूप्रभृतीनां स्वरूपम् ॥ अष्टादशपुराणादिसमाख्यायामुपायमाह ॥ शाखाविभागवदिति ॥ ५० ॥

त० दी०— शतं कल्पास्ततोप्यन्ये संति कृष्णेन निर्मिताः ।
सत्त्वेन रजसा वाऽपि तमसा वाप्यनेकधा ॥ ५१ ॥

त० प्र०— तत्र यज्ञस्य भगवत्त्वं सिद्धमिति न संदेहः ॥ प्रकृते कथमित्याशंक्य प्रकारमाह ॥ शतं कल्पा इति ॥ ब्रह्मण एकस्मिन्वर्षे एको मुख्यः कल्पो ब्रह्मजन्मदिवसादिः ॥ ततोऽप्यन्ये दैनंदिनाः ॥ दिनमध्येपि कल्पसमाप्तिं केचिदाहुः॥ तथा युगांते ॥ तत्र सर्वत्र भुवनात्मको वृक्षो भगवान्नानारूपो भवति ॥ अतस्तत्प्रकारप्रतिपादकानि पुराणानीति शाखाविभागवद्विभागः ॥ अवांतरभेदान् वक्तुमाह ॥ सत्त्वेनेति ॥ ५१ ॥

त० दी०— नानासृष्टिप्रकारा हि नानाधर्मा ह्यनेकधा ॥
सर्वस्वरूपी कृष्णस्तु कर्ता तेषु तथोदितः ॥ ५२ ॥

त० प्र०— तामसकल्पेषु शिवात्सृष्टिः ॥ राजसेषु ब्रह्मणः ॥ सात्त्विकेषु विष्णोः॥ तत्रोच्चनीचत्वमव्यवस्थितमतः समाधानमाह ॥ सर्वस्वरूपी कृष्ण इति ॥ ५२ ॥

त० दी०— सात्त्विकेषु तु कल्पेषु तत्प्रकारपुराणतः ॥
आचारान्मुक्तिमाप्नोति भवस्त्वन्येषु केवलः ॥
धर्महीनस्तत्सहितो राजसेषु सुखं ततः ॥ ५३ ॥

त० प्र०— सर्वत्र मुक्तिरिति पक्षे न कोपि संदेहः ॥ सात्त्विकेष्वेव मोक्ष इति पक्षे विशेषमाह ॥ सात्त्विकेष्विति ॥ तत्कल्पानुसारिपुराणोक्तधर्माचरणान्मुक्तिमाप्नोति

तादृशोऽधिकारी न तु पापंडादिधर्मैरित्यर्थः ॥ अन्येषु तामसेषु जन्म दुःखं च भवति न सुखं नापि मोक्षः ॥ राजसेषु तु सुखं न दुःखं नापि मोक्षो यथोक्तधर्मकर्तॄणाम् ५३

त० दी०— अपेक्षितं तु सर्वत्र सर्वोक्तं गृह्यते क्वचित् ॥
इदानीं त्रिविधा जीवास्तेन त्रितयमीर्यते ॥ ५४ ॥

त० प्र०— सर्वेषु कल्पेषु कल्पांतरोक्ता धर्माः पुरुषार्था वा परिग्राह्याः ॥ यदि तत्कल्पानुसारिणो जीवा भविष्यंति यथा तीर्थे नानादेशवासिनाम् ॥ तदाह ॥ अपेक्षितमिति ॥ प्रकृते त्रिविधान्यपि पुराणानि संतीत्याह ॥ इदानीमिति ॥ राजसादीनां प्रकारांतरेण पुराणं न हृदयारूढं भवति ॥ अतस्तेषां केवललौकिकत्वे कल्पांतरे तेषां तामसत्वाद्राजसोच्छेदः स्यात् ॥ राजसधर्मानुष्ठाने चोत्तरत्र सात्त्विकत्वं संपद्यते ॥ तथा तामसेष्वपि ज्ञातव्यम् ॥ अतितामसत्वनिवृत्त्यर्थमुत्कर्षार्थं च तामसानि पुराणानीत्यर्थः ॥ ५४ ॥

त० दी०— प्रवृत्त्यर्थं तु सर्वत्र मुक्तिः फलमुदीर्यते ॥
तदवस्थापरित्यागाद्वचनं सत्यमेव हि ॥ ५५ ॥

त० प्र०— ननु तत्तत्पुराणेषु तत्तदाचारान्मुक्तिरेव निरूप्यते किमुत्कर्षेण सात्त्विका एव मुच्यंत इति तु सात्त्विककल्पव्यवस्था यथा राज्ञां तत्तदवसरे तेषामनुग्रहनिग्रहौ ॥ अत इदानीं त्रिविधानां मुक्त्यर्थमेव कथनं त्रिविधानि पुराणानीत्याशंक्याह ॥ प्रवृत्त्यर्थमिति ॥ मुक्तिः सर्वेषामभिलषिता ॥ अतस्तदर्थमेव सर्वोपि प्रवर्तते न संसारार्थमिति सर्वेषां प्रवृत्तिसिद्ध्यर्थं बालानुशासनन्यायेन मुक्तिः फलमुदीर्यते न तु राजसकर्मणा मुक्तिर्भवति ॥ "मध्ये तिष्ठंति राजसाः" इति भगवद्वाक्यात् ॥ परमानंदलक्षणस्य मोक्षस्य वैजात्याभावात् ॥ सात्त्विकानां नैर्गुण्यं तेन च मोक्षः ॥ तत्र साधनता सर्वथा भगवत्संबंधेनैवाऽवच्छिद्यते न तु ज्ञानित्वेन भक्तत्वेन वा ॥ "मामेव ये प्रपद्यंते" इति वाक्यात् ॥ "तमेव विदित्वातिमृत्युमेति" इत्यादिपरंपरयेति ज्ञातव्यम् ॥ सर्वथा संबंधे पुनर्बहूनि कारणानि तत्रावांतरजातिभेदेपि न काचित्क्षतिर्दंडवत् ॥ अतः स एव परमपुरुषार्थः ॥ तत्साधनेष्वपि मोक्षपदप्रयोगो यथा लोके ॥ नहि तादृशीमवस्थामापन्नो मुच्यते । अतस्तदवस्थापरि-

त० प्र०—नन्वेककल्पप्रतिपादकत्वं पुराणानामसंगतं यतश्चतुर्युगवार्तामेव पुराणानि कथयंति कलौ सर्वेषां पर्यवसानात् ॥ अतोऽष्टादशयुगवार्तेव पुराणानामर्थः कुतो न भवेदित्याशंक्याह ॥ चतुर्युगेति ॥ एकस्मिन् कल्पे सहस्रं व्यासा भवंति तेषां द्वापरांतेऽधिकारः ॥ ततः पुनः कृतौ सर्वविद्यानां पूर्णता ॥ पुनरन्यस्य व्यासार्थं द्वापरांते निवेशनमिति ॥ अतस्ते स्वचतुर्युगवार्तामेव कथयंतीति न दोषः ॥५६॥

त० दी०—सर्वनिर्धारणार्थाय व्यासो भारतमुक्तवान् ॥
एकं कल्पमुपाश्रित्य स्त्रीशूद्राणां हिते रतः ॥ ५७ ॥

त० प्र०—भारते भिन्नप्रकार इति तत्रापि कल्पभेदमाह ॥ सर्वनिर्धारणार्थायेति ॥ एकं यं कंचन ॥ यत्र कल्पे तथा पदार्थाः ॥ ततः स्त्रीशूद्राणां महत्त्वं सिध्यति ॥ यतस्तत्र सर्वेषामाचारो निरूपितः ॥ "न शूद्राय मतिं दद्यात्" इत्यादिनिषेधस्तत्र न भवति ॥ कृतयुगे मानवा धर्माः पराशरवाक्यात् ॥ ५७ ॥

त० दी०—धर्मनिर्धारणं तत्र सर्वेषां समुदाहृतम् ॥
प्रत्यब्दं वृक्षवत्कल्पा भुवनद्रुमरूपिणः ॥ ५८ ॥

त० प्र०—कल्पस्वरूपमाह ॥ प्रत्यब्दमिति ॥ ५८ ॥

त० दी०—अन्यकल्पोक्तरीत्याऽपि कथितो भगवान् स्वयम् ॥
कल्पेऽस्मिन् सर्वमुक्त्यर्थमवतीर्णस्तु सर्वतः ॥
सर्वतत्त्वं सर्वगूढं प्रसंगादाह पांडवे ॥ ५९ ॥

त० प्र०—ननु कृष्णः सर्वमुक्त्यर्थमवतीर्णस्तस्य स्वरूपकथनार्थं भागवतं प्रवृत्तं तच्च सारस्वतकल्पानुसारि मत्स्यपुराणे तथा प्रदर्शनात् ॥ अयं च श्वेतवाराहकल्पः अतोऽत्रत्यानां कथं मुक्तिरित्याशंक्याह ॥ अन्यकल्पेति ॥ अन्यकल्पस्य रीतिरेव गृहीता सर्वत्र पुराणे तथैव निर्णयात् ॥ न तु राजसानामेव मोक्षदः ॥ ननु स्वरूपेणैव सर्वमुक्तिं करिष्य इति किं भागवतेनैव तेनैवेत्याशंक्य भगवतोऽभिप्रायकथनार्थमाह ॥ सर्वतत्त्वं सर्वगूढमिति ॥ अर्जुनार्थं प्रसंगात् गीतामाह ॥ अतो ज्ञायते शास्त्रद्वारैव मोचक इति प्रवृत्तिं वा संपादयिष्यतीति ॥ ५९ ॥

त० दी०—शुकवत्तद्व्यासगीतं सत्त्वेनास्याऽवतारतः ॥
ईशवाक्यं तु तस्यापि दुर्बोधं भजनादृते ॥ ६० ॥

त० प्र०—नन्वेवं सति कथं व्यासस्याऽनिर्वृतिस्तत्राह ॥ शुकवदिति ॥ अभिप्रायाज्ञाने हेतुः सत्त्वेनास्येति ॥ सत्त्वांशव्यवधानेनावतारो यतः। ननु वाक्यस्य

धियमानत्वाद्वाक्यार्थविचारकस्य कथं भ्रमस्तत्राह ॥ ईशवाक्यमिति ॥ अनेन भजनव्यतिरेकेण भागवतार्थो नाऽवगम्यत इति सूचितम् ॥ ६० ॥

त० दी०— जीवा एव हि सर्वत्र व्यासाः सांप्रतमेव हि ॥
स्वयं भूत्वा हरिः कृष्णः स्वांशं व्यासं चकार ह ॥
स्वज्ञापनाय भक्तानां पदप्राप्त्यै ततः परम् ॥ ६१ ॥

त० प्र०— नन्वेतादृशोऽग्रे कथं तत्त्वं वक्ष्यतीत्याशंक्याह ॥ जीवा एव हीति ॥ भगवदिच्छया तदर्थमंशावतारणात्प्रयोजनमाह ॥ स्वज्ञापनायेति ॥ ततः परं रूपलीलातिरोभावानंतरं नामलीलया क्रीडां कर्तुं व्यासावतार इत्यर्थः ॥ ६१ ॥

त० दी०— सत्त्वस्य व्यवधानत्वादात्माज्ञानात्तु योगतः ॥
व्यासकार्यं समस्तं च कृतवानधिकं तथा ॥
अनिर्वृतिस्ततो जाता तेन भागवतं कृतम् ॥ ६२ ॥

त० प्र०— नन्वस्याऽर्थस्य बुद्धिपरिकल्पितत्वे काव्यवदसत्यता स्यात् ॥ वेदपुराणयोर्विद्यमानत्वे जीवैरपि कर्तुं शक्यत इति किं व्यासावतारेणेत्याशंक्याह ॥ सत्त्वस्येति सार्धैस्त्रिभिः ॥ यत्र व्यासस्याप्यज्ञानं तत्र जीवानां का वार्तेति निरूपयितुमनिर्वृति भारतनिर्माणं चोक्तम् ॥ ततो भगवदिच्छया व्यवधायके अपगते भागवतं कृतमित्यर्थः ॥ ६२ ॥

त० दी०— सर्वगोप्यो हि धर्मस्तु वेदे मुख्यतयोदितः ॥
ब्रह्ममात्रप्रकाशस्तु कृपया सनकादिगः ॥ ६३ ॥

त० प्र०— ननूक्तं पूर्वसिद्धोऽर्थो न वेति तत्राह ॥ सर्वगोप्यो हीति ॥ भगवति वेदार्थ एव परं गुप्तः ॥ भगवदिच्छया यदा पुनः सर्वोद्धारार्थं प्रयत्नं कृतवान् तदा परंपराया अभावाचान्यैर्व्यासैर्वक्तुं शक्यत इति व्यासावतारः ॥ ६३ ॥

त० दी०— स इदानीं तु गीतायां प्रकटो भगवत्कृतः ॥
तद्व्यासत्वाद्भागवतं पूर्वं भगवतोदितम् ॥ ६४ ॥

त० प्र०— अभिप्रायज्ञापनार्थं गीतायां स एव प्रकटीकृतः ॥ तर्हि तावन्मात्र एव वक्तव्यः स्यादित्यत आह ॥ तद्व्यासत्वादिति ॥ यथा भागवतं गीताविस्तारस्तथा नामलीलारूपभगवद्विस्तारो व्यासः परंपरांतरमप्याह ॥ पूर्वं भगवतोदितमिति ॥ ६४ ॥

त० दी०— विश्वासार्थं पुराणेषु पठितं भक्तिहेतुकम् ॥
प्रतिपाद्येशलीलायाः पुराणार्थं ततः पुनः ॥ ६५ ॥

१ पुराणार्थंत्वत पुन ।

त० प्र०—तर्हि पंचरात्रवत्स्वतंत्रता भवत्वित्याशंक्याह ॥ विश्वासार्थमिति ॥ आगमापेक्षयाऽपि लोकानां पुराणे विश्वासः ॥ हेत्वंतरमाह ॥ भक्तिहेतुकमिति ॥ तद्ध्युपासनाविधायकम् ॥ अन्यमपि हेतुमाह ॥ प्रतिपाद्येति ॥ ईशलीला सर्गादिरूपा ॥ अन्यथा श्रोतुस्तद्भावापत्त्यभावे तत्तत्कर्मक्षयाभावान्न मोक्षः स्यात् ॥ अतो दश लीलाः पुराणलक्षणरूपा इति पुराणेषु प्रवेशः ॥ ६५ ॥

त० दी०—सर्वमुक्तिनिवृत्त्यर्थं वेदत्वं तस्य नोक्तवान् ॥
वेदकर्तृवचस्त्वाद्धि सतां सर्वं भविष्यति ॥ ६६ ॥

त० प्र०—ननु पूर्वसिद्धं वेदत्वमेव कुतो नोक्तवाँस्तत्राह ॥ सर्वमुक्तिनिवृत्त्यर्थमिति ॥ व्यासस्यैतावान्संकोचोऽग्रिमावतारकार्यसिद्ध्यर्थं विश्वासाभावाय वेदत्वाकथनं पाक्षिकप्रयोजनसिद्ध्यर्थं वा बुद्धावतारे वेदानां निराकरणात् ॥ अतः पुराणार्थत्वेन वा तिष्ठत्विति युक्तमुत्पश्यामः ॥ विश्वासस्तु भविष्यतीत्याह ॥ वेदेति ॥ सतां दैत्यावेशरहितानाम् ॥ ६६ ॥

त० दी०—स्वस्याऽन्यस्य च निर्वाहं वेदः कर्तुं न हि क्षमः ॥
अत्यंतमलिना लोकास्ततो भागवतं कृतम् ॥
एतदभ्यसनाल्लोको मुच्यतेऽनुपजीवनात् ॥ ६७ ॥

त० प्र०—मर्यादाशास्त्रापेक्षया भागवतस्योत्कर्षं वक्तुमाह ॥ स्वस्येति ॥ वेदार्थानुष्ठाने सिद्धे वेदः सफलो भवति न तु स्वार्थानुष्ठानं संपादयितुं शक्तः ॥ अतः स्वनिर्वाहे कुंठितः ॥ तत्र हेतुः ॥ अत्यंतमलिना इति ॥ तर्हि भागवते कथं न दोषस्तत्राह ॥ एतदभ्यसनादिति ॥ अभ्यासमात्रेणैव तदर्थानुष्ठानाभावेपि लोको मुच्यते ॥ परमत्रैको दोषस्तदुपजीवनमिति ॥ अतस्तदभावमाह ॥ अनुपजीवनादिति ॥ वृत्त्यर्थमुपायो न कर्तव्यः ॥ ६७ ॥

त० दी०—कालादिधर्महेतूनामभावात्सांप्रतं कलौ ॥
वेदस्मृतिपुराणानामर्थाः सर्वे हि बाधिताः ॥ ६८ ॥

त० प्र०—उभयोर्वैलक्षण्ये युक्तिमाह ॥ कालादीति ॥ कालादयः षट् शुद्धाः फलं साधयंति ते कलौ कथमपि न शुद्धा भवंति॥ वेदाद्यर्थाश्च कालादिसाधनापेक्षाः ६८

त० दी०—कालादिसाधनापेक्षारहितः सर्वतोधिकः ॥ ६९ ॥

---

१ साधनपदं क्वचित् ।

त० प्र०—भागवतार्थस्तु न तानपेक्षते नित्यत्वात्सर्वाधिकारत्वात्सुलभत्वाच्चेत्याह ॥ **कालादिसाधनापेक्षारहित इति ॥ ६९ ॥**

**त० दी०—फलतः सुगमश्चैव सर्वथाफलसाधकः ॥**
**योगसांख्ये तु ये मुख्ये तयोः सत्त्वे प्रयोजनम् ॥**
**ज्ञानदुर्बलवादानां न मनोरथवार्तया ॥**
**सिद्धिं यांति नरा दुष्टा व्यामोहस्तु ततः फलम् ॥ ७० ॥**

त० प्र०—नन्वन्योपि मार्गो योगः सांख्यं च कालाद्यपेक्षारहितः ॥ योगेनैव सर्वानर्थनिवृत्तिर्ज्ञानेन चेत्याशंक्य तद्द्वयं दूषयति ॥ **योगसांख्ये इति** ॥ किं मुख्ये योगसांख्ये तथाभूते आहोस्विद्यादृशे तादृशे ॥ तत्राऽऽद्ये नाऽस्मिन्युगे भवतस्तत्साधनानां कालाद्यपेक्षणात् ॥ साधनरहितयोस्त्वप्रयोजकत्वं सत्त्वे सत्यरूपत्वे ससाधने उत्कृष्टरूपे योगसांख्ये सफले इत्यर्थः ॥ अन्ये पुनर्ज्ञानदुर्बलवादसिद्धे ॥ अतस्तेषां मनोरथकल्पितत्वान्न ताभ्यां फलं किं तु व्यामोह एव ताभ्यां जन्यते ७०

**त० दी०—ग्रंथान् पुराणवाक्यानि वेदरूपेण वै क्वचित् ॥**
**कृत्वा वृथावेषधराः कृष्णं नोपासते परे ॥ ७१ ॥**

त० प्र०—कथमेवमवगम्यत इत्याकांक्षायामाह ॥ **ग्रंथानिति** ॥ स्थूलान् मिथ्यार्थप्रतिपादकान् यथा बुद्धिस्तत्रैव लग्ना भवति पुराणवाक्यानि च कल्पयंति क्वचिद्वेदरूपेणापि ॥ यथा परमहंसोपनिषत् ॥ एवं कृते यज्जातं तदाह ॥ **वृथावेषधरा इति** ॥ मुंडादिपारलौकिकवेषं धृत्वा मोहः सिद्ध इति स्वयमपि कृष्णं नोपासते तथा सति भजनं प्रवर्तेतेति ॥ एवं भागवतेनैव सर्वनिस्तार इति पुराणप्रकरणे निरूपितम् ॥ ७१ ॥

॥ इति पुराण प्रकरणम् ॥

**त० दी०—षडंगानि तथा वेदे वेदरक्षाफलानि हि ॥**
**स्वरूपतोऽर्थतश्चैव ह्यनुष्ठानात्त्रिधा हि तत् ॥ ७२ ॥**

त० प्र०—एवंश्रुतिस्मृतिपुराणानि निरूप्य षडंगानि निरूपयति ॥ **षडंगानीति** ॥ "शिक्षा कल्पो व्याकरणं निरुक्तं छंदो ज्यौतिषम्" इति ॥ एतेषां सामान्यफलं वेदरक्षा सा च त्रिविधा ॥ वैदिकशब्दा विसदृशा इति "भद्रं कर्णेभिः" इत्यादौ पंडितैरन्यथाकरणं संभवति तन्निराकृत्य स्वरूपतो रक्षणीयः अर्थतोऽपि रक्षणीयः ॥ अन्यथा यागमेव न जानीयुः ॥ अत एव सांप्रतं दानमेव यागं मन्यंते ॥

अनुष्ठानादपि रक्षा ॥ अन्यथाऽन्यथानुष्ठानं स्यात्कल्पाद्यभावे ॥ ७२ ॥

त० दी०— शिक्षा छंदः स्वरूपे तु निरुक्तं व्याकृतिस्तथा ॥
अर्थे ज्योतिस्तथा कल्पो ह्यनुष्ठाने प्रयोजकः ॥
विशेषतो हीदमुक्तं सर्वं सर्वत्र चैव हि ॥ ७३ ॥

त० प्र०— तत्र द्वयोरुपयोगमाह ॥ शिक्षेति ॥ स्वरादिविधौ शब्देपि व्याकरणोपयोग इति व्यभिचारमाशंक्याह ॥ विशेषत इति ॥ ७३ ॥

त० दी०— ये धातुशब्दा यत्रार्थे उपदेशे प्रकीर्तिताः ॥
तथैवार्थो वेदराशेः कर्तव्यो नाऽन्यथा क्वचित् ॥ ७४ ॥

त० प्र०— कथं व्याकरणस्यार्थोपयोग इत्याशंक्याह ॥ ये धातुशब्दा इति ॥ धातुपारायणे नामपारायणे च यत्रार्थे 'यज देवपूजासंगतिकरणदानेषु' गौः ग्मा ज्मा क्ष्मेत्यादिप्रकरणेन पृथिव्या इति प्रकीर्तितास्तथैव वेदार्थो निर्णेतव्यः ॥ यथा कैश्चिदुक्तं "विष्णोः पदे परमे मध्व उत्सः" उत्सशब्देन कूपवाचकेन उत्सुको व्याख्यातः ॥ तथा व्याख्याने स्वार्थात्प्रच्यवेताऽतस्तन्निषेधार्थमाह ॥ कर्तव्यो नान्यथा क्वचिदिति ॥ ७४ ॥

त० दी०— साक्षाद्धर्मप्रतीतेस्तु कल्पः स्मृतिषु चेतितः[1] ॥
दर्शादिकालनिर्धारो ज्योतिःशास्त्रफलं स्मृतम् ॥ ७५ ॥

त० प्र०— ननु कल्पसूत्रे सांकर्यमंगत्वं स्मृतित्वं चेत्याशंक्याह ॥ साक्षादिति ॥ तत्र धर्मः प्रतीयत इति वेदत्वं स्मृतित्वं चोक्तं वस्तुतस्त्वंगत्वमेव ॥ ज्योतिष उपयोगमाह ॥ दर्शादीति ॥ ७५ ॥

त० दी०— पदनिर्वचनाद्वेदे निघण्टुविवृतावपि ॥
निरुक्तस्यांगता प्रोक्ता तथाल्पस्तस्य संचरः ॥ ७६ ॥

त० प्र०— निरुक्तस्य विवरणरूपस्य कथमंगत्वमित्याशंक्याह ॥ पदनिर्वचनादिति ॥ निघंटौ यद्यपि कोशवच्छब्दा उक्तास्तथापि निर्वचनाभावान्नांगत्वम् ॥ विवृतित्वेऽपि निर्वचनादेव निरुक्तस्यांगत्वं व्याकरणापेक्षया तस्याऽल्पो विषयः ७६

त० दी०— व्याकृतिः पाणिनीयं हि प्रातिशाख्यं तु शब्दगम् ॥
आदिमत्वाल्लक्षणानां नांगत्वं पूर्वचोदितम् ॥ ७७ ॥

त० प्र०— यद्यपि बहूनि व्याकरणानि संति तथापि पाणिनीयमेवांगम् ॥ प्रा-

---

[1] चितितः ।

तिशाख्यं तु प्रतिशाखं भिन्नमिति न साधारणमंगम् ॥ यद्यपि कल्पेऽप्ययं दोषः संभवति तथापि कल्पत्वेनांऽगता ॥ प्रातिशाख्ये तु क्वापि नाऽर्थज्ञानं भवत्यतः शब्दोपयोगित्वात्पाणिनीयांतर्भावेनैवांगता ॥ तथा लक्षणानाम् ॥ ७७ ॥

त० दी०— अनिंङ्यादिप्रातिशाख्ये विशेद्व्याकरणे तु तत् ॥
छंदसः पाठहेतुत्वं शब्दज्ञानोपयोगतः ॥ ७८ ॥

त० प्र०—तेषामंगे प्रवेशप्रकारमाह ॥ अनिंङ्यादीति ॥ सर्वाणि लक्षणानि प्रातिशाख्ये प्रविशंति ॥ प्रातिशाख्यं व्याकरणे ॥ छंदसोऽनुष्ठानेऽप्युपयोगो दृश्यत इति कथं पाठहेतुत्वं तत्राह ॥ शब्दज्ञानोपयोगत इति ॥ अनुष्ठानेपि शब्दधर्मत्वेनैव तज्ज्ञानमुपयुज्यते नाऽन्यथेत्यर्थः ॥ ७८ ॥

त० दी०— आरोग्ये धर्मसिद्धिः स्याद्रक्षा च धनुषो भवेत् ॥
उद्वेगहानिर्गांधर्वे स्थापत्यं च स्रुगादिषु ॥ ७९ ॥

त० प्र०—उपवेदानां प्रयोजनमाह ॥ आरोग्य इति ॥ ऋग्वेदस्याऽऽयुर्वेद उपवेदः ॥ तस्याऽऽरोग्यं फलं तेन धर्मः सिध्यतीत्यारोग्यद्वारा धर्मोपयोगः ॥ एवं रक्षाद्वारा धनुर्वेदस्य ॥ उद्वेगहानिद्वारा गांधर्वस्य ॥ स्थापत्यस्य तु स्रुगादिष्वप्युपयोगः ॥ एव मष्टादशविद्यानां धर्मोपयोग उक्तः ॥ अर्थशास्त्रस्यार्थद्वारैव तदुपयोगः ॥ तच्च न्याये प्रविशति ॥ तथा वात्स्यायनादीनां कामोपयोगः ॥ स च दृष्टांतो मोक्षसुखे ॥ अतो नाऽष्टादशविद्यासु निरूपितः ॥ तच्छेपत्वमेव काव्यालंकारनाटकादीनाम् ॥ यथाभिमथनं योगे दृष्टांतस्तथा मोक्षे काम इति सर्वमनवद्यम् ॥ ७९ ॥

त० दी०— काव्यादीनामसत्यत्वान्नोपयोगः कथंचन ॥
धर्मे कर्तुः क्वचित्कीर्तिर्नैपुण्यं पाठतः क्वचित् ॥ ८० ॥

त० प्र०—काव्यादीनां धर्मे नोपयोग इत्याह ॥ काव्यादीनामिति ॥ असत्यमुत्प्रेक्षाजन्यत्वात् ॥ कीर्तिधर्मवत्फलसाधिकेति फलांशे काव्यादीनामुपयोगमाह ॥ कर्तुः क्वचित्कीर्तिरिति ॥ नैपुण्यं नीतिशास्त्रेषु युज्यते तच्च पाठात् ॥ ८० ॥

त० दी०— रामायणमनंतं हि पुराणमिव सन्मतम् ॥
व्यासः पूर्वमनेकोक्तो वाल्मीकिः सांप्रतं किल ॥
समाधिभाषया प्राह प्रमाणं सर्वथेव तत् ॥ ८१ ॥

त० प्र०—रामायणं च काव्यमिति सर्गबंधनात् ॥ न तस्य धर्मोपयोगो भविष्यतीत्याशंक्याह ॥ रामायणमिति ॥ "चरितं रघुनाथस्य शतकोटिप्रविस्तरम् ॥

१ अनिन्द्यादि ॥

एकैकमक्षरं पुंसां महापातकनाशनम्" इति वाक्याद्धर्मजनकमेव ॥ अनंतमपरिमितम् ॥ प्रतिकल्पं प्रतियुगं रामावतारा भवंति ॥ तत्राऽन्यपदार्थेष्विव रामचरित्रस्य स्वरूपं न भवति ॥ उत्तरेण पूर्वोपचरितार्थरूपमतः पूर्वपूर्वरामकथाया उत्तरया सह कथनादनंतत्वं कचित्पुनरुक्तेपि धर्मो भवतीति हिशब्देनाऽऽह ॥ आख्यायिकायाः प्रामाण्यार्थं पुराणमिव सतां मतम् ॥ अस्य व्यासो विस्तारः पूर्वमनेकैरुक्तः सांप्रतं वाल्मीकिः समाधावुपलभ्य सर्वमुक्तवानतः सुतरामिदानींतनं प्रमाणम् ।

त० द०— वासिष्ठादेस्तु संवादात्प्रामाण्यं नाऽन्यथा क्वचित् ॥
न्यायस्तु नीतिशास्त्रं हि तर्को मीमांसया युतः ॥ ८२ ॥

त० प्र०—वासिष्ठरामायणादेर्न तथात्वमित्याह ॥ वासिष्ठादेरिति ॥ संवादः प्रमाणेन ॥ "पुराणन्याय" इत्यत्र सांप्रतमक्षपादविरचितं धर्मोपयोगि भविष्यतीत्याशंक्य समानशब्दत्वमेव तत्रेत्याह ॥ न्यायस्त्विति ॥ पुराणन्यायेत्यत्र नीतिशास्त्रमेव न्यायशब्देनोच्यते न तु लोके प्रसिद्धम् ॥ यस्तर्केणाऽनुसंधत्त इत्यत्र तर्कशब्दो वेदानुकूलतर्कवाचकमीमांसापरः ॥ ८२ ॥

त० दी०— मोहार्थान्यन्यशास्त्राणि बुद्धे कृष्णे तदिच्छया ॥
देवांशैः कल्पितान्येव तदुक्तं सर्वथा मृषा ॥ ८३ ॥

त० प्र०—अन्यानि काणादादिशास्त्राणि मोहार्थान्येव ॥ अतस्तत्रादरणीयमित्यर्थः

त० दी०— प्रमेयं हरिरेवैकः सगुणो निर्गुणश्च सः ॥
गुणाः कार्यं तथा धर्मः क्रियोत्पत्त्यादयश्च सः ॥ ८४ ॥

त०प्र०—एवं प्रमाणं निरूप्य तत्संदेहं निराकुल प्रमेयं निरूपयति ॥ प्रमेयमिति ॥ यथा शब्द एव प्रमाणं तत्रापि वेदादिभावापन्नं तथा हरिरेव प्रमेयं सर्वभावापन्नमिति सर्वमेव गणयति ॥ सगुण इत्यादिना ॥ क्रिया उत्पत्त्यादयश्च स हरिरेव ॥ ८४ ॥

त० दी०— बुद्धिसौकर्यसिद्ध्यर्थं त्रिरूपेणोपवर्ण्यते ॥
कारणेन च कार्येण स्वरूपेण विशेषतः ॥ ८५ ॥

त० प्र०—एवमुक्ते सम्यक् ज्ञानं न भवतीति विशेषं वक्तुमाह ॥ बुद्धीति ॥ यथा बुद्धिः सर्वं प्रमेयजातं क्रोडीकरोति तदर्थं त्रिरूपेणोपवर्ण्यते ॥ तदैव तत्तत्भावो भवति ॥ ८५ ॥

त० दी०— अष्टाविंशतिभेदास्तु कारणे तत्त्वभेदतः ॥
भगवत्त्वं यतस्तेषां तस्मात्तत्त्वानि तानि तु ॥ ८६ ॥

त० प्र०—प्रथमेऽष्टाविंशतिभेदाः ॥ तेषां च कारणत्वंतत्त्वंपदवाच्यत्वं च स-मर्थयति ॥ भगवत्त्वमिति ॥ ८६ ॥

त० दी०— अंडसृष्टेः पूर्वभावात्कारणत्वं न चाऽन्यथा ॥
कारणत्वं न चैवाऽस्ति चिदानंदांशयोः स्वतः ॥ ८७ ॥

त० प्र०—सच्चिदानंदभेदेषु सद्भेदा एवैते चिदानंदयोः कारणत्वाभावात् ॥ एकस्य फलत्वमपरस्य स्वरूपत्वमित्याह ॥ कारणत्वं न चैवास्तीति ॥ ८७ ॥

त० दी०— आनंत्यमेव भेदानां तयोः कार्ये तथैव च ॥
अतस्तेषां तु ये भेदा नोक्तास्ते हि विशेषतः ॥ ८८ ॥

त० प्र०—तयोर्भेदा अनंताः ॥ तेन विशेषतो न वक्तव्या इति भावः ॥ कार्येपि भेदानामानंत्यं घटादौ तथा दर्शनात् ॥ ननु स्वस्याऽसामर्थ्यादेतदुच्यते नेत्याह ॥ अतस्तेषामिति ॥ अत एव भागवतादौ तेषां संख्या नोक्ता ॥ ८८ ॥

त० दी०— स्वरूपे तु त्रयो भेदाः क्रियाज्ञानविभेदतः ॥
विशिष्टेन स्वरूपेण क्रियाज्ञानवतो हरेः ॥ ८९ ॥

त० प्र०—तत्त्वसहभावाच्चिदानंदयोः स्वरूपभूतयोरपि प्रथमपक्ष एव निवेशनमुक्त्वा तृतीयभेदानाह ॥ स्वरूपे त्विति ॥ क्रियारूपे धर्मे प्रविष्टो धर्मी यज्ञ एकः ॥ तथा ज्ञानरूपे धर्मे प्रविष्टो धर्मी ब्रह्म द्वितीयः ॥ ज्ञानक्रियोभययुतः कृष्णस्तृतीय इति त्रयो भेदाः ॥ यतः क्रियाज्ञानवान् हरिः ॥ ८९ ॥

त० दी०— विशिष्टे वाचकं गीता श्रीभागवतमेव च ॥
केवले कांडद्वितयं वेदो धर्मप्रवेशतः ॥ ९० ॥

त० प्र०—अस्य प्रमेयसिद्ध्यर्थं प्रमेयबलविचारेण प्रमाणमाह ॥ विशिष्टे वाचकमिति ॥ ननु कांडद्वयेपि क्रियाज्ञानं प्रतिपाद्यते न तु क्रियावान् ज्ञानवान् वा तत्कथमुच्यते एकैकस्मिन्नंश एकैकं कांडमिति तत्राह ॥ धर्मप्रवेशत इति ॥ क्रियावान् क्रियायां प्रविष्टः ॥ अतः क्रियैव प्रतीयते ॥ वस्तुतस्तु क्रियावान् ॥ "यज्ञो वै विष्णुः" इति श्रुतेः ॥ ९० ॥

त० दी०—तस्यैवोद्भूतरूपत्वात्क्रियाज्ञाने अपि स्वतः ॥
अविकार्ये विकार्ये तु ह्यध्रुवे कार्यवन्मते ॥ ९१ ॥

त० प्र०—तत्र हेतुः ॥ तस्यैवोद्भूतरूपत्वादिति ॥ धर्मे एवोद्भूतो न तु

१ त्यर्। २ तत्तत्कार्ये इति क्वचित्पाठः।

धर्मी ॥ ननु जन्यत्वान्न तद्भगवत्स्वरूपमित्याशंक्याह ॥ **क्रियाज्ञाने अपि स्वत इति** ॥ लौकिकक्रियया वृत्त्या च अभिव्यज्येते एव न तु जन्येते इत्यर्थः ॥ तत्र हेतुः ॥ **अविकार्ये इति** ॥ तर्हि लोकेपि क्रियाज्ञानयोर्नित्यता स्यादत आह ॥ **विकार्ये त्विति** ॥ किं च कार्यमस्मन्मतेऽभिव्यक्तमेव अतो नेदं दूषणमित्यर्थः ॥ ९१ ॥

त० दी०— वेदवाच्ये तु ये रूपे तदभिव्यक्तितः फलम् ॥
अनुष्ठानाद्गुरोर्वाऽपि लौकिके लौकिकं फलम् ॥
प्रेम सेवात एव स्याद्विशिष्टव्यक्तिरुत्तमा ॥ ९२ ॥

त० प्र०— तर्हि लोकतुल्यत्वात्क्रियाज्ञानप्रतिपादनार्थं किं महता वेदेनेत्याशंक्याह ॥ **वेदवाच्ये तु ये रूप इति** ॥ तयोरभिव्यक्तिमात्रेणैवोक्तं फलं भवति ॥ अतः फलार्थं कीर्तनमित्यर्थः ॥ अभिव्यक्तिहेतुमाह ॥ **अनुष्ठानाद्गुरोर्वापीति** ॥ गुरोरुत्तरकांडे लौकिकेपि क्रियाज्ञानयोः सफलत्वात्को विशेष इत्याशंक्याऽऽह ॥ **लौकिकं फलमिति** ॥ अन्यतः फलसिद्धिरित्यर्थः ॥ विशिष्टाभिव्यक्तौ हेतुमाह ॥ **प्रेमसेवात इति** ॥ भक्तिशब्दस्य प्रत्ययार्थः प्रेम। धात्वर्थः सेवा ॥ "भक्त्यैव तुष्टिमभ्येति" इतिवाक्यात् ॥ "पश्यंति ते मे" इति च ॥ विशिष्टस्य कृष्णस्य कृतार्थत्वज्ञापनायाऽभिव्यक्तिरुत्तमा न तु दैत्यवधार्थमिव ॥ ९२ ॥

त० दी०— कार्यभेदविभेदान् हि कल्पयित्वा विभागशः ॥
वृथा शास्त्रप्रवृत्तिर्हि यस्मात्कार्यमतिर्वृथा ॥ ९३ ॥

त० प्र०— ननु कश्चित् षोडश पदार्थाः कश्चित्सप्त तथा त्वयापि कार्येषु कथं न भेदाः कल्प्यंत इत्याशंक्याह ॥ **कार्यभेदेति** ॥ "मुख्यमेकं पृथक्कृत्य साधनानां निरूपणम्। युक्तं न तुल्यसंख्या हि फलकारणयोः पृथक्" ॥ अतोऽत्र हरिं पृथक्कृत्य तत्त्वान्येव कारणत्वेन कथितानि न त्वेकीकृत्य शास्त्रांतरवन्निरूपितानि ॥९३॥

त० दी०— सत्त्वं रजस्तमश्चैव पुरुषः प्रकृतिर्महान् ॥
अहंकारः पंचमात्राः शब्दस्पर्शाकृती रसः ॥ ९४ ॥
गंधो भूतानि पंचैव खं वायुर्ज्योतिरप् क्षितिः ॥
क्रियामयानींद्रियाणि वाग्दोर्मेढ्राङ्घ्रिपायवः ॥
श्रोत्रं त्वक् घ्राणदृक् जिह्वा मनः पट्चेति भेदतः ॥ ९५ ॥

१ स्मिन् । २ नैवम् । ३ कश्चित् ॥

त० प्र०—तत्त्वानि गणयति ॥ सत्त्वमिति मनःपडिलंतेन ॥ मनसः क्रियामयत्वं ज्ञानमयत्वं चाऽऽह ॥ भेदत इति ॥ मनसा सह क्रियायां पडिति ९४॥९५

त० दी०— आध्यात्मिकस्तु यः प्रोक्तः सोऽसावेवाधिदैविकः ॥
अतो हि देवतावर्गं इंद्रियेभ्यो न विद्यते ॥ ९६ ॥

त० प्र०—देवतावर्गेणाऽधिकसंख्यामाशंक्य परिहरति ॥ आध्यात्मिकस्त्विति ९६

त० दी०— माया तु गुणरूपा हि कालस्तु भगवान् परः ॥
सूत्रं महांस्तथा प्राणो बुद्धिश्चाऽहमभेदतः ॥ ९७ ॥

त० प्र०—मायाभिन्नेत्याशंक्याह ॥ माया त्विति ॥ कालस्तु भगवत्यंतर्भूतः । सूत्रं तु महत्तत्वमेव ॥ तथा प्राणो बुद्धिश्चाऽहंकार एव तस्मादष्टाविंशतिसंख्याकान्येव॥९७॥

त० दी०— प्रकृतिः पुरुषश्चोभौ परमात्माऽभवत्पुरा ॥
यद्रूपं समधिष्ठाय तदक्षरमुदीर्यते ॥ ९८ ॥

त० प्र०—अक्षरकर्मस्वभावान्निरूपयन् प्रथममक्षरमाह ॥ प्रकृतिः पुरुषश्चेति॥ भगवान् यदा येन रूपेण कार्यं कर्तुमिच्छति तद्रूपमेव व्यापारयति तत्र ज्ञानेन मोक्षो देय इति यदा विचारयति तदाऽक्षरमेव ब्रह्मस्वरूपं पुरुषोत्तमस्याऽऽधारभागक्षरणस्थानीयस्तमादौ चतुर्मूर्ति करोति ॥ अक्षररूपं ब्रह्मरूपं कालरूपं स्वभावरूपं च ॥ तत्र यस्य रूपस्य द्वैरूप्यं भवति प्रकृतिपुरुषभेदेन तदक्षरम् ॥ ९८ ॥

त० दी०— आनंदांशतिरोभावः सत्त्वमात्रेण तत्र हि ॥
मुख्यजीवस्ततः प्रोक्तः सृष्टीच्छावशगो हरिः ॥ ९९ ॥

त० प्र०—ननु पुरुषोत्तमस्वरूपात्तत्र को विशेष इति चेत्तत्राह ॥ आनंदांशतिरोभाव इति ॥ अग्रेहमेवं भविष्यामीतीच्छामात्रेणांतःसमुत्थितसत्त्वेनानंदांशस्तिरोहित इव भवति ॥ तेन सृष्टीच्छया व्यापृतो भगवान् मुख्यजीवशब्दवाच्योपि भवति॥ अत एव औडुलोमिमते जीवानां चिद्रूपाणां चिद्रूपे स्वयोग्ये ब्रह्मणि प्रवेशः९९

त० दी०— इच्छामात्रात्तिरोभावस्तस्याऽप्युपचर्यते ॥
ब्रह्मकूटस्थाव्यक्तादिशब्दैर्वाच्यो निरंतरम् ॥ १०० ॥

त० प्र०— नन्वानंदांशतिरोभावे जीवत्वमेव स्यात् यथा महदादीनामित्याशंक्याह ॥ इच्छामात्रादिति ॥ इच्छायां प्रविष्टायां कार्यव्यापृत्या तिरोभाव इवोच्यते वस्तुतस्तु आनंदमय एव ॥ अत एव पुरुषोऽवतारो भविष्यति इच्छारूपायाः प्रकृतेर्भिन्नत्वे वाचकैरपि तस्य न जीवत्वमित्यभिप्रायेणाऽऽह ॥ ब्रह्मेति ॥

आदिशब्देनाऽसत्सत्तमःशब्दादयो गृह्यंते तथाऽपि न पुरुषोत्तमाच्छिन्नतया व्यवस्थितिः किं तु निरंतर एव ॥ १०० ॥

त० दी०—सर्वावरणयुक्तानि तस्मिन्नंडानि कोटिशः ॥
मूलाविच्छेदरूपेण तदाधारतया स्थितः ॥ १०१ ॥

त० प्र०—तस्यैव कारणत्वं ज्ञापयितुं तत्रैव कार्यस्थितिमाह ॥ सर्वावरणयुक्तानीति ॥ "तदाहुरक्षरं ब्रह्म" इति वाक्यात् ॥ एतस्याऽक्षरस्य पुरुषोत्तमे अभेदेन यथा निवेशस्तथा प्रकारा उच्यंते तदाह ॥ मूलाविच्छेदेति ॥ मूलेन पुरुषोत्तमेन सह अविच्छिन्नतया तिष्ठति न तु कार्यत्वेनेत्याह ॥ तदाधारतयेति ॥ एषा स्थितिः सर्वदा ॥ १०१ ॥

त० दी०—प्रभुत्वेन हरेः स्फूर्तौ लोकत्वेन तदुद्भवः ॥
अंतर्याम्यवतारादिरूपे पादत्वमस्य हि ॥ १०२ ॥

त० प्र०—कदाचित्पुनः पुरुषोत्तमश्चेदाविर्भवति तदाऽक्षरमपि बहुधा भवतीत्याह ॥ प्रभुत्वेनेति ॥ प्रभुर्वैकुंठवासी लोको वैकुंठः-जीवजडाकारेण प्रादुर्भवतीत्यर्थः॥ अत एव वैकुंठवासिनो मुक्ताः। ततोपि पुरुषोत्तमो महान् ॥ अत एवाऽभेदश्चास्मदादीनामिति वाक्यं सगच्छते ॥ अंतरुपासनायामंतर्यामिरूपेण प्रकटो भवति तदा सद्योमुक्तौ ज्ञानिनस्तच्चरणारविंदमेव प्रविशंतीत्यक्षरस्य पादत्वम् ॥ तथाऽवतारेपि ॥ "चैद्ये च सात्त्वतपतेश्चरणं प्रविष्टे" इति ॥ आदिशब्देनाऽधिदैवाधिरूपेष्वपि ॥१०२॥

त० दी०—हंसाकृतित्वकथने पुच्छत्वं परमात्मनः ॥
तदुपासनया ज्ञानात्परमात्मत्वमस्य हि ॥ १०३ ॥

त० प्र०—आनंदमयनिरूपणे हंसाकृतित्वकथनं तत्र "ब्रह्मपुच्छं प्रतिष्ठा" इति ॥ ब्रह्माऽक्षरमानंदमयस्य पुच्छमिति निःसंदेहाय परमात्मपदम् ॥ एवमनेकभावापन्नमपि ज्ञानमार्गेऽक्षरत्वेनैव सेव्यमित्याह ॥ तदुपासनयेति ॥ प्रथमतस्तस्यैव निदिध्यासनेन यज्ज्ञानमुत्पद्यते तेनाऽस्याधिकारिणः परमात्मत्वमेव नत्वक्षरमात्रतेति भगवद्वचनादवगम्यते "ते प्राप्नुवंति मामेव" इति हि शब्दार्थः ॥ भक्तिमार्गे त्वारंभत एव परमानंदः ॥ ज्ञानमार्गे त्वंतत इति विशेषः ॥ १०३ ॥

त० दी०—ज्ञानमार्गे त्वेतदेव सेव्यं कृष्णस्ततोधिकः ॥
रूपांतरं तु तस्यैव सर्वसामर्थ्यसंयुतम् ॥ १०४ ॥

त० प्र०—तथापि ज्ञानमार्गे अक्षरमेव सेव्यम् ॥ एवमभेदेपि वैलक्षण्यं निरूप्य

अस्यापि चिदानंदादितिरोभावादिः कालवदेवेत्याह ॥ **कालवदिति** ॥ विशेषमाह ॥ **तद्वशगमिति** ॥ यत्र यः कालवशे भवति ॥ तमेव व्याप्नोति न त्वन्यमित्यर्थः ॥११२॥

त० दी०— इच्छामात्रप्रकटनं सर्वथा तत्तिरोहितम् ॥
सर्ववस्त्वाश्रितं पश्चात्स्वभावोऽयं हरेस्तनुः ॥ ११३ ॥

त० प्र०—एवं कर्म निरूप्य स्वभावं निरूपयति ॥ **इच्छामात्रेति** ॥ भगवदिच्छारूपेण प्रकटो भवति न सच्चिदानंदरूपेण ॥ तस्य स्वरूपं व्यवहारोपयोग्याह ॥ **सर्ववस्त्वाश्रितमिति** ॥ तद्रूपं जगदाधारं स्वांशभेदेन तत्र तिष्ठति । तत्रापि न लीनः। नापि वस्तुनः पश्चाद्भागे । किं तु पश्चाद्भागे सर्वं स्थापयित्वा स्वयमेव प्रकटो भवति ॥ यथा स्वभावदुष्टानां ज्ञानादिकं तिरस्कृत्य स्वरूपेण प्रकटस्तदाह ॥ **पश्चादिति** ॥ एतस्य कार्यवत्स्वरूपं मा भवत्वित्याह ॥ **हरेस्तनुरिति** ॥ ११३ ॥

त० दी०— वस्त्वुद्गमतिरोभावैस्तथा सत्त्वादिभिः पुनः ॥
परिणामस्तु तत्कार्यं सर्वानुभवसाक्षिकम् ॥ ११४ ॥

त० प्र०—अस्याऽऽविर्भावतिरोभावयोरुपपत्तिमाह ॥ **वस्तूद्गमेति** ॥ अस्योद्गमतिरोभावयोर्वस्तु नियामकम् ॥ तथा सत्त्वादिगुणाः ॥ ज्ञानं कर्म च ॥ अतो वहुधोद्गमः ॥ तस्य द्रव्याविर्भावेणाप्याविर्भावः ॥ विरोधिगुणप्रादुर्भावे पूर्वस्वभावो निवर्तते अन्यश्चोदेति ॥ तथा मंत्रशास्त्रादिभिरपि ॥ अतो बहुधोद्गमतिरोभावौ तस्य सद्भावेऽर्थापत्तिं प्रमाणयति ॥ **परिणामस्त्विति** ॥ स्वभावस्य परिणाम एव कार्यम् ११४

त० दी०— सामान्यतो विशेषेण न प्रकाशः कदाचन ॥
एवं कालस्तथा कर्म स्वभावो हरिरेव सः ॥ ११५ ॥

त० प्र०—अतः स्वभावः सर्वदा अनुमानगम्यो न कदाचिदपि प्रत्यक्ष इत्याह ॥ **सामान्यत इति** ॥ उपसंहरति ॥ **एवमिति** ॥ तत्त्वाधिक्यपरिहारायाऽऽह ॥ **हरिरेव स इति** ॥ स कालादिर्हरिरेव ॥ ११५ ॥

त० दी०— अतस्तदुद्गमः शास्त्रे न कदाचिदुदाहृतः ॥
सर्वसाधारणत्वेन न तत्त्वं तदेव तत् ॥ ११६ ॥

त० प्र०—तत्रोपपत्तिमाह ॥ **अतस्तदुद्गम इति** ॥ शास्त्रे भागवते ॥ तथापि कारणत्वात्तत्त्वता भविष्यतीत्याशंक्याह ॥ **सर्वसाधारणत्वेनेति** ॥ यथा भगवान् सर्वसाधारणत्वान्न तत्त्वकोटौ प्रविशति तथा कालादिरपि भगवत्त्वेनैवोपपत्तौ न पृथक्कृत्यम् ॥ ११६ ॥

त० दी०— अभावः कारणं चाऽत्र ध्वंसश्चापि तदुच्यते ॥
कार्यादिशब्दवत्तस्मिन्सापेक्षा वृत्तिरेतयोः ॥
अपृथग्विद्यमानत्वान्न धर्मैरधिको गणः ॥ ११७ ॥

त० प्र०— प्रागभावस्य कारणत्वात्तत्त्वता भविष्यतीत्याशंक्याह ॥ अभावः कारणं चात्रेति ॥ प्रागभावः कारणावस्थातो नाऽतिरिच्यते तस्य भिन्नकारणत्वकल्पनायां प्रमाणाभावात् ॥ अग्रिमजननज्ञानेनैव तस्यानुभवः, अन्यथात्यंताभाव एव स्यात् ॥ तस्मात्पूर्वमभावस्तस्य न कारणम् ॥ नहि तेन कोपि व्यापारः क्रियते कार्येण परं निवर्त्यते ॥ प्रसंगाद्ध्वंसादीनामपि कारणत्वं निराकर्तुमाह ॥ ध्वंसश्चापीति ॥ ध्वंसोपि दंडादिस्वरूपमेव तिरोभावशक्त्यतिरिक्तस्य ध्वंसस्य निरूपयितुमशक्यत्वात् ॥ तेन रूपांतरं पश्यन् पूर्वरूपस्य तिरोभावमेव मन्यते ध्वस्त इति ॥ ननु कारणातिरिक्तरूपाभावे प्रागभावादिशब्दप्रयोगः कथमिति चेत्तत्राह ॥ कार्यादिशब्दवदिति ॥ न हि घटरूपादतिरिक्तकार्यता । तथा दंडरूपादपि नातिरिक्ता कारणता । तथापि तयोर्यथाकार्यकारणप्रयोगस्तथाप्रागभावादिप्रयोगोपि ॥ ननु संख्यादयो गुणाः सामान्यादयश्च संति ततः कथमष्टाविंशतितत्त्वानि तत्राह ॥ अपृथग्विद्यमानत्वादिति ॥ ११७ ॥

त० दी०— आनंत्येपि हि कार्याणां गणभेदो द्विधा मतः ॥
समष्टिव्यष्टिभेदेन केवले जडजीवता ॥ ११८ ॥

त० प्र०— एवं कारणं निरूप्य कार्यज्ञानार्थं तस्याऽवांतरभेदानाह ॥ आनंत्येपीति ॥ यद्यपि घटपटादिप्रकारेण ज्ञानमशक्यं तथापि सर्वं कार्यराशिद्वयात्मकं समष्टिरूपं व्यष्टिरूपं च । तच्च जीवजडात्मकं नानंदांशस्तत्र प्रविशति । अतः केवलप्रकारेण विभागे क्रियमाणे जडो जीवश्च भवति न तु ततोऽतिरिक्तं किंचित् ११८

त० दी०— सर्वेषां त्रिगुणत्वाद्धि त्रयो भेदाः पृथङ्मताः ॥
आधिदैविकमध्यात्ममधिभूतमिति श्रुताः ॥ ११९ ॥

त० प्र०— कार्ये त्रैविध्यं निरूपयितुमाह ॥ सर्वेषामिति ॥ गुणानामपि त्रैविध्ये हेतुरग्रे वक्तव्यः ॥ भेदानाह ॥ आधिदैविकमिति ॥ अधिष्ठाता स्वतंत्रो देव इत्युच्यते अभिमंता आत्मा तयोर्मध्ये अभिसंभवति सोऽधिभूतः ॥ ११९ ॥

त० दी०— सच्चिदानंदरूपेण देहजीवेशरूपिणः ॥
व्यष्टिः समष्टिः पुरुषो जीवभेदास्त्रयो मताः ॥ १२० ॥

त० प्र०— त्रयाणाममेदायाऽऽह ॥ सच्चिदानंदरूपेणेति ॥ सदधिभूतं, चिद-ध्यात्मकं, आनंदोऽधिदैवमिति ॥ उदाहरणमाह ॥ देहजीवेशरूपिण इति ॥ "देहोऽधिभूतं" जीवोऽध्यात्मा । ईशोंतर्यामी अधिदैवः ॥ एवं स्वरूपभेदमुपपाद्य समुदायेन प्रवृत्तौ कुत्र कस्य प्राधान्यमित्याकांक्षायामाह ॥ व्यष्टिरिति ॥ यद्यप्येते त्रयोपि पुरुषावतारास्तथापि देहाभिमानिन इति जीवभेदा उच्यंते ॥ १२० ॥

त० दी०— अंतर्याम्यक्षरं कृष्णो ब्रह्मभेदास्तथापरे ॥
स्वभावकर्मकालाश्च रुद्रो ब्रह्मा हरिस्तथा ॥ १२१ ॥

त० प्र०— तत्रैव विद्यमानोऽप्यनभिमानित्वाद्ब्रह्मेति एकत्रैव त्रिप्रकारेण वर्तत इति प्रकारान् गणयति ॥ अंतर्याम्यक्षरं कृष्ण इति ॥ यथा सारथी रथी तदंतः स्थितश्च तथांतर्याम्यक्षरं कृष्णः ॥ एवं सति पुरुषोत्तमत्वेन सर्वत्र दर्शनं भवति। परं ब्रह्मैव त्रिप्रकारेण वर्तत इति त्रयो भेदाः ॥ त्रयाणां प्रत्येकं बहून् भेदानाह ॥ स्वभावेति ॥ अक्षरस्य स्वभावकर्मकालभेदाः ॥ रुद्रादयः कृष्णस्य ॥ अंतर्यामिणः सर्वत्र भिन्नतयैव स्थितत्वान्न भेदानाह ॥ १२१ ॥

त० दी०— अविद्याप्रकृतिर्माया निद्राचित्तेंद्रजालता ॥
महत्तत्वं ब्रह्मरूपमस्मच्चित्तं तथैव च ॥ १२२ ॥

त० प्र०— त्रयाणां शक्तिभेदानाह ॥ अविद्येति ॥ अविद्या जीवस्य । प्रकृतिरक्षरस्य। माया कृष्णस्य ॥ उपलक्षणविधया अविद्याया भेदानाह ॥ निद्रेति ॥ एवं प्रकृतिपुरुषपर्यंतमुपरिस्थितानां भेदानुक्त्वा महदादीनामाह ॥ महतत्त्वमित्यादिना ॥ महतत्त्वमाधिदैविकस्थानीयं द्वितीयं ब्रह्मशरीरम् ॥ तृतीयमस्मदादीनां चित्तम् ॥ अनेनाऽन्येषां चाऽनुपलब्धेरिति भगवत्सिद्धांते दोषः परिहृतः ॥ १२२ ॥

त० दी०— अहंकारो रुद्ररूपमहंकारोऽस्मदादिषु ॥
मनश्चंद्रशरीरं च मनोऽस्माकं तथैव च ॥ १२३ ॥

त० प्र०— अहंकारे भेदानाह ॥ अहंकार इत्यादिना ॥ १२३ ॥

त० दी०— चक्षुः सूर्यशरीरं च चक्षुरस्माकमेव च ॥
मूलेंद्रियाणि ब्रह्मांडं देवदेहास्तथैव च ॥ १२४ ॥

त० प्र०— चक्षुरित्यादींद्रियाणां भेदाःसामान्येनाह॥ मूलेंद्रियाणीति॥ १२४ ॥

त० दी०— अस्मदिंद्रियवर्गश्च रूपत्रयमुदाहृतम् ॥
चंद्रश्चंद्राभिमानी च मनःप्रेरक एव नः ॥ १२५ ॥

त० प्र०—त्रयाणामवांतरभेदाः संतीति ज्ञापनार्थमाह ॥ **चंद्रश्चंद्राभिमानी चेति** ॥ १२५ ॥

**त० दी०— सूर्यो मण्डलमानी च चक्षुःप्रेरक एव नः ॥**
**एवं सर्वत्र तद्भेदाः स्वयमूह्या विभागशः ॥ १२६ ॥**

त० प्र०—अतिदिशति ॥ **एवमिति** ॥ १२६ ॥

**त० दी०— तन्मात्राणि च भूतानां गुणाः कार्यगतास्तथा ॥**
**महाभूतान्यावरणं मध्यभूतानि च क्रमात् ॥ १२७ ॥**

त० प्र०—एवमिंद्रियाणामुक्त्वा तन्मात्राणामाह ॥ **तन्मात्राणि चेति** ॥१२७॥

**त० दी०— अहंकारमहत्तत्त्वप्रकृतीनां पुनस्तथा ॥**
**मूलमावरणं चैव ब्रह्मांतःकरणं तथा ॥ १२८ ॥**

त० प्र०—ब्रह्मांडस्य च देहत्वात्परिच्छेदं निवारयति ॥ अहंकारमहत्तत्त्वप्रकृतीनामपि भूतादिन्यायेनाऽऽह ॥ **पुनस्तथेति** ॥ पुनःशब्देन सिंहावलोकनमुक्तम् ॥ सामान्यतो वदन्नुपसंहरति ॥ **मूलमिति** ॥ मूलं तत्त्वानि ॥ आवरणस्थानीयानि द्वितीयानि । ब्रह्मांडांतःस्थितानि तृतीयानि ब्रह्मणा अंतःकरणं येषामिति ॥ १२८॥

**त० दी०— अन्येऽप्यवांतरा भेदाः शतशः संति सर्वशः ॥**
**लोकपालास्तु ते तत्र स्वर्गस्थस्तु पुरंदरः ॥ १२९ ॥**

त० प्र०— परिच्छेदं वारयति ॥ **अन्येऽपीति** ॥ अस्मदाद्यधिष्ठिता पृथिवी । भाराक्रांता गोरूपा द्वितीया । भगवतः पार्श्वे वर्तमाना तृतीयेति ॥ एवं जलादावपि ज्ञातव्यम् ॥ ये दशेंद्रियाणां देवा उक्ता अहंकारादुत्पन्नास्त एव लोकपाला इंद्रादयो नामसाम्याद्ब्रह्मांडस्य च देहत्वात् अतः पिंडपाला इव लोकपाला इत्यभिप्रायेणाऽऽह ॥ **लोकपालास्त्विति** ॥ मित्रो निर्ऋतिः । अश्विनावुत्तरतः । दिशो यमस्थानीया इति ॥ तत्र पुरंदरस्य मध्यस्वर्गे स्थितिः उपरिभागद्योतकः ॥ १२९ ॥

**त० दी०— दशदिक्षु तु ते तत्र मध्यस्थस्तु पुरंदरः ॥**
**तादृशैरपरैर्देवैः प्रतिमन्वंतरं पृथक् ॥ १३० ॥**

त० प्र०—तेषां यथेच्छस्थितिं वारयितुमाह ॥ **दश दिक्षु त्विति** ॥ चंद्रमसो मध्यपाते पुरंदरो मध्यस्थः ॥ एवं सति तत्त्वाधिक्यं न भवति ॥ एते सर्वे सहोत्पन्नाः सहैव तिरोहिता भवंतीति प्रतिमन्वंतरं तदंशास्तन्नामानो भिन्ना इत्याह ॥ **तादृशैरपरैरिति** ॥ १३० ॥

त० दी०— लोकपालास्त्रिधा भिन्नाः स्थानैः सह विभागशः ॥
लोकालोके मानसे च मेरोर्मूर्ध्नि तथैव च ॥ १३१ ॥
ब्रह्मणोऽपि तथा सत्ये विराड्जीवस्तु भोगभुक् ॥
गुणावतारस्त्वन्यः स्यादेवमन्यत्र सर्वशः ॥ १३२ ॥

त० प्र०— तेषामवांतरभेदानाह ॥ **लोकपाला इति** ॥ सर्वेषां देवानां लोकालोकस्थानमेकं तथा मानसोत्तरे ॥ तथा मेरोर्मूर्ध्नि ब्रह्मणोऽप्याह ॥ **ब्रह्मण इति** ॥ मेरोर्मूर्ध्नि स्पष्ट एव ॥ पुष्करद्वीपेपि स्पष्टम् ॥ अतो लोकालोकेपि ज्ञातव्यम् ॥ सत्यलोके आधिदैविकः । विराड्देहेऽभिमानी द्वितीयः । मेरोर्मूर्ध्नि तृतीयः ॥ मध्यम एव भोगभोक्ता गुणावतारस्तु तेभ्यो भिन्न इत्याह ॥ **गुणावतारस्त्विति** ॥ यो नाभिकमले जातः ॥ १३१ ॥ १३२ ॥

त० दी०— कैलासादिविभेदश्च तथा वैकुंठवासिनः ॥
कृत्रिमं च ध्रुवस्थानं श्वेतद्वीपं तथैव च ॥
एवमेकप्रकारेण गुणतस्त्रिविधं मतम् ॥ १३३ ॥

त० प्र०— एवं रुद्रादीनामपि कैलासादिविभेदा वक्तव्याः ॥ वैकुंठस्याऽपि भेदास्तान् गणयति ॥ **कृत्रिममिति** ॥ "वैकुंठः कल्पितो येन" इति वाक्यात्तदाधिदैविकस्थानीयम् ॥ चकारात्तदकृत्रिममपि भगवदिच्छामात्रेण प्राकट्यात् ॥ ध्रुवस्थानं ज्योतिश्चक्रस्थम् । अथवा ध्रुवं निश्चलं स्थानं लोकत्रयोपरि महर्लोकादर्वाक् ॥ प्रकारांतरं वक्तुं पूर्वोक्तमुपसंहरति ॥ **एवमिति** ॥ १३३ ॥

त० दी०— सूर्यश्चक्षुस्तथा रूपं गोलकं चेति वा भिदा ॥
बुद्धिः खानि तथा मात्राः क्वचिदेवं भिदात्रयम् ॥ १३४ ॥

त० प्र०— द्वितीयं प्रकारमाह ॥ **सूर्य इति** ॥ यत्रैवाधिदैविकव्यवहारः स प्रथमः ॥ आध्यात्मिके द्वितीयतृतीये प्रकारद्वयं रूपं गोलकं चेति पुनरन्यं प्रकारमाह ॥ **बुद्धिः खानीति** ॥ इंद्रियजन्या बुद्धिराधिदैविकी ॥ १३४ ॥

त० दी०— भगवद्व्यतिरिक्तानां घटादीनां यथोद्भवः ॥
॥ इति कार्यप्रकरणम् ॥
व्यवहारे तथा ज्ञानक्रिययोरपि निश्चयः ॥ १३५ ॥

त० प्र०— एवं प्रकारत्रयं निरूप्य सर्वेषां स्वरूपं निरूपयितुं भगवत्त्वे जन्मादिभावा न युक्ता इति ज्ञानेंद्रियाणां कर्मेंद्रियाणां च वैयर्थ्यमाशंक्य त्रैविध्यसमर्थनार्थं

ज्ञानक्रिययोरुत्पत्तिं समर्थयते ॥ **भगवद्व्यतिरिक्तानामिति** ॥ भगवतोऽप्याविर्भावतिरोभावौ प्रायेण वैदिकानां संमतौ तदतिरिक्ते संदेहः ॥ अतस्तत्र विचारः कर्तव्य इति घटादिनिर्णय एव ज्ञानक्रिययोरपि निर्णयो भविष्यतीति नेंद्रियाणां वैयर्थ्यमित्यर्थः ॥ १३५ ॥

**त० दी०— न प्रतिस्फुरणं रूपरहितस्य कदाचन ॥**
**अविद्यायास्तथा बुद्धेर्न शुद्धत्वं कदाचन ॥ १३६ ॥**

त० प्र०— ननु ज्ञाने प्रतिबिंब एव भवतु स्वरूपस्य नित्यत्वादित्याशंक्य तथा पक्षपातस्त्रिष्वपि कर्तव्य इति वक्तुं ज्ञाने प्रतिबिंबपक्षं दूषयति ॥ **न प्रतिस्फुरणमिति** ॥ तत्र हेतुः ॥ **रूपरहितस्येति** ॥ कालांतरे देशांतरेपि तथात्वं वारयति ॥ **कदाचनेति** ॥ दोषांतरमाह ॥ **अविद्याया इति** ॥ अविद्यायां प्रतिबिंबत्वे जीवत्वं बुद्धौ प्रतिबिंबे व्यावहारिकज्ञानत्वमिति स्यादेवं यद्यविद्या बुद्धिर्वा शुद्धा स्यात्। तथा सति सदंशानामिति भावात्सर्वेषां सर्वज्ञता स्यात् ॥ सर्वेषां प्रतिबिंबाभावे हेत्वभावात् ॥ इंद्रियाणां च वैयर्थ्यमत इदं ज्ञानं कार्यरूपं भिन्नमेव चिदादिभिः सह बुद्धेः कोशादिष्वैकार्थ्यात् ॥ १३६ ॥

**त० दी०— बुद्धेर्वृत्तिः स्थितिर्नाम गुणतः सा त्रिधा मता ॥**
**अतो जागरणादीनि जीवस्तद्वशगो यतः ॥ १३७ ॥**

त० प्र०— बुद्धिवृत्तिर्जन्यत इत्यत्र वृत्तिर्बुद्धेः पदार्थांतरं न भवति किंतु स्थितिरेव सत्त्वादिभिः ॥ अत एव भ्रमादीनामपि संग्रहः ॥ यदींद्रियैर्जन्या न स्यात्॥ घटे क्वापि तदा भ्रमो न स्यात् ॥ जीवस्य च गुणतोऽवस्थात्रयं भिन्नहेतुकं स्यात्॥ अतो गुणवशाद्यथाबुद्धिर्भवति तथैव मंतव्यमिति ॥ अत एव जीवस्याऽपि न स्वातंत्र्यं गुणाधीनत्वात् ॥ १३७ ॥

**त० दी०— सुखदुःखसमुत्पत्तिर्नित्या ब्रह्मसुखात्पृथक् ॥**
**अंधंतमःप्रवेशाच्च ह्रीच्छादीनां च सर्वशः ॥ १३८ ॥**

त० प्र०— एवं ज्ञानस्योत्पत्तिं निरूप्य सुखदुःखयोरपि ज्ञानफलयोरुत्पत्तिं निरूपयति ॥ **सुखदुःखसमुत्पत्तिरिति** ॥ नित्या न विवादास्पदमित्यर्थः॥ ब्रह्मसुखमपि तथा भविष्यतीत्याशंक्याह ॥ **ब्रह्मसुखादिति** ॥ दुःखार्थमाह ॥ **अंधंतमःप्रवेशादिति** ॥ अंधतमो नित्यमसुराणां फलम्। तथा ह्रीच्छादीनां भगवद्धर्मव्यतिरिक्तानामुद्भवः ॥ १३८ ॥

त० दी०— मनोधर्माश्च ये चाऽन्ये भगवत्संगवर्जिताः ॥
उत्पद्यंते विलीयंते घटादिरिव नाऽन्यथा ॥ १३९ ॥

त० प्र०— अनुक्तसमुच्चयार्थमाह ॥ मनोधर्मा इति ॥ भगवद्धर्मा मनोधर्माश्च तुल्या भवंति न त्वेकविधाः ॥ नित्या भगवद्रूपा भगवद्धर्माः । अनित्याः कार्यरूपा मनोधर्मा इति ॥ अनेन "सोऽकामयत" इत्यत्र दोषः परिहृतः ॥ १३९ ॥

त० दी०— आविर्भावतिरोभावौ शक्ती वै मुरवैरिणः ॥
भक्त्या त्वाद्यो द्वितीयस्तु तदभावाद्धरौ सदा ॥ १४० ॥

त० प्र०— एवं सर्वेषां तुल्यतामुपपाद्य घटादीनामपि ब्रह्मत्वान्नित्यतेति वक्तुं युक्तिमाह ॥ आविर्भावतिरोभावाविति ॥ आविः प्रकटं भावयतीत्याविर्भावः *आविर्भवनं वा धर्मः, तथा तिरोभवनं, एते भगवतः शक्ती अनंतशक्तित्वाद्भगवतः ॥ अन्यथा बीजादिपरिणामानां देहादिभावे को हेतुः स्यात्तस्माद्भगवच्छक्तिरेव कारणत्वेन वक्तव्या धर्माद्धर्मसिद्धौ कारणं भवति ॥ अन्यथोत्पत्तिपक्षेपि दोषस्तुल्यः ॥ उत्पत्तिर्नाम कश्चन धर्मः स कस्मिन् धर्मिणि भवेदिति अनवस्था च स्यात् ॥ कालसंबंधोपि धर्मः ॥ अतो यः कश्चिन्निरुच्यतां सोवश्यं धर्म एव भवतीति धर्मी पूर्वं सिद्धो वक्तव्यः ॥ घटो भवतीति कर्तरि प्रयोगश्चाऽनुपपन्नः स्यात् ॥ भू सत्तायाम् इति धात्वर्थश्चाऽसंगतः स्यात् ॥ अनुत्पन्नो घटः, नष्टो घटः, इति व्यवहारश्चाऽसंगतः स्यात् ॥ अतो धर्मी सदातनो वक्तव्यः ॥ स भगवानेव भवति नाऽन्य इति ॥ अद्वैतश्रुतेः सर्वश्रुतेश्च धर्मिणो भगवत्त्वमंगीकर्तव्यं तदनुधर्माणामपि तेनैव न्यायेन भगवत्त्वं सेत्स्यति ॥ अतो भ्रांतानां बालानां विचारसामर्थ्याभावाच्छब्दार्थावुल्लंघ्योत्पत्त्यादिनिरूपणं न दूषयामः ॥ मुरवैरिण इति ॥ मुरो दैत्यः पापात्मकस्तन्निवर्तनार्थमाविर्भावो

* अत्रेदं प्रतिभाति ॥ द्वितीयपक्षे आविर्भवनरूपा धर्मादेव घटादेराविर्भावरूपधर्मसिद्धौ सत्तामाविर्भावरूपधर्म एव कारणम् ॥ नन्वस्य धर्मरूपत्वाद्धर्म्याश्रयो वाच्यः । तथा सति घटादेरपि पूर्वसत्त्वादाविर्भावतिरोभावयोरपि भगवच्छक्तित्वेन नित्यत्वात्सदैवाविर्भावतिरोभावापत्तेर्नैवं पक्षः साधीयाँस्तत्राह ॥ अन्यथेति ॥ इच्छाशक्तिसहकारेणाऽनुपपत्तिपरिहारः स्वमते उक्तन्यायेन सर्वेषां हरिरूपत्वादद्वैतश्रुतिरत्र साधिका ॥ धर्माद्धर्मसिद्धौ कारणं भवति ॥ इदं निबंधे नास्ति तथापि प्रभुचरणानां व्याख्येयं निबंधपुस्तकेषु केषुचिदस्ति ततोऽस्माभिरप्युद्धृता ॥

१ धर्मा ।

भगवतः ॥ तथा सर्वत्र सर्ववस्तुस्वरूपेण तद प्राप्तदोषपरिहारार्थं तदुक्तम इति सूचितम् । दुःखं तु निर्वृत्तभाव इति तिरो लत्वान्न व्यभिचारः ॥ एवं सति सर्वसाधनवैयर्थ्यमाशंक्य शक्तिद्वयस्य तद् वं वक्तुमादित आरभ्य निरूपयति॥ भक्त्या त्वाद्य इति ॥ भक्त्यैव भग वर्मवति तच्च यस्य भक्त्याविर्भावः ॥ सा भक्तिर्यादृशी देशकालयुक्ता भावे तिरोभवति न त्ववतारेष्वप्यन्यः प्रकार इत्यर्थः ॥ १४० ॥

त० दी०— सर्वाकारस्व ग भविष्यामीति या हरेः ॥
वीक्षा ग यतो येन तथा प्रादुर्भवत्यजः ॥ १४१ ॥

त० प्र०— अन्येष ॥ सर्वाकारस्वरूपेणेति ॥ तत्तदाकारस्वरूपेण घटपटाद्याकारेण यस्मिन्दे येन प्रकारेण येन साधनेन यथाऽऽविर्भावेच्छा तथा सर्वं संपाद्याऽऽविर्भवर्ते यः ॥ १४१ ॥

त० दी०— दादि भगवद्रूपं घटाद्याकारसंयुतम् ॥
मूलेच्छातस्तथा तस्मिन् प्रादुर्भावो हरेस्तदा ॥
तिरोभावस्तथैव स्याद्रूपांतरविभेदतः ॥ १४२ ॥

त० ०— तत्र निदर्शनमाह ॥ मृदादीति ॥ मृदि घटादयो यावंतो भविष्यंति सर्वे कारणत्वेन वर्तंत इत्यंगीकर्तव्यम् ॥ अन्यथा ततः प्रादुर्भावो नोपपद्ये तथा सामर्थ्यं भगवत्त्वेन संगच्छते ॥ अतो मृदादिकं भगवद्रूपमेव ॥ घट कार्यं च तत्रैव लीनं तिष्ठति तदपि भगवद्रूपं प्रपंचस्थानीयम् ॥ ततः कि- , हू ॥ मूलेच्छात इति ॥ पुरुषोत्तमेच्छातस्तथा तथैवानुपूर्व्या कार्यरूपस्पा त ादुर्भाव इत्यर्थः ॥ यथा नटः सहस्रं रूपाणि गृह्णाति क्रमशस्तथाऽत्रापि श्रु टादयः ॥ एवमाविर्भावं निरूप्य तिरोभावं निरूपयति ॥ तिरोभाव व रेरेव तिरोभविष्यामीति या इच्छा यथा येन तथा तत्र तिरोभवति परं तत्र धा कटव र्भावावश्यकत्वम् । इयानेव भगवतः सकाशात्प्रपंचे विशेषः । तत्र तिरोअ इति ांतराविर्भावः ॥ दाहशोषादावपि रूपांतरमिति मतम् ॥ अथवा सर्वस्व रूपां ा तुल्यता वक्ष्यति चाग्रे ॥ "अखंडं कृष्णवत्सर्वम्" इति ॥ १४२ ॥

भावेन द०— बुद्धिर्विपरिणामश्च तथाऽपक्षय एव च ॥
या भ पूर्वरूपतिरोभावो द्वितीयस्याऽऽदिमस्तथा ॥ १४३ ॥

त- । येन । २ तर्गं ।

त० प्र०—भगवत्त्वप्रतिपादनाय विशेषमाह ॥ वर्ण इति ॥ यथा सच्चिदानंदभेदास्तथा वर्णवाक्यपदभेदाः ॥ तत्र वर्णा नित्याः ॥ पदानि च वाक्यं लौकिकमनित्यं वैदिकं तु नित्यमिति विशेषः ॥ तत्र हेतुः ॥ स्वयं हरिरिति ॥ १५२ ॥

त० दी०— वर्णाः पदानि सर्वाणि भगवद्वाचकत्वतः ॥
सर्वार्थान्येव सर्वत्र व्यवहृत्यै तथापि तु ॥
शक्तिसंकोचतो लोके विशेषख्यापनानि वै ॥ १५३ ॥

त० प्र०—अत्र केषांचिन्मते पदान्येवार्थवंति न वर्णा न वाक्यानि ॥ वाक्यान्यपीति केचित् ॥ अस्मन्मते तु वर्णा अप्यर्थवंतो "वेदाक्षराणि यावंति" इति वाक्यात् ॥ अतः प्रथममक्षरपदयोरर्थमाह ॥ वर्णाः पदानीति ॥ सर्वेषां वर्णानां सर्व एव वाच्यः । तथा पदानाम् । तत्र हेतुः, भगवद्वाचकत्वत इति ॥ भगवान् सर्वमिति भगवान् वाच्य इति सर्वे वर्णाः पदानि च सर्ववाचकानीति वस्तुस्थितिस्तथापि व्यवहारार्थं क्रियाशक्तिसंकोचः कृतः ॥ अत्र देशकालविभेदेनाऽस्माभिरुच्चार्यमाणोऽयं शब्द इममेवार्थं बोधयतु न त्वन्यमिति संकोचः ॥ अतो लोके विशेषाख्यापकानि जातानि ॥ तत्र सूपः कूपो यूप इत्यत्र वर्णानां तुल्यत्वेपि नार्थप्रतिपादकत्वम् ॥ व्यवहारसिद्ध्यै तथांगीकारात् ॥ अन्यथा अच्प्रत्ययादेरर्थो न स्यात् । धातोश्च ॥ न च तयोः पदसंज्ञाविशिष्टयोरेव तथात्वात् ॥ अतो व्यवहारस्य नियामकत्वान्नातिप्रसंगः ॥ १५३ ॥

त० दी०— तत्र व्याकरणादीनां व्यवस्थापकता मता ॥
देशे देशे तथोच्चारो भाषाभेदैरनेकधा ॥ १५४ ॥

त० प्र०—तत्रापि व्यवस्थामाह ॥ तत्र व्याकरणादीनामिति ॥ न केवलं कोशादिरेव नियामकः ॥ किं तूच्चारो भाषाभेदश्च ॥ अतः सर्वमुपपद्यते ॥ १५४ ॥

त० दी०— अनंतमूर्तयो वर्णाः पदे ते नाऽर्थवाचकाः ॥
केवलाः कोपतो ज्ञेया वाचकाः पदतोऽथवा ॥ १५५ ॥

त० प्र०—इदानीमुच्चरोच्चरवलिष्ठत्वं वक्तुं पदे वर्णानामवाचकत्वं वाक्ये पदानामित्याह ॥ अनंतमूर्तयो वर्णा इति ॥ वर्णानां गौणमुख्यभेदेन नानामूर्तित्वम् ॥ तेन पदावयवभूता गौणा इति ॥ नार्थवाचकाः केवलाश्च वर्णाः एकाक्षरनिघंट्वादिभिर्व्यवहारेऽप्यर्थवाचकाः ॥ तेषां पदत्वं वा प्रत्ययरहितानामर्थाज्ञापकत्वात् ॥ १५५ ॥

१ आदिका

त० दी०— पदं न वाचकं वाक्ये सादृश्यात्स्मारकं परम् ॥
विशिष्टं वाक्यमेवाऽत्र वाक्यार्थस्य च वाचकम् ॥ १५६ ॥

त० प्र०—तथा वाक्येपि पदं न वाचकं तर्हि संकेताग्रहेपि वाक्यार्थज्ञानं स्यात् । गौरवं च स्यादित्याशंक्याह ॥ सादृश्यात्स्मारकं परमिति ॥ वाक्यावयवभूतस्य पदस्य स्वतंत्रपदतुल्यत्वात्पदार्थस्मारकत्वम् ॥ अन्यथा स्वार्थं प्रतिपाद्य कृतार्थत्वे वाक्यार्थो न तैर्जन्येत ॥ आकांक्षादेर्वाक्यशेषत्वात्प्रकृतिप्रत्यययोरपि नैकार्थवाचकत्वं स्यात् ॥ पदार्थकरणपक्षेपि पूर्वपदार्थानां निवृत्तत्वात्पुनरुपस्थानं केन वा स्यात् ॥ अविद्यमानानां वा कथं बोधकत्वं वाक्यार्थसमाख्याविरोधश्च ॥ अतो वाक्यमेव वाचकमित्याह ॥ विशिष्टमिति ॥ स्वावयवैः स्वावयवार्थमिति चकारार्थः ॥ १५६ ॥

त० दी०— पदांतरप्रवेशेन विशिष्टे वाच्यवाचके ॥
पटवद्वाक्यभेदश्च वाक्यार्थश्चाऽपि भिद्यते ॥ १५७ ॥

त० प्र०—वाक्यानामानंत्यात्संकेतग्रहो दुर्लभ इत्याशंक्याह ॥ पदांतरप्रवेशेनेति ॥ घटमानयेति वाक्याद्घटं शीघ्रमानयेति भिन्न एवमानंत्येपि न दोषः ॥ तत्र दृष्टांतः ॥ पटवदिति ॥ द्वितंतुकपटाच्चितंतुकोऽन्यः ॥ तथोत्तरत्रापि आरभ्यारंभकवादस्याऽनंगीकारात् ॥ तथा अपूर्वत्वाद्वाक्यार्थस्य पूर्वसंसर्गादुत्तरस्य भिन्नत्वम् ॥ १५७ ॥

त० दी०— अवांतराणां वाक्यानां स्मारकत्वं तथा परे ॥
वाक्यमेकं हरिश्चैको वेदे वाक्यार्थरूपधृक् ॥ १५८ ॥

त० प्र०—तथा महावाक्ये अवांतरवाक्यानामवाचकत्वम् ॥ किंतु पूर्ववत्स्मारकत्वमेव ॥ एवमेवांतरभेदेन सर्वं निरूप्य संपूर्णवेद एकं वाक्यं तदर्थोप्येक एवेत्याह ॥ वाक्यमेकमिति ॥ तात्पर्यवृत्त्या तथात्वं वारयति ॥ वाक्यार्थरूपधृगिति ॥ १५८ ॥

त० दी०— अवांतरेषु च तथा पदे वर्णे तथैव च ॥
त्रयोपि वैदिका भिन्ना नानाधर्मयुतास्तथा ॥ १५९ ॥

त० प्र०—तथावांतरवाक्येषु अवांतरवाक्यार्थरूपधृक् ॥ एवमुत्तरत्रापि ॥ इदानीं लौकिकवैदिकयोर्वर्णादीनां वैजात्यमाह ॥ त्रयोपि वैदिका भिन्ना इति ॥

१ पदानाम् । २ रुत्थानं । ३ मतांतर ।

उदात्तादिधर्मयोगाल्लोकव्यवहारवर्णादिभ्यो वैदिका भिन्नाः ॥ १५९ ॥

त० दी०— सादृश्येऽपि न वेदत्वं तादृग्वाक्ये ततोऽन्यतः ॥
अधिकारिविभेदेन धर्माधर्मौ तथा मतेः ॥ १६० ॥

त० प्र०—क्वचित्काव्यादौ वैदिकतुल्यता भासते तथापि न वेदत्वमित्याह ॥ सादृश्येपि न वेदत्वमिति ॥ लोकवेदाधिकरणं तु कल्पितमेव जैमिनिनाऽनु· क्तत्वात् ॥ "लौकिकानां वैदिकानां च" इति भाष्यात् ॥ "मयड्वैतयोर्भाषायाम्" "द्व्यचश्छंदसि" ॥ "सर्वत्र विभाषागोः" इत्यादिसूत्रकरणाच्च छंदसि च लोक· वेदयोः पृथङ्निरूपणात् ॥ अतः सादृश्येपि न वेदत्वम् ॥ शूद्रादीनां वेदबुद्ध्या तथा पाठ एव दोषः ॥ १६० ॥

त० दी०— प्रत्येकं पूर्णता वाक्ये शाखाभेदेषु सर्वतः ॥
दर्शादिषु तदंगेषु मंत्रमात्रे तथैव च ॥
हरिस्तत्तत्स्वरूपेण तस्मात्सर्वत्र वाचकः ॥ १६१ ॥

त० प्र०— एवं भेदं निरूप्य "वेदैश्च सर्वैरहमेव वेद्यः" इति यथाश्रुतसिद्ध्यर्थं सर्वत्र वेदे भगवानेवार्थ इत्याह ॥ प्रत्येकं पूर्णता वाक्य इति ॥ महावा· क्यार्थरूप एव हरिर्नोऽवांतरवाक्यार्थरूप इति निराकरणार्थं पूर्णता निरूप्यते ॥ शाखाभेदेष्विति ॥ शाखाभेदेष्वपि पूर्णता एवमुत्तरत्रापि तदंगेषु प्रयाजादिषु ॥ इष्टेत्वेति ॥ मंत्रमात्रे सिद्धार्थेपि तत्र हेतुः ॥ तत्तत्स्वरूपेणेति ॥ १६१ ॥

त० दी०— पुराणे च ततोऽन्यत्र वाक्यार्थो बुद्धिकल्पितः ॥
पदानामानुपूर्वी तु तत्र कल्प्या ह्यनेकधा ॥ १६२ ॥

त० प्र०—पुराणानामपि वेदतुल्यत्वमभिप्रेत्याह ॥ पुराणे चेति ॥ वेदपुराण· व्यतिरिक्तस्थले वाक्यार्थो बुद्धिकल्पितो न भगवद्रूप इत्यर्थः॥ अतस्तत्र विश्वासेन पुरुषार्थसिद्धिः संसर्गस्याऽपूर्वत्वात् ॥ पदानुपूर्वी नानात्वादिति हेतुः ॥ १६२ ॥

त० दी०— सर्वप्रतीतिनाशे तु तन्नाश उपचर्यते ॥
तथा वाक्यत्वनिष्पत्तेर्न दूषणमिहाण्वपि ॥ १६३ ॥

त० प्र०—कालिदासवाक्यानामपि बहुकालं स्थितिसिद्ध्यर्थमाह ॥ सर्वप्रती· तिनाशे त्विति ॥ रूपसृष्टौ क्रियातः स्थितिर्नामसृष्टौ ज्ञानेनेति ॥ तत्र हेतुः ॥ तथावाक्यत्वनिष्पत्तेरिति ॥ बुद्ध्या रचनां कृत्वोच्चारयतीति ॥ यथा न्यायमते

१ परे इत्यपि पाठः । २ इदं प्रतीकं पुस्तकांतरेषु नास्ति ।

तदुच्चारितः शब्दस्तदैव नष्टः सादृश्यभ्रमादेव तदीयव्यवहार इति तथा सति तदीयत्वाभावाल्लोके वेदे च महद्दूषणम् ॥ न तथास्मन्मते नित्यत्वात् ॥ उत्पन्नानां च बहुकालं स्थितत्वाच्चेत्याह ॥ न दूषणमिहाण्वपीति ॥ १६३ ॥

त० दी०— अद्यापि तानि जायंते घटवज्ज्ञानतः स्थितिः ॥
विप्रलिप्सादिमूलत्वादप्रामाण्यं च लौकिके ॥ १६४ ॥

त० प्र०—तदेव स्पष्टयति ॥ अद्यापीति ॥ परं प्रामाण्ये विवाद इति वक्तुं तद्धेतूनाह ॥ विप्रलिप्सादीति ॥ यत्र पुरुषदोषाः संभवंति तदप्रमाणम् ॥ व्यवहारस्ततोपि भ्रांत इत्याह ॥ अप्रामाण्येपीति ॥ प्रमाणे वेदे अप्रामाण्यम् ॥ १६४ ॥

त० दी०— अप्रामाण्येपि प्रामाण्यं कर्तृविश्वासतः क्वचित् ॥
अतो वेदाद्यसंवादी नाऽर्थो ग्राह्यः कथंचन ॥ १६५ ॥

त० प्र०—अप्रमाणे प्रतारकवाक्ये प्रामाण्यमिति ॥ एतद्वचनस्य प्रयोजनमाह ॥ अतो वेदाद्यसंवादीति ॥ १६५ ॥

त० दी०— वेदे सर्वत्र नाधिक्यं वाक्ये न न्यूनताऽपि वा ॥
अतो न वाक्यभेदः स्याल्लोके तत्रैव दूषणम् ॥ १६६ ॥

त० प्र०— ननु वेदेऽपि दोषसंभवाद्धिचारेण तथा क्रियत इत्याशंक्याह ॥ वेदे सर्वत्र नाधिक्यमिति ॥ अन्येषामपि वादिनां वेदे नान्ये दोषाः ॥ किं त्वाधिक्यन्यूनते ॥ सृष्ट्याद्यर्थवादा अधिकाः, मायानिरूपणाभावश्च न्यूनः, तदुभयं वेदे नास्ति ॥ अतः पदपरित्यागेनाऽधिकमेलनेन वा न वेदार्थो वक्तव्यः ॥ अतो वेदे वाक्यभेदा अप्रामाणिकाः ॥ लोके तु तत्र दूषणं लौकिकानां बहुदोषग्रस्तत्वात् १६६

त० दी०— भूतसूक्ष्मो ध्वनिर्वर्णो नामसृष्टौ निरूप्यते ॥
प्रपंचभेदात्तत्त्वानामाधिक्यं वर्णतो न हि ॥ १६७ ॥
प्रकृतिप्रत्ययौ लोके व्युत्पत्त्यर्थं निरूपितौ ॥
नैतावता कृत्रिमत्वं शब्दे वक्तुं हि शक्यते ॥ १६८ ॥

त० प्र०— ननु वर्णैर्नित्यैस्तत्त्वाधिक्यं कुतो न भवतीत्याशंक्याह ॥ भूतसूक्ष्म इति ॥ शब्दतन्मात्रारूपो ध्वनिः । वर्णस्तु नामसृष्टौ । उभयत्रापि शब्दपदप्रयोगः परम् । अतः सृष्टिभेदान्नाधिक्यम् ॥ ननु पदानां कथं नित्यता प्रकृतिप्रत्ययविभागस्य

---

१ त्याय । २ अयमर्द्धश्लोकोन्यपुस्तकेषु सार्द्धश्लोकोत्तरं दृश्यते ।

निरूपितत्वादित्याशंक्याह ॥ प्रकृतीति ॥ ज्ञानार्थमेव विभागं कल्पयित्वा निरूपितौ न तु तयोर्विभागो वस्तुतः ॥ १६७ ॥ १६८ ॥

त० दी०— संस्कारमात्रविलयादथवा तद्विलीनता ॥
तदभावाद्वासुदेवे तच्छब्देषु न लीनता ॥ १६९ ॥

त० प्र०— लौकिकवाक्यानां लयप्रकारमाह ॥ संस्कारमात्रविलयादिति ॥ वस्तुतस्तु न विलयः ॥ अथवा विलयांगीकारश्चेत्संस्कारमात्रविलयात्तद्विलीनतेत्यर्थः ॥ अयमपि पक्षो भगवद्वाक्येषु नास्तीत्याह ॥ तदभावादिति ॥ ऋषीणां संस्कारस्य महाप्रलयपर्यंतमवस्थानात् ॥ एवं व्यवहारमाश्रित्याऽवांतरभेदः शब्देषु निरूपितः ॥ १६९ ॥

त० दी०— अस्मदादिमुखेनाऽपि क्रीडार्थं सर्वतो हरिः ॥
शब्दभेदं वितनुते रूपेष्विव विनिश्चयः ॥ १७० ॥

त० प्र०— वस्तुतस्तु सर्वं वेदतुल्यमित्याह ॥ अस्मदादिमुखेनापीति ॥ सर्वं वाक्यं भगवत्कर्तृकमेव ॥ १७० ॥

त० दी०— वाक्यार्थयोग्यावयवैर्वाक्यं सर्वत्र संमतम् ॥
आकांक्षा योग्यता सत्तिः पदे तस्मादुदीरिता ॥ १७१ ॥

त० प्र०— नन्वेवं सति किंचिद्वाक्यं युक्तं किंचिदयुक्तं तत्र चाकांक्षादयो धर्मा इति कल्पना कथमुपपद्यत इत्याशंक्याह ॥ वाक्यार्थयोग्यावयवैरिति ॥ रूपसृष्टाविव नामसृष्टावपि योग्यावयवैरेव पदार्थनिर्माणम् ॥ तावतैव ते धर्मा अंगभावं प्राप्नुवंति एषापि कल्पनैवेत्यर्थः ॥ १७१ ॥

त० दी०— मृदा घोटकनिर्माणे न शृंगकरणं मतम् ॥
तथा युक्तार्थबोधाय नाऽऽकांक्षारहितं पदम् ॥ १७२ ॥

त० प्र०— तदेव साधयति ॥ मृदा घोटकनिर्माण इति ॥ यथा ऋषीणां पुरातनानि वाक्यानि तथाऽऽधुनिकानामपि अन्यथा वाक्यार्थप्रतीतिर्न स्यात् ॥ न त्वपूर्वपदार्थः कश्चित्कल्प्यते ॥ १७२ ॥

त० दी०— अर्थद्वारा पदे धर्मा लोकदृष्ट्यैव कल्पिताः ॥
तस्माद्वाक्यं सर्वमेव सा यतो विश्वतोमुखी ॥ १७३ ॥

त० प्र०— उपसंहरति ॥ अर्थद्वारेति ॥ लोकदृष्ट्यैव न तु परमार्थतः ॥ अ-

१ स्वाक ।

नेनाऽऽकांक्षाद्यभावेपि वाक्यत्वं न विरुध्यत इत्युक्तं भवति ॥ "दश दाडिमानि" इत्यपि पदार्थनिरूपकत्वाद्वाक्यं प्रमाणम् "वह्निना सिंचति" इत्यपि उष्णजलेन सिंचतीत्यर्थो भवति ॥ यथा गंगायां घोषः ॥ प्रतारकवाक्यमेवासत्त्यादियुक्तमपि वाधितार्थत्वादवाक्यम् ॥ तस्मात्सर्वमेव वाक्यं प्रमाणं यतः सा सरस्वती सर्वतोमुखी ॥१७३

त० दी०– पदद्वयं सुप्तिङंतं ताभ्यां चलति वाक्पतिः ॥
पदानि बहुशः संति सुप्तिङ्मध्यविभेदतः ॥ १७४ ॥

त० प्र०–उपासनार्थमाह ॥ पदद्वयमिति ॥ वाग्रूपः पतिर्भगवान् ॥ अधुना विकारवत्पदानामर्थद्वयं निरूपयितुं भगवति भेदानाह ॥ पदानीति ॥ सुबंतावयवे तिङंतत्वं विपरीतत्वं च कचित् ॥ १७४ ॥

त० दी०– तत्राऽसकरवालादि ते भिन्ना अंशतः परे ॥
तदुदाहरणे श्लेषस्तत्र योगादिकल्पना ॥ १७५ ॥

त० प्र०– तदेवाह ॥ तत्रासकरवालादीति ॥ तत्रेति पृथगपि संभवति ॥ करवालशब्दात्करशब्दः पृथगपि करवामेति तिङंते सुबंतपदद्वयम् ॥ एवं सर्वत्रोह्यम् ॥ तत्र पदभेदः शास्त्रार्थः ॥ तादृशप्रयोगे फलमाह ॥ तदुदाहरण इति १७५

त० दी०– फलार्थं लक्षणा प्रोक्ता गौणी चाऽप्युपचारतः ॥
प्राकट्यपत्तिरोधानतिरोधानैर्हरिर्विभौ ॥ १७६ ॥

त० प्र०–वृत्तीनां भेदकमाह ॥ फलार्थमिति ॥ रूढिलक्षणा नाऽस्मत्संमता गौणी च वृत्तिर्न गुणयोगात् ॥ किंतूपचारत एव ॥ तादृशधर्मिरूपेण धर्मिण एवोपचारात् ॥ धर्मस्फुरणं तु धर्मिज्ञानादेव ॥ एवं त्रैविध्ये हेतुमाह ॥ प्राकट्येति १७६

त० दी०– प्रवर्तकत्वं कृष्णस्य न विध्यर्थस्य कर्हिचित् ॥
कार्यतादिपरिज्ञानमुत्पाद्यैप प्रवर्तयेत् ॥ १७७ ॥

त० प्र०– एवं शब्दगतान् धर्मान् विचार्य तस्य प्रवर्तकत्वमस्ति न वेति विचार्यते ॥ प्रवर्तकत्वमित्यादिना ॥ ब्रह्मवादव्यतिरिक्तेषु शब्दश्रवणानंतरभाविन्यां प्रवृत्तौ कारणता शब्दस्याऽवसीयते ॥ तत्र षट् पक्षाः संभवंति ॥ स्वरूपमभिप्रायज्ञानं, भावना, अभिधा, आज्ञा, इष्टसाधनताज्ञानमिति ॥ तान् सर्वानेकहेलया स्वमतेन दूषयति ॥ कृष्णस्यैव प्रवर्तकत्वं न विध्यर्थस्येति ॥ काकतालीयतया पूर्वभावो न हेतुत्वसाधकः ॥ अव्यभिचारस्तु विध्यादीनां नास्ति ॥ ननु दृश्यते ममेष्टं ममैतत्कार्यमित्यादिज्ञानं कृत्वा प्रवर्तनात्कारणत्वमित्याशंक्याह ॥ कार्यतादीति ॥ ७७ ॥

त० दी०— अनिष्टमिष्टं साध्यं वा नाऽसाध्यं किंचिदस्ति हि ॥
तथाऽपि यतते कश्चित्क्वचिदेव हरीच्छया ॥ १७८ ॥

त० प्र०—कुत एतदत आह ॥ अनिष्टमिति ॥ इष्टसाधनताज्ञानस्य प्रवर्तकत्वं तदा स्यात् यद्यनिष्टसाधनतां ज्ञात्वा निवर्तेत ॥ विषभक्षणे युद्धे द्रुपतने प्रवृत्तिदर्शनात् ॥ तथा पाषंडमतेऽसाध्येपि मोक्षे प्रवृत्तिदर्शनात् ॥ अतो भगवानेव यथेष्टं यथैव प्रवर्तयते तथा ज्ञानमुत्पाद्य प्रवर्तते ॥ वस्तुतस्तु न किंचिदिष्टं न किंचित्साध्यमित्यर्थः ॥ १७८ ॥

त० दी०— मिथ्याप्रलोभनं वेदे न क्वचित्कर्हिचिद्भवेत् ॥
तथैव कर्मविज्ञानं धर्मस्तेनैव नाऽन्यथा ॥ १७९ ॥

त० प्र०—नन्वेवं सत्यर्थवादादीनां वैयर्थ्यमित्याशंक्याह ॥ मिथ्याप्रलोभनमिति ॥ वेदे कर्मादिष्वविद्यमानं फलरूपं न कोप्यंगीकरोति तेन सार्थकता स्यात्, किं तु यथास्थितमेवाह ॥ अतः सर्वस्यापि स्वरूपप्रतिपादकत्वान्नैकवाक्यतासिद्ध्यर्थमपि प्रवृत्तमंगीकर्तव्यम् ॥ तर्हि अवचनमेवाऽस्त्वित्याशंक्याह ॥ तथैव कर्मविज्ञानमिति ॥ क्षिप्रकारिणीं देवतां ज्ञात्वैव कर्म कर्तव्यम् ॥ स्तुतिरुत्कर्षाधायकगुणवर्णनं तत्कर्मांगमेव प्रकरणात् ॥ "वषट्कारो वै गायत्रियै शिरोऽच्छिनत् ॥ तस्यै रसः परापतत्स पृथिवीं प्राविशत्स खदिरोऽभवत्" इति खदिरस्वरूपं तादृशमेव ज्ञात्वा कर्म कर्तव्यम् ॥ एवं सर्वत्र ॥ अतो वेदे सर्वस्यापि स्वरूपप्रतिपादकत्वान्न प्रवर्तकत्वम् ॥ १७९ ॥

त० दी०— साधनानि स्वरूपं च सर्वस्याऽऽह श्रुतिः फलम् ॥
न प्रवर्तयितुं शक्तास्तथा चेन्नरको न हि ॥ १८० ॥

त० प्र०—किंतु सर्वस्यापि साधनं फलं चाह ॥ तावतैव प्रवर्तकत्वं यदि तदोमिति ब्रूमः ॥ फलमुखप्रवृत्तिश्चेत्सर्वानेव प्रवर्तयेत् ॥ ततश्च नरकादिकं न भवेत् ॥ अतो दृष्टादृष्टारिष्टदर्शनान्न वेदः प्रवर्तकः ॥ १८० ॥

त० दी०— लोकेऽपि राजदंडादेरन्यथा विषयो न हि ॥
प्रेरको भगवानात्मा स्वात्मना दोषवर्जितः ॥ १८१ ॥

त० प्र०—ननु भगवत्प्रवर्तनापक्षेप्ययं दोषः स्यात्परमकृपालुत्वाद्भगवतस्तत्राह ॥

---

१ कर्मपदं अत्र नास्ति ।

प्रेरको भगवानात्मेति ॥ सर्वेषामात्मत्वाद्यथासुखं प्रेरयतु न कोपि दोषः ॥ अधिकं तु "भेदनिर्देशात्" इत्यत्र विस्तृतमस्माभिः ॥ १८१ ॥

त० दी०— न विशेषोऽस्ति लोकेऽस्मिंस्तारतम्यं न चैव हि ॥
अखंडं कृष्णवत्सर्वं यथा तत्तु निरूपितम् ॥ १८२ ॥

त० प्र०— तर्हि भगवान् स्वात्मानमपि कथमेवं प्रेरयति समतयापि प्रेरणसमर्थस्तत्राह ॥ न विशेषोस्ति लोकेस्मिन्निति ॥ सर्वासु योनिषु सर्वेषु जीवेषु सुखदुःखयोस्तुल्यता. पुरुषः स्वभ्रमादेव तारतम्यं पश्यति ॥ अन्यथा तत्सुखेच्छा कदाचिज्जायमाना न स्यात् ॥ "राज्यांते नरकं ध्रुवम्" इति वाक्यानि संगतानि भवंति ॥ तस्मात्फलं सर्वत्र समम् । स्वरूपं च सममिति पूर्वमेवोक्तमित्याह ॥ अखंडं कृष्णवत्सर्वमिति ॥ १८२ ॥

त० दी०— आत्मैव तदिदं सर्वं सृज्यते सृजति प्रभुः ॥
त्रायते त्राति विश्वात्मा ह्रियते हरतीश्वरः ॥ १८३ ॥

त० प्र०— आविर्भावतिरोभावावित्यत्र प्रमाणमाह ॥ आत्मैव तदिदमिति॥ १८३

त० दी०— आत्मैव तदिदं सर्वं ब्रह्मैव तदिदं तथा ॥
इति श्रुत्यर्थमादाय साध्यं सर्वैर्यथामति ॥
अयमेव ब्रह्मवादः शिष्टं मोहाय कल्पितम् ॥ १८४ ॥

त० प्र०— एवं पुराणवाक्यानि श्रुतिवाक्यान्यप्युदाहृत्य सज्जीवान् प्रत्याह ॥ इति श्रुत्यर्थमादायेति ॥ "एकं शास्त्रं देवकीपुत्रगीतम्" इति पूर्वप्रतिज्ञातत्वात्तच्छास्त्रं ब्रह्मवादः ॥ शिष्टानि मतानि मोहार्थमुत्पन्नानीत्यवोचाम ॥ १८४ ॥

त० दी०— वर्णाश्रमवतां धर्मः श्रुत्यादिषु यथोदितः ॥
तथैव विधिवत्कार्यः स्ववृत्त्यन्नेन जीवता ॥
आचारो वृत्तिहीनश्चेदर्धं फलति नाऽखिलम् ॥ १८५ ॥

त० प्र०— एवं प्रमेयप्रकरणं समाप्य फलं निरूपयितुं नहि हितसाधनमात्रेणैव फलं किंतु सर्वांगसहितेनेति वक्तुं बहिरंगाणि निरूपयति ॥ वर्णाश्रमवतामिति ॥ उक्तेनैव प्रकारेण कर्तव्यं न त्वनुकल्पैः[१], तथा सति प्रत्यवायपरिहार एव भवति न तु फलमित्यर्थः ॥ तथा स्ववृत्त्यन्नेनैव जीवता सर्वं साध्यम् ॥ ननु तावन्मात्र एव वैगुण्यमस्तु किं सर्वनाशेनेत्यत आह ॥ आचार इति ॥ १८५ ॥

१ त्वनुकल्पैः ।

त० दी०— अनभ्यासेन वेदानामाचारस्य च लंघनात् ॥
आलस्यादन्नदोषाच्च मृत्युर्विप्रान् जिघांसति ॥ १८६ ॥

त० प्र०—वस्तुतस्तु न फलतीत्याह ॥ अनभ्यासेनेति ॥ १८६ ॥

त० दी०— शिलोंछवृत्त्या संतुष्टः श्रौतं कर्माखिलं चरेत् ॥
तपःस्वाध्यायनिरतो ह्यग्निहोत्रादिपंचकम् ॥ १८७ ॥

त० प्र०—तर्हि कथं फलतीत्याकांक्षायामाह ॥ शिलोंछवृत्त्येति ॥ असंतोषे तदपि व्यर्थम् ॥ १८७ ॥

त० दी०— स्मार्तं कृताकृतं तस्य सर्वं जानन् हरिं यथा ॥
क्रमेण मुक्तिमाप्नोति ब्रह्मलोकं परं गतः ॥ १८८ ॥

त० प्र०—तस्य बहु कर्तव्यं चेत्तदाऽशक्यं भविष्यतीति स्मार्तं कृताकृतमित्याह ॥ स्मार्तमिति ॥ एतादृशस्य फलं ब्रह्मलोकं गत्वा ब्रह्मणा सह मुक्तिः श्रौतस्योत्तमनिष्ठायामेतत्फलम् ॥ १८८ ॥

त० दी०— एतस्य तारतम्येन मानुषानंदतो द्विजः ॥
अक्षरानंदपर्यंतमानंदान्विंदते क्रमात् ॥ १८९ ॥

त० प्र०—तारतम्ये फलाभावमाशंक्याह ॥ एतस्येति ॥ श्रोत्रियत्वमकामहतत्वं च तारतम्येन जायमानं तत्तत्फलसाधकम् । ब्रह्मानंदोऽक्षरानन्दः । चतुर्मुखपक्षे ततोऽग्रे गणनाभावात् ॥ एकस्यैव वर्षे वर्षे यदाधिक्यं चेत्क्रमेणैव सर्वमाप्नोति १८९

त० दी०— उपांत्यानंदपर्यंतं पुनर्जन्म भवेद्ध्रुवम् ॥
तत्तद्रूपेण लोकेषु भोगान् भुक्त्वा तथाविधान् ॥ १९० ॥

त० प्र०—प्रत्येकपक्षे फलगतं दोषमाह ॥ उपांत्यानंदपर्यंतमिति ॥ प्रकारमाह ॥ तत्तद्रूपेणेति ॥ १९० ॥

त० दी०— एकाश्रमेण वा तिष्ठेद्विशेद्वा समनंतरम् ॥
आयुर्भागक्रमेणैव चतुष्टयमथापि वा ॥ १९१ ॥

त० प्र०—वृत्त्यन्यस्य कारणत्वादाश्रमव्यवस्थामाह ॥ एकाश्रमेण वा तिष्ठेदिति ॥ सर्वत्र फलं तुल्यम् ॥ समनंतरं ब्रह्मचर्यस्य गार्हस्थ्यम् ॥ एवमुत्तरत्र ॥ आयुर्भागक्रमेणेति तृतीयः पक्षः ॥ [1]अव्यवस्थया प्रव्राजो वैराग्यस्तावकः ॥ सर्वथा

1 अवश्यया अव्यवस्था ।

वैराग्यमंगमिति ज्ञापनार्थः ॥ गृहाद्व्रजेद्वनाद्व्रजेदिति ॥ अन्यथाऽयं पक्षो मन्वादिभिरुक्तः स्यात् ॥ तस्मात्त्रय एव पक्षाः ॥ १९१ ॥

त० दी०— त्रिदंडं परिगृह्णीत सर्वशास्त्राविरोधि तत् ॥
शास्त्रेऽपि भगवानाह दंडस्यैकस्य धारणम् ॥
प्रतिपत्तिरियं सर्वा देहस्य ज्ञानिनो भवेत् ॥ १९२ ॥

त० प्र०— संन्यासे सांप्रतं नानाभावा वर्तन्त इति तन्निषेधार्थमाह ॥ त्रिदंडं परिगृह्णीतेति ॥ "पाक्षिकोऽपि दोषः परिहरणीयः" इति सर्वशास्त्रसारोद्धारत्वाद्भागवतस्य यद्यन्यः पक्षो भवेत्तत्र भगवान् वदेत् ॥ आश्रमाणां साचाराणां ज्ञानशेषत्वमिति सिद्धज्ञानस्य तत्परित्यागमाशंक्याह ॥ प्रतिपत्तिरियं सर्वेति ॥ ज्ञानिनो देहस्य तत्तदाश्रमस्थितिः प्रतिपत्तिरवश्यं कार्या तदभावे पुनर्जन्म भवेत् ॥ दाहाभाववत् ॥ १९२ ॥

त० दी०— आद्यंतयोस्तु भिक्षान्नं द्वितीये तु शिलोंछनम् ॥
तृतीये वन्यभेदाः स्युर्भिक्षायामपि संयमः ॥ १९३ ॥

त० प्र०— एवमाश्रमान्निरूप्य स्ववृत्त्यन्नं ज्ञापयितुमाह ॥ आद्यंतयोरिति ॥ ब्रह्मचारिसंन्यासिनोर्द्वितीयो गृहस्थः ॥ चतुर्थे भिक्षायां नियमः "सप्तागारानसंक्लृप्तान्" इति ॥ १९३ ॥

त० दी०— गुरुसेवा कर्मकृतिस्तपः पर्यटनं क्रमात् ॥
स्वाध्यायेन तथा कृत्या तपसा मानसा मखाः ॥
अत्यावश्यकमेतद्धि चतुर्णां तत्पृथक् पृथक् ॥ १९४ ॥

त० प्र०— न केवलमन्ननियम एव ॥ किं त्वन्येऽपि नियमाः संतीत्याह ॥ गुरुसेवेति ॥ क्रमेणैव चत्वारश्चतुर्णां मुख्याः । यज्ञातिरिक्तान्येव कर्माणि द्वितीयस्य विवक्षितानि आतिथ्यपरिपालनादीनि ॥ यज्ञास्तु चतुर्णामपि कर्तव्याः ॥ परं प्रकारभेदेनेति तान् प्रकारानाह ॥ स्वाध्यायेनेति ॥ "यं यं क्रतुमधीते तेन तेनास्येष्टं भवति" इति ॥ ब्रह्मचारिणः स्वाध्याययज्ञाः ॥ क्रियामया द्वितीयस्य ॥ तपोयज्ञास्तृतीयस्य ॥ मानसाश्चतुर्थस्येति ॥ ज्ञानिनस्तदकरणमाशंक्याह ॥ अत्यावश्यकमिति ॥ १९४ ॥

त० दी०— श्रेयान् स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात् ॥
स्वधर्मे निधनं श्रेयः परधर्मो भयावहः ॥ १९५ ॥

त० प्र०—एतेषां हीनतामाशंक्याह ॥ श्रेयानिति ॥ १९५ ॥

त० दी०—उत्तरोत्तरधर्मेषु निष्ठायामधिकं फलम् ॥
तस्य चेत्परमा भक्तिस्तिरोधानं विनश्यति ॥
भक्तिः स्वतंत्रा शुद्धा च दुर्लभेति न सोच्यते ॥ १९६ ॥

त० प्र०—आयुर्भोगक्रमेणेत्युक्तपक्षस्य वैशिष्ट्यमाह ॥ उत्तरोत्तरधर्मेष्विति ॥ एवमुत्कर्षप्रकरणे स्वाश्रमधर्मसहितज्ञानानां मध्ये चतुर्थस्योत्कर्ष उक्तो भवति ॥ ततोऽप्युत्कर्षमाह ॥ तस्य चेत्परमा भक्तिरिति ॥ तिरोधाननाशो ब्रह्मभावः ॥ भक्तेरपि स्वाश्रमधर्मसहितज्ञानसहिताया एव तिरोधाननाशकत्वमुक्तं भवति ॥ एषा भक्तिर्माहात्म्यज्ञानपूर्वकपरमस्नेहरूपा ॥ तथाभूता सती भगवत्परिचर्यायुक्ता भवेत्स्वतः पुरुषार्थसेवा चेत्सा भक्तिः स्वतंत्रेत्युच्यते ॥ अयमर्थः स्वाश्रमाचारसहितब्रह्मानुभवसहितमाहात्म्यज्ञानपूर्वकस्नेहो ब्रह्मभावं करोति तादृशश्चेत्परिचर्यासहितो भवेत्तदा सा परिचर्या आनंदरूपा सती त्रयोदशगुणा भवेत् ॥ तदा फलरूपायां तस्यां स्वाश्रमाचारादिकरणं फलानुभवप्रतिबंधकमिति फलत्वेनाऽनुभवे स्वाश्रमाचारास्त्यक्तव्याः ॥ यथा ब्रह्मभावं गतस्य ॥ अन्यथा कर्तव्या इति निष्कर्षः ॥ एवं फलप्रकरणे तां सामान्यतो निरूप्य विशेषतो निरूपणाभावे हेतुमाह ॥ दुर्लभेति ॥ न सोच्यत इति ॥ संति ब्रह्मभावं प्राप्ता न त्वेतादृशा भक्ता इति १९६

त० दी०—अयं हि सर्वकल्पानामुत्तमः परिकीर्तितः ॥
त्रिषु स्वाश्रमधर्मेषु प्रथमे वा प्रतिष्ठितः ॥ १९७ ॥

त० प्र०—परं भगवच्छास्त्रे सर्वोत्तमत्वेन निरूपितमित्याह ॥ अयं हि सर्वकल्पानामिति ॥ यद्ययं भाव उत्पद्येत तदा कस्मिन्नाश्रम इति जिज्ञासायामाह ॥ त्रिषु स्वाश्रमधर्मेष्विति ॥ चतुर्थे इन्द्रियाणां दार्ढ्याभावात् ॥ द्वितीयतृतीययोरपि दार्ढ्याभावमाशंक्याऽऽह ॥ प्रथमे वेति ॥ १९७ ॥

त० दी०—न्यासे सर्वपरित्यागी नष्टाहंममताभिदः ॥
योगमुत्तममास्थाय लोकातीतो बहिर्दृशिः ॥ १९८ ॥
असंप्रज्ञातयोगेक्षो देहत्यागे विमुच्यते ॥
तादृशस्य बलाद्वापि देहत्यागो विमुक्तिदः ॥ १९९ ॥

त० प्र०—एवं वैदिकमार्गं निरूप्य सांख्ययोगावेकीकृत्य सद्योमुक्तिं क्रममुक्तिं चाऽऽह ॥ न्यास इत्यादिना ॥ प्रथमं सद्योमुक्तिः ॥ अयं चतुर्थाश्रम एवेति

सांख्यमार्गः ॥ अतो न्यासं कृत्वा मनसापि सर्वं परित्याज्याऽहंकारं ममतां च त्यक्त्वा भगवदाविर्भावार्थमुत्तमं योगमास्थाय अलौकिको भूत्वा अंतर्निष्ठ एव सन् बहिर्दर्शनसंभावनायामसंप्रज्ञातयोगेक्षो भूत्वा तस्यामेव निष्ठायां यावद्देहपातं तिष्ठेत् ॥ तदा देहांते विमुच्यते सद्य एव अत्रैव भगवदाविर्भावात् ॥ कदाचिदाविर्भावस्य बहुकालस्थितिसंदेहे बलाद्वा देहत्यागः कर्तव्य इत्याह ॥ तादृशस्येति ॥ १९८ ॥ १९९ ॥

त० दी०— संप्रज्ञातसमाधिस्थः सांख्येनात्मविभिन्नदृक् ॥
विकृतं प्रकृतेः कार्यं मायेति त्यक्तविग्रहः ॥ २०० ॥
एवं योगं च सांख्यं च समास्थापयते कृती ॥
योगेन त्यक्तदेहश्चेत्क्रमान्मुक्तिं स विंदति ॥ २०१ ॥

त० प्र०—क्रममुक्तिप्रकारमाह ॥ संप्रज्ञातेति ॥ बहिःसंवेदनयुक्त एव योगेन भगवंतं पश्यन् ज्ञाननिष्ठोपि भूत्वा परमविरक्तः संन्यासी योगज्ञाने आमरणमभ्यस्यन् योगेनैव त्यक्तदेहश्चेत्क्रममुक्तिं प्राप्नोति ॥ २०० ॥ २०१ ॥

त० दी०— ब्रह्मलोकप्रवृत्तानां या गतिस्तस्य सा भवेत् ॥
भक्ताधिकारिणं मुक्तिरन्यथा प्रकृतौ लयः ॥ २०२ ॥

त० प्र०—तत्र च[1] ब्रह्मलोकपर्यंतं गत्वा बहुकालं स्थित्वा स्वाधिकारानुसारेण नानामार्गेण गच्छतीति वक्तुमाह ॥ ब्रह्मलोकप्रवृत्तानामिति ॥ तत्र स्थितानां पंचगतयस्ता आह ॥ भक्ताधिकारिणामिति ॥ ये भक्ताः संतोऽधिकारिणो ब्रह्मादयस्तेधिकारसमाप्तौ तत्रैव मुक्ता भवंति ॥ तथाऽयमपि ॥ पूर्वं तादृश एव केनचिन्निमित्तेन जन्म प्राप्तवांश्चेत्तदा दोषस्य विनिवृत्तत्वादयमपि विमुच्यते ॥ अन्यथा भक्त्यभावे ब्रह्मादीनां प्रकृतौ लयः ॥ तृतीयस्कंधे तथा निरूपणात् ॥ अस्यापि पूर्वोक्तस्य तथा ॥ २०२ ॥

त० दी०— पुनः सृष्टौ तथैश्वर्यं कर्मिणां पुनरागतिः ॥
आसन्योपासकानां तु ब्रह्मणा सह मुक्तता ॥ २०३ ॥

त० प्र०—पुनः सृष्टौ तथैश्वर्यं सर्वेषां यथायोग्यम् ॥ अश्वमेधेनाऽपि ब्रह्मलोकप्राप्तिः परं पुनरागतिः ॥ तथा सांख्ययोगनिष्ठोपि कर्मत्वेन योगकर्ता चेत्तथैव पुनरावर्तते ॥ एवमुभौ निरूपितौ तृतीयमाह ॥ आसन्योपासकानामिति ॥ आब्रह्मकल्पं तत्र स्थित्वा ब्रह्मणा सह विमुच्यंते ॥ २०३ ॥

---

१ चकारोऽन्यपुस्तकेषु नास्ति ।

त० दी०—अभक्ते पुनरावृत्तिर्योगनिष्ठां गतस्य तु ॥
ऐश्वर्यादि हरेर्भक्तो भित्वांऽडं प्रविशेद्धरिम् ॥ २०४ ॥

त० प्र०—ब्रह्मणः स्वस्य वा अभक्तत्वे पुनरावृत्तिः ॥ पूर्ववदनुवादः ॥ चतुर्थमाह ॥ योगनिष्ठां गतस्य त्विति ॥ सिद्धश्चेद्योगमार्गस्तदैश्वर्यादिकं तत्रैव प्राप्नोति ॥ पंचममाह ॥ हरेर्भक्त इति ॥ द्वितीयस्कंधोक्तप्रकारेण अंडं भित्वा हरिं विशेत् ॥ २०४ ॥

त० दी०—केवलेन हि सांख्येन विविक्ताध्यात्मसंस्थितिः ॥
नैव किंचित्करोमीति दृढबुद्धिरसक्तधीः ॥
अंतेऽप्येवं सदा ध्यायन्नविद्यातो विमुच्यते ॥ २०५ ॥

त० प्र०—एवं सांख्ययोगभक्तीनां मेलने फलमुक्त्वा केवलानां फलमाह ॥ केवलेनेति ॥ केवले सांख्ये द्वयमंगं संघाताद्भिन्नतया आत्मज्ञानमहंकाराभावश्च ॥ एतयोर्निर्वाहो नैव किंचित्करोमीति बुद्धिर्वैराग्यं च ॥ एवं यावज्जीवमेकधारणया स्थितौ अविद्यातो विमुच्यते ॥ जन्मांतरे ज्ञानी सन्नुत्पद्यत इत्यर्थः ॥ २०५ ॥

त० दी०—केवलेनाऽपि योगेन दग्धकर्ममलाशयः ॥
योगवीर्येण जितदृग् लिंगं भित्वा तथा भवेत् ॥ २०६ ॥

त० प्र०—केवलयोगफलमाह ॥ केवलेनापि योगेनेति ॥ यावज्जीवं योगाभ्यासे ज्ञानोदये योगबलेनैव देहं त्यक्त्वा अविद्यातो विमुच्यते ॥ भक्तिसहितश्चेत्पूर्वमेवोक्तः ॥ २०६ ॥

त० दी०—योगसांख्ये धर्महीने विमार्गपरिपोषिते ॥
नरकायैव भवतः पश्चात्किंचित्सुखं भवेत् ॥ २०७ ॥

त० प्र०—एवं सांख्ययोगयोः सहितयोः केवलयोश्च फलमुक्त्वा निषिद्धयोः फलमाह ॥ योगसांख्य इति ॥ धर्ममार्गाद्भ्रष्टे तत्सिद्ध्यर्थं कदाचिन्निषिद्धमपि कुरुतः ॥ अपेयपानेन नाडी शुद्धा भवतीति विमार्गपरिपोषिते ॥ पश्चाज्जन्मांतरे ॥ २०७ ॥

वाक्यैः सांख्ययोगयोः स्तुतत्वात्कथं विकर्ममात्रेण नरकः ॥ "योगेनैव दहेदंहः" इति वाक्याच्चेत्याशंक्याह ॥ ज्ञानांग इति ॥ सांख्ययोगशास्त्रद्वयं पुराणमूलकमंगत्वेन निरूपितम् ॥ तदपि परंपरया नित्यानित्यवस्तुविवेकस्य ज्ञानांगत्वं तथा चित्तनिरोधस्य ज्ञानस्थापकत्वमन्यथा ज्ञानं स्तुतं भवतीति तयोरंगे सांख्ययोगौ न तु सर्वथा तत्प्रमाणम् ॥ अप्रमाणांशे स्पष्टयति॥ पदार्थतत्त्वनिर्धार इति २०८

त० दी०— फलांशे तु प्रमत्तस्य शास्त्रमात्रपरस्य हि ॥
नरकस्त्वन्यथाभावात्तेन मूले विनिंदितौ ॥ २०९ ॥

त० प्र०—फलितमाह ॥ फलांशे त्विति ॥ "योन्यथा संतमात्मानमन्यथा प्रतिपद्यते॥किं तेन न कृतं पापं चौरेणात्मापहारिणा" इति भगवतोऽन्यथाचिंतना नरकः॥ तत्र विकर्म सहायभूतम् ॥ अत एव सूत्रकारेण शिष्टापरिग्रह उक्तः ॥ भगवद्वाक्यस्य गतिमाह ॥ फलांशे तु स्तुताविति ॥ नित्यानित्यवस्तुविवेके चित्तनिरोधे च स्तुतौ तदन्येषां मायावादादीनां सांख्योपजीवकानां सर्वथा व्यर्थता ॥ सत्फलं न किंचित् ॥ विकर्मणा अन्यथाभावनाच्च नरकः ॥ २०९ ॥

त० दी०— फलांशे तु स्तुतौ कृष्णवाक्ये भागवतेऽपि च ॥
तदन्येषां मतानां तु सर्वथा व्यर्थता मता ॥
न तैरिष्टेन युज्यंते मिथ्यार्थाभिनिवेशतः ॥
तस्माद्वेदोक्तमार्गेषु न स्वल्पोऽपि पतेद्बुधः ॥
अतः स एव सद्धर्मः सेव्यो वर्णिभिरादरात् ॥ २१० ॥

त० प्र०—तस्माद्वेदातिरिक्तमार्गाः स्वतंत्रा न फलसाधकाः ॥ किं त्वंगभावमेव प्राप्य यादृशं प्रमेयं वेदोक्तं तादृशमेव साधयंतः फलाय भवंतीति निष्कर्षः ॥ तदभावेऽपि वेदोक्तमार्गेण केवलेनापि निस्तार इत्याह ॥ अतः स एव सद्धर्मेति२१०

त० दी०—धर्ममार्गं परित्यज्य छलेनाधर्मवर्तिनः ॥
पतंति नरके घोरे पाषंडमतवर्तनात् ॥ २११ ॥

त० प्र०—वेदविरोधे नरक इत्याह ॥ धर्ममार्गं परित्यज्येति ॥ तत्र हेतुः पाखंडमतवर्तनात्पाषंडपस्वीकारात् ॥ २११ ॥

त० दी०— अधुना तु कलौ सर्वे विरुद्धाचारतत्पराः ॥
स्वाध्यायादिक्रियाहीनास्तथाऽऽचारपराङ्मुखाः ॥ २१२ ॥

क्रियमाणं तथाऽऽचारं विधिहीनं प्रकुर्वते ॥
विक्षिप्तमनसो भ्रांता जिह्वोपस्थपरायणाः ॥ २१३ ॥
ग्राम्यप्रायाः स्वतो दुष्टास्तत्र धर्मः कथं भवेत् ॥
षड्भिः संपद्यते धर्मस्ते दुर्लभतराः कलौ ॥ २१४ ॥

त॰ प्र॰—एवं सांख्ययोगद्वारा सर्वाणि मतानि दूषयित्वा वेदविरोधाभावेपि भक्तिमार्गे ब्राह्मणविरुद्धवेषाभावेपि प्रकारभेदोऽस्तीति कस्यचिच्छंका स्यात्पाषंडमार्गोऽयमपीति तन्निराकरणार्थं प्रकारांतरे हेतुं वदन् भक्तिमार्गं प्रपंचयति ॥ अधुना त्विति त्रिभिः ॥ कालदोषाच्छक्तिह्रासे वेदाभावात्सर्वधर्माभावः २१२।२१३।२१४

त॰ दी॰—अथाऽपि धर्ममार्गेण स्थित्वा कृष्णं भजेत्सदा ॥
श्रीभागवतमार्गेण स कथंचित्तरिष्यति ॥ २१५ ॥

त॰ प्र॰—तर्हि किं विधेयमित्याकांक्षायामाह ॥ अथापीति ॥ पाषंडमतस्वीकारमकृत्वा यथाशक्त्यग्निहोत्रादिकं कुर्वन् सदा कृष्णं भजन् भवति भगवदुक्तेनैव मार्गेण ॥ ततो मुख्यधर्माभावान्न फलं भगवद्भजनाच्च न पातः किंतु कथंचित्कलिं तरिष्यति । कलिदोषाभिभूतो न भविष्यतीत्यर्थः ॥ २१५ ॥

त॰ दी॰—अत्रापि वेदनिंदायामधर्मकरणात्तथा ॥
नरके न भवेत्पातः किंतु हीनेषु जायते ॥ २१६ ॥

भिनिवेशश्चेदिति ॥ संस्कारस्य दुर्बलत्वे ज्ञानाभावात्संसारेऽभिनिवेशो भवति ॥ ततो दृढभजनाभावान्न मुच्यत इत्यर्थः ॥ अनेन वेदनिंदया पुनरावृत्तिरुक्ता ॥ पुनः शुद्धसाधनेन जायमानां मुक्तिं न निवारयति ॥ अतो वेदनिंदाभावे भक्तिमार्गः समीचीनः ॥ ननूत्कर्षासहनेन कथं वेदं न निंदेदतः सापाय एवाऽयं मार्ग इत्याशंक्याह ॥ एतावन्मात्रताप्यस्तीति ॥ अनिंदायां मोक्षो निंदायामपि न नरकादि ॥ वेदातिरिक्तमतेषु भगवन्मार्गे एतावदपि फलमस्ति न तु सांख्यादाविति तेभ्य उत्कर्षः ॥ २१७ ॥

त० दी०— सर्वत्यागेऽनन्यभावे कृष्णमात्रैकमानसे ॥
सायुज्यं कृष्णदेवेन शीघ्रमेव ध्रुवं फलम् ॥ २१८ ॥

त० प्र०— भक्तिमार्गे मुख्यानां फलमाह ॥ सर्वत्याग इति ॥ अंतर्बहिः सर्वत्यागः ॥ स्वामित्वेन कृष्ण एव सर्वदा मनोनिवेशनम् ॥ अभ्यासेन तद्भवति ॥ अन्येषां देवानां तद्विभूतित्वेन तदंशत्वेन तत्सेवकत्वेन वा सन्माननं यदि स्फुरति ॥ एवं देहपातपर्यंतं कृष्णैकमानसस्य सायुज्यं शीघ्रमेव भवति । कायवाग्विनियोगाभावेपि स्वस्नेहाभावेपि मनोमात्रस्थितौ फलमेतदित्यर्थः ॥ २१८ ॥

त० दी०— एतादृशस्तु पुरुषः कोटिष्वपि सुदुर्लभः ॥
यो दारागारपुत्राप्तान् प्राणान् वित्तमिमं परम् ॥
हित्वा कृष्णे परं भावं गतः प्रेमप्लुतः सदा ॥ २१९ ॥

त० प्र०— ततोपि विशेषमाह ॥ एतादृशस्त्विति ॥ पूर्वोक्तो लोके संभवत्यपि एतादृशस्तु दुर्लभः ॥ योऽग्रे वक्ष्यते ॥ भागवते नारायणपरः प्रशांतात्मैव लोके दुर्लभ उक्तः ॥ ज्ञानमिश्रो भक्तः ॥ प्रेमयुक्तस्तु ततोऽपिदुर्लभः ॥ तत्रापि सदा प्रेमप्लुतस्य भगवत्सायुज्यं भवतीति किं वक्तव्यमित्यर्थः ॥ २१९ ॥

त० दी०— विशिष्टरूपं वेदार्थः फलं प्रेम च साधनम् ॥
तत्साधनं नवविधा भक्तिस्तत्प्रतिपादिका ॥ २२० ॥
गीता संक्षेपतस्तस्या वक्ता स्वयमभूद्धरिः ॥
तद्विस्तारो भागवतं सर्वनिर्णयपूर्वकम् ॥
व्यासः समाधिना सर्वमाह कृष्णोकमादितः ॥ २२१ ॥

त० प्र०— एवं भक्तिमार्गे फलमुपपाद्य सर्वमेव मार्गमुपपादयति ॥ विशिष्टरूपमित्यादिना एतन्मार्गद्वयं प्रोक्तमित्यंतेन ॥ अत्र प्रमेयं विशिष्टरूपं यस्यैकैकोंऽशः

कांडद्वयेन प्रतिपाद्यते स ज्ञानक्रियोभययुतः स एव च फलं तत्रापि साधनं च प्रेमैव । तत्साधनं नवविधा भक्तिः । श्रवणादिव्यतिरेकेण सँस्कारवशात्फलकामनया वा जायमाना प्रीतिर्गौणी स्यात् ॥ श्रवणादीनां साधनत्वे प्रमाणं गीता "भक्त्या त्वनन्यया शक्यः" इति साधनसाध्यरूपामेकीकृत्याह ॥ गीतायामपि प्रामाण्यं फलवाक्यात् ॥ कृष्णस्य फलरूपत्वं परमानंदरूपत्वात्पुरुषोत्तमत्वाच्च ॥ गीतार्थं संदिग्धं मत्वा विस्तरेण कथनार्थं भागवतं तेनैव रूपांतरेण कृतम् ॥ २२० ॥ २२१ ॥

त० दी०— मार्गोऽयं सर्वमार्गाणामुत्तमः परिकीर्तितः ॥
यस्मिन् पातभयं नाऽस्ति मोचकः सर्वथा यतः ॥ २२२ ॥

त० प्र०— प्रमाणादीनां चतुर्णामप्येकरूपत्वात्सर्वमार्गापेक्षया अयमुत्तमो मार्गः॥ तथा हि ॥ प्रमाणं भगवद्वाक्यं वाक्येन प्रवृत्तः साधनमसाधयन्नपि भगवता कृतार्थीक्रियते ॥ प्रमेयपरिज्ञानं च फलानुभवरूपं साधनं च फलादप्यधिकं फलं च ज्ञानकर्मादिसाध्येभ्योऽप्यधिकमिति ॥ *अत एवास्मिन्मार्गे पातभयं नास्ति* प्रमाणप्रवृत्तिमारभ्य भगवतो रक्षकत्वात् ॥ तत्र हेतुः, **मोचकः सर्वथा यत इति** ॥ स हि सर्वानेव येन केनचिदुक्तप्रकारेणापि प्रवर्तमानान्मोचयति मोचकस्वभावत्वात् ॥ तत्र स्ववाक्यानुगतान् कथं न मोचयेत् ॥ २२२ ॥

त० दी०— वर्णाश्रमवतां धर्मे मुख्ये नष्टे छलेन तु ॥
क्रियमाणे न धर्मः स्यादतस्तस्मान्न मोचनम् ॥ २२३ ॥

त० प्र०— किं च यदा वेदादीनां कालवशादसाधकत्वं ज्ञातं तदायं मार्गो भगवता कथितस्तेनेदानीं नान्यो मार्गः फलाय ॥ २२३ ॥

त० दी०— बुद्धिमानादरं तस्मिंश्छले साध्येपि दुःखतः ॥
त्यक्त्वा मार्गे ध्रुवफले भक्तिमार्गे समाविशेत् ॥ २२४ ॥

त० प्र०— एवं मार्गस्योत्तमत्वं प्रतिपाद्य सात्त्विकानुपदिशति॥बुद्धिमानिति ॥ परमादरो बहुषु न संभवति ॥ अत एवैकस्मिन् कर्तव्यः ॥ तत्र वेदमार्गापेक्षयापि भक्तिमार्गस्योत्तमत्वप्रतिपादनात्सांप्रतमन्यस्याभावादादरेण भक्तिमार्गं प्रविशेत् ॥ मार्गे प्रवेशमात्रेणैव कृतार्थत्वात् ॥ २२४ ॥

त० दी०— विरुद्धकरणं नास्ति प्रक्रिया न विरुध्यते ॥
कल्पितेरेव बाधः स्याद्वोचाम प्रमाणताम् ॥ २२५ ॥

त० प्र०— नन्वेवं पाखंडानामपि वचनानि भवंतीत्याशंक्याह ॥ विरुद्धकरणं

नास्तीति ॥ नात्र श्रुतिस्मृतिविरुद्धाचारः, नापि प्रमेयं वेदविरुद्धम् । अतो नाऽत्र विरुद्धसंभावनापि ॥ ननु पराश्रया मुक्तिर्मायावादादिभिर्निराकृतेति कथं न प्रमेयविरोधस्तत्राह ॥ कल्पितैरेव बाधः स्यादिति ॥ ते हि स्वमात्रं फलत्वेन कल्पयंति तत्त्वप्रामाणिकमात्मशब्दस्य भगवद्वाचकत्वात् । न तु जीवपरत्वं वेदांतानां नापि जीवस्य फलरूपत्वमतः परमानंदोऽधिको भवतीति न कदापि मुक्तिः स्वाधीना ॥ अतस्तत्र स्नेह एव तत्प्राप्तिहेतुः ॥ अतो युक्त्यापि भगवन्मार्गस्य प्रामाण्यं साधितमित्यर्थः ॥ २२५ ॥

त० दी०— सर्वथा चेद्धरिकृपा न भविष्यति यस्य हि ॥
तस्य सर्वमशक्यं स्यान्मार्गेऽस्मिन् सुतरामपि ॥
कृपायुक्तस्य तु यथा सिध्येत्कारणमुच्यते ॥ २२६ ॥

त० प्र०— परमत्र न सर्वेषां फलमुख्याधिकारः ॥ किं तु येषु भगवत्कृपा परिज्ञानं च मार्गरुच्या निश्चीयते ॥ २२६ ॥

त० दी०— कृष्णसेवापरं वीक्ष्य दंभादिरहितं नरम् ॥
श्रीभागवततत्त्वज्ञं भजेज्जिज्ञासुरादरात् ॥ २२७ ॥

त० प्र०— तत्रादितः साधनान्याह ॥ कृष्णसेवापरमिति ॥ यो हि गुरुः सेवामुपदेक्ष्यति स स्वयं चेत्तामुत्तमां जानीयात्तदा कथं न स्वयं कुर्यादिति सेवापर एव गुरुः ॥ तत्रापि निमित्तानि वारयति ॥ दंभादिरहितमिति ॥ सेवा च प्रमाणमूलैव पुरुषार्थपर्यवसायिनी ॥ अन्यथा मनस्यऽन्यद्विधायाऽन्यथाकरणे न फलसिद्धिरित्यभिप्रायेणाह ॥ श्रीभागवततत्त्वज्ञमिति ॥ जिज्ञासुर्न कौतुकाद्याविष्टः ॥ भजनं सर्वभावेन तदा तदुक्तप्रकारेण भगवत्सेवा कर्तव्या ॥ २२७ ॥

त० दी०— तदभावे स्वयं वाऽपि मूर्तिं कृत्वा हरेः क्वचित् ॥
परिचर्यां सदा कुर्यात्तद्रूपं तत्र च स्थितम् ॥ २२८ ॥

त० प्र०— स च दुर्लभ इति ॥ तेनापि वक्तव्यं प्रकारमाह ॥ तदभाव इति ॥ क्वचिद्देशविशेषे सत्परिपंथिनामभावयुक्ते हरेर्मूर्तिं कृत्वा भजेत् ॥ अयमेवास्य प्रकार उत्तमः ॥ यन्मूर्तौ कृतं सर्वं भगवति कृतं भवति ॥ तत्र मूर्तेर्भगवत्त्वं त्रेधा निरूपयति ॥ तद्रूपमिति ॥ वस्तुविचारेण सर्वस्य भगवद्रूपत्वाद्विशेषस्त्वयमेनमुद्धरिष्यामीति तदा मृदादेः प्रादुर्भूतः ॥ भक्तिमार्गानुसारेणाह ॥ तत्र

१ तत्र ।

**च स्थितमिति** ॥ **मूर्तौ स्थितम्** ॥ परं यत्र हस्तस्तत्र-हस्तस्तत्तदवयेषु तत्तदवयवा इति ॥ २२८ ॥

त० दी०— साकारव्यापकत्वाच्च मंत्रस्यापि विधानतः ॥
श्रीकृष्णं पूजयेद्भक्त्या यथालब्धोपचारकैः ॥ २२९ ॥

त० प्र०—तत्र हेतुः ॥ **व्यापकं साकारं** ब्रह्मेति ॥ अतः सर्वे कटकाद्युपचारा भगवदवयवेष्वेव साक्षात्कृता भवंति ॥ उपासनामार्गानुसारेणापि मूर्तावेव भगवद्भजनं भवतीत्याह ॥ **मंत्रस्याऽपि विधानत इति** ॥ न्यासादिपूर्वकं सर्वपूजा ॥ मूर्तौ विशेषमाह ॥ **श्रीकृष्णमिति** ॥ मूर्त्यंतरे ह्यंतरितत्वं यथावन्मुख्यतया प्राप्तैर्द्रव्यैरुपचाराः कर्तव्याः ॥ २२९ ॥

त० दी०— यथा सुंदरतां याति वस्त्रैराभरणैरपि ॥
अलं कुर्वीत सप्रेम तथा स्थानपुरःसरम् ॥ २३० ॥

त० प्र०—तत्रापि भक्तिमार्गानुसारेणोपचारा मुख्या इत्याह ॥ **यथा सुंदरतां यातीति** ॥ सप्रेमेत्यनुद्वेगार्थम् ॥ स्थानं मंदिरम् ॥ तदलंकारपूर्वकमेव भगवदलंकरणं कर्तव्यमित्यर्थः ॥ २३० ॥

त० दी०— भार्यादिरनुकूलश्चेत्कारयेद्भगवत्क्रियाम् ॥
उदासीने स्वयं कार्यं प्रतिकूले गृहं त्यजेत् ॥
तत्त्यागे दूषणं नास्ति यतो विष्णुपराङ्मुखाः ॥ २३१ ॥

त० प्र०—एवं प्रवृत्तस्य भार्यादीनां विनियोगमाह ॥ **भार्यादिरनुकूलश्चेदिति** ॥ गृहं भार्यादिकम् ॥ विष्णुपराङ्मुखा भार्यादयः ॥ अन्यथा परित्यागे दोष एव ॥ अनेनाऽवैष्णवैः सहास्मिन्मार्गे न स्थातव्यमित्युक्तं भवति ॥ २३१ ॥

त० दी०— सर्वथा वृत्तिहीनश्चेदेकं यामं हरौ नयेत् ॥
पठेच्च नियमं कृत्वा श्रीभागवतमादरात् ॥ २३२ ॥

त० प्र०—जीवने प्रकारमाह ॥ **सर्वथा वृत्तिहीनश्चेदिति** ॥ याममात्रं भगवत्सेवां विधाय पश्चादनिषिद्धेनोपायेन जीवनं संपादयेत् ॥ पारंपर्यजीवनमपि निषिद्धं चेत्तदा त्यक्तव्यम् ॥ "अचौराणामपापानाम्" इति वचनात् ॥ जीविकायां चित्तं व्यापृतं पुनर्भगवति योजनार्थमुपायमाह ॥ **पठेच्च नियमं कृत्वेति** ॥ अनेनाऽन्यबहिर्मुखतायामपि भागवतमनुसंधेयमित्युपायः कथितः ॥ २३२ ॥

त० दी०—सर्वं सहेत परुषं सर्वेषां कृष्णभावनात् ॥
वैराग्यं परितोषं च सर्वथा न परित्यजेत् ॥ २३३ ॥

त० प्र०—एतद्भजनमांतरं मुख्यम् ॥ तत्र यथा बहिर्भजने प्रतिकूलपरित्यागस्तथांतरभजनेपि प्रतिकूलपरित्यागमाह ॥ सर्वं सहेतेति ॥ यथा गृहमव्याकुलं बहिः पूजायां कर्तव्यं तथैव हृदयमव्याकुलं विधेयम् ॥ "तथारिभिर्न व्यथते शिलीमुखैः" इतिवाक्याद्दुष्टानां वचनेन क्षोभो भवति ॥ तत्र तानि वचनानि हितत्वेन ग्राह्याणि ॥ अत्यंतं विरुद्धानि चेत्प्रकारभेदेन तत्रोपपत्तिमाह ॥ कृष्णभावनादिति ॥ कृष्ण एवास्मानुपदिशति बहिर्मुखतया न स्थातव्यमित्यर्थः ॥ उत्तमगुरुद्वयशिक्षा चाऽनुसंधेयेत्याह वैराग्यमिति ॥ २३३ ॥

त० दी०—एतद्देहावसाने तु कृतार्थः स्यान्न संशयः ॥
इति निश्चित्य मनसा कृष्णं परिचरेत्सदा ॥ २३४ ॥

त० प्र०—एवं सहने हेतुभूतं विचारमाह ॥ एतदिति ॥ भृतकः समयमिव देहावसानमेव चिंतयेत् ॥ एकाऽपि परिचर्या सकृत्कृता परमपुरुषार्थदेति ॥ परं विद्यमानदेहस्य निष्कृत्यर्थं सदा परिचरेत् ॥ २३४ ॥

त० दी०—सर्वापेक्षां परित्यज्य दृढं कृत्वा मनः स्थिरम् ॥
दृढविश्वासतो युक्त्या यथा सिद्ध्येत्तथाऽऽचरेत् ॥
वृथालापक्रियाध्यानं सर्वथैव परित्यजेत् ॥ २३५ ॥

त० प्र०—ननु क देशे कथं वा परिचरेदित्याकांक्षायामाह ॥ सर्वापेक्षामिति॥ "सापेक्षमसमर्थं भवति" इति मूलं भगवदर्थे स्थापयित्वा साधनाभावाद्वैकल्यं जातमपि निवार्य चित्तं भगवत्येव स्थिरीकृत्य यथा पुनः पितरि मातरि विश्वासं करोति तथा दृढविश्वासो लौकिकयुक्त्या यथैव पूजा सिध्यति तथैव कर्तव्यमिति लौकिकयुक्तिरेवोपदिष्टा तद्युक्तिसिद्ध्यर्थं वृथालापादिकं प्राप्तं निषेधति ॥ वृथालापेति ॥ कायवाङ्मनसां स्वभावतः प्रवृत्तां क्रियां त्यजेत् ॥ २३५ ॥

त० दी०—यद्यदिष्टतमं लोके यच्चातिप्रियमात्मनः ॥
येन स्यान्निर्वृतिश्चित्ते तत्कृष्णे साधयेद्ध्रुवम् ॥ २३६ ॥

त० प्र०—भगवत्सेवायामपि क्लिष्टं न समर्पयेत् ॥ तत्क्लिष्टं त्रिविधम् । लोकक्लिष्टमात्मक्लिष्टं चित्तक्लिष्टं चेति ॥ अतोऽक्लिष्टं निरूप्यते ॥ लोके यद्यदिष्टतममाम्रद्राक्षादि आत्मनोऽत्यंतं प्रियं दुग्धादि सन्मार्गोपार्जितं नान्येषां भागरूपं चिरकालमनो-

रथचिंतितमंतःकरणप्रियं तेनैव चित्तनिर्वृतिः ॥ इतरनिषेधार्थमेतदुक्तम् ॥ २३६ ॥

त० दी०— स्वयं परिचरेद्भक्त्या वस्त्रप्रक्षालनादिभिः ॥
एककालं द्विकालं वा त्रिकालं वापि पूजयेत् ॥ २३७ ॥

त० प्र०—सेवा मुख्या न पूजेति मंत्रमात्रपूजापरो न भवेदित्याशयेनाह ॥ **स्वयं परिचरेदिति** ॥ धर्मार्थतां व्यावर्तयति ॥ **भक्त्येति** ॥ वस्त्रप्रक्षालनमतिबहिरंगमिति तद्ग्रहणं "प्रधानावृत्तावंगान्यावर्तंते" इति प्रधानावृत्तिमाह ॥ **एकं कालमिति** ॥ अनेन बहुकालमपि पूजनं निरूपितम् ॥ २३७ ॥

त० दी०— स्वधर्माचरणं शक्त्या विधर्माच्च निवर्तनम् ॥
इंद्रियाश्वविनिग्राहः सर्वथा न त्यजेत्त्रयम् ॥ २३८ ॥

त० प्र०—अत्र नित्यकर्मादीनामंगत्वमाह ॥ **स्वधर्माचरणमिति** ॥ स्वधर्मा अग्निहोत्रादयः ॥ विधर्मा निषिद्धाः ॥ नाऽत्र शक्त्येति ॥ सर्वथा निषिद्धं न कर्तव्यम् ॥ इंद्रियाण्येवाश्वाः ॥ एतन्निग्रह इष्टदेशप्रापकः ॥ एतत्त्रयं क्रीडार्थमपि न त्यजेत् ॥ २३८ ॥

त० दी०— एतद्विरोधि यत्किंचित्तत्तु शीघ्रं परित्यजेत् ॥
धर्मादीनां तथा चाऽस्य तारतम्यं विचारयन् ॥ २३९ ॥

त० प्र०— संगत्रयाणां बाधकस्तत्परित्यजेदित्याह ॥ **एतद्विरोधीति** ॥ सामान्यवचनं धर्मादीनामुपलक्षणं परार्थमपीद्रियनिग्रहाभावसंभवात् ॥ पूजाविरोधि धर्मादिकं तु त्यक्तव्यमेवेत्यत्र विचारमाह ॥ **धर्मादीनामिति** ॥ भगवद्भजनस्य मोक्षः फलम् ॥ परोपकारादिसर्वधर्माणामपि क्षयिष्ण्वेव फलमत उभयोरंतरं ज्ञात्वा परोपकारादिधर्मा न कर्तव्या यदि पूजाविरोधिनो भवंति ॥ २३९ ॥

त० दी०— यथा यथा हरिः कृष्णो मनस्याविशते निजे ॥
तथा तथा साधनेषु परिनिष्ठा विवर्धते ॥ २४० ॥

त० प्र०—अत्र मार्गे पूजासाधनानामनुवृत्तौ कारणमाह ॥ **यथा यथेति** ॥ श्रवणकीर्तनादिना हरिश्चेद्धृदये निविशते तदा पूजा सर्वदा निर्वहतीत्यर्थः ॥ २४० ॥

स्वस्य दीनता भावनीया सर्वाधिष्ठानेषु सर्वलोकेषु च यत्र यत्र भगवद्बुद्धिर्भवति ॥ बुद्धिश्च कर्तव्या ॥ अन्यकर्तृकापमानेपि नाहंकारं कुर्यात् ॥ भगवतः सकाशान्मानापेक्षां च वर्जयेत् ॥ २४१ ॥

त० दी०— सर्वथा तद्गुणालापं नामोच्चारणमेव वा ॥
सभायामपि कुर्वीत निर्भयो निःस्पृहस्ततः ॥ २४२ ॥

त० प्र०— एतत्सिद्ध्यर्थमुपायमाह ॥ सर्वथा तद्गुणालापमिति ॥ सर्वथा सर्वत्र भगवदुत्कर्षवर्णने पूर्वोक्तं सिध्यति ॥ दैत्यानां संनिधानेपि निर्भयः ॥ फलाभावाय निस्पृहः ॥ तत इति ॥ २४२ ॥

त० दी०— साधनं परमेतद्धि श्रीभागवतमादरात् ॥
पठनीयं प्रयत्नेन निर्हेतुकमदंभतः ॥ २४३ ॥

त० प्र०— केवलनामोच्चारणादेः कदाचिदसाधकत्वमपि भवेदिति मुख्यं साधनमाह॥साधनं परमेतद्धीति ॥ सर्वदा श्रीभागवतकीर्तनेन पूर्वोक्तं सिध्यति ॥२४३॥

त० दी०— शंखचक्रादिकं धार्यं मृदा पूजांगमेव तत् ॥
तुलसीकाष्ठजा माला तिलकं लिंगमेव तत् ॥ २४४ ॥

त० प्र०— अत्र वैष्णवमार्गे वेदमार्गविरोधो यत्र तत्र कर्तव्यम् ॥ यद्यनित्यो धर्मो भवेत् ॥ नित्येपि वेदविरोधः सोढव्य इत्याह ॥ शंखचक्रादिकं धार्यमिति॥ "वह्निनैव तु संयुक्तं चक्रमादाय वैष्णवः ॥ धारयेत्सर्ववर्णानां हरिसालोक्यकाम्यया" इति ॥ तप्तमुद्राधारणं काम्यम् ॥ "शंखचक्रं मृदा यस्तु कुर्यात्तप्तायसेन वा॥ स शूद्रवद्बहिष्कार्यः सर्वस्माद् द्विजकर्मणः" इति स्मृतिविरोधश्च ॥ "शंखादिचिह्नरहितः पूजां यस्तु समाचरेत् ॥ निष्फलं पूजनं तस्य हरिश्चापि न तुष्यति" ॥ अतो मृदा शंखचक्रादिधारणं पूजांगमवश्यं कर्तव्यम् ॥ निषेधस्तु केवल एव न पाखंडत्वसंपादकः ॥ मृदादिनिषेधमुपक्रम्य तप्तायसे पर्यवसानवचनाच्च ॥ किंच ॥ ब्राह्मणस्य धारणं निषिद्धं वैष्णवस्य च विहितं तत्र ब्राह्मणश्चेद्वैष्णवो भवेत्तत्र पूर्वात्परवलीयस्त्वन्यायेन वचनमिति वैष्णवधर्मानुसरणं कर्तव्यम् ॥ न च पाखंडत्वसंभवः "किं पुनर्ब्राह्मणाः पुण्याः" इति वाक्यात् ॥ प्रमाणप्रमेययोः प्रमेयं बलिष्ठमिति च वेदनिषिद्धदेवतापरत्व एव पाखंडत्वमिति स्थितिः ॥ धर्मविरोधो नाऽत्र बाधकः ॥ तत उक्तं शंखचक्रादिकं मृदा पूजांगत्वेन धार्यमिति ॥ तथा तुलसी काष्ठजा मालापि धार्या ॥ तस्या यद्यपि न नित्यत्वं तथापि वैष्णवत्व-

पिका परंपरासिद्धा ॥ तदुल्लंघने पारंपर्यं बाध्येतेति नित्यतुल्या माला किं च "धारयंति न ये मालां हैतुकाः पापबुद्धयः॥ नरकान्न निवर्तंते दग्धाः क्रोधाग्निना हरेः" इति वचनान्नित्यमपि ॥ तिलकं च "दंडाकारं ललाटे स्यात्पद्माकारं तु वक्षसि ॥ वेणुपत्रनिभं बाह्वोरन्यद्दीपाकृतिर्भवेत्" इति ॥ तिलकं माला च यज्ञोपवीतवद्वैष्णवत्वबोधकम् ॥ २४४ ॥

त० दी०— एकादश्युपवासादि कर्तव्यं वेधवर्जितम् ॥
तथा कृष्णाष्टमी चापि सप्तमी वेधवर्जिता ॥
अन्यान्यपि तथा कुर्यादुत्सवो यत्र वै हरेः ॥ २४५ ॥

त० प्र०—एकादशीव्रतं च षट्पंचाशद्वेधरहितं कर्तव्यम् ॥ पूर्वमन्यथाकरणेपि भगवन्मार्गप्रवेशानंतरं पंचपंचाशद्घटिका दशमी चेत्तदैकादशी त्याज्या ॥ जन्माष्टमी तु सूर्योदयानंतरं सप्तमी चेत्तदा त्याज्या ॥ "उदयादुदयात्प्रोक्ता हरिवासरवर्जिता" ॥ इति वाक्यात् ॥ अन्यान्यपि रामनवमीप्रभृतिव्रतानि भगवन्मार्गे कर्तव्यानि ॥ नृसिंहजयंतीव्रतमुत्सवश्चेत्कर्तव्यम् ॥ तथा वामनजयंती उत्सवकरणे एकादश्यामुपोषणमकृत्वापि द्वादश्यामुपोषणं कर्तव्यं किं बहुनोत्सवः प्रधानभूतः॥ भुक्त्वा चोत्सवो निषिद्धो भगवदावेशाभावात्॥ एवं पूजामार्गे उत्सवयात्रासहिता पूजा कर्तव्येति निरूपितम् ॥ २४५ ॥

त० दी०— एतत्सर्वं प्रयत्नेन गृहस्थस्य प्रकीर्तितम् ॥
अन्येषां संभवे तु स्याद्यतेः पर्यटनं वरम् ॥ २४६ ॥

त० प्र०—उपसंहरति ॥ एतत्सर्वमिति ॥ गृहस्थस्यैतन्मुख्यम् ॥ एवं कुर्वन् सकुटुंबो भगवत्सायुज्यमश्नुते ॥ ब्रह्मचारिप्रभृतीनामपि सेवकसाधनसंपत्तावेतत्कर्तव्यम् ॥ अन्यथाऽन्य एवोपायः कर्तव्यः ॥ तमग्रे वक्ष्यति ॥ संन्यासिनस्तु पूर्वापेक्षयाप्यग्रिम एवोत्तम एवमित्याह ॥ "यतेः पर्यटनं वरम्" इति ॥ २४६ ॥

त० दी०— विक्षेपादथवा शक्त्या प्रतिबंधादपि क्वचित् ॥
अत्याग्रहप्रवेशे वा परपीडादिसंभवे ॥
तीर्थपर्यटनं श्रेष्ठं सर्वेषां वर्णिनां ततः ॥ २४७ ॥

त० प्र०—गृहस्थानामपि पूजायां पंचदोषसंभवे पर्यटनमेव श्रेष्ठमित्याह ॥ विक्षेपादिति ॥ स्वतः प्रवृत्तिरहितानींद्रियाणि बलाद्भगवति नियोज्यमानानि विक्षेपं जनयंति विग्रहकर्दितानि ॥ जरया व्याधिभिर्वा यदा शक्त्यभावो लोका

वा प्रतिबंधं कुर्वंति स्वस्य परम आग्रह उत्पद्यते येन तमसि प्रविष्टो भगवंतं न स्मरति लोकानां वा पीडां कुर्याचत्र पूजा त्यक्तव्या ॥ तदाऽन्यत्रापि तथात्वे परदेशे शून्यदेवालये पूजा विधेया ॥ तत्रापि दोषसंभवे तीर्थपर्यटनं कर्तव्यं पापानां प्रतिबंधकरूपाणां नाशाय ॥ तदा यत्रैव गत्वा सेवा संपत्स्यते तत्रैव सेवा कर्तव्या स्वतंत्रतया तीर्थाटनप्रकारमाह ॥ सर्वेषामिति ॥ विष्णुभक्तिप्रकारत्वा त्सर्वाधिकारः ॥ २४७ ॥

त० दी०— यज्ञास्तीर्थानि च पुनः समानि हरिणा कृताः ॥
अतस्तेष्वप्रतिग्राही तद्दिनान्नाधिकस्य हि ॥ २४८ ॥

त० प्र०— वर्णाश्रमयुक्तानामपि वर्णाश्रमधर्मैस्तीर्थानि विकल्प्यंत इति ॥ यज्ञा इति ॥ भारते हि यज्ञानां तीर्थानां च तुल्यता निरूपिता ॥ तत्राऽटनप्रकारमाह ॥ अतस्तेष्वप्रतिग्राहीति ॥ तीर्थप्रवेशदिवसे तूपवासः ॥ अग्रिमदिवसे यद्यन्नमात्रमपि नास्ति तदा तावन्मात्रं ग्राह्यं न तु ततोधिकम् ॥ अटनस्य नित्यत्वान्न चिरकालं स्थितिः ॥ २४८ ॥

त० दी०— हतत्रपः पठेन्नित्यं नामानि च कृतानि च ॥
एकाकी निःस्पृहः शांतः पर्यटेत्कृष्णतत्परः ॥ २४९ ॥

त० प्र०— उच्चैर्नामसंकीर्तनं तत्रांगम् ॥ अंतर्भगवत्स्मरणं च ॥ एकाकी पर्यटेदत्र "नैकः प्रपद्यतेऽध्वानम्" इति स्मृतिदोषः ॥ पथि भोगाद्यर्थं स्पृहा न कर्तव्या शांतश्च चित्ते भवेत् ॥ एवमधिकाराभावे भिन्नमुपायं वक्ष्यति कृष्ण एव तात्पर्यं न तु तीर्थादौ ॥ २४९ ॥

त० दी०— देहपातनपर्यंतमव्यग्रात्मा सदागतिः ॥
उत्तमोत्तममेतद्धि पूर्वमुत्तममीरितम् ॥ २५० ॥

त० प्र०— देहपातनपर्यंतं च पर्यटनं देहांते कृतार्थो भविष्यामीति ॥ सदा शुद्धश्च भवेत् ॥ संध्यावंदनवत्प्रत्यहं तस्य गमनम ॥ अस्मिन्पक्षेऽतः कृष्णः सर्वदा स्फुरतीत्युत्तमोत्तमम् ॥ २५० ॥

त० दी०— गृहं सर्वात्मना त्याज्यं तच्चेत्त्यक्तुं न शक्यते ॥
कृष्णार्थं तत्प्रयुंजीत कृष्णः संसारमोचकः ॥ २५१ ॥
धनं सर्वात्मना त्याज्यं तच्चेत्त्यक्तुं न शक्यते ॥
कृष्णार्थं तत्प्रयुंजीत कृष्णोऽनर्थस्य वारकः ॥ २५२ ॥

त० प्र०—अत्र संमत्यर्थं भगवदुक्तश्लोकद्वयमाह ॥ गृहं धनमिति२५१।२५२

त० दी०—अथवा सर्वदा शास्त्रं श्रीभागवतमादरात् ॥
पठनीयं प्रयत्नेन सर्वहेतुविवर्जितम् ॥ २५३ ॥
वृत्त्यर्थं नैव युंजीत प्राणैः कंठगतैरपि ॥
तदभावे यथैव स्यात्तथा निर्वाहमाचरेत् ॥
त्रयाणां येन केनापि भजनं कृष्णमाप्नुयात् ॥ २५४ ॥

त० प्र०—पूर्वाधिकारद्वयाभावे तृतीयं पक्षमाह ॥ अथवेति ॥ "बाह्याभ्यंतरभेदेन रूपे भेदद्वयं मतम् ॥ नाम्नि चैकं ततस्त्रेधा भक्तिमार्गो निरूपितः" २५३।२५४

त० दी०—जगन्नाथे विठ्ठले च श्रीरंगे वेंकटे तथा ॥
यत्र पूजाप्रवाहः स्यात्तत्र तिष्ठेत तत्परः ॥ २५५ ॥

त० प्र०—प्रपत्तिमार्गमाह ॥ जगन्नाथे विठ्ठले चेति ॥ विकल्प एवैषां स्थानानाम् ॥ प्रपत्तौ ब्रह्मास्त्रन्यायस्य बाधकत्वात् ॥ पूजाप्रवाहो भगवत्सान्निध्यबोधकः ॥ २५५ ॥

त० दी०—एतन्मार्गद्वयं प्रोक्तं गतिसाधनसंयुतम् ॥
॥ इति भक्तिप्रकरणम् ॥
कर्ममार्गे प्रवक्ष्यामि भ्रांतानां बहुशः फलम् ॥ २५६ ॥

त० प्र०—एवं वैदिको भक्तिमार्गश्च निरूपित इत्याह ॥ एतन्मार्गद्वयं प्रोक्तमिति ॥ सर्वत्रैव जगति फलं वर्तत इति सर्वत्र फलं साधनं चाह ॥ कर्ममार्ग इति ॥ २५६ ॥

त० दी०—अयथाज्ञानतः कर्म कुर्वाणास्त्रिविधा मताः ॥
सात्त्विकादिविभेदेन कर्म चाऽपि त्रिधा भवेत् ॥ २५७ ॥
सात्त्विकः सात्त्विकं कर्म यथाश्रुतिपरः कृती ॥
स्वर्गलोकस्तस्य सिध्येद्विमानस्त्रीभिरावृतः ॥ २५८ ॥
पुण्यस्य तु तिरोधाने पतत्यर्वाक्शिरास्ततः ॥
पुण्यशेषं समादाय समीचीनेषु जायते ॥ २५९ ॥
राजसं कर्म कुर्वाणो मेर्वादिसुखभाग् भवेत् ॥
तामसं कर्म कुर्वाणः पाताले सुखभाग् यथा ॥ २६० ॥
राजसः सात्त्विकं कुर्वन्दैत्यस्वर्गेषु जायते ॥

त० दी०—राजसं कर्म कुर्वाणश्चंद्रलोके सुखी भवेत् ॥ २६१ ॥
वृष्टिद्वारान्नरूपः सन् रेतो योनिषु जायते ॥
तामसं कर्म कुर्वाणो यक्षलोके सुखी भवेत् ॥ २६२ ॥
तामसः सात्त्विकं कुर्वन् पितृलोके महीयते ॥
राजसं कर्म कुर्वाणो भूतादिसुखमाप्नुयात् ॥
तामसं कर्म कुर्वाणः सर्पादिसुखभाग् भवेत् ॥ २६३ ॥
सर्वेषां पुनरावृत्तिस्तथा कर्म पुनर्भवः ॥
एवं त्रयीधर्मपरा गतागतमवाप्नुयुः ॥ २६४ ॥

त० प्र०—कर्मणो नानात्वं स्वभावगुणभेदात् ॥ तामसः कदापि न सात्त्विकं कर्म करोति ॥ कुर्वन् वा तामसप्रकारेण करोति ॥ अतो नव भेदा गीतायां निरूपिताः ॥ "कर्ता सात्त्विक उच्यते" "यत्तत्सात्विकमुच्यते" इत्यादिना ॥ "उर्ध्वं गच्छंति सत्त्वस्थाः" इति वाक्यात्कर्मणस्त्रैविध्ये सात्त्विक एवोर्ध्वादिषु गच्छति ॥ तथा राजसोपि दक्षिणमार्गे गच्छन् दैत्यस्वर्गेषु चंद्रलोके यक्षलोके च सुखमनुभवति ॥ सर्वेषां संग्रहार्थं सत्त्वादितारतम्येन फलकल्पना ॥ पितृलोको भूतलोकः सर्पलोकश्चेति ॥ तामसानां फलं नवविधं निरूप्य भगवद्वाक्येनोपसंहरति ॥ एवं त्रयीधर्मपरा इति ॥ २५७ ॥ ५८ ॥ ५९ ॥ ६० ॥ ६१ ॥ ६२ ॥ ६३ ॥ २६४ ॥

त० दी०—तत्तद्देवोपासकानामाजन्मोपासने फलम् ॥
तत्तत्सायुज्यरूपादिवेदोक्तानामनेकधा ॥
पौराणिकानां च तथा निषिद्धेतरभावतः ॥ २६५ ॥

त० प्र०—प्रकीर्णकफलं वक्तुं नानादेवोपासकानां फलमाह ॥ तत्तद्देवोपासकानामिति ॥ वेदोक्तानामग्न्यादीनां देवोपासनाबुद्ध्या अग्निहोत्रादिकरणे भेदबुद्धेर्विद्यमानत्वात्तत्तद्देवतासायुज्यम् ॥ पौराणिका दुर्गागणपतिप्रभृतयः ॥ २६५ ॥

त० दी०—यजंते सात्त्विका देवान् यक्षरक्षांसि राजसाः ॥
प्रेतान् भूतगणांश्चाऽन्ये यजंते तामसा जनाः ॥ २६६ ॥

त० प्र०—विष्णुं परित्यज्य तद्भजनं न कोपि करिष्यतीत्याशंक्य भगवद्वाक्यमाह ॥ यजंते सात्त्विका देवानिति ॥ २६६ ॥

त० दी०—विहितानेककर्तॄणां देहांते यदुपासनम् ॥
तत्सायुज्यादिसिद्धिः स्यात्तपोपोऽन्यस्य वै फलम् ॥ २६७

त० प्र०—एकदा बहुदेवोपासनायां कर्मप्राधान्यात्कर्ममार्गीयमेव फलं नोपासनाफलम् ॥ क्रमेण भक्त्या तत्तद्देवोपासनायां फलमाह ॥ विहितानेकेति ॥ अंतिमस्य शीघ्रप्रसादे पूर्वेषामभ्यनुज्ञा हेतुः ॥ २६७ ॥

त० दी०—कर्मणां गहना रीतिर्ब्रह्मणाऽपि न बुध्यते ॥
ईश्वरत्वात्तदिच्छायाः प्रधानत्वादनेकधा ॥
तदुद्रेकोऽवसाने स्यात्कृपाक्रोधविभेदतः ॥ २६८ ॥

त० प्र०—एवमुपासनायां नियतं फलमुपपाद्य कर्ममार्गे फलस्याऽनियतत्वमाह ॥ कर्मणामिति ॥ कर्माणि विध्वंसे निषिद्धानि सहस्रं पतंति ॥ तथा निषिद्धे विहितानि ॥ तेन कस्य फलं भवेदिति सर्वेषामेव शंका ॥ तत्र हेतुमाह ॥ ईश्वरत्वादिति ॥ कर्मस्वरूपी भगवानीश्वरः ॥ स स्वेच्छया किंरूपोऽभिव्यक्तो भवेदिति न ज्ञायते ॥ अतो विधिर्व्यर्थ इति न फलं नियतम् ॥ यतोऽनेकधा तदुद्रेकः ॥ तत्रापि देहावसाने यत्कर्म तदेव फलदायकम् ॥ तत्रेश्वरेच्छया किंरूपोऽभिव्यक्तो भवेदिति न ज्ञायते ॥ यदि जीवे कृपा तदा शुभरूपेण क्रोधे त्वशुभरूपेणेति निर्णयः ॥ २६८ ॥

त० दी०—कृपयाऽधमतां प्राप्य भक्तं वै मोचयेत्क्वचित् ॥
अनियुक्ततपस्थानां पीडया क्रोधतः क्वचित् ॥
हीनभावं नयत्येप दुष्टं वा मोचयेत्क्वचित् ॥ २६९ ॥

त० प्र०—तदेवोपपादयति ॥ कृपयेति ॥ अधमतां प्राप्य स्थितं भक्तं कृपया कचिन्मोचयेत् इति निषिद्धस्यांते सद्रूपेणाविर्भावः ॥ विहितस्यांते निषिद्धरूपेणाऽऽविर्भावमाह ॥ अनियुक्ततपस्थानामिति ॥ आज्ञाव्यतिरेकेण ये तपः कुर्वंति तेषामंते भगवतः पीडया क्रोधो भवति ॥ "मां चैवांतःशरीरस्थम्" इति वाक्यात्तदा हीनभावं नयति नरकं श्वादियोनिं वा ॥ भगवदिच्छया दुष्टश्चेत्तमपि कचिन्मोचयेत् ॥ अत ईश्वरचर्या दुर्विभाव्या ॥ २६९ ॥

त० दी०—कर्मणो ह्यपि बोद्धव्यं बोद्धव्यं च विकर्मणः ॥
अकर्मणश्च बोद्धव्यं गहना कर्मणो गतिः ॥ २७० ॥

त० प्र०—अत एव भगवान् स्वाभिप्रायं कर्ममार्गे निरूपयतीत्याह ॥ कर्मणो ह्यपि बोद्धव्यमिति ॥ विहितेपि विचारः कर्तव्यः ॥ किं भगवदिच्छास्ति तथा

१ तत्रे । २ पथा ।

सति कर्तव्यं नो चेन्न कर्तव्यमिति तथा विकर्मणस्तूर्णीभावादपि कलावग्निहोत्रादिकं न कर्तव्यमित्यत्रापि विचारः कर्तव्यः॥ किमीश्वरेच्छाकरणेऽकरणे वेति। तथा निषिद्धेपि विचारः कर्तव्यः॥ किं ब्रह्मणो हंतव्यो न हंतव्यो वेति। भगवदिच्छायां हननमेव हितकारि यथा द्रोणादीनाम् ॥ अत एव कर्मणो गतिर्गहना फलं दुर्निरूप्यमित्यर्थः ॥ २७० ॥

त० दी०—अतश्च सुतरामेव कर्ममार्गो दुरत्ययः ॥
अतोपि भजनं कार्यं भजनेन हि तादृशम् ॥ २७१ ॥

त० प्र०—उपसंहरति ॥ अतश्च सुतरामेवेति ॥ तर्हि किं कर्तव्यमित्याकांक्षायामाह ॥ अतोपि भजनं कार्यमिति ॥ ननु भजनेप्येवं चेत्को विशेषः स्यादत आह ॥ भजनेन हि तादृशमिति ॥ भगवदिच्छाभावेपि भजनमेव परं न निर्वेहेत् न त्वनिष्टं किंचित् ॥ २७१ ॥

त० दी०—अन्योऽन्यनाशकत्वं च कर्मणां भवति क्वचित् ॥
कर्ममार्गे फलं तस्मान्न निरूप्यं हि सर्वथा ॥ २७२ ॥

त० प्र०— न केवलमीश्वरेच्छैव कर्मफले प्रतिबंधिका किं त्वन्यदप्यस्तीत्याह ॥ अन्योन्यनाशकत्वमिति ॥ अनवसरे नमस्कारादर्धं पुण्यं विनश्यति ॥ "अजारजः खररजो हंति पुण्यं पुराकृतम्" इति ॥ बहुनाशकं कर्मफलस्य ॥ तथावेधोपवासे गांधार्याः पुत्रशतं नष्टम् ॥ "अतिथिर्विमुखो यातः पुण्यमादाय गच्छति" उपसंहराति ॥ कर्ममार्गे फलंतस्मादिति ॥ २७२ ॥

त० दी०—जायस्वेति म्रियस्वेति तृतीयो य उदाहृतः ॥
प्रकीर्णकानां सर्वेषां तत्फलं परिकीर्तितम् ॥ २७३ ॥

त० प्र०—इदानीमुपासनामार्गस्य फलमाह ॥ जायस्वेति ॥ वेद एव तृतीयो मार्गो निरूपितः ॥ कर्ममार्गेपि देवताप्राधान्ये इदमेव फलम् ॥ २७३ ॥

त० दी०— ईश्वरालंबनं योगो जनयित्वा तु तादृशम् ॥
बहुजन्मविपाकेन भक्तिं जनयति ध्रुवम् ॥ २७४ ॥
सांख्येऽपि भगवच्चित्ते फलमेतन्न चाऽन्यथा ॥
समर्पणात्कर्मणां च भक्तिर्भवति नैष्ठिकी ॥ २७५ ॥

त० प्र०—प्रसंगाद्योगसांख्ययोः फलमाह ॥ ईश्वरालंबनमिति ॥ यो-

गसांख्यकर्माणि भगवदिच्छया कृतानि भक्तिं जनयंतीत्यर्थः ॥ ऐतन्नियतफ-लम् ॥ २७४ ॥ २७५ ॥

त० दी०— योगेन तु निषिद्धेन यदि देहः प्रसिध्यति ॥
तदा कल्पांतपर्यंतं भावनातस्तु सत्फलम् ॥
अन्यथा नरके पातो दृढभूमौ तु संसृतिः ॥ २७६ ॥

त० प्र०— इदानीं निषिद्धयोगमार्गादेः स्वरूपं फलं चाह ॥ योगेन त्विति ॥ निषिद्धो योगः कापालिको महादेवेनोर्ध्वमुखेनोक्तः ॥ तदुक्तप्रकारेण यदि देहः सिद्धस्तथा कल्पांतपर्यंतं भगवद्ध्यानात्सदेव फलम् ॥ आदावल्पं निषिद्धं ध्याने हन्यते देहनाशे तु नरके पातः ॥ दृढभूमौ योगारंभे सिद्धे जन्मांतरे पुनः पूर्ववासनया योगाभ्यासान्मुच्यते ॥ अतः पाक्षिकापायो मार्गः ॥ २७६ ॥

त० दी०— छलयोगस्तथा सांख्यं शाक्तो मार्गो विधीयते ॥
सिद्धांताश्च तथा कौला लोकातीतविभेदतः ॥ २७७ ॥
सांख्यभेदद्वयं तत्र द्वितीयेऽनुग्रहादिकम् ॥
आद्ये लोकस्य सन्मानमन्त्ये तुल्यं तमस्तयोः ॥ २७८ ॥

त० प्र०— शाक्तमार्गस्तु सर्वथैव निषिद्ध इत्यभिप्रायेणाह ॥ छलयोगस्तथा सांख्यमिति ॥ सांख्ययोगौ मिलितौ धर्ममार्गविरोधेनामेध्यभक्षणसुरापानादिपोषितौ शाक्तो मार्गः ॥ तत्र सप्त भेदाः ॥ वैदिका वैष्णवाः शाक्ताः वामाः सिद्धांताः कौलाः ॥ अतः परं नेति तेषां ग्रंथः ॥ तत्र स्वरूपं फलं चांतिमयोराह ॥ सिद्धांताश्च तथा कौला इति ॥ सिद्धांत आसुरः सर्वं मिथ्येति ॥ कर्म सर्वथा त्यक्तव्यं बाधकमिति ॥ तथा भक्तिरपि ॥ केवलं वाचःपेशैर्मोहयंति ये ते सांख्यास्तेषां लोकसंग्रहो नियामकः ॥ कौलानां तु न लोकापेक्षेति भेदः ॥ "पत्नीत्वं दीक्षया रंडाश्चंडा अपि भजंति हि ॥ दिगंबराश्रमचिह्नाः सुरामांसपरायणाः ॥ पापरूपा दुराचारास्ते कौलाः परिकीर्तिताः" ॥ तेषामनुग्रहनिग्रहादिकं दृष्टं फलं भवति ॥ तन्मार्गसेवितया दुष्टतामसशक्त्या सिद्धांतस्य लोके सन्माननं फलम् ॥ २७७ ॥ २७८ ॥

त० दी०— लोके व्यामोहकं शास्त्रं सतानां बोधकः शिवः ॥
कलौ जनिष्यमाणानामसुराणां क्षयाय हि ॥२७९ ॥

---

१ एतम् । २ संसृति ।

त० प्र०— ततो व्यामोहो लोकस्य भवति ॥ सप्तानां मूलमाह ॥ बोधकः शिव इति ॥ प्रयोजनमाह ॥ कलाविति ॥ असुराणामेवाऽत्र रुचिस्तेन तेषामेव क्षय इति न काऽप्यनुपपत्तिः ॥ २७९ ॥

त० दी०— वामाः शाक्ताश्च योगे तु प्रकटाप्रकटे भिदा ॥
प्रकृतिस्तत्र संराध्या साध्यो योगश्चतुष्टये ॥ २८० ॥

त० प्र०— चतुर्थपंचमावाह ॥ वामाः शाक्ता इति ॥ तयोरपि पूर्ववत्प्रकटाप्रकटे भिदा ॥ तत्र त्रिपुरसुंदर्यादिशक्तयः सेव्याः ॥ योगश्च साध्य इति बुद्धिः २८०

त० दी०— शैवश्च वैष्णवश्चैव उपास्ये भेदकद्वयम् ॥
कर्मासक्तास्तु ये तत्र वैदिकाः समुदाहृताः ॥ २८१ ॥

त० प्र०— तत्राऽनधिकारे शैववैष्णवौ तस्याः शक्तेः पादत्वेन पंचप्रेतमध्ये निरूपितौ ॥ न शब्दमात्रेण किंचिद्दुष्यति पदार्थस्त्वन्य एव अतो भूतादेरेव विष्णुशिवादिनाम धृत्वा तथोपासत इति निर्णयः ॥ तत्र वैदिकानां लक्षणमाह ॥ कर्मासक्ता इति ॥ लोकसंग्रहार्थं पूर्वोक्तानां सन्माननार्थं च तत्सेवकास्तथा भवंति ॥ २८१ ॥

त० दी०— सप्ताऽपि सर्वथा त्याज्या भगवन्मार्गवर्तिभिः ॥
बौद्धाश्चतुर्विधाः पूर्वमंतरानंतमार्गिणः ॥ २८२ ॥

त० प्र०— एतन्निरूपणस्य प्रयोजनमाह ॥ सप्तापि सर्वथा त्याज्या इति ॥ महापातकिसंसर्गेऽपि महापातकित्वश्रवणात् ॥ एवं निषिद्धान् शाक्तान्निरूप्य बौद्धान्निरूपयति ॥ बौद्धाश्चतुर्विधा इति ॥ माध्यमिकाः सौत्रांतिका विज्ञानवादिनश्चार्वाकाश्चेति ॥ तेषामवांतरभेदाः कोटिशः संति ॥ २८२ ॥

त० दी०— तेषां बृहस्पतिमुखाः कर्तारो हरिरेव तु[1] ॥
कृष्णसंगोपनार्थाय स्वयमेव जगाद ह ॥ २८३ ॥

त० प्र०— तेषां मूलभूतानाह ॥ तेषां बृहस्पतिमुखाः कर्तार इति ॥ लोकायतशास्त्रं बृहस्पतिना प्रणीतम् ॥ तथान्येऽपि शुक्रमायाविमोहिताः ॥ सांप्रतं हरिरेव बुद्धिरूपेणाऽवतीर्णो वेदनिंदालक्षणशास्त्रं कृतवान् ॥ २८३ ॥

त० दी०— वेदमार्गविरोधेन येषां करणमण्वपि ॥
ते हि पाखंडिनो ज्ञेयाः शास्त्रार्थत्वेन वेषिणः ॥ २८४ ॥

---

१ रेवतु ।

त० प्र०—अतः सामान्येन पापंडमतमाह ॥ वेदमार्गविरोधेनेति ॥ अलौकिकवेषान् संपाद्य लोकव्यामोहनार्थं तिष्ठंतीत्यर्थः ॥ २८४ ॥

त० दी०—सर्वेषां नरके वासस्तमोवाक्यप्रतिपादके ॥
नरकात्पुनरावृत्तौ नानायोनिषु संभवः ॥ २८५ ॥

त० प्र०—तेषां फलमाह ॥ सर्वेषां नरके वास इति ॥ तत्रापि शास्त्रार्थत्वेन निरूप्य मार्गप्रवृत्तिकर्तॄणां तम एव । नरके गतानां पुनरावृत्तिः ॥ तमसि प्रविष्टानां न । पुनरावृत्तौ च शूकरादियोनिषु संभवः ॥ २८५ ॥

त० दी०—आनंदस्य तिरोभावः सर्वथा दुःखमुच्यते ॥
तस्य स्थानं तु सर्वत्र यमलोके[1] विशेषतः ॥ २८६ ॥

त० प्र०—एवं निषिद्धानां दुःखं फलत्वेन निरूप्य किं दुःखमित्याकांक्षायामाह आनंदस्य तिरोभाव इति ॥ ईषत्तिरोभावे पदार्थांतरत्वम् ॥ तदग्रे वक्ष्यते ॥ सर्वथा तिरोभावो दुःखमनिर्वृतिरूपत्वात् ॥ अन्यथा सच्चिदानन्दरूपातिरिक्तपदार्थाभावात् किं दुःखं स्यात् ॥ आत्मनः प्रतिकूलं भगवद्वैमुख्यमेव भवति ॥ ईषत्तिरोभावो दुःखाभावः सर्वथोद्भवः सुखमिति विवेकः ॥ एवं दुःखसुखे निरूप्य तयोर्देशविशेषे नियतत्वमाह ॥ तस्य स्थानमिति ॥ जगति भगवानीषत्तिरोहितस्तिष्ठति ॥ अतः सर्वत्र दुःखम् । यमलोके सर्वथा तिरोहितः प्राणिनामुपद्रवस्थानत्वात् ॥ अतः सर्वात्मा परमदयालुस्तत्र सुतरां तिरोहितो भवति॥२८६॥

त० दी०—शुद्धं तमो दुःखरूपं सहजासुरसंश्रयम् ॥
सर्वत्र नरकश्चैव तमश्चेति त्रिधा तु तत् ॥ २८७ ॥

प्र०—त०—शुद्धे तमसि तु दैत्यानां वासात्सर्वथा तिरोभावः ॥ एवं त्रैविध्यमुपपाद्याऽनुवदति ॥ सर्वत्रेति ॥ सर्वत्र यद्दुःखं नरकश्च तमश्चेति दुःखत्रयम् २८७

त० दी०—सर्वत्र स्वर्गलोकश्च वासुदेवस्त्रिधा सुखम् ॥
सुखधर्मस्तथेच्छा स्यात्किंचिदुद्गम एव सः ॥ २८८ ॥
सर्वथा ह्युद्गमः कामो धर्मिणस्तु सुखं स्मृतम् ॥
द्वेषः क्रोधस्तथा दुःखं पूर्ववद्दुःखधर्मतः ॥ २८९ ॥

त० प्र०—सर्वत्र यत्सुखं स्वर्गलोकश्च ब्रह्मानंदश्चेति सुखत्रयम् ॥ तथा सुखेऽप्युपादानमिच्छादीनां स्वरूपमाह ॥ सुखधर्म इति ॥ धर्म आकारः । तावन्मात्रप्रक-

[1] यमलोके ।

टने इच्छात्वम् ॥ तत्रापि किंचित्प्राकट्ये इच्छात्वम् ॥ बहुप्राकट्ये कामत्वमिति ॥ एवमेव द्वेषादयोपि तत्तद्दुःखस्य ॥ २८८ ॥ २८९ ॥

त० दी०— लोभोतिकिंचिदुद्भेदो धर्मयोः सुखदुःखयोः ॥
मोहस्तु द्विविधः प्रोक्तो धर्मवत्सुखदुःखयोः ॥ २९० ॥

त० प्र०— लोभस्तु सुखदुःखधर्मयोरुभयोरपि किंचिदुद्भेदः । मोहस्तु द्विपत्रवदेकमूलो द्विरूपे धर्मयुक्तः सुखदुःखयोः किंचिदुद्भेदरूपः ॥ २९० ॥

त० दी०— मदे सुखसमुद्भेदो मात्सर्येऽन्यस्य केवलः ॥
अन्येषां सर्वधर्माणां तद्धर्मोद्गम एव च ॥ २९१ ॥

त० प्र०— मदमात्सर्ययोः स्पष्टम् । अधर्माभासे धर्माभासे च तानि फलानीत्येतदर्थं निरूपितानि ॥ २९१ ॥

त० दी०— विपाकः कर्मणां येषां प्राग्देहविनिपाततः ॥
प्राप्तस्तानीह भुज्यंते ततोऽन्यानि भवांतरे ॥ २९२ ॥

त० प्र०— कदा भवंतीत्याकांक्षायामाह ॥ विपाकः कर्मणामिति ॥ अल्पफलानि बहुकाले पक्वानि भवंति ॥ उपचितावयवत्वमेव पाक ऊष्माधिक्यात् ॥ एवं कर्मणामपि विपाको ज्ञेयः ॥ इदानीमविपक्वानि कालांतरे पक्वानि भवंति ॥ स्वरूपनाशस्तु प्रायश्चित्तादिनापि भवति ॥ कर्मक्षयस्तु स्वभोगेनैव ॥ २९२ ॥

त० दी०— एते सर्वे विशेषेण जीवसंनिधिमात्रतः ॥
स्फुरंत्यन्यस्याभिमानाज्जीवो दुःखी निगद्यते ॥ २९३ ॥

त० प्र०— अत्र भोक्तारं निरूपयति ॥ एते सर्व इति ॥ अंतःकरणधर्मा एवैते जीवसान्निध्यात्स्फुरिताः स्वाश्रयाविवेकिनमंतःकरणाविवेकेन प्रवर्तमानं मिलिताः स्वव्यपदेशं प्राप्नुवंतीत्यर्थः ॥ तदा जीवः सुखी दुःखीति वा लोके व्यवहारो भवति ॥ २९३ ॥

त० दी०— अग्रपश्चाद्भावतश्च कर्मणा स्फुरितो हरिः ॥
अग्रोद्गमानुद्गमनैः सुखदुःखे तनोति हि ॥ २९४ ॥

॥ इति फलप्रकरणम् ॥

त० प्र०— नन्वेते आत्मधर्माः कुतो न भवंति ॥ अंतःकरणधर्मत्वे वा किं प्रमाणं तत्राह ॥ अग्रपश्चाद्भावत इति ॥ कर्मस्वरूपो भगवानंतःकरण एव प्रकटो भवति नाऽऽत्मनि ॥ अतः सुखदुःखादयोंतःकरणस्यैव धर्मा इत्युच्यंते स च कर्मा-

त्मा विधिनिषेधप्रकारेण स्फुरितः पूर्वोक्तन्यायेन सुखदुःखे तनोति ॥ २९४ ॥

त० दी०—ज्ञाने यर्हि मनोराज्यं शोकस्तेनापि नो भवेत् ॥
त्रिविधं दुःखमेतद्धि भवत्येव न संशयः ॥ २९५ ॥

त० दी०—एवं फलं निरूप्य साधनं निरूपयितुं भगवत्प्राप्तौ किं साधनमित्याकांक्षायां ज्ञानं साधनमिति लोकप्रसिद्ध्या प्राप्तं ज्ञानं वेदविचारेण "तमेव विदित्वाऽतिमृत्युमेति" इति दुःखातिक्रममेव फलत्वेन मैन्यते[1] ॥ परमानंदानुभवस्तु भक्त्यैवेत्यग्रे वक्ष्यते ॥ एतदेव साधनद्वयं तारतम्येन यथा फलरूपं निरूपयति तथोच्यते तत्र ज्ञानं दुःखं दूरीकरोतीति निश्चितम् ॥ तदापातत एव दूरीकरोति मूलतस्तु भक्तिरेवैतदपि करोति ॥ "अनर्थोपशमं साक्षात्" इति वाक्यात् ॥ अतो ज्ञाने परंपरया दुःखदूरीकरणं वक्तव्यं तद्यया प्रनाड्या भवति तामाह ॥ **ज्ञाने यर्हीति** ॥ ज्ञानस्वरूपं शब्दाच्छ्रुतं मनसा मनोराज्यवद्यदा भावयति तदाऽपि शोको निवर्तते ॥ अतो यादृशेनापि तादृशेन ज्ञानेन लोके जायमाना अंतःकरणक्लेशा निवर्तंते व्याध्यादिक्लेशस्तु न निवर्तते ॥ तथा नरकदुःखं तथा सहजासुराणां तमोदुःखं च तदाह ॥ **त्रिविधमिति** ॥ २९५ ॥

त० दी०—सर्वाध्यासनिवृत्तौ हि सर्वथा न भवेद्व्यथा ॥
सा च विद्योदये सा च न शब्दात्सुविचारितात् ॥ २९६ ॥

त० प्र०—तस्यापि निवृत्त्युपायमाह ॥ **सर्वाध्यासनिवृत्तौ हीति** ॥ व्यथा पीडा ॥ सर्वाध्यासनिवर्तकं तु ज्ञानं नेदानींतनानां नेदानींतनशास्त्रानुसारेणेति निरूपयति **सा चेति** ॥ अविद्यानिवृत्तिर्विद्योदये । विद्या च शब्दान्न जायते । संघातस्थितो ह्यात्मा सदाऽनुभूयते ॥ श्रुतिः पुनः संघातव्यतिरिक्ततां बोधयंती अननुभूतब्रह्मात्मभावं वा बोधयंती पूर्वज्ञानेन बाधिता दुर्बला भवति ॥ अतो वैराग्यादिसाधनैः सहिता मननिदिध्यासनाभ्यां युक्ता अभ्यासेन बलिष्ठा मनसि ब्रह्माहमस्मीति वृत्तिमुत्पादयति ॥ तदाऽनुभवपरंपरया पूर्वानुभवो बाध्यते ॥ तत्र शब्दस्य सहकारित्वं मनसस्तादृशस्य करणत्वम् ॥ ये तु पुनः शब्दस्य करणत्वमाहुस्ते भ्रांता एव ॥ न ह्यात्मविषयकेषु ज्ञानेषु मनोतिरिक्तं करणं भवति ॥ बहिरिंद्रियाणां ग्राहकाणां बहिर्विषय एव सामर्थ्यात् ॥ अत आत्मनो धर्मो ब्रह्मत्वलक्षणः, न बाह्यः, दशमत्वादिवत् ॥ स च देहधर्मो देहेष्वेवापेक्षाबुद्ध्या जन्यते ॥

[1] मन्यंते ।

अतो दशमोहमिति देहरूपमात्मानं शब्दाज्ज्ञानन्नपि न ब्रह्मरूपानुभवस्तदेति सिद्धांतः ॥ किंच ॥ दशमोहमिति चाक्षुषं ज्ञानं शब्दे युष्मच्छब्दप्रयोगात् ॥ नहि शब्दः पदस्मारितपदार्थोल्लंघनेन वाक्यार्थं जनयति ॥ अतो युष्मच्छब्देनाऽस्मच्छब्दज्ञानं जनयिष्यति ॥ तथा जायमानं चक्षुषा मनसा वा जायत इत्यंगीकर्तव्यमित्याह ॥ न शब्दात्सुविचारितादिति ॥ २९६ ॥

त० दी०– मर्यादाभंग एव स्यात्प्रमाणानां तथा सति ॥
गजानुमानं नैव स्यात्सांकर्यं वा तथा भवेत् ॥ २९७ ॥

त० प्र०– दूषणांतराण्याह मर्यादाभंग एव स्यादिति ॥ ज्ञानं तु प्रमाणाधीनं ॥ न प्रमेयाधीनम् ॥ "मानाधीना मेयसिद्धिः" इति ॥ अन्यथा लोके मर्यादाभंगः स्यात् ॥ तं घटमानयेत्यत्र वाक्यार्थज्ञानं प्रत्यक्षं स्यात् ॥ चीत्कारेण गजानुमानं च न स्यात् ॥ प्रत्यक्षत्वं जातिः परोक्षत्वं च ज्ञानं तयोरप्यनुभवात् ॥ अतः सांकर्यं च भवेत् ॥ २९७ ॥

त० दी०– दशमस्त्वमसीत्यादौ देहादिविषयत्वतः ॥
शब्दस्य साहचर्येण चक्षुषैव भवेन्मतिः ॥
स्मारकत्वमतो वाक्ये संख्याज्ञानं पुरा यतः ॥ २९८ ॥

त० प्र०– दशमवाक्यमन्यथा सिद्धमिति भ्रांतानां मतेन दृष्टांत इत्याह ॥ दशमस्त्वमसीति ॥ दशमोहमिति देहाभिन्नज्ञानम् ॥ २९८ ॥

त० दी०– अध्यासस्याऽनिवृत्तत्वान्न विविक्तात्मदर्शनम् ॥
मनसा शक्यते कर्तुं नाऽन्यथा सर्वथा भवेत् ॥ २९९ ॥

त० प्र०– प्रकृते तदभावमाह ॥ अध्यासस्येति ॥ प्रतिबंधनिवृत्त्यनंतरमेव हि कार्योदयः ॥ अतोऽध्यासस्य प्रतिबंधकत्वान्न शब्दाज्ज्ञानमप्युदेतीति भावः ॥ अत एव महता साधनेन तज्जन्यते ॥ अतः शब्दसाहचर्येण मनसापि तज्जनयितुं शक्यं नेत्यर्थः ॥ विपरीते बाधकमाह ॥ अन्यथेति ॥ शब्दश्रवणमात्रेणैव तज्ज्ञाने जाते सर्वसाधनवैयर्थ्यमिति ॥ २९९ ॥

त० दी०– प्रत्यक्षेणापि विज्ञानं मायया ज्ञानकाशया ॥
स्वप्नप्रबोधरीत्या हि किमु शाब्दं निवारयेत् ॥
सर्वज्ञत्वं सर्व भावज्ञानं चाऽऽपाततः फलम् ॥ ३०० ॥

---

१ युष्मच्छब्देन नास्मच्छब्दज्ञानमित्यन्यत्र पाठः ।

त० प्र०—मुख्यज्ञानेनाप्यध्यासनिवृत्तिर्नास्तीत्याह ॥ **प्रत्यक्षेणापीति** ॥ स्वप्नप्रबोधो यथा न निद्राव्यावर्तकः ॥ तथा जीवप्रलयसाध्यो न कदाप्यविद्यानिवर्तकः ॥ मायाधीनत्वात्तेषां यथा सा नानावस्थां संपादयति तथा ज्ञानावस्थामपि संपादयतीति यैव मायानिवर्तिका सैवाध्यासं निवर्तयति नान्येत्यर्थः ॥ "ज्ञानिनामपि चेतांसि" इत्यादिवाक्यानि च बाधकानि ॥ किंच जीवस्यात्मनो ब्रह्मत्वेन ज्ञानं ब्रह्मस्वरूपज्ञानानंतरमेव ॥ अन्यथा रजतज्ञानरहितस्यापि शुक्तिकायां रजतभ्रमो भवेत् ॥ अतः पूर्वं ब्रह्मज्ञानमपेक्षितं तेनैव कार्यसिद्धावात्मज्ञानं व्यर्थम् ॥ अपरोक्षत्वाय तथात्वेप्येकदेश एव तथाभानमनर्थमेव निवारयेन्न ॥ न फलं साधयेदिति ॥ ब्रह्मज्ञानं पूर्वं जातं निष्फलं भवेत् ॥ सर्वज्ञत्वं च तस्यलक्षणम् ॥३००॥

त० दी०— सर्वो न ब्रह्म सर्वं तु वामदेवस्तथा जगौ ॥
अवयुज्यागर्भवासी सूर्याद्यनुवदन् मुहुः ॥ ३०१ ॥
ज्ञानदुर्लभवाक्यत्वात्पाखंडवचनं मतम् ॥
सत्ये युगेऽतिमहतां भवस्येतन्न चान्यथा ॥ ३०२ ॥

त० प्र०—तत्रापि केचिन्मंदमतय आत्मज्ञानमेव सर्वज्ञानमिति वदंति तन्निराकरोति ॥ **सर्वो न ब्रह्मेति** ॥ तु पुनः सर्वमेव सर्वशब्देनोच्यते ॥ यतो वामदेवः अगर्भस्थितोऽप्यहं मनुरभवं सूर्यश्चेति सर्वशब्दार्थरूपान् मन्वादीननुवदति ॥ अतस्तथावक्तारो ज्ञानदुर्बलवादिन इति मंतव्याः ॥ ज्ञानस्य दुर्लभत्वमाह ॥ **सत्ये युग इति** ॥ ३०१ ॥ ३०२ ॥

त० दी०— स्वप्नो जागरणं चैव यथा ह्यन्योन्यवैरिणौ ॥
विद्याऽविद्ये तथा स्यातां न तु सर्वात्मना लयः ॥ ३०३ ॥

त० प्र०— मच्युक्तर्थमाह ॥ **स्वप्न इति** ॥ ३०३ ॥

त० दी०— इदमेव विनिश्चित्य कृष्णो ह्यर्जुनमब्रवीत् ॥
मामेव ये प्रपद्यंते मायामेतां तरंति ते ॥ ३०४ ॥
एवकारेण सर्वेषामनुपायत्वमाह हि ॥
ज्ञानादीनां हि सर्वेषां तदधीनत्वतः सदा ॥
विश्वासं सर्वतस्त्यक्त्वा कृष्णमेव भजेद्बुधः ॥ ३०५ ॥

त० प्र०—प्रमाणमाह ॥ **इदमेवेति** ॥ "ज्ञानी त्वात्मैव मे मतः" इति ज्ञान-

१ अवयुत्या ।

प्रशंसावाक्यं भक्तेरुत्कर्षार्थमेव ॥ "तपस्विभ्योऽधिको योगी" इत्यत्र तथानिरूपणात् ॥ "न तथा मे प्रियतमः" इत्यत्र स्पष्टमेवात्मनोपि माहात्म्यं भक्तस्य ॥ अन्यथा गुह्यत्वेन ज्ञानानंतरं भक्तिं न वदेत्तदाह ॥ एवकारेण सर्वेषामिति ॥ फलितमाह ॥ ज्ञानादीनामिति ॥ ३०४ ॥ ३०५ ॥

त० द्वी०— न दृष्टः श्रुतपूर्वो वा भजन् कृष्णमनामयम् ॥
न मुक्तः सर्वथा यस्माद्गोप्यो गावस्तथाऽभवन् ॥ ३०६ ॥

त० प्र०— ननु भक्तस्याप्यंते ज्ञानं पश्चान्मोक्ष इति कुतो न कल्प्यते न ह्यात्मनोऽन्य आत्मीयः प्रियो भवितुमर्हतीत्याशंक्याह ॥ न दृष्ट इति ॥ श्रुतपूर्वोपि नास्ति दृष्टोपि नास्ति ॥ "अनामयं तमसः परं भूयश्चांते विश्वमायानिवृत्तिः" इति तादृशी मुक्तिः सर्वथापदेनोच्यते ॥ तत्र दृष्टांतमाह ॥ "गोप्यो गावस्तथाभवन्निति ॥ "मत्स्वरूपाविदोबलाः ब्रह्म मां परमं प्रापुः" इति वचनात् ॥ ३०६ ॥

त० द्वी०— आपाततस्तु सर्वेषामुपायत्वं मयोदितम् ॥
विष्णोः कृपाविशिष्टानां तत्फलं नान्यथा भवेत् ॥ ३०७ ॥

त० प्र०—नन्वेवं सति "तमेव विदित्वा" इति तं विदित्वैवेत्यर्थस्य विवक्षितत्वाज्जीवपक्षनिराकरणस्यानंगीकाराच्च कथमेवमुच्यत इत्याशंक्याह ॥ आपातत इति ॥ येऽस्माभिर्ज्ञानादय उपायत्वेनोक्तास्ते लोकानां प्ररोचनार्थं निरूपिताः ॥ तथापि न बाधितार्थत्वम् ॥ भगवत्कृपायुक्तत्वे तेषामपि फलसाधकत्वात् ॥ वचनं तु प्ररोचनार्थम् ॥ वस्तुतस्तु कृपैव साधनम् ॥ "तमेव विदित्वा" इत्येवकारो नान्यथा व्याख्येयः ॥ अतो नात्मज्ञानं मुख्यफलसाधकम् ॥ "आत्मलाभान्न परं विद्यते" "तरति शोकमात्मवित्" ॥ "अथ योऽन्यां देवतामुपास्ते" इत्यादिवाक्येषु आत्मशब्दो भगवद्वाचको न जीववाचकः ॥ अभेदोपासना च स्तूयते ॥ "नहि निंद्यं निंदितुं प्रवर्तते" इति न्यायात् ॥ "नाऽसोमयाजी सन्नयेत्" इतिवत् ॥ "एकत्वेन पृथक्त्वेन बहुधा विश्वतोमुखे" इतिभगवद्वाक्यात् ॥ अतो मूलज्ञानं साधनं भवदपि तावता न भवतीति प्रादुर्भावप्रकरणात्प्रेमैव साधनमिति निश्चीयते॥३०७॥

त० द्वी०— यन्न योगेन सांख्येन दानव्रततपोध्वरैः ॥
व्याख्यास्वाध्यायसंन्यासैः प्राप्नुयाद्यत्नवानपि ॥ ३०८ ॥
तस्मात्त्वमुद्धवोत्सृज्य चोदनां प्रतिचोदनाम् ॥
प्रवृत्तिं च निवृत्तिं च श्रोतव्यं श्रुतमेव च ॥ ३०९ ॥

मामेकमेव शरणमात्मानं सर्वदेहिनाम् ॥
याहि सर्वात्मभावेन यास्यसे ह्यकुतोभयम् ॥ ३१० ॥

त० प्र०—अन्येषामसाधनत्वे प्रमाणमाह ॥ यत्र योगेनेति वाक्यत्रयम् ॥ सांख्यं ज्ञानशास्त्रम् ॥ ३०८ ॥ ३०९ ॥ ३१० ॥

त० दी०—इत्येकादशसर्वस्वं भगवान् स्वयमुक्तवान् ॥
आत्मानं हि स्वयं वेद तस्मादन्यवचो मृषा ॥ ३११ ॥

त० प्र०—ननु विहितनिषिद्धत्वाद्विकल्पो भवतु न त्वसाधकतेत्याशंक्याह ॥ इत्येकादशसर्वस्वमिति ॥ भगवानेव फलमिति ॥ स चेत्स्वोपायं तन्न भवतीति निषेधति ॥ तदाऽन्यवाक्यं मुधा ॥ तुल्यबलत्वे हि विकल्पः ॥ भगवतश्च फलत्वं भगवद्वाक्यादेवाऽवसीयते ॥ "मत्तः परतरं नाऽन्यत्" इत्यादिभिः ॥ तस्माज्ज्ञानादीनां न साधकत्वम् ॥ ३११ ॥

त० दी०—कर्मयोगादयः सर्वे कृष्णोद्गमनहेतवः ॥
उदासीनतयोद्भेदान्न हि सर्वात्मना फलम् ॥ ३१२ ॥

त० प्र०—ननु वेदा अपि भगवद्वाक्यमेवेति श्रुतिस्मृतिविरोधे श्रुतिर्बलिष्ठेति कथं ज्ञानस्य न साधकत्वं तत्राह ॥ कर्मयोगादय इति ॥ भगवान् स्ववाक्यसत्याय कर्मयोगादिष्वपि प्रकटो भवति परं निर्बंधेन ॥ यथा महानलौकिकः ॥ अत उदासीनतयोद्भेदात्सर्वथा मुख्यं फलं न प्रयच्छति ॥ ३१२ ॥

त० दी०—भक्त्यावत्यादरेणैव प्रकटो जायते हरिः ॥
आत्मानं च ततो दद्यात्सुखे का परिदेवना ॥ ३१३ ॥

त० प्र०—भक्तौ विशेषमाह ॥ भक्ताविति ॥ सुखे स्वरूपानंदे ॥ ३१३ ॥

त० दी०—सहनं खननं गंगातीरस्थितिवदेव तत् ॥
सांख्यो योगस्तथा भक्तिस्तत्र प्रेमादि सौख्यदम् ॥ ३१४ ॥

त० प्र०—दृष्टांतेन तारतम्यं बोधयति ॥ सहनमिति ॥ ज्ञानमार्गे दुःखे समागते तन्निवृत्तिः सहनप्राया ॥ यथा तृषायां सहनमुपायः ॥ योगस्तु खननप्रायः ॥ भक्तिस्तु गंगातीरस्थितिरूपा ॥ दुःखनिवर्तकस्य प्रकटत्वात् ॥ तत्रापि प्रेमसंभवे गंगा स्वयमुपगम्य पाययति तथा भगवान् ॥ ३१४ ॥

---

१ न्।

त० दी०— पिता चरेद्यथा बाले सुखं भक्ते तथा हरिः ॥
प्रेम्णैव सेवितोत्यर्थं गोपीनां कामदो यतः ॥ ३१५ ॥

त० प्र०— ननु हीनभावं फलात्मा महान् कथं गच्छेत्तत्राह ॥ पिता चरेदिति ॥ स्नेहमार्गे हीनभावो न दोषाय ॥ लौकिकपरमेतदिति न मंतव्यम् ॥ यतो भगवान् प्रेम्णा गोपीभ्योऽदेयमपि कामं दत्तवान् ॥ न च लौकिकन्यायस्तत्र पूर्णकामत्वात् ॥ नहि स्वत इच्छारहितः कोप्येवं प्रयच्छति ॥ ३१५ ॥

त० दी०— अच्छिद्रसेवनाच्चैव निष्कामत्वात्स्वयोग्यतः ॥
द्रष्टुं शक्यो हरिः सर्वैर्नोऽन्यथा तु कथंचन ॥ ३१६ ॥

त० प्र०— ननु प्रेमदृष्टे भवति सर्वथा अदृष्टे कथं प्रेमेत्याशंक्य दर्शनोपायमाह ॥ अच्छिद्रसेवनादिति सेवनं स्वयोग्यानुसारेण न त्वल्पं बहु वा प्रयोजकम् ॥ ३१६ ॥

त० दी०— दयया सर्वभूतेषु संतुष्ट्या येन केनचित् ॥
सर्वेंद्रियोपशांत्या च तुष्यत्याशु जनार्दनः ॥ ३१७ ॥

त० प्र०— तत्र बहिःसाधनमाह ॥ दययेति ॥ ३१७ ॥

त० दी०— शृण्वंति गायंति गृणंत्यभीक्ष्णशः स्मरंति नंदंति तवेहितं जनाः
त एवपश्यंत्यचिरेण तावकं भवप्रवाहोपरमं पदांबुजम् ॥३१८॥

त० प्र०— विशेषोपायमाह ॥ शृण्वंतीति ॥ ३१८ ॥

त० दी०— अंतर्बहिः साधनयोः स्वरूपं परिकीर्तितम् ॥
प्रकाशश्चाऽप्ययं प्रोक्तो दर्शने नाऽन्यथा तु तत् ॥ ३१९ ॥

त० प्र०— श्लोकत्रयस्यार्थमाह ॥ अंतर्बहिरिति ॥ ३१९ ॥

त० दी०— सर्वापेक्षापरित्यागात्पौरुषस्य सभाजनम् ॥
आसक्त्या भगवद्भक्तैः परं दर्शनसाधनम् ॥ ३२० ॥

त० प्र०— इतोऽप्युत्तमं दर्शनोपायमाह ॥ सर्वापेक्षेति ॥ "येऽन्योन्यतो भागवताः प्रसज्य" इत्यत्र निरूपयिष्यते ॥ ३२० ॥

त० दी०— कपिलादिर्महायोगी पूर्वं येनोपलब्धवान् ॥
तं प्रकारमिहोवाच पाक्षिकं तद्धि साधनम् ॥ ३२१ ॥

त० प्र०— ननु कपिलेन भगवदवतारेण निरूपितः कथं नोपायस्तत्राह ॥ कपिलादिरिति ॥ न ज्ञायते भगवाँस्तत्र केन हेतुनिमित्तेन देवहूत्यै मुक्तिं दत्त-

वान् ॥ परं लोके तत्साधनं प्रकटितवान् ॥ पुष्टिमार्गप्रकारेषु तस्या अपि प्रवेशः परं पाक्षिकं साधनम् ॥ ३२१ ॥

त० दी०— राजवत्कुत्रचित्कृष्णः कस्यचित्केनचित्फलम् ॥
दद्राति तावता नित्यं सर्वत्रेति न निश्चयः ॥ ३२२ ॥

त० प्र०— कथं पुष्टिमार्ग इत्याकांक्षायां तन्निरूपयति ॥ राजवदिति ॥ राजा कदाचिद्भार्यामपि सेवकेन मारयति नैतावता सा महतामपि धृष्या भवति ॥३२२॥

त० दी०— प्रेम्णा सेवा तु सर्वत्र सेव्यवश्यत्वसाधनम् ॥
किंचिद्भक्तियुतश्चेत्स्याद्योगादिः साधनं क्वचित् ॥ ३२३ ॥

त० प्र०— तथा प्रेमापि भविष्यतीत्याशंक्याह प्रेम्णा सेवेति ॥ लोके वेदे च प्रेम्णा सेवायां क्रियमाणायां सेव्यो वश्यो भवति ॥ किंच योगादीनां च साधकत्वं प्रेमसंबंधात् ॥ ३२३ ॥

त० दी०— सर्वं ब्रह्मात्मकं जानन् कर्म चाऽपि तथा चरन् ॥
पंचकर्मविधानेन षोढापि प्रकटः सदा ॥
निर्बंधेन फलत्येष न च भक्त्या यथा तथा ॥ ३२४ ॥

त० प्र०— संपूर्णेन वेदमार्गेणाऽप्येतन्न भवतीति वक्तुं कांडद्वयार्थमनुवदति ॥ सर्वं ब्रह्मात्मकमिति ॥ तथापि निर्बंधेनैव फलति वाक्यानुरोधात् ॥ लोकोत्र नियामकः ॥ ३२४ ॥

त० दी०— कणादादिमुनिश्रेष्ठाः शुक्रमोहितबुद्धयः ॥
वृथाशास्त्रकलापं हि जगुस्तेन न चाऽन्यथा ॥ ३२५ ॥

त० प्र०— षट्पदार्थषोडशपदार्थज्ञानान्निःश्रेयसाधिगम इत्यादिऋषिवाक्यानां का गतिरित्याह ॥ कणादादिमुनिश्रेष्ठा इति ॥ दैत्यानामर्थे शुक्रेण ऋषयो विमोहिताः ॥ मोहदशायां च शास्त्राणि कृतवंतः ॥ अतो वेदविरुद्धत्वाद्भ्रांतकृतित्वाच्च न तानि प्रमाणानि ॥ ३२५ ॥

त० दी०— प्रेम्णोऽन्यत् साधनं लोके नाऽस्ति मुख्यं परं महत् ॥
श्रीभागवतमेवाऽत्र परं तस्य हि साधनम् ॥ ३२६ ॥

त० प्र०— एवं सर्वं निरूप्य प्रेमभक्तिमार्गमुपसंहरति ॥ प्रेम्णोऽन्यदिति ॥ रुच्यादिना जातं प्रेमदोषदर्शनान्निवर्तते ॥ दोषश्च शास्त्राभावे लोकदृष्ट्या भवति ॥

अतः श्रीभागवतमेव सर्वशास्त्रार्थनिर्धारकं सर्वमाहात्म्यज्ञापकं प्रेमोत्पादकं भवति ॥ "यस्यां वै श्रूयमाणायाम्" इति ॥ "लोकस्याऽजानतः" इतिवाक्यात् ॥ ३२६ ॥

त० दी०— अधिकारमभिप्रायं ज्ञात्वा भक्तमुखेन हि ॥
सकृच्छ्रवणमात्रेण कृष्णे प्रेम भवेद्ध्रुवम् ॥ ३२७ ॥

त० प्र०— तत्र लोके भागवतश्रोतॄणां प्रेमाभावं दृष्ट्वा न श्रवणं साधनमित्याशंक्य विशेषमाह ॥ अधिकारमिति ॥ श्रवणस्यांगत्रयं भागवतस्य सम्यक्तात्पर्यज्ञानं भक्तमुखाच्छ्रवणं श्रोतुश्च वैराग्यमिति ॥ एतद्भावेन फलतीत्यर्थः ॥ ३२७ ॥

त० दी०— विरक्तो विपरीतादिभावनारहितः सुहृत् ॥
लीलामात्रश्रुतौ तस्य भवेत्प्रेमाऽखिले किमु ॥ ३२८ ॥

त० प्र०— इतोप्युत्तमाधिकारे भागवतैकदेशेनापि भक्तिर्भवतीति कैमुतिकन्यायेनाह ॥ विरक्त इति ॥ सर्वथा लोकेषु विरक्तो भागवतोक्ते असंभावनाविपरीतभावनारहितः ॥ तीर्थादिना शुद्धांतःकरणो विदुरतुल्यः ॥ ततोप्यधिको वा उद्धवतुल्यः ॥ तस्य लीलामात्रश्रुतावपि भक्तिर्भवति ॥ अतो मुख्याधिकारे संपन्ने भागवतश्रवणे भक्तौ न कोपि संदेहः ॥ ३२८ ॥

त० दी०— श्रीभागवततत्त्वार्थमतो वक्ष्ये सुनिश्चितम् ॥
यज्ज्ञानात्परमा प्रीतिः कृष्णे शीघ्रं फलिष्यति ॥ ३२९ ॥

इतिश्रीमद्वेदव्यासविष्णुस्वामिमतवर्तिवल्लभदीक्षितविरचिते भागवततत्त्वदीपे सर्वनिर्णयकथनं नाम द्वितीयं प्रकरणम् ॥

त० प्र०— नन्वेवं सति भवतः कोपयोगस्तत्राह ॥ श्रीभागवततत्त्वार्थमिति ॥ भागवतार्थे अज्ञाते अन्यथा ज्ञाते च भक्तिर्न भवतीति ॥ अधिकारेपि जाते फलं न भविष्यतीति मयोपायः क्रियते तत्त्वार्थो विविच्योच्यते ॥ यस्मिन् ज्ञाते सर्वथा भक्तिर्भवत्येव । नापि जाता भक्तिस्तूष्णीं तिष्ठति तादृशी भविष्यति या लतावत्प्रत्यहं वृद्धिमायांती शीघ्रं कृष्णाख्यं फलं फलिष्यति ॥ अतो भक्तीच्छायां सर्वथैव तदनुसंधेयमिति ग्रंथारंभः समर्थितः ॥ ३२९ ॥

इति श्रीमद्भागवततत्त्वार्थदीपटीकायां श्रीमद्वल्लभदीक्षितविरचितायां सर्वनिर्धारविवरणं नाम द्वितीयं प्रकरणं समाप्तम् ॥ ॥ ० ॥ ॥ ० ॥

---

१ सुहृत्. ।

॥ श्रीः ॥

# अथ तत्त्वार्थदीपनिबंधे

तृतीयं

## भागवतार्थप्रकरणं प्रारभ्यते.

॥ श्रीकृष्णाय नमः ॥

त० दी०—श्रीकृष्णं परमानंदं दशलीलायुतं सदा ॥
सर्वभक्तसमुद्धारे विस्फुरंतं परं नुमः ॥ १ ॥

त० प्र०— भागवतप्रकरणं व्याचिख्यासुस्तत्प्रतिपाद्यरूपं भगवंतं संकीर्तनेन स्तौति ॥ श्रीकृष्णमिति ॥ कृष्णशब्देन परं वस्तूच्यते ॥ तदेव कदाचित्परम दयं स्वगतं प्रकटीकरिष्यामीति साकारं प्रादुर्भूतं सत् श्रीकृष्णः ॥ अनेन ि तित्वं निवारितम् ॥ फलरूपतामाह ॥ परमानंदेति ॥ तस्य साधनं श्रवणा तद्विषयरूपतामाह ॥ दशलीलायुतमिति ॥ अवतारप्रयोजनमाह ॥ सर्वभक्त द्धार इति ॥ ततोऽप्यन्यो महान् भविष्यतीत्याशंक्याह ॥ परमिति ॥ अवता स्तुतिप्रिय इति ज्ञापयितुं नुम इति ॥ १ ॥

त० दी०—शास्त्रे स्कंधे प्रकरणेऽध्याये वाक्ये पदेऽक्षरे ॥
एकार्थं सप्तधा जानन्नविरोधेन मुच्यते ॥ २ ॥

त० प्र०—सिद्धे भागवते किं त्वया कर्तव्यमिति शंकां वारयितुं स्वग्रंथविषय- माह ॥ शास्त्र इति ॥ भागवतार्थस्तादृशो वक्तव्यो यो द्वादशस्कंधार्थेष्वनुस्यूतो भवति ॥ एवमुत्तरत्रापि स्वावयवेष्वनुस्यूतस्तदैवाऽविरोधो भवति ॥ अक्षराणा- मपि प्रत्ययरूपाणामर्थोऽस्ति प्रकटः ॥ सर्वेषामेवार्थोऽस्तीत्यवोचाम ॥ खंडशोऽर्थप्र- तिपादने वाक्यार्थः कृत्रिमो भवेदिति तन्निराकरणार्थमाह ॥ एकार्थमिति ॥ यथा भगवान् षड्गुणैश्वर्ययुतस्तथा भागवतार्थः स्कंधाद्यर्थयुक्तः॥ एवं ज्ञानस्यावांतरफल- माह ॥ संसारान्मुच्यत इति ॥ भक्त्यर्थमेषा मुक्तिरपेक्ष्यते ॥ २ ॥

त० दी०—आनंदस्य हरेर्लीला शास्त्रार्थो दशधा हि सा ॥
अत्र सर्गो विसर्गश्च स्थानं पोषणमूतयः ॥

---

१ प्रकटीतिपदं पुस्तकद्वये नास्ति । २ तुशब्दः क्वचित् ।

मन्वंतरेशानुकथा निरोधो मुक्तिराश्रयः ॥
अधिकारी साधनानि द्वादशार्थांस्ततोऽत्र हि ॥
निरूप्य संख्या स्कंधा हि द्वादशैव न चाऽन्यथा ॥ ३ ॥

त० प्र०—तत्र भागवतार्थमाह ॥ आनंदस्येति ॥ आनंदरूपस्य लीलाऽप्यानंदरूपा ॥ हरेश्च लीला सर्वदुःखहर्त्री ॥ अतो दुःखाभावसुखरूपत्वात्स्वतः पुरुषार्थरूपा लीलेति भागवतार्थः ॥ स्कंधाद्यर्थनिरूपणार्थं तां विभजते ॥ दशधा हि सेति ॥ तत्र भागवतमेव प्रमाणयति ॥ अत्रेति ॥ स्कंधद्वयमधिकमिति तयोरर्थमाह ॥ अधिकारी साधनानीति ॥ अधिकारोपि लीला परं लीलोपयोगिनी । तेन प्रधानलीलायां नाऽधिकसंख्यां जनयति । नापि शास्त्रार्थे अव्याप्तिम्[1] ॥ तथा ज्ञानमङ्गम् ॥ साधनानां बहुवचनं सर्वज्ञानप्रकाराणामंगत्वं बोधयति ॥ सापि लीला नाऽधिकसंख्यां बोधयति ॥ न न्यूनताम् ॥ अनेन श्रवणादिरूपाया भक्तेः [अ]ङ्गान्येव ज्ञानान्यंगानीत्युक्तं भवति ॥ ३ ॥

त० दी०— तृतीयादिदशस्कंधैर्लीला दशविधोदिता ॥
श्रोतुर्वक्तुश्च लक्ष्माऽऽद्ये द्वितीये त्वंगनिर्णयः ॥
इतीदं द्वादशस्कंधं पुराणं हरिरेव सः ॥ ४ ॥

त० प्र०—ननु द्वादशधा भेदे कथमेकत्वं कथं वा शास्त्रार्थतेति ॥ तत्राह ॥ इतीदमपि ॥ पुराणं हरेः स्वरूपं शब्दतोर्थतश्च 'निम्नगानां यथा गंगा' इत्यत्र वक्ष्यते ॥ ४ ॥

त० दी०— पुरुषे द्वादशत्वं हि सक्थी बाहू शिरोंतरम् ॥
हस्तौ पादौ स्तनौ चैव पूर्वपादौ करौ ततः ॥
सक्थौ हस्तस्ततश्चैको द्वादशश्चाऽपरः स्मृतः ॥ ५ ॥

त० प्र०—ननु हरित्वेपि कथं द्वादशत्वं पुरुषे द्वादशत्वं हीति "द्वादशो वै पुरुषः" इति श्रुतेः ॥ श्रुत्यनुसारेणैवाऽवयवान् गणयति ॥ सक्थाविति ॥ स्तनांता अवयवा द्वादश ॥ स्कंधानां तेषु निवेशनमाह ॥ पूर्वं पादावित्यादिना ॥ अधिकारज्ञानयोः पादत्वम् ॥ सर्गविसर्गयोः करत्वम् ॥ स्थानपोषणयोः सक्थित्वम् ॥ करशब्देन बाहू ॥ सप्तमस्कंध एको हस्तः ॥ द्वादशश्च द्वितीयः ॥ ५ ॥

त० दी०— उत्क्षिप्तहस्तः पुरुषो भक्तमाकारयत्युत ॥ ६ ॥

---

[1] अव्याप्ति ।

त० प्र०—तत्र भागवतं विकृतमिव भविष्यतीत्याशंक्य दृष्टांतेन प्रकृतोपयोगिरूपमाह ॥ उरिक्षप्तहस्त इति ॥ ६ ॥

त० दी०—स्तनौ मध्यं शिरश्चैव द्वादशांगतनुर्हरिः ॥ ७ ॥

त० प्र०—ततः स्तनौ अष्टमनवमौ ॥ ततो मध्यं दशमः ॥ शिरस्त्वेकादशः ॥ द्वादशः पूर्वमेवोक्तः ॥ यादृशो भगवान् भागवतरूपो जातस्तादृशोयं वर्णितः॥७॥

त० दी०—पादौ सक्थ्यौ कटिर्गुह्यं उदरं हृदयं करौ ॥
मुखं ललाटो मूर्धा च केचिदेवं हरिं जगुः ॥ ८ ॥

त० प्र०—अत्र केचनोपासकाः क्रमेणैवोपासना सफलेति भिन्नक्रममाहुः ॥ तमाह ॥ पादाविति ॥ कटिः पंचमः ॥ मलद्वारस्थानीयानि नरकाणि ॥ गुह्यं षष्ठः ॥उदरं सप्तमः ॥ हृदयमष्टमः ॥ करौ नवमः ॥ मुखं दशमः ॥ ललाट एकादशः ॥ मूर्धा द्वादशः ॥ उपासनायामेतदपि युक्तम् ॥ ८ ॥

त० दी०—एतद्धारणमात्रेण कृष्णो भवति वै धृतः ॥
अर्थतस्तु परिज्ञाते ज्ञातो भक्तिं प्रयच्छति ॥ ९ ॥

त० प्र०—एवं निरूपणस्य प्रयोजनांतरमप्याह ॥ एतद्धारणमात्रेणेति ॥ धारणं पाठतस्तस्य भगवद्रूपत्वात्तेन रूपेण भगवानेव धृतः ॥ हृदि स्थितो भगवान् यत्कार्यं करिष्यति तदनेनापि करिष्यति ॥ अर्थतश्चेत्परितो ज्ञातस्तदेदमित्थंतया ज्ञानं भक्त्यंगमिति ज्ञातः सन् भक्तिं प्रयच्छति ॥ ९ ॥

त० दी०—एषा समाधिभाषा हि व्यासस्याऽमिततेजसः ॥
लौकिकी चाऽन्यभाषा च समाधेः पोषिके तु ते ॥ १० ॥

त० प्र०—ज्ञानार्थमस्य स्वरूपमाह ॥ एषा समाधिभाषेति ॥ समाधावुपलभ्य तथा भाषिता ॥ समाधिसामर्थ्यार्थमाह ॥ व्यासस्यामिततेजस इति ॥ गुणतः स्वरूपतश्च माहात्म्यम् ॥ अत्र भागवते क्वचिज्ज्ञानादिप्रशंसा क्वचित्कथायां पूर्वोत्तरविरोधः क्वचित्पुनरुक्त्यादिदोषा इति सर्वसमाधानार्थं "भाषास्तु त्रिविधाः प्रोक्ताः" इति व्यासवाक्याद्भाषात्रयमस्तीत्यभिप्रायेणाह ॥ लौकिकी चान्यभाषा चेति ॥ समाधावुपलभ्य यावानर्थो निरूपितः सा समाधिभाषा ॥ तद्विरुद्धोऽर्थो यत्र सा मतांतरभाषा ॥ लोकसिद्धा तु लौकिकी ॥ १० ॥

१ प्रसयन्यत्र नास्ति ।

त० दी०— ते प्रमाणमभिप्रायात्सर्वथा पूर्ववन्न हि ॥
न तद्विरोधो दोपाय ते वक्ष्येऽवसरे स्वके ॥ ११ ॥

त० प्र०— किमतो यद्येवं तत्राह ॥ ते प्रमाणमभिप्रायादिति ॥ मतांतर-भापा लौकिकीभापा च वक्तुरभिप्रायपरत्व एव प्रमाणं न तु साक्षात्प्रतिपादितार्थे समाधिवर्त्प्रमाणम् ॥ अत एव ताभ्यां सह समाधिभाषाया न विरोधः ॥ भागवते तासां स्थानं वक्ष्यते ॥ तत्रोत्सर्गतः सर्वा समाधिभापा ॥ यत्र शुकोऽन्योक्तं कथयामीत्याह सा परमतोपन्यासभापा ॥ यत्र लौकिकरीला निरूपणं यथा "स्तनैः स्तनान् कुंकुमपंकरूषितान्" इत्यादिषु सा लौकिकी ॥ बुद्धिपूर्वकमेव विरोधस्तासु प्रतिपादित इति न तद्विरोधो दोपाय ॥ ११ ॥

त० दी०— भेदत्रयं तथा चाऽऽद्ये हीनमध्योत्तमत्वतः ॥
तल्लक्षणोऽधिकारी हि वक्तुं श्रोतुमिहार्हति ॥ १२ ॥

त० प्र०— भापात्रयप्रकारेण स्वतंत्रपुरुपार्थरूपश्रीकृष्णलीला भागवतार्थः ॥ तत्र श्रोतृवक्त्रधिकारः प्रथमस्कंधार्थः स्वरूपनिर्वाहकः ॥ अधिकाराभावे स्वरूपमर्थज्ञानमभिप्रायज्ञानं च न संभविष्यति ॥ स चाऽधिकारः स्थूलतया त्रिविधः ॥ सूक्ष्मतयैकोनविंशतिप्रकारः ॥ साधारणोऽसाधारणो गुणातीतश्च ॥ साधारणोऽपि नवविधः ॥ तथा असाधारणः ॥ निर्गुणस्त्वेकविध एव ॥ एवमधिकारोऽध्यायार्थत्वेन ज्ञेयः ॥ सर्वोऽपि तच्छुश्रूषुरधिकारीति स्कंधार्थः ॥ प्रकरणार्थेषु त्रैविध्यं तदाह ॥ भेदत्रयं तथा चाऽऽद्य इति ॥ अयमेवाऽर्थो निबंधांतरे निरूपित इत्यत्रापि निरूप्यते ॥ प्रकरणं देशकालौ ॥ तदपेक्षायां प्रकरणाधिकार एव ग्राह्यस्तदाह ॥ तल्लक्षणोऽधिकारीति ॥ १२ ॥

त० दी०— आद्येऽध्यायत्रयं मध्ये तथा चांते त्रयोदश ॥
एवमेकोनविंशत्या प्रथमस्कंध ईरितः ॥ १३ ॥

त० प्र०— प्रकरणेष्वध्यायान् विभजते आद्येऽध्यायत्रयमिति ॥ १३ ॥

त० दी०— कथामात्रं शुको राज्ञे कथयिष्यति यद्धि वै ॥
तत्रोत्तराणि प्रश्नाश्च तच्छ्रुत्वा सूत आह यत् ॥ १४ ॥
शौनकेभ्यः प्रश्नपूर्वं तत्सर्वं भावि हृद्गतम् ॥
अनागतकथारूपं श्लोकरूपेण वै हरिः ॥ १५ ॥

---

१ न प्रमाणमिति क्वचित्पाठः ॥

व्यासरूपोवतीर्याद्य मंगलादिपुरःसरम् ॥
प्रसंगपूर्वकं चाह समाधावुपलभ्य हि ॥ १६ ॥

त० प्र०— अत्र संगतिरसंगतेति तां निरूपयति कथामात्रमिति त्रिभिः ॥ ॥ १४ ॥ १५ ॥ १६ ॥

त० दी०— साकारं ब्रह्म शुद्धं हि माया तच्छक्तिरुत्तमा ॥
तया सर्वत्र संमोहः साक्षाद्भक्तिश्च मोचिका ॥
इममर्थं हरिश्चाह ब्रह्मणे नारदाय सः ॥ १७ ॥

त० प्र०— समाधिभापात्वेन प्रामाण्ये परंपरोपदेशौ व्यर्थाविति तयोः सार्थकत्वं समाधिं निरूपयन् तौ निरूपयति ॥ साकारं ब्रह्मेति सार्धेन ॥ समाधिः गमूताशेषविशेषरूप इति परंपरा चाकृत्स्नेति तां गौणत्वेन निरूपितवान् ॥१७॥

कृष्णो मोहं समुत्पाद्य साधनानां निराकृतिम् ॥
व्यासे प्रोवाच धर्मज्ञे यद्वाक्यं सकले प्रमा ॥ १८ ॥

त० दी०— अभिमानान्नारदोक्तं न सम्यगवभाति हि ॥
अतस्तदुक्तमेवार्थं समाधावुपलभ्य हि ॥
वैलक्षण्यं समस्तेभ्यो ज्ञात्वा पश्चादिदं जगौ ॥ १९ ॥

त० प्र०— समाधेर्मुख्यत्वे हेत्वंतरमप्याह ॥ कृष्णो मोहमिति सार्द्धाभ्याम् ॥ मूले व्यामोहकरणं स्पष्टं न भवतीति "कृष्णो मोहं समुत्पाद्य" इत्युक्तम् ॥ अभिमानात्परंपरा दुर्बला ॥ १८ ॥ १९ ॥

त० दी०— रीत्या यदन्यया प्राह ह्यधिकारास्ततो मताः ॥
प्रसंगसाधनफलान्याह प्रकरणे त्रये ॥ २० ॥

त० प्र०— नन्वेवं सति मध्यमप्रकरणेनाऽधिकारोऽर्थो भविष्यतीत्याशंक्याह ॥ रीत्येति भगवदुक्तत्वेन ब्रह्मोक्तत्वेन वा न सूतनारदाभ्यामुक्तं किंतु स्वयं यादृशं बुद्धं तादृशं स्ववाक्येनोक्तमिति भागवतार्थः स्वाधिकारानुसारेण तरतमभावेन बुध्यत इति सर्वार्थज्ञाने मुख्याधिकारोऽपेक्ष्यत इति प्रथमस्कंधो मृग्यः ॥ प्रकरणत्रयस्याऽन्यदपि प्रयोजनमाह ॥ प्रसंगसाधनफलानीति ॥ भागवतप्रसंगो न यथाकथंचियत्र कुत्रचित्कर्तव्यः किंतु महांतश्चेद्बहवः शुद्धास्तीर्थनिरताः प्रार्थयेयुस्तदैव प्रसंगः कर्तव्य इति ॥ तेषां संभावनां स्वज्ञानज्ञापनेन दृढां कृत्वा पश्चात्प्रसंगः कर्तव्य इति ॥ अन्यथा प्रसंगं न फलतीति ज्ञातव्यम् ॥ यस्तु ज्ञा-

नाभिमानी सिद्धांतमज्ञात्वाऽपि ज्ञानिनं मन्यते स न ज्ञापनीयः ॥ पश्चादन्यथा ज्ञात्वा महतोऽपि ज्ञानं स्वज्ञाने प्रवेशयितुमिच्छति ॥ संवादसंतोपैः स च न ज्ञापनीय इति व्यासनारदसंवादेन साधनानि निरूपितानि ॥ तथा भागवतस्य फलं साक्षाद्भगवत्प्रवेशः सर्वसंदेहराहित्यं भगवत्कृपा सर्वत्र निर्भयत्वं परमप्रेम चेति परीक्षिच्छुकसमागमेन निरूपितम् ॥ २० ॥

त० दी०— अंते मध्ये तथा चादौ तीर्थयत्नैर्महान् शुचिः ॥
कृष्णं पृच्छति यत्नेन कृपासत्संगसंभवे ॥ २१ ॥

त० प्र०—स्थानं निर्दिशति ॥ अंत इति ॥ प्रसंगमंते भागवतस्य कृतवान् ॥ साधनमितरनिराकृतिं च मध्ये ॥ तृतीयप्रकरणे आदावेव भागवतनिष्पत्तिप्रवृत्तिभक्तय उक्ताः ॥ इदानीं प्रथमाधिकारे श्रोता कीदृशोऽपेक्ष्यत इत्याकांक्षायां तं विशिनष्टि ॥ तीर्थयत्नैरिति ॥ भगवत्कृपया सत्संगे जाते ॥ २१ ॥

त० दी०— सामान्यतो बुभुत्सां हि वक्ता वारयति स्वयम् ॥
उत्कंठा चेत्ततोपि स्यात्कथाप्रक्षेपणं ततः ॥
ततो विशेषप्रश्नश्चेद्वाच्यं रीतिरियं सदा ॥ २२ ॥

त० प्र०—एतादृशेऽपि श्रोतरि न सहसा भागवतं वक्तव्यं तद्धृदयमवगाह्यावगाह्यैवेति प्रथमं वक्तुः शिक्षार्थं व्यासो यथा रीतिं कृतवान् तत्स्पष्टयति ॥ सामान्यतो बुभुत्सां हीति सार्द्धेन ॥ २२ ॥

त० दी०— वक्ताऽधिकारी सर्वज्ञः संप्रदायेन सन्मुखात् ॥
श्रुतभागवतो भक्तो ह्यविरक्तस्तथाऽऽदिमः ॥ २३ ॥

त० प्र०—वक्तुः प्रथमाधिकारमाह ॥ वक्ताधिकारीति ॥ २३ ॥

त० दी०— सूतत्वाद्वृत्तिरेषा हि तस्मान्न फलितं तथा ॥
यद्यप्येषा न विक्रीता नामविक्रयणात्तथा ॥ २४ ॥

त० प्र०—ननु वक्तुरधिकारः कुत्रोपयुज्यते श्रोत्रधिकारेणैव कार्यसिद्धेरित्याशंक्य मुख्यो वक्त्रधिकारः ॥ तस्य महत्त्वे यादृशस्तादृशोपि महान् भवति ॥ नन्वेवं सति सूतस्य शुकाच्छ्रुतभागवतस्य कथं न फलसिद्धिस्तत्राह ॥ सूतत्वादिति ॥ इदं नामात्मकं भगवतो रूपं तत्स्वविक्रेतरि विक्रयसाध्यातिरिक्तं फलं न प्रयच्छति ॥ २४ ॥

त० दी०— नारदस्याऽधिकारित्वात्कार्यावेशात्तु सर्वतः ॥
न वैराग्यं दृढं जातं तेन मध्यम ईर्यते ॥ २५ ॥

त० प्र०— ब्रह्मणः सकाशाच्छ्रुतभागवतस्य नारदस्य कथं नोत्तमत्वं तत्राह ॥ नारदस्याधिकारित्वादिति ॥ ज्ञानं पूर्णम् ॥ वैराग्याभावान्मध्यमत्वम् ॥ शब्दतो ज्ञानं सूतस्य ॥ अर्थतो ज्ञानं नारदस्य ॥ वैराग्ययुक्तं शुकस्य ॥ भगवदावेशार्थं वैराग्यम् ॥ अन्यथा ज्ञानेन विक्षिप्तो भवेत् ॥ प्रमेयबलं प्रमाणादधिकमिति भगवदिच्छया नारदस्य न वैराग्योत्पत्तिः ॥ भागवतं च स्वोत्पत्त्यानुक्तफलाधिकं फलं न साधयति ॥ अतोऽधिकारे भिन्नतया वैराग्यमुक्तम् ॥ अत एव वैराग्यसिद्ध्यर्थं द्वादशाऽध्याया निरूपिताः ॥ तदैव परीक्षिदधिकारी जातः ॥ अत एव नारदादयोपि श्रोतृत्वेन प्रविष्टाः ॥ ततो वैराग्यं संपाद्य भागवतं श्रोतव्यमित्यधिकारः फलिष्यति ॥ दोषदर्शनस्य वैराग्यहेतोर्विद्यमानत्वेऽपि नामविक्रयोऽधिकारश्च प्रतिबंधकौ ॥ २५ ॥

त० दी०— शुके पूर्वोक्तद्वितयं नास्ति तेनोत्तमः स्मृतः ॥
दृढभक्तौ शीघ्रलये कथैव प्रतिबंधिका ॥ २६ ॥

त० प्र०— एतदभावे श्रवणावृत्तौ वैराग्यमपि भवतीत्याशयेनाह ॥ शुके पूर्वोक्तद्वितयमिति ॥ ननु शुकश्चेदुत्तमाधिकारी तदा व्यासाद्भागवतश्रवणानंतरं परमभक्तौ शीघ्रं कथं न भगवति प्रविष्टस्तत्राह ॥ दृढभक्ताविति ॥ भक्तानां मरणे कथैव प्रतिबंधिका ॥ २६ ॥

त० दी०— यागादिकरणासक्तया शिष्याणां चैव संग्रहात् ॥
वक्तुः स्वस्योत्तमज्ञानात्फलं सर्वं न शौनके ॥
दृढज्ञानात्कर्मणा तु भक्त्या युक्तेन मोक्ष्यते ॥ २७ ॥

त० प्र०— अन्यदपि प्रतिबंधकं भागवतफलजनने निरूपयितुमाह ॥ यागादिकरणासक्त्येति ॥ भागवतश्रवणानंतरमपि शौनकस्य न वैराग्यादिकं जातम् ॥ तत्र हेतुत्रयम् ॥ यागाद्यासक्तिः ॥ शिष्यसंग्रहः ॥ सूतादहमधिक इति ज्ञानं च ॥ तर्हि व्यर्थं भागवतश्रवणमित्याशंक्याह ॥ दृढज्ञानादिति ॥ दृढं शास्त्रीयं ज्ञानं तेन भक्तिः परमा साध्यरूपा भगवति जाता ॥ ततो भगवत्कृपया कर्मद्वारैव मुक्तो भविष्यति ॥ २७ ॥

त० दी०— स्वतस्तर्कपरिज्ञानादवताराच्च मध्यमः ॥
नानासाधनविज्ञानात्संवादान्नारदप्रमा ॥ २८ ॥

त० प्र०— व्यासस्य वैराग्याभावः सिद्धः ॥ तथा नारदस्य ॥ तेन व्यासस्य प्रथमपक्षप्रवेशः कथं न तत्राह ॥ स्वतस्तर्कपरिज्ञानादिति ॥ हेतुद्वयं पूर्वस्मादाधिक्ये ॥ स्वतोपि तर्कोत्परिज्ञानम् ॥ मूलं च भगवतो ज्ञानावतारः ॥ उत्तमत्वाभावायाह ॥ नानासाधनविज्ञानादिति ॥ साधनविज्ञानं दृढम् ॥ नारदोपदेशश्च दुर्बलः । अतो मध्यमत्वम् ॥ २८ ॥

त० दी०— शुकोक्तिमात्रतस्तस्य निःसंदेहात्फलं महत् ॥
तस्योत्तमत्वं तत्रैव वक्ष्ये प्रकरणोत्तमे ॥ २९ ॥

त० प्र०— पूर्वाधिकारदोषाभावं परीक्षिति निरूपयति ॥ शुकोक्तिमात्रत इति॥ तस्य वैराग्यादिकं स्पष्टं न भवतीत्याशंक्याह ॥ तस्योत्तमत्वमिति ॥ २९ ॥

त० दी०— स्वाधिकारनिरूपार्थं सामान्येनोत्तरं स्मृतम् ॥
कथाक्षेपस्तु मुख्यार्थः प्रथमं तेन पूरितम् ॥
अधिकारस्तु संपन्नः कथा पश्चाद्भविष्यति ॥ ३० ॥

त० प्र०— ननु सूतः सर्वमाह भागवतं तत्कथमध्यायत्रितय एव प्रकरणसमाप्तिस्तत्राऽऽह ॥ स्वाधिकारनिरूपार्थमिति ॥ सूतो हि द्वयमाह ॥ स्वतंत्रतयाध्यायद्वयं तेन स्वाधिकारो बोधितः ॥ अन्यद्भागवतत्वेनोक्तम् ॥ तदर्थं कथाक्षेपो मुख्यतया निरूपितस्तेन प्रथमं प्रकरणं पूरितं न तु कथायां समाप्तायामित्याह ॥ अधिकारस्तु संपन्न इति ॥ ३० ॥

त० दी०— निष्पत्तिश्च प्रवृत्तिश्च हेतुपूर्वमुदीरिते ॥
सूतेन नाऽधिकारेण द्विरूपत्वमतस्तयोः ॥ ३१ ॥

त० प्र०— ननु मध्यमप्रकरणेपि वक्ता सूत एव तथोत्तमे ततस्तस्य कथं न मध्यमत्वमुत्तमत्वं वा तत्राह ॥ निष्पत्तिश्च प्रवृत्तिश्चेति ॥ हेतुर्द्वितीयप्रकरणे ॥ निष्पत्तिप्रवृत्ती उत्तमे एतयन्निरूपितं भागवतशेषत्वेनैव न तु स्वाधिकारेण ॥ तर्ह्येवं सति नारदस्यापि मध्यमत्वं न स्यात्तथा शुकस्योत्तमत्वमित्याशंक्याह ॥ द्विरूपत्वमतस्तयोरिति ॥ अन्यवाक्यकथने स्वस्याऽनधिकारित्वं सिध्यति ॥ स्वयं कथने तु सिध्यत्येव ॥ अत उत्तरयोर्द्विरूपत्वं सूतोक्तत्वेन नारदोक्तत्वेन च ॥३१॥

१ नारदस्योपदेश- ।

त० दी०— मध्यमे स्वाधिकारित्वं हेतूक्त्यैव निरूपितम् ॥
अनिष्पत्तेराद्यवच्च प्रश्नोत्तरनिरूपणम् ॥ ३२ ॥

त० प्र०— ननु मध्यमप्रकरणे कथमध्यायत्रयं तत्राह ॥ **मध्यमे स्वाधिकारित्वमिति** ॥ स हि भागवतं बोधयितुं नाऽऽगतः स्वापेक्षया व्यासस्योत्तमत्वात्, किं तु यथा वदेत्स भागवतं तथा हेतुमाह ॥ अतो भागवताचेन यथा निर्धारितोऽर्थ इति तस्याधिकारोऽवगम्यते ॥ तथापि कथं पूर्वतुल्यता तत्राह ॥ **अनिष्पत्तेरिति** ॥ भागवतं यदा व्यासमुखाद्भविष्यति तदैवाधिकारो निरूपणीयो भवति अतस्तस्याऽनिष्पत्तेराद्यवदेवाऽध्यायत्रयम् ॥ विभागोपि पूर्ववदेवेत्याह ॥ **प्रश्नोत्तरनिरूपणमिति** ॥ एकेन प्रश्न उत्तरं द्वयेन ॥ एतावाँस्तु विशेषः ॥ प्रथमाध्याये प्रश्नहेतुर्द्वितीयारंभे प्रश्न इति ॥ ३२ ॥

त० दी०— उत्तमे प्रश्न एवाऽऽद्ये स्कंधे श्रोत्रधिकारकृत् ॥
स्पष्टत्वान्न विशेषेण वक्तुरुक्ताऽधिकारिता ॥ ३३ ॥

त० प्र०— ननूत्तमाधिकारे प्रथमाध्याये पूर्ववदुत्तरं वक्तव्यं तत्राह ॥ **उत्तमे प्रश्न एवेति** ॥ उत्तरं सार्धाध्यायद्वयेन द्वितीयस्कंधे वक्तव्यं तावताऽधिकारो भवति । अत एव चतुर्थाध्याये मंगलाचरणम् ॥ उत्तमस्य वक्तुरधिकारोपि भगवच्चरित्ररूप इति भागवततुल्यत्वान्न प्रथमस्कंधे निरूपित इत्यर्थः ॥ यतः श्रोतुरेवाधिकारोऽधिकारशब्देन मुख्यतया निरूपणीयः ॥ व्यावहारिकाधिकारस्तु स्पष्टत्वान्न निरूपणीय इत्यर्थः ॥ ३३ ॥

त० दी०— सामान्यमंगकथनमेकोक्त्यैवोक्तवान् शुकः ॥
सामान्यश्च विशेषश्च प्रश्न आद्ये द्विधा मतः ॥ ३४ ॥

त० प्र०— विशेषाधिकारस्य तर्हि का गतिरित्याशंकायामाह ॥ **सामान्यमंगकथनमिति** ॥ शुकस्तूत्तरत्वेन भागवतं वक्ष्यमाणः प्रथममंगान्येकेन स्कंधेनोक्तवान् ॥ तत्रांगत्वाविशेषात्स्वाधिकारमप्यध्यायद्वयेनोक्तवान् ॥ तत्र हेतुः **सामान्यश्चेति** ॥ ३४ ॥

त० दी०— अतोऽध्यायद्वयं प्रोक्तमुत्तरे सूचितं परम् ॥
संपूर्णेनैव सर्वेषामुत्तरं संभविष्यति ॥
अत एव समस्तस्य प्रश्नाध्यायोयमीरितः ॥ ३५ ॥

१ निरूपितः ।

त० प्र०— नन्वेतावतैव भागवतं समाप्नोतु तावज्ज्ञानेनैवोत्तमत्वं सिध्येत्किं विस्तरेणेत्यत आह ॥ सूचितं परमिति ॥ उद्देशमात्रेणोक्तम् ॥ वस्तुतस्तूत्तरत्वेन सर्वमेव भागवतं भविष्यति ॥ ननु कुतोऽवगम्यते प्रथमस्कंधप्रश्नानामेव सर्वमुत्तरं भवतीति तत्राह ॥ अत एवेति ॥ यतः समस्तेनैवोत्तरमतः प्रथमाध्यायः सर्वत्र प्रश्नाध्यायः ॥ ३५ ॥

त० दी०— भगवान् प्रतिपाद्योऽत्र षडर्था भगशब्दगाः ॥
तस्मात् षडेव संप्रश्ना अभिनंदस्तथैव यत् ॥ ३६ ॥

त० प्र०— नन्वेतदप्यसंगतमित्याशंक्य हेतुं साधयति ॥ भगवान् प्रतिपाद्योऽत्रेति ॥ अर्थवशादेवं कल्प्यते सर्वत्र भागवते भगवानेव प्रतिपाद्यः ॥ तत्र भगशब्दार्थाः षट् त एव च ज्ञातव्याः—अन्यथा भागवतप्रवृत्तिर्व्यर्था स्यात् ॥ ते च षट् प्रश्नाः प्रथमाध्याये स्पष्टाः ॥ तत्रापि हेतुः ॥ अभिनंद इति ॥ "यत्कृतः कृष्णसंप्रश्नः" इति वाक्यम् ॥ सर्वैः प्रश्नैः कृष्ण एव पृष्टः स एव लीलारूपः सर्वत्रोच्यते ॥ अनेन ग्रंथसंगतिरपि निरूपिता भवति ॥ ३६ ॥

त० दी०— ज्ञानवैराग्यधर्माणामैश्वर्ययशसोः श्रियः ॥
समूहो भगशब्दार्थः कृष्णस्तद्वानिहोच्यते ॥ ३७ ॥

त० प्र०— पूर्वोक्तमेव स्पष्टयति ॥ ज्ञानवैराग्य इति ॥ नाऽत्र क्रमो विवक्षितः ॥ वस्तुतस्तु स्कंधद्वयेनैकैकम् ॥ ज्ञानमाद्याभ्याम् ॥ सर्गविसर्गाभ्यां वैराग्यम् ॥ धर्मो द्विविधः स्थानपोषणभेदेन ॥ ऐश्वर्यमपि प्रह्लादमन्वादिभिः सूच्यते ॥ यशश्च नवमदशमाभ्याम् ॥ श्रियोंत्याभ्याम् ॥ तत्र हि स्वरूपे रमणं सेत्स्यति ॥ ऐश्वर्यादिक्रमेण वा सर्वमुपपाद्यम् ॥ ३७ ॥

त० दी०— चतुर्णां प्रथमेऽध्याये द्वयोः कृष्णेन चाऽपरे ॥
ऐश्वर्यधर्मयो रूपमन्येषां प्रथमे जगौ ॥ ३८ ॥

त० प्र०— एवं सति स्वाधिकारसिद्ध्यर्थं सूतेन यथोत्तरितं तथा विभागमाह ॥ चतुर्णामिति ॥ उत्तरमध्ये प्रथमाध्याये प्रश्नचतुष्टयस्योत्तरम् ॥ त्रयाणां वा संमश्नः[1] ॥ टीकायां तथैव व्याख्यातम् ॥ कृष्णेन सहितयोर्द्वयोर्द्वितीयाध्याये तूत्तरम् ॥ अनेन प्रत्येकसमुदायाभ्यामुत्तरं देयमिति ज्ञापितम् ॥ स्पष्टार्थमुभयोर्नामाह ॥ ऐश्वर्यधर्मयोरिति ॥ अवतारधर्मयोरित्यर्थः ॥ ३८ ॥

१ समग्रः, इति पुस्तकान्तरे पाठः ।

त० दी०— मंगलं प्रकृतोत्कर्षः प्रसंगः सूतसंस्तुतिः ॥
प्रश्नः साधारणो हेतुः प्रश्नो ज्ञानपरः परः ॥
कृष्णे चतुर्द्धा वेदे तु द्वयं तेन द्विधा मतम् ॥ ३९ ॥

त० प्र०— समूहोऽध्यायार्थो भवतीति सर्वत्र ज्ञापयितुं प्रथमाध्यायस्य वाक्यार्थान् संगृण्हाति ॥ मंगलमिति ॥ मंगलं प्रथमश्लोकार्थः ॥ प्रकृतोत्कर्षः श्लोकद्वयस्य ॥ तथा प्रसंगः ॥ त्रिभिः सूतसंस्तुतिः ॥ एकेन प्रथमप्रश्नः ॥ हेतुप्रश्नः सार्द्धाभ्याम् ॥ आद्यो धर्मपरो द्वितीयो ज्ञानपरः, ततः कृष्णे चतुर्द्धा प्रश्नः ॥ एवं सति पूर्वप्रश्नद्वयस्य कृष्णपरत्वं न भविष्यतीति तत्समर्थनार्थं मार्गभेद एव न त्वर्थभेद इत्याह ॥ कृष्णे चतुर्द्धा वेदे तु द्वयमिति ॥ चतुर्मूर्तिर्भगवान् कृष्णः कांडद्वयार्थरूपश्च तेन द्विधा । अतः षट् भेदा अपि गुणपर्यायाः प्रष्टव्याः । तेषु ज्ञातेषु सर्वं ज्ञातं भवतीति ॥ ३९ ॥

त० दी०— प्रयोजनक्रियारूपैर्विद्यमानविमोचकः ॥
श्रवणादरमध्यास्ते त्रयः प्रश्नाः क्रमात्कृताः ॥ ४० ॥

त० प्र०— प्रकारचतुष्टयेपि द्विरूपत्वं तदाह ॥ प्रयोजनक्रियारूपैरिति ॥ कृष्णस्य जन्मप्रयोजनप्रश्नः क्रियाप्रश्नो रूपाणां च प्रश्न इति त्रयाणामेकत्र प्रश्ने हेतुमाह ॥ विद्यमानविमोचक इति ॥ भगवानवतीर्य योगिनो ज्ञानिनो भक्तांश्च मोचितवान् ॥ भक्तमोचनार्थमेवावतीर्ण इति प्रथमं क्रियया सृष्ट्यादिना ज्ञानिविमोचकः । रूपेण योगिविमोचक इति ॥ तन्मध्ये चाऽविहितभक्ताः ॥४०॥

त० दी०— अग्रे केन विमोचेत तदर्थं च स्वयोग्यताम् ॥
पूर्वमाह ततः प्रश्नं प्रथमाध्यायसंग्रहः ॥ ४१ ॥

त० प्र०— चतुर्थस्यैकस्यैव पृथक्त्वे तुल्यबलत्वायाह ॥ अग्रे केन विमोचेतेति ॥ तत्र चाधिकारो वक्तव्य इति स्वाधिकारं वदन्नाह ॥ अनेन प्रथमाध्याये जिज्ञासुः प्रथमाधिकारी निरूपितो वक्ता च श्रुतभागवत इति ॥ ४१ ॥

त० दी०— उत्साहसंगतिः प्रह्वः शास्त्रारंभोपदेशनम् ॥
प्रश्नाभिप्रायकथनेनाऽभिनंदनमुक्तवान् ॥ ४२ ॥

त० प्र०— द्वितीयाध्यायसंग्रहमाह ॥ उत्साहसंगतिरिति ॥ सूतस्योत्साहः कथनप्रयोजनं च प्रथमश्लोकार्थः ततो द्वाभ्यां प्रह्वः शुकनमस्कारः शास्त्रारंभोपदेशनमेकेन अभिनंदनं तथा ॥ ४२ ॥

१ प्रश्नः ।

त० दी०— पंचभिः पूर्वनिर्धारो द्वितीये द्वादश स्मृताः ॥
एवं वेदार्थनिर्धारे श्लोकाः सप्तदश स्मृताः ॥ ४३ ॥

त० प्र०— ततः स्वयमेव श्लोकविभागानाह ॥ पंचभिरिति ॥ कर्म पंचविधमिति पुरुषो द्वादशविध इति तत्त्वविचारे द्वादश एतावानेव वेदार्थ इति ॥ "सप्तदशो वै प्रजापतिः" इति श्रुतेः ॥ सप्तदश श्लोका वेदार्थे परिनिष्ठिताः । वेदे ततोऽधिका गतिर्नास्तीति सूचितम् ॥ ४३ ॥

त० दी०— धर्मज्ञानार्थनिर्धाराच्छ्रवणादिभिरादरात् ॥
प्रेमोत्पत्तौ हरिः प्रीतस्तेन सर्वं भवेदिति ॥ ४४ ॥

त० प्र०—एतयोः प्रथमं निरूपणे निमित्तमाह ॥ धर्मज्ञानार्थनिर्धारादिति ॥ एतयोः प्रजापतिमात्रत्वं चेत्तदैव भगवच्छ्रवणादिकं भवतीति भगवच्छ्रवणसिद्ध्यर्थं पूर्वं तयोर्निरूपणम् ॥ तत आदरेण श्रवणादिकरणे प्रेमोत्पत्तिः । ततो हरिप्रीतिः ॥ ततोऽवतारादीति क्रमः सिध्यति ॥ ४४ ॥

त० दी०— जन्मकारणलीले च सप्तभिः पंचभिर्यथाव् ॥
भक्तोद्धारो भक्तिसिद्धिः क्रमादेव तयोः फलम् ॥ ४५ ॥

त० प्र०— जन्मकारणनिर्द्धारे सप्तश्लोका लीलायां पंच ॥ एतयोः प्रयोजनमाह॥ भक्तोद्धारो भक्तिसिद्धिरिति ॥ ४५ ॥

त० दी०— सत्त्वनिर्धारणे पंच गुणातीते द्वयं स्मृतम् ॥
विशेषभक्तिसिद्ध्यर्थं विचारोऽत्र निरूपितः ॥ ४६ ॥

प्र० त०— प्रथमे भेदद्वयमाह ॥ सत्त्वनिर्द्धारणे पंचेति ॥ पंचानां विचारकत्वात् ॥ विचारोपयोगमाह ॥ विशेषभक्तिसिद्ध्यर्थमिति ॥ ४६ ॥

त० दी०— सामान्यतोऽस्य मूलत्वकथनाय विशेषतः ॥
नोक्तं स्वरूपाविज्ञानात्फलवाक्यं मृषा भवेत् ॥
अतस्तदुक्त्वा पश्चात्तु कुंतीवाक्ये वदिष्यति ॥ ४७ ॥

त० प्र०—प्रयोजनांतरमाह ॥ सामान्यत इति ॥ ननु कृष्णावतारे प्रयोजनं पृष्टं तत्कथं सामान्यावतारप्रयोजनेनोत्तरं तत्राह ॥ विशेषतो नोक्तमिति॥ तत्र हेतुः शौनकस्य कृष्णस्वरूपाविज्ञानात् ॥ ज्ञाते हि स्वरूपे जन्महेतुर्वक्तव्यः ॥ यदि स्वरूपज्ञानरहितस्याऽपि जन्मप्रयोजनमुच्यते तदा हेत्वभावे फलमिव तं प्रति फलवाक्यं मृषा भवेत् । अनेन सर्वत्रैवं वक्तव्यमित्युपदेशः सूचितः । अतः

१ नादि ।

प्रथमं स्वरूपमुक्त्वा तदवगतं नवेति निश्चित्य श्रद्धातिशयात्तदवगतिं ज्ञात्वा पश्चात्कुंतीवाक्ये वदिष्यति ॥ "केचिदाहुरजं जातम्" इत्यादिना ॥ ४७ ॥

त० दी०—उत्पादनं प्रवेशश्च नानात्वं भोगरक्षणे ॥
पूर्वे पंचविधा लीला द्वितीयस्तेन पूरितः ॥ ४८ ॥

त० प्र०—लीलायाः पंचविधत्वं स्पष्टयति ॥ उत्पादनमिति ॥ अवतारात्पूर्वं स्वरूपस्थितस्य पंचविधा लीला । अवतीर्णस्याऽनेकविधामग्रिमाध्याये वक्ष्यति ॥ एतावान् द्वितीयाध्यायार्थः ॥ अनेन श्रोता अमत्सरो वक्ता चतुरश्चेति द्वितीयाधिकारः सूचितः ॥ ४८ ॥

त० दी०—आविर्भावोऽवतारश्च तुल्यसत्त्वशरीरगः ॥
अशुद्धशुद्धभेदेन निर्गुणः कृष्ण एव हि ॥ ४९ ॥

त० प्र०—तृतीयाध्यायार्थमाह ॥ आविर्भाव इति ॥ मध्ये नारदादय आवेशिनो निरूपिता इति दूषणं परिहरति ॥ तुल्येति ॥ यथा महाराजः स्वदेशे पर्यटन् स्वार्थं निर्मितेषु गृहेषु तिष्ठति कदाचित्स्वकीयस्यापि गृहे तदा तत्स्थितिपर्यंतं तद्गृहमपि राजगृहं भवति ॥ अतो विशेषाभावादावेशावतारयोस्तुल्यतया गणना ॥ ४९ ॥

त० दी०—ज्ञानशक्त्या क्रियाशक्त्या चाऽवतारं करोत्यजः ॥
वराहादिस्वरूपेण बलकार्यं जनार्दनः ॥
दत्तव्यासादिरूपेण ज्ञानकार्यं तथा विभुः ॥ ५० ॥

त० प्र०—स्वयं तु स्पष्टार्थं विभागं कुर्वन् अवतारे भेदकमाह ॥ ज्ञानशक्त्येति ॥ द्विविधो ह्यवतारो दुःखस्य बाह्याभ्यंतरभेदेन द्विरूपत्वात् । क्रियाशक्त्या बाह्यदुःखनिराकरणार्थमवतारः ॥ ज्ञानशक्त्या चांतरदुःखनिराकरणार्थम् ॥ क्रियास्थानानि निर्दिशति ॥ वाराहादीति ॥ आदिशब्देनकूर्मनृसिंहादयः ॥ दत्तात्रेयः ॥ व्यासः ॥ आदिशब्देन कपिलादिः ॥ ५० ॥

त० दी०—मत्स्यः कूर्मो वराहश्च सिंहवामनभार्गवाः ॥
मन्वंतरावताराश्च व्यासबुद्धौ च राघवः ॥ ५१ ॥
कपिलो दत्त ऋषभः शिशुमारो रुचेः सुतः ॥
नारायणो हरिः कृष्णस्तापसो मनुरेव च ॥ ५२ ॥
महिदासस्तथा हंसः स्त्रीरूपो हयशीर्षवान् ॥

तथैव वडवावक्त्रः कल्किर्धन्वंतरिः प्रभुः ॥
इत्याद्याः केवलः कृष्णः शुद्धसत्त्वेन केवलः ॥ ५३ ॥

त० प्र०— इदानीमवतारान् गणयति ॥ मत्स्य इति सार्धैस्त्रिभिः ॥ तत्र भागवते अनुक्ता अपि पंचरात्राद्यागमेषूक्ताः प्रकृतोपयोगिन इति निरूपिताः॥५१॥५२॥५३॥

त० दी०— श्रीब्रह्मरुद्रशेषाश्च वीर्देंद्रो काम एव च ॥
कामपुत्रोऽनिरुद्धश्च सूर्यश्चंद्रो बृहस्पतिः ॥ ५४ ॥
धर्म एषां तथा भार्या दक्षाद्या मनवस्तथा ॥
मनुपुत्राश्च ऋषयो नारदः पर्वतस्तथा ॥ ५५ ॥
कश्यपः सनकाद्याश्च वह्न्याद्याश्चैव देवताः ॥
भरतः कार्तवीर्यश्च वैन्याद्याश्चक्रवर्तिनः ॥ ५६ ॥
गयश्च लक्ष्मणाद्याश्च त्रयो रोहिणिनंदनः ॥
प्रद्युम्नो रौक्मिणेयश्च तत्पुत्रश्चाऽनिरुद्धकः ॥ ५७ ॥
नरः फाल्गुन इत्याद्या विशेषावेशिनो हरेः ॥
ज्ञानक्रियोभययुतः कृष्णस्तु भगवान् स्वयम् ॥ ५८ ॥

त० प्र०— आवेशिनो निरूपयति ॥ श्रीब्रह्मरुद्रेति सार्धैश्चतुर्भिः ॥ साधारणेनाऽपि निरूपितस्यापि कृष्णस्य विशेषमाह ॥ ज्ञानक्रियोभययुत इति ॥ ॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७ ॥ ५८ ॥

त० दी०— माहात्म्यज्ञापने मुक्तिस्तदर्थं बंधनिर्णयः ॥
नित्यमुक्तत्वकथनं दुर्ज्ञेयत्वं च वै हरेः ॥ ५९ ॥
विवृतिस्तस्य पूर्वैर्हि कृता येनादिमध्ययोः ॥
भक्तिः सिध्यति तत्क्षेमः प्रतिज्ञा चाऽत्र पूरणम् ॥ ६० ॥

त० प्र०— सामान्यप्रयोजनोक्तिमारभ्य भागवतोक्तेः पूर्वं चत्वारोऽर्था निरूपितास्तेषां प्रयोजनमाह ॥ माहात्म्यज्ञापन इति ॥ माहात्म्यज्ञापनं तत्रोक्तम् ॥ भागवतश्रवणस्य च ॥ मुक्तेः स्वरूपसिद्ध्यर्थं बंधनिर्णयः ॥ भजनसिद्ध्यर्थं भगवतो नित्यत्वं दुर्ज्ञेयत्वं चोक्तमित्यर्थः ॥ एतद्द्वयविवरणात्मकं भागवतम् ॥ उत्तमस्य संक्षेपकथनेनापि भक्तिर्भवतीति आदिमध्ययोस्तु न भवतीति तदर्थं विवरणम् ॥ तत्क्षेपस्तत्कथयिष्याम इति प्रतिज्ञा ॥ गुणज्ञानं तृतीयाधिकारो वक्तुः ॥ तत्र मादरो द्वितीयः ॥ अत्राऽध्यायः प्रकरणं च पूरितम् ॥ ५९ ॥ ६० ॥

१ वीन्द्रेन्दः ॥

त० दी०—पूर्वं संभावनामात्रात्पृष्टे दत्त्वोत्तरं स्वतः ॥
ग्रंथोऽप्यस्तीति तच्छ्रुत्वा शौनको हर्षसंप्लुतः ॥ ६१ ॥

त० प्र०—द्वितीयप्रकरणस्य हेतुभूतत्वात्पूर्वपक्षकथनं विरोधित्वाभावाय हर्षश्च वक्तव्यस्तमाह ॥ पूर्वमिति ॥ लोको हि स्वरुच्या क्वचित्प्रवर्तते ॥ तदेव चेच्छास्वसिद्धं तदा हर्षो भवत्येव ॥ ६१ ॥

त० दी०—स्वरूपोत्पत्तिहेतूनां पाठाध्यापनयोरपि ॥
अयुक्तत्वात्तु संप्रश्नो ह्यर्थस्याऽलौकिकत्वतः ॥ ६२ ॥

त० प्र०—पूर्वपक्षाणां संग्रहमाह ॥ स्वरूपोत्पत्तिहेतूनामिति ॥ सूतसूतेति स्वरूपप्रश्नः ॥ कस्मिन् युग इत्युत्पत्तिप्रश्नः ॥ केन संचोदित इति हेतुप्रश्नः ॥ एवं त्रयः प्रश्नाः ॥ ततोऽग्रे त्रयः प्रश्नाः ॥ शुकस्य कथं पठनं कथं वा पाठनं परीक्षितो वा कथं प्रायोपवेशस्तस्य माहात्म्यं पूर्वं ज्ञातमिति तद्भवति न वेति संदिह्य तस्य जन्मकर्मप्रश्नः ॥ एवं चत्वारो भवंति ॥ ननु तथापि भागवतमेव प्रष्टव्यं किं तत्प्रश्नेनेत्याशंक्याह ॥ अयुक्तत्वादिति ॥ उत्पत्तौ प्रवृत्तौ वा यद्युक्तिविरुद्धं तस्मिन् श्रुते स्वस्यापि फलं तथा न भवतीति प्रश्न इति भावः ॥ ननु यथोपपद्यते तथैव कल्प्यतां तत्राह ॥ अर्थस्याऽलौकिकत्वत इति ॥ लौकिको हि स्वेच्छया कल्प्यो भवेदिति ॥ ६२ ॥

त० दी०—श्रोतुः सर्वपरित्यागाच्छ्रवणे किं प्रयोजनम् ॥
स्वत एवोत्तमत्वाच्च कृष्णानुग्रहणादपि ॥ ६३ ॥

त० प्र०—अयुक्तत्वमेवाह ॥ श्रोतुरिति ॥ स ह्यात्मानमेव फलत्वेन मन्यते । तत्र विषयाणां बाधकत्वं मत्वा तत्परित्यागहेतुत्वं सर्वेषां शास्त्राणां च मन्यते ॥ शुकस्तु स्वत एव निवृत्तविषय इति किं तस्य भागवतेन सुतरां वर्णनेन किमुत्कर्षार्थं चेत्तत्राह ॥ स्वत एवोत्तमत्वादिति ॥ स तु जन्मांतर एव सर्वोत्तमः पूर्णज्ञानो यत उपनयनमपि नाऽपेक्षते तादृशस्य किं भागवतेन भविष्यति ॥ कृष्णानुग्रहोपि तस्य स्वत एव जातोऽस्ति ॥ एतत्पदद्वयमुत्तरत्रापि योजनीयम् ॥ परीक्षिदप्येतादृशः ॥ तस्यापि किं भागवतेन ॥ ६३ ॥

त० दी०—अतस्तज्जन्मसंप्रश्नः कृष्णभक्त्या प्रसंगतः ॥
प्रश्नत्रयेऽथ संपन्ने हेतुपूर्वं द्विधोत्तरम् ॥ ६४ ॥

त० प्र०—भगवत्कृपा स्पष्टीकर्तुं जन्म पृच्छतीत्याह ॥ अतस्तज्जन्मसंप्रश्न

इति ॥ मतांतरमाह ॥ कृष्णभक्त्या प्रसंगत इति ॥ प्रासंगिक्येव संगतिः ॥ भक्तेषु भगवत्कृपा तत्प्रसिद्धेति ॥ भक्त्या प्रश्नः ॥ मुख्यतयात्र प्रश्नत्रयं भागवते स्वरूपोत्पत्तिहेतूनाम् ॥ अन्यत्तु तस्मिन् ज्ञात एवाऽऽगमिष्यतीति त्रय एव प्रश्नाः सिद्धास्तदाह ॥ प्रश्नत्रयेऽथ संपन्न इति ॥ अथेति भिन्नप्रक्रमे ॥ व्यासस्योत्पत्तिपूर्वं कथनाद्भिन्नः प्रक्रमः ॥ अथ प्रथमप्रश्नस्य द्वितीयस्कंधे उत्तरं भविष्यति ॥ "कस्मिन् युगे प्रवृत्तेयम्" इत्यस्य "कुतः संचोदितः" इत्यस्योत्तरमुच्यते ॥ तत्रापि तृतीयस्योत्तरमधुना निरूप्यते ॥ प्रवृत्तिमुत्तरत्र प्रकरणे वक्ष्यति ॥ अनेनैकैकमुत्तरमेकैकं प्रकरणं परिगृह्णातीति सूचितम् ॥ ६४ ॥

त० दी०—उपोद्घातो हेतुरूपस्त्रयाणां रूपमेव च ॥
मध्यमोयमुपोद्घातः फलपर्यवसानतः ॥ ६५ ॥

त० प्र०— केन प्रेरित इत्यत्र नारदेन प्रेरित इत्युत्तरम् ॥ तस्य प्रेरणे हेतुरेकेनाऽध्यायेन निरूप्यते ॥ ततो युक्तिस्ततः प्रेरणमिति ॥ कृतिरनुवाद इति हेतावेव प्रकरणं पर्यवसितमित्याह ॥ उपोद्घातो हेतुरूप इति ॥ हेतुरूप उपोद्घातत्वेन वर्ण्यते अतो हेतोरपि विचारः कर्तव्यः ॥ नारदस्य बोधने कः प्रसंगः किं प्रयोजनमिति को वा नारद इति त्रयाणां स्वरूपं वक्तव्यम् ॥ नन्वयं परंपरया भागवते उपयुज्यत इति प्रथम एवाधिकारः कुतो न भवति तत्राह ॥ मध्यमोयमुपोद्घातइति ॥ ६५ ॥

त० दी०— यद्वाक्यात्सर्वविश्वासः फले तस्य विपर्ययः ॥
कलौ फलं तदुक्ते किमित्यनिर्वृतिवर्णनम् ॥ ६६ ॥.

त० प्र०— नारदकथने प्रसंगमाह ॥ यद्वाक्यादिति ॥ अयं चतुर्थाध्यायार्थः॥ प्रश्नस्तदंगम् ॥ प्रकरणादौ प्रश्नो नाध्यायार्थबाधकः ॥ ६६ ॥

त० दी०— उत्तरं च कृतिश्चैकं नारदस्य फलं पृथक् ॥
तदीयत्वं च तत्त्वं च मध्यमोत्तमयोः फले ॥ ६७ ॥

त० प्र०— द्वितीयाध्यायार्थमाह ॥ उत्तरं च कृतिश्चैकमिति ॥ नारदस्य फलं पृथगिति तृतीयाध्यायार्थः ससाधनं फलम् ॥ नन्वेवं सति मध्यमप्रकरणे श्रोतुर्वक्तुश्चाधिकारः को वा सिद्ध इत्याशंक्य तमाह ॥ तदीयत्वमिति ॥ अनिर्वृत्या व्यासस्य तदीयत्वे हेतुरुच्यते ॥ उदासीनं भगवान् किमित्येवं कुर्यात् ॥ अतो

१ भन्ये तु ।

व्यासो भगवदीय इति द्वितीयाध्याये बोधितः ॥ तथा नारदस्यापि ॥ उत्तमप्रकरणस्य तु तत्त्वं फलम् ॥ शुको भगवान् राजापि तथा जात इति ॥ ६७ ॥

त० दी०—सत्संगोज्ञानविज्ञाने कर्मनिर्णय एव च ॥
उक्तस्यानुभवांतत्वं वर्णितं नारदेन हि ॥ ६८ ॥

त० प्र०— तत्राप्येवं निर्णयः ॥ भगवदीयत्वं द्विधा ॥ भगवान् स्वार्थं प्रथमत एव किंचित्करोति तत्र न साधनापेक्षा ॥ अन्यस्तु साधनेन भगवदीयो भवति ॥ कथं भवतीत्याकांक्षायां नारदः स्ववृत्तांतं क्रमेणाहेत्याह ॥ सत्संग इति ॥ आदौ सत्संगः साधनम् ॥ ततो जीवस्वरूपज्ञानं भगवत्स्वरूपज्ञानं च ॥ ततो भगवदनुभवः ॥ सिद्धत्वात्तत्र न किंचित्कर्तव्यमिति स्वानुभवेऽनुभावनामात्रानुभवो मिथ्येति स्वस्य भगवदीयत्वे सिद्धे यथा नारदोहमिति पश्चान्मन्यते तदर्थं साधनम् ॥ कर्मणां भगवति समर्पणम् । समाधौ भगवदनुभवः । ततो भगवद्वाक्यात्तथात्वमिति ॥ एतदेव हि नारदेन वर्णितम् ॥ ६८ ॥

त० दी०—शब्दब्रह्मणि निष्णातो न परस्नानतः पुरा ॥
फलं भवेदिति स्वस्य फलाध्यायनिरूपणम् ॥ ६९ ॥
श्रोतुः फलं नाऽवतारादवतारफलं फलम् ॥
तदुक्तमन्यशेषत्वादुत्तरत्र न मध्यमे ॥ ७० ॥

त० प्र०— नन्वेवं सति ज्ञानविज्ञानोपदेशे फलं स्वत एव भविष्यति किं षष्ठाध्यायेनेत्याशंक्याह ॥ शब्दब्रह्मणीति ॥ ननु व्यासस्यांशावताराच्चदीयत्वं स्वत एव तत्कथं श्रवणेन तदीयत्वं तत्राह ॥ श्रोतुः फलमिति ॥ अवतारमात्रेण तदीयत्वं जातम् ॥ किं तु श्रोतुः फलं श्रवणानंतरमेव फलम् ॥ अवतारफलमपि तदैव जातमित्यर्थः ॥ नन्वेवं सति तदीयत्वसिद्ध्यर्थं भागवतनिर्माणमत्रैव वक्तव्यं स्यादित्यत आह ॥ तदुक्तमन्यशेषत्वादिति ॥ उत्तमार्थं हि तस्य निर्माणं तदीयत्वं तु प्रासंगिकमानुषंगिकफलं सेत्स्यति ॥ अतो मध्यमप्रकरणे न निरूपितम् ॥ ६९ ॥ ७० ॥

त० दी०— प्रतिबंधनिवृत्तिश्च साधनाचरणं तथा ॥
रागाभावात्फलं कृष्णवाक्यान्मध्यममीरितम् ॥ ७१ ॥

त० प्र०— ननु प्रासंगिकस्याप्यसिद्धौ कथं मध्यमत्वं सेत्स्यति तत्राह ॥ प्रतिबंधनिवृत्तिश्चेति द्वाभ्याम् ॥ व्यासे अन्यासक्तिः प्रतिबंधिका । नारदे च माता

साधनाचरणं नारदपूजादि । नारदस्य पुनः सताम् । एकत्राग्रहाभावः । अपरत्र रागाभावः । एवं त्रिभिर्भगवदीयत्वम् ॥ नन्वधिकारित्वमेवास्तु नारदस्य कथं तदीयत्वं तत्राह ॥ कृष्णवाक्यादिति ॥ आकाशवाणीवाक्यात् । "गंता मज्जनतामसि" इति मध्यमं फलं तदीयत्वम् ॥ ७१ ॥

त० दी०— दुःखाभावात्स्वतंत्रत्वाद्भयाभावाच्च संसृतेः ॥
फललं स्फुरणं चापि सर्वदाऽवांतरं फलम् ॥ ७२ ॥

त० प्र०— ननु नारदस्यापि पुनः पुनर्जन्मसंभवान्निकृष्टत्वमेव कुतो न भवतीत्याशंक्याह ॥ दुःखाभावादिति ॥ तस्य संसारकृतं दुःखं नास्ति नापि परतंत्रता नापि विषयादिभ्यो भयमतो नारदत्वं फलमेव ॥ किं च सर्वदा भगवत्स्फुरणमपि तस्य जायते ॥ अतो भगवद्भावान्नारदत्वमवांतरं फलमित्यर्थः ॥ ७२ ॥

त० दी०— नात्मवत्करणं युक्तं बोधनं प्रीणनाद्धरेः ॥
अविश्वासात्स्वकथनं वारितं नारदेन वै ॥
सत्यं तदितिविज्ञानात्स्तुतिस्तस्याऽत्र पूरणम् ॥ ७३ ॥

त० प्र०— नन्वेवं सति मध्यमत्वसिद्ध्यर्थं व्यासस्यापि साधनं कथं नोच्यते तत्राह ॥ नाऽऽत्मवत्करणमिति ॥ यथा नारदो बोधितः संन्यासिभिस्तथा न बोधनीयः ॥ यथा वा "नामान्यनंतस्य" इत्यादिप्रकारेण नारदेन कृतं तथा न कर्तव्यं तत्र हेतुर्हरेः प्रीणनात् । स्वत एव व्यासे हरिप्रीतिः ॥ ननु तथापि परंपरया प्राप्तं भागवतं सूतवत्कथं नोक्तवान् ॥ मया ब्रह्मणः स्थाने पठितं तत्तुभ्यं वदामीति तत्राह ॥ अविश्वासादिति ॥ परंपरा लोके न प्रसिद्धेति संवादाभावान्न कथितम् ॥ "समाधिनाऽनुस्मर" इति वाक्यात् ॥ सामान्यतः कथितं च । तथा सति संवादो भवति ॥ न चेत्तदपि नारदोक्तं सत्यमिति यद्यवगम्यते तदैव समाधौ प्रवृत्तिर्भवति ॥ अन्यथा परंपरा न स्यादित्याशंक्याह ॥ सत्यं तदिति ॥ विज्ञानादिति स्तोत्रकरणाद्गदायते ॥ "अहो देवर्षिर्धन्यः" इति नारदोक्तमस्य हृदये समागतमिति तेनैव प्रकरणं पूरितम् ॥ ७३ ॥

त० दी०— उपोद्घातो ग्रंथमात्रे प्रश्न एकस्ततः कृतः ॥
वक्तुश्चापि पृथक् प्रश्नः फलसिद्धेस्तु पूर्ववत् ॥ ७४ ॥

त० प्र०— तृतीये प्रकरणे प्रथमतः शौनकस्य प्रश्ने प्रयोजनमाह ॥ उपोद्घात इति ॥ द्वितीयं प्रकरणं हेतुभूतं भवति ॥ भागवतोत्पत्तिसाधनं तत्तदैव निर्वहेत्

यदि नारदगमनानंतरमेव तत्कुर्यात् ॥ अन्यथा कालांतरकरणे पूर्वोक्तस्य हेतुत्वं न स्यात् । अत उपोद्घातोऽयं तदर्थविचाररूप इति ग्रंथस्वरूपमात्रनिष्पत्त्यर्थं पूर्वमेकः प्रश्नः कृतः ॥ ततो ग्रंथोत्पत्तावुक्तायां वक्तुश्चापि शुकस्य वक्तृत्वेनोपपद्यत इति द्वितीयः प्रश्नः ॥ स तु पूर्ववदनुवादरूपः पुनःस्मारणं तस्याऽऽवश्यकबोधार्थम् ॥ उत्तमत्वं च वक्तुः सिध्यतीत्याह ॥ फलसिद्धेरिति ॥ मुक्तिः फलं च तच्छुकस्य सिद्धमिति ॥ ७४ ॥

त० दी०— माहात्म्यं सर्वनिर्द्धारो यस्मादत्रैव वर्णितः ॥
श्रुतिमात्रात्ततो भक्तिरविश्वासान्न रागिणः ॥ ७५ ॥

त० प्र०—एवं प्रश्नाभिप्रायमुक्त्वा उत्तरे "यस्यां वै श्रूयमाणायाम्" इत्यत्र युक्तित्वाबाधाभावाय साधिकामुपपत्तिमाह ॥ माहात्म्यं सर्वनिर्द्धार इति ॥ यस्माद्भागवते भगवतो माहात्म्यं निःसंदेहार्थं सर्ववस्तुनिर्द्धारश्चोक्तः । अतः श्रुतमात्रादेव ततो भक्तिर्भवति ॥ तर्हीदानींतनानां कथं न जायते तत्राह ॥ अविश्वासादिति ॥ उक्तार्थविश्वासोऽत्र अधिको हेतुर्वक्तव्यः स च व्यासोक्तत्वेन जायमानोपि रागस्य प्रतिबंधकस्य विद्यमानत्वान्न जायते ॥ एवं सूचयितुं शुकमध्यापयामासेत्युक्तमित्यर्थः ॥ ७५ ॥

त० दी०— फलेसिद्धेऽपि सेव्येयं विषयोत्कर्षतः कृतेः ॥
अत एवैष्यविज्ञानादात्मज्ञापनसूचनम् ॥ ७६ ॥

त० प्र०—इदानीं भक्तिसहितस्य ग्रंथस्य फलं निर्धारयितुं पुनः सूतशौनकसंवाद इति सूतोक्तं फलं स्पष्टं वदति ॥ फले सिद्धेऽपि सेव्येयमिति ॥ यद्यप्यस्य मुक्तिः फलं तथापि फलापेक्षया साधनमेव फलरूपं तद्रागरहितस्यैव तथाऽनुभवो भवति नान्यस्येति सूतवाक्यनिर्धारः ॥ तेनात्रैतत्सिद्धम् ॥ प्रवृत्तिपराणामपि यथा भक्तिर्भवति तदर्थमिदमारब्धम् ॥ ते हि विषयिणो विषयोत्कर्षे एव प्रवर्तंते ॥ उत्तमविषयार्थं च हीनविषयं परित्यजंति ॥ अतो मोक्षसाधनत्वमस्या अनुक्त्वा कल्पनामपि निराकर्तुं मुक्तस्य प्रवृत्तिमाह ॥ तेन व्यासस्तथा कृतवान् ॥ यथा लोको विषयसौंदर्यादेव प्रवर्तते तथा कृतेरात्मज्ञापनं सूचितम् ॥ "प्रवर्तमानस्य गुणैरनात्मनः" इति नारदज्ञापनं सूचितमित्यर्थः ॥ नन्वग्रे विषयसौंदर्यात्प्रवृत्ता भविष्यंतीत्यत्र किं प्रमाणं मूढा उत्कृष्टेपि विषये न प्रवर्तेत इत्याशंक्याह ॥ अत एवैष्यविज्ञानादिति ॥ कृतेरेव हेतोरैष्यविज्ञानमपि सूचितम् ॥ तदैव

नारदोक्तं कृतं भवतीति ॥ अनेन प्रवर्तमानस्य दृढविश्वासो बोधितः ॥ एवं सफलं भागवतं नारदवाक्यात्कृतमिति फलितम् ॥ ७६ ॥

त० दी०— स्वपरप्रतिबंधोनं स्फीतं राज्यं जहौ नृपः ॥
इति वैराग्यदार्ढ्योक्त्यै प्रोक्ता द्रौणिजयादयः ॥ ७७ ॥
इति केचिदिह प्राहुर्नैतत्साधुतरं वचः ॥
द्रौणेर्जये न सोऽस्त्येव न दातुः प्रतिबंधता ॥ ७८ ॥
न च कृष्णकथा युक्ता स्तुतिर्मोहकथाऽपि वा ॥
प्रतिबंधस्तु संप्राप्ते तस्मादष्टकथा मुधा ॥ ७९ ॥

त० प्र०—अधुना तेन परीक्षित्स्थाने निरूपितमिति प्रवृत्तिं वक्तुं परीक्षितो जन्मादि वक्तव्यम् ॥ तच्च द्वादशेऽध्याये वक्ष्यति मध्ये द्रौण्यादिजयः कुंतीस्तुतिर्भीष्ममुक्तिर्भगवन्निर्याणं द्वारकाप्रवेशश्चेति पंचांगानि ॥ तेषां श्रोतृजन्मांगता कथमिति संदेहे "केचिदाहुः" तन्मतमनूद्य दूषयति ॥ स्वपरप्रतिबंधोनमिति ॥ ते हि वैराग्यशेषत्वेन पंचाध्यायीं निरूपयंति ॥ स्वा युधिष्ठिरादयः ॥ परे भीष्मादयः ॥ ते चेत्परीक्षितः प्रायोपवेशनपर्यंतं तिष्ठेयुस्तदा तस्य विषयाभावादेव वैराग्यमिति नोत्कर्षः सिध्यति ॥ तथा भगवत्कृपया स्फीतत्वं स्वत्वं परत्वं च ॥ नैतत्साधुतरं वचनं कार्यकारणयोरव्यवधानाभावात् ॥ न वा युधिष्ठिरस्य राज्यदातुः प्रतिबंधकत्वम् ॥ न वा भगवत्कथाया उपयोगः कृपा तु त्यागे प्रतिबंधिका अतो जन्मार्थं परित्यज्य सप्तमादिपंचदशपर्यंतमष्टाध्यायकथा मुधा स्यात् ॥ ७७ ॥ ७८ ॥ ७९ ॥

त० दी०— पुरुपत्रयशुद्धस्य जननेपि कृपावतः ॥
सर्वत्यागे सतां संगे विश्वासः सर्वथा भवेत् ॥ ८० ॥
इति तस्याधिकारित्वसिद्ध्यै पांडववर्णनम् ॥
अपृष्टं च प्रतिज्ञातं तस्मान्नाऽस्त्यत्र दूषणम् ॥ ८१ ॥

त० प्र०— एवं परमतं दूषयित्वा स्वमते तेषां पूर्वोत्तरांगत्वमित्यभिप्रायेणाऽऽह ॥ पुरुपत्रयशुद्धस्येति ॥ पंचाध्यायी पंचाग्निन्यायेन जनने शुद्धिहेतुः ॥ जातस्य च प्रतिबंधाभावार्थमध्यायत्रयम् ॥ अमुक्ते पितरि पुत्रमुक्तेः प्रतिबंधात् । ततः कालप्रतिबंधाभावाय द्वयम् ॥ ततोऽद्भुतकर्मणो भगवतः कृपा शापरूपा ॥ ततः श्रोतृत्वमिति तदेतदाह ॥ पुरुपत्रयशुद्धस्येत्यादिना ॥ यथा पंचाध्याय्या पुरुपत्रयशुद्धिर्भवति तदनुपदं वक्ष्यते ॥ जन्मसमये कृपा स्वतः कालतश्च स्वजन्मा-

ध्यायार्थः ॥ अग्रे पंचाध्याय्याः सर्वत्यागसिद्धिरर्थः ॥ ततो द्वाभ्यां सतां संगः ॥ तदा भागवते विश्वासः ॥ विश्वास एवांगं भागवतश्रवणे ॥ तस्यांगत्रयं सतां संगः सर्वत्यागः परमा शुद्धिश्चेति ॥ शुद्धौ षडंगानि ॥ तत्र मुख्या भगवत्कृपा ॥ शरीरहेतोर्बीजस्याशुद्धिः पंचधा भवति दुष्टपारंपर्यतः ॥ तच्च पुरुषतः स्त्रीतश्चेति द्वयम् ॥ तदर्थं सप्तमाध्याये परमा कृपा अर्जुने निरूपिता ॥ अष्टमे च कुंत्याम् ॥ ततः पोषकान्नशुध्यर्थं भीष्मोपदेशो जीवसचायामन्नदोषस्यावश्यकत्वात् ॥ अतो ज्ञानिनामेव शुद्धिः ॥ भीष्ममुक्त्या च ज्ञानशुद्धिस्तृतीयमंगम् ॥ बीजस्य संबंधिनां साधारणानां भगवत्परत्वं चतुर्थी शुद्धिः ॥ सा भगवन्निर्गमे भवतीति तथोक्तिः ॥ तत आंगतुकदोषाभावार्थं भगवतः कार्यसमाप्तिरिति ॥ तस्मादस्मन्मते श्रोतुरधिकारस्त्रयोदशभिः संपद्यते नाऽन्यमत इत्यर्थः ॥ अतः शौनकैरपृष्टमपि "संस्थां च पांडुपुत्राणाम्" इति प्रतिज्ञोपपद्यते ॥ चकाराचेषु भगवतः कृपा ॥ शुद्धिरेव मूलमिति ज्ञापयितुं "कृष्णकथोदयम्" इति वचनम् ॥ तस्मान्मूल एवाऽयमर्थः सूचित इति नास्मन्मते दूषणसंभावनापीत्यर्थः ॥ ८० ॥ ८१ ॥

त० दी०— विद्यमाने समुद्धारस्तत्रत्यानां स्वयं कृतः ॥
स्वाभावेतु कथैव स्यादित्यनंतर उक्तवान् ॥ ८२ ॥

त० प्र०— ननु किमित्येवं निर्बंधेन परीक्षिदेव श्रोतृत्वेन निरूप्यते स्वतः शुद्धानां सनकादीनां विद्यमानत्वादित्याशंक्याह ॥ विद्यमान इति ॥ न केवलमधिकारनिरूपणमात्रमत्र प्रयोजनं किं तु भागवतादेव सर्वोद्धार इत्यपि प्रतिपादनीयम् । अतः सनकादीन् परित्यज्य राजा श्रोता निरूपितः ॥ अवतीर्णः कृष्णो यावद्भूमंडले स्थितस्तावद्रूपेणैव सर्वान् मोचितवान् ॥ तदनंतरं भागवतमेव मोचकं न त्वन्य उपायः कश्चित्कस्यचिदप्यस्तीति ज्ञापयितुं भगवद्गमनानंतरमेव परीक्षिदुत्पन्नः स भागवतादेव मुक्त इति निरूप्यते ॥ ८२ ॥

त० दी०—ऐहिकेपि समस्तं हि येषां कृष्णानुभावितम् ॥
तद्वंशे व्यवधानेन जातः श्रद्धाऽत्र तस्य हि ॥ ८३ ॥

त० प्र०—ननु शुद्धिरेव तर्हि वक्तव्या किं पांडवानां भगवद्वर्णनेनेत्यत आह ॥ ऐहिकेपीति ॥ ८३ ॥

त० दी०—यत्र पांडवसामर्थ्यं प्रतीत्याऽपि विभाव्यते ॥
तत्त्यक्त्वा कृष्णसामर्थ्यं केवलं यत्र तत्कथा ॥ ८४ ॥

त० प्र०— नन्वेवं सति सर्वमेव भारतं भगवत्परत्वेन वक्तव्यं स्यादित्याशंक्याह ॥ **यत्र पांडवसामर्थ्यमिति** ॥ वस्तुतः सर्वत्र सामर्थ्यमेव तथाप्यश्वत्थामजयादिः प्रतीत्यापि कृष्णानुभावकृत एवेति सौप्तिककथामारभ्य स्वर्गारोहणपर्यंतं भारतकथा कृष्णपरत्वेन निरूप्यते ॥ ८४ ॥

**त० दी०— अनन्यशरणत्वाय रक्षणाशक्तितः स्वतः ॥**
**पुत्रमारणमारभ्य मुक्त्यंता वर्ण्यते स्फुटा ॥**
**तेषाममुक्तौ भोगार्थं प्रतिबंधो भवेत्कचित् ॥ ८५ ॥**

त० प्र०— वर्णनायाः प्रयोजनमाह ॥ **अनन्यशरणत्वायेति** ॥ अनन्यशरणत्वज्ञापनाय अनन्यशरणत्वं यथा सिध्यति तदर्थं स्वसामर्थ्याभावमाह ॥ **रक्षणाशक्तितः स्वत इति** ॥ ननु मोक्षः कुत्रोपयुज्यते तत्राह ॥ **तेषामिति** ॥ अमुक्तानां भोग आवश्यकः ॥ ८५ ॥

**त० दी०— पितुः संमुखयुद्धे हि मृतत्वात्कृष्णबांधवात् ॥**
**चंद्रांशत्वादेवभावात्प्रतिबंधो न विद्यते ॥ ८६ ॥**

त० प्र०— तर्ह्यभिमन्योरमुक्तत्वात्तेन प्रतिबंधो भविष्यतीत्याशंक्याह ॥ **पितुरित** ॥ "द्वाविमौ पुरुषौ लोके" इति स्मृतेः ॥ भगवद्बांधवो भागिनेयः कथं न मुच्यते ॥ तत्र चैकोंशश्चंद्रत्वात्पुनर्देवभावं प्राप्तः स आध्यात्मिकः ॥ भगवत्संबंधी आधिदैविकः ॥ एवं त्रयाणामप्यप्रतिबंधो निरूपितः ॥ ८६ ॥

**त० दी०— पांडवानां द्विधा दुःखं भिन्नाभिन्नविभेदतः ॥**
**अभिन्नं परतो ज्ञानाद्द्विधा ज्ञानं द्विधा पुनः ॥**
**ब्रह्मजीवविभेदेन त्रिधा तद्धि फलिष्यति ॥ ८७ ॥**

त० प्र०— अतः परमध्यायार्थविभागार्थं सप्तमाष्टमनवमानामर्थं निरूपयति ॥ **पांडवानामिति सार्धेन** ॥ शरीरतः पुत्रद्वारा च पांडवानां द्विधा दुःखम् । भिन्नः पुत्रादिस्तद्दुःखमेकविधम् ॥ अभिन्नं पुनर्द्विधा ॥ अज्ञानहेतुकं शत्रुहेतुकं च ॥ अज्ञानं पुनर्द्विधा ॥ जीवविषयकं ब्रह्मविषयकं चेति ॥ एवं सत्यऽभिन्नं त्रिधा भवति ॥ तेनैव भिन्नमपि गच्छतीति त्रिधा फलितम् ॥ ८७ ॥

**त० दी०— अतोऽध्यायत्रयं तत्र प्रथमे स्वेष्टपूरणात् ॥**
**दुःखहानिर्हरेरेव तदर्थं स्तोत्रमीरितम् ॥ ८८ ॥**

त० प्र०— अतो दुःखदूरीकरणार्थमध्यायत्रयम् ॥ तत्र प्रथमाध्यायेऽर्थनिर्धार-

माह ॥ स्वेष्टपूरणाद्दुःखहानिर्हरेरेवेति ॥ शत्रुजये परतो दुःखं गच्छति ॥ भगवत इष्टपूरणे हेतुमाह ॥ तदर्थं स्तोत्रमिति ॥ भगवत्तोषः सर्वत्र कारणं तस्य च स्तुतिः । तेनाऽध्यायत्रयेपि स्तुतिरुक्ता ॥ ८८ ॥

त० दी०— दुःखे सुखे तथा मुक्तौ स्तोत्रं कुर्यादिति त्रिधा ॥
अधिकारे स्तुतिः प्रोक्ता तत्तदासक्तिवारिका ॥ ८९ ॥

त० प्र०— सर्वत्रेत्यस्यार्थमाह ॥ दुःखे सुखे तथा मुक्ताविति ॥ दुःखे समागते अर्जुनेन स्तुतिः कृता । इष्टे सिद्धे कुंत्या मुक्त्यर्थं भीष्मेण च ॥ अनेन द्वितीयाध्याये ब्रह्माज्ञाननिवृत्तिरुक्ता ॥ जीवाज्ञाननिवृत्तिस्तु तृतीयाध्यायार्थः ॥ अत एवांते मुक्तिरुक्ता ॥ ननु भगवदीयत्वेनैव दुःखनिवृत्तेरावश्यकत्वात्किं स्तोत्रेणेत्याह॥ अधिकार इति ॥ अधिकारसिध्यर्थं स्तोत्रम् ॥ द्वारमासक्तिवारणम् ॥ आधिदैविकस्य प्रेरणस्य भगवता निवृत्तिः क्रियत इति ॥ ८९ ॥

त० दी०— अर्जुनः सर्वमुख्यत्वात्पृथा नैकट्यतो वरा ॥
सर्वज्येष्ठस्तथा भीष्मः कर्तारः क्रमतोऽवराः ॥ ९० ॥

त० प्र०— ननु प्रथममर्जुनेन कथं स्तोत्रं कृतं युधिष्ठिरस्य विद्यमानत्वादित्याशंक्याह ॥ अर्जुन इति ॥ नरांशत्वान्मुख्यत्वम् । पृथा पितृष्वसा भगवत्संबंधादेवोत्कर्षः ॥ भीष्मे लौकिक एवोत्कर्षः ॥ त्रयाणामाद्यः श्रेष्ठः ॥ उत्तरोत्तरं ह्रासः ॥९०॥

त० दी०— सर्वथा संस्तुवीतेति मुख्ये फलति सर्वदा ॥
सर्वत्र भक्तरक्षा हि सामान्येन विशेषतः ॥
अत्यासक्त्यापि तद्रक्षा भजनोत्साहवर्द्धिका ॥ ९१ ॥

त० प्र०— स्तुतेः पाक्षिकत्वं वारयति ॥ सर्वथेति ॥ मुख्यस्यावश्यकम् ॥ ननु भगवदीयानां भगवत्स्तोत्रे को वा विशेषोऽत आह ॥ सर्वत्रेति ॥ स्तुतोऽत्यासक्त्या रक्षां करोति ॥ ननु प्राकृतवत्किमित्येवं करोतीत्याशंक्याह ॥ भजनोत्साहवर्धिकेति ॥ यथाऽन्येषामपि भजनं सिध्यति ॥ ९१ ॥

त० दी०— सुतानां निधनं विप्रादयुद्ध इति रोदनम् ॥
सांत्वनं च प्रियार्थं हि न सत्यवचनं मतम् ॥ ९२ ॥

त० प्र०— भगवद्भक्ताया द्रौपद्याः पुत्रमरणेपि रोदनमयुक्तमित्याशंक्याह ॥ सुतानामिति ॥ "ब्राह्मणान्निधनं प्राप्य नारकी भवति ध्रुवम्" तत्राऽप्ययुद्धे ॥ कर्मफलातिक्रमस्त्वतिकृपया. । अतो भगवत्कृपोत्पादनार्थं रोदनम् ॥ अर्जुनसां·

त्वनवचनमप्ययुक्तमित्याशंक्याह ॥ सांत्वनं च प्रियार्थं हीति ॥ "स्त्रीषु नर्मविवाहे" इति वाक्यात् ॥ ९२ ॥

त० दी०— भक्तेष्टापूरणात्कृष्णो न वारयति दोषवित् ॥
समर्थत्वात्प्रेमसिद्ध्यै दैत्यांशत्वात्तथा वचः ॥ ९३ ॥

त० प्र०— भगवांस्तु भक्तानामप्रियं न करोतीति न न्यवारयत् ॥ अनेन भगवद्भक्तैरेव शास्त्रतो ज्ञात्वा कर्तव्यमेव कर्तव्यमिति सूचितम् ॥ दोषं ज्ञात्वापि भगवान् यतो न निवर्तयति। अन्यथा सर्वेषां भजनीयो न स्यात्संसारस्याऽनर्थरूपत्वात् ॥ ननु तथाऽप्यनर्थो निवारणीयस्तत्कथं न निवारितवानित्याशंक्याह ॥ समर्थत्वादिति ॥ जातेप्यनर्थे रक्षणसामर्थ्यान्न निवारणम् ॥ अनर्थे प्रेम च सिध्यति तथाऽप्यर्जुनस्य कथमेवं वचनं तत्राह ॥ दैत्यांशत्वात्तथा वच इति ॥ अश्वत्थाम्नो दैत्यांशत्वात्. भगवतो वा तथा वचः "इमं जहि" इति ॥ ९३ ॥

त० दी०— भीमस्याऽऽसन्यावतारात्सहजद्वेषभावतः ॥
संहारशक्तेर्द्रौपद्या उभयोः समता हरेः ॥ ९४ ॥

त० प्र०— वेदविरोधाभावाय भीमस्यापि वधार्थमुद्यमो निरूप्यते ॥ भीमो ह्यासन्यरूपो वेदात्मा अतः प्रमाणप्रमेययोरभिप्राययोरभिप्रायाकरणाद्व्यसनम् ॥ "अर्जुनो द्रौपदी चैव लौकिकौ लोकवेदतः ॥ अतो न मारणं जातं तेन व्यसनमागतौ" दैत्याः संहारशक्तेरनुगुणा इति द्रौपद्या मोचनम् ॥ भगवाँस्तूभयोस्तुल्यः सर्वात्मत्वात् ॥ भक्तरक्षां त्वन्यथापि करिष्यतीति युक्त एव सतमार्थः ॥ ९४ ॥

त० दी०— उभयात्मकत्वकथनं सर्वप्रियहिताय हि ॥
अर्जुनस्य तु विज्ञानमावेशित्वान्न चान्यथा ॥ ९५ ॥

त० प्र०— शिरोमुंडनज्ञानमावेशित्वात्[1]. तेन न पूर्वेण विरोधः—भगवानाविष्टस्तथा कृतवान् ॥ अन्यथा द्रौपदीसंहारशक्तिर्भीमादीनपि संहरेत् ॥ तथा क्वचिदुपाख्यानमपि प्रसिद्धम् ॥ ९५ ॥

त० दी०— आतुरत्वं विलापश्च पूर्ववत्सुतमारणात् ॥
पुनरस्त्रसमुत्क्षेपो गर्वाभावाय कारितः ॥ ९६ ॥

त० प्र०— क्रोधावेशे त्वपगते लौकिकदृष्ट्या विलापो न युक्त इति समाधच

---

१ आवेशित्वात्।

पूर्ववदिति ॥ नन्वश्वत्थाम्नस्तथा बुद्धि कुत उत्पादितत्रानित्याशंक्याह ॥ **पुनरस्त्र-समुत्क्षेप इति** ॥ ९६ ॥

त० दी०— अनिवर्त्यं निवर्त्यं च ब्रह्मास्त्रं द्विविधं मतम् ॥
अनिवर्त्यसमुत्क्षेपो नास्त्येव मरणेऽपि हि ॥ ९७ ॥
शास्त्राद्दैवात्तयोः सिद्धिस्तेजस्तेन महद्भवेत् ॥
सर्वोपायपरिभ्रष्टो मृतकल्पो गुरोः सुतः ॥
अत्युपासनया प्राप्तं ब्रह्मास्त्रं क्षिप्तवान् पितुः ॥ ९८ ॥

त० प्र०— पूर्ववत्समाधानं वारयति ॥ अनिवर्त्यमिति सार्धाभ्याम् ॥९७॥९८॥

त० दी०— उत्तरा परमा भक्ता रोहिण्यंशा हरेः सुहृत् ॥
शरणागमनं कृष्णस्तुतिपूर्वं च दर्शनम् ॥ ९९ ॥

त० प्र०— ननु यथा गर्वो निवार्यते तथा तद्धेतुर्वंशोपि कुतो न निवारितस्त-त्राह ॥ **उत्तरा परमा भक्तेति** ॥ सा सर्वेभ्य उत्कृष्टा भक्तत्वाद्भौतिकोत्कर्षः । रोहि-ण्यंशा आध्यात्मिकी ॥ अतस्त्रिविधोत्कर्षात्तत्प्रियार्थं तथा करणमित्यर्थः ॥ तस्याः पूर्वोक्तत्रितये क्रमेण नियामकमाह ॥ भक्तत्वाच्छरणागमनम् । देवतात्वात्स्तुतिः । भगवदीयत्वात्प्रथमतो ब्रह्मास्त्रदर्शनम् ॥ ९९ ॥

त० दी०— उत्तरायास्तु भक्तत्वज्ञापनायावनं तथा ॥
कृष्णदूरत्वतः पूर्वं प्रविष्टस्य तथाऽवनम् ॥ १०० ॥

त० प्र०— भक्तत्वज्ञापनाय गर्भे प्रविश्याऽवनम् ॥ ननु भवगवद्भक्ताया उदरे कथमस्त्रप्रवेशस्तत्राह ॥ **कृष्णदूरत्वत इति** ॥ १०० ॥

त० दी०— परीक्षिज्ज्ञानसिद्ध्यर्थं बहुकालस्थितिर्हरेः ॥
अन्यतेजोलयः स्वस्मिन् प्रकाराकथनं तथा ॥ १०१ ॥

त० प्र०— प्रविष्टस्य ब्रह्मास्त्रस्य तथैव निराकरणं संभवति ॥ बहुकालस्थितिस्तु ज्ञानार्था ॥ ननु मूले सुदर्शनमायाभ्यां पांडवगर्भरक्षा विहिता न तु ब्रह्मास्त्रस्य नित्यस्य कचिल्लयो निरूपितः ॥ "वैष्णवं तेज आसाद्य" इति क्रूरता निवारिता न तु धर्मी ॥ "अस्त्रतेजः स्वगदया" इत्यत्रापि शम एव पूर्वानुरोधेन वक्तव्यः ॥ ततो धर्मिणोऽ-स्त्रस्य क लय इत्याशंकायामाह ॥ **अन्यतेजोलय इति** ॥ अन्यब्रह्मास्त्रस्य दुर्बलस्य भगवत्येव लयः ॥ तत एवोत्पन्नत्वादिति विमर्शस्तथा ॥ ततो हेतोरत्र प्रकाराकथनम् ॥

अनेन यत्र यत्र विशेषाकथनं तत्र तत्र कारणे लयो ज्ञातव्य इति सूचितम् ॥ १०१ ॥

त० दी०— आसक्तिर्गर्वाभावेन भजनार्थं यतः स्तुतिः ॥
प्रतिभातः कृतेश्चापि ज्ञातः कृष्णो विशेषतः ॥ १०२ ॥

त० प्र०— ननु पूर्वं भगवतो निर्गमने कथं न स्तुतिः कृता पश्चाद्वा कथं स्तोत्रे प्रवृत्तिरित्याशंक्याह ॥ **आसक्तिर्गर्वाभावेनेति** ॥ पूर्वं गर्वस्य विद्यमानत्वान्नाऽऽसक्तिः ॥ आसक्तो हि भजते ॥ भजनार्थं सर्वसंदेहवारिका स्तुतिरित्यर्थः ॥ नन्वासक्तावपि ज्ञानसाधनाभावात्कथं तादृशी स्तुतिरिति चेत्तत्राह ॥ **प्रतिभात इति** ॥ भगवदासक्त्या स्वत एव प्रतिभोत्पन्ना तेन स्तुतिः ॥ किं च हेत्वंतरमपि जातमित्याह ॥ **कृतेश्चापीति** ॥ भगवता हि ते पूर्वं न रक्षिताः, तेन अंतःकरणे भासमानोऽप्यनंतगुणपूर्णः "अन्यद्युष्माकमंतरं बभूव" इति न्यायेनांतरसंभवान्न ज्ञातः ॥ इदानीं विशेषरक्षावशादंतरं निवृत्तप्रायमिति भगवत्कृतेर्हेतोः कृष्णो भगवान् विशेषतो ज्ञातः ॥ १०२ ॥

त० दी०— सर्वनिर्णयपूर्वं हि यावन्न गुरुणोदितः ॥
तावन्मोहस्थितिर्जीव इति मोहस्य वर्णनम् ॥ १०३ ॥

त० प्र०— नन्वेवं सति युधिष्ठिरस्य पश्चान्मोहो न भवतीत्याशंक्याह ॥ **सर्वनिर्णयपूर्वं हीति** ॥ प्रतिभातो दर्शनाद्वा जातं ज्ञानं न मोहं निवारयति शब्दाद्दोषश्रवणेन मोहोत्पत्तेः ॥ शास्त्रतो हि भ्रमात्प्रतिपन्नात्तस्य मोहः स शास्त्रप्रकारेणैव निवृत्तिमर्हति ॥ अतो यावद्भीष्मो न बोधयिष्यति तावन्मोहः स्थास्यतीत्यर्थः ॥ अनेन भीष्माध्यायो जीवस्वरूपज्ञापनार्थ इत्युक्तं भवति ॥ १०३ ॥

त० दी०— उक्तेः स्वाचारतो दार्ढ्यज्ञापनायां ततः स्तुतिः ॥
मुक्तिश्चाऽनुपदं तस्य सर्वसंदेहवारिका ॥ १०४ ॥

त० प्र०— एवं सति भीष्मस्तुतिरसंगतेत्याशंक्याह ॥ **उक्तेः स्वाचारत इति** ॥ यत्पूर्वं तेन तत्त्वमुपदिष्टं जीवस्य भगवद्भजनेनैव कृतार्थतेति तत्स्वाचारतो दृढीकरोति ॥ साधनं च फलं च प्रत्यक्षतः प्रदर्शयतीत्यर्थः ॥ स्तुत्या साधनसंदेहो वारितो मुक्त्या फलसंदेहः ॥ १०४ ॥

त० दी०— दुःखहानिस्त्रिभिः प्रोक्ता सुखं चापि तथा त्रिभिः ॥
[1]स्वस्य सामान्यतः पूर्वं कृष्णप्रेमपुरःसरम् ॥ १०५ ॥

---

१ गुगग् ।

त० प्र०— अध्यायत्रयमुपपाद्योपसंहरति ॥ दुःखहानिरिति ॥ दुःखहानिः सुखं मोक्षश्चेति त्रिभिस्त्रिभिः प्रतिपादितम् ॥ तेन पांडवानां सर्वं कृष्णाधीनमिति से- त्स्यति ॥ १०५ ॥

त० दी०— तदुद्रेको वियोगे स्यात्तदर्थं कृष्णनिर्गमः ॥
कृष्णसौख्ये हि तत्सौख्यमिति मूले सुखाभिधा ॥ १०६ ॥
पश्चाच्च पुत्रसंपत्त्या विशेषेणोपवर्ण्यते ॥
मुक्तिस्त्रिभिस्तथा प्रोक्ता वीजकार्यफलैः स्फुटा ॥ १०७ ॥

त० प्र०— ननु युधिष्ठिरस्य सुखवर्णने भगवत्कथा कुत्रोपयुज्यते तत्राह ॥ **कृष्णसौख्ये हि तत्सौख्यमिति** ॥ अध्यायद्वयेन कृष्णसौख्यम् ॥ पुत्रसंपत्त्या च स्वस्य सुखम् ॥ कृष्णो हि यदर्थमागतस्तत्कृत्वा सुखी भवति ॥ स हि भक्तोद्धा- रार्थमागतः ॥ ते हि निष्प्रपंचिताः स्वकीयाः परकीयाश्चेत्यध्यायद्वयम् ॥ अत्राऽ- ध्यायत्रये प्रमेयं तत्कुक्लिष्टमित्यग्रिमाध्यायत्रयस्य रूपमाह ॥ **मुक्तिस्त्रिभिस्तथेति**॥ वीजमुक्तिरेकेन वीजं धृतराष्ट्रगमनं स चेन्निर्गतो मुक्तस्तदाऽन्येषामपि मुक्तौ वि- श्वासः ॥ अतो वीजरूपा मुक्तिः प्रथमाध्यायार्थः ॥ वीजत्वज्ञापनायैव तच्चरित्र- कथनं नारदेन ॥ वीजमुक्तेर्यत्कार्यं युधिष्ठिरादीनां निर्गमनहेतुर्वैराग्यं तद्द्वितीया- ध्यायार्थः ॥ फलं पांडवानां मुक्तिः ॥ १०६ ॥ १०७ ॥

त० दी०— पूर्वजानां तथा मुक्तिः स्वस्य त्यागे हि साधनम् ॥
त्यागे कृष्णलयश्चैव सर्वेषामुदितः स्फुटः ॥ १०८ ॥

त० प्र०— ननु पांडवमुक्तिः कुत्रोपयुज्यते तत्राह ॥ पूर्वजानामिति ॥ तेषां प्रतिबंधकता पूर्वमेव निरूपिता ॥ दृष्टांतप्रकारेणापि तदुपयुक्तमित्याह ॥ **त्यागे हि साधनं त्यागे कृष्णलयश्चैवेति** ॥ १०८ ॥

त० दी०— तत्रत्यानां तदंगत्वं टीकायामेव वर्णितम् ॥
परीक्षितस्तथाऽध्यायचतुष्टयमुदीर्यते ॥ १०९ ॥

त० प्र०— अत्राऽर्जुनस्य स्वरूपवर्णनादिकं कुत्रोपयुज्यत इत्याशंक्याह ॥ **तत्रत्यानामिति** ॥ एतन्निबंधकरणात्पूर्वमेव सूक्ष्मा या टीका कृता तत्रैव संग- तिर्निरूपिता ॥ अध्यायार्थस्त्वेतावानेवेति नात्रोक्त इति भावः ॥ एवं तृतीयप्रक- रणे नवाध्याया गुणरूपाः प्रतिबंधाभावाय निरूपिताः ॥ वीजादिशुद्धिद्वारा तद-

पयोगश्च वर्णितः ॥ अधुना चतुर्भिरध्यायैः परीक्षितः फलमुखं साधनमधिकारार्थं निरूप्यत इत्याह ॥ परीक्षित इति ॥ १०९ ॥

त० दी०—राज्यत्यागविभेदेन राज्ये द्वैविध्यमेव च ॥
सामर्थ्यस्य द्विरूपत्वाल्लौकिकालौकिकत्वतः ॥ ११० ॥

त० प्र०—अध्यायार्थविभागार्थमाह ॥ राज्येति ॥ राज्यमध्यायद्वयेन त्यागश्चाध्याय द्वयेनेति ॥ राज्ये द्वैविध्ये हेतुः सामर्थ्यस्य द्विरूपत्वम् ॥ ११० ॥

त० दी०—सर्वपृथ्वीजयः पूर्वः कलेश्चापि तथाऽपरः ॥
धरणीधर्मसंवादस्तयोर्भीतत्वसूचकः ॥ १११ ॥

त० प्र०—लौकिकं सर्वभूमिजयः ॥ अलौकिकं कालजयः ॥ धरणीधर्मसंवादस्योत्तरशेषत्वं ज्ञापयितुमाह ॥ भीतत्वसूचक इति ॥ भीतिहेतोः कलेर्निराकरणमग्रिमाध्यायार्थः ॥ सर्वत्राध्यात्मिकाधिभौतिकधर्मौ स्थापिताविति ज्ञापनार्थो वा ॥ आधिदैविक एवाऽतः परं स्थापनीय इति तस्यापि भयं यो निवारयतीति राज्ञ उत्कर्षः ॥ १११ ॥

त० दी०—तत्स्थास्तेन कृतार्थाश्च सुतरां कलिना हताः ॥
यो रक्षकस्तयोः पश्चात्कलिनिग्रहतो महान् ॥
तस्यापि कृष्णकथया गतिरन्यकथा तु का ॥ ११२ ॥

त० प्र०—प्रकारांतरेणापि माहात्म्यबोधकत्वमस्य प्रकरणस्येत्यभिप्रायेणाऽऽह तत्स्थास्तेन कृतार्थाश्चेति ॥ धरणीधर्मौ प्रकृतौ धरणीस्था धर्मेणैव कृतार्थाः ॥ एतादृशा अपि सुतरां कलिना हताः ॥ तेषां यो रक्षको भगवत्प्रयाणानंतरं कलिनिग्रहं कृत्वा स महानेव भवतीत्यध्यायद्वयार्थः ॥ एवं निरूपणस्य प्रकृतोपयोगमाह ॥ तस्यापीति ॥ अनेन भूमिष्ठानां तीर्थानां देवानां सांप्रतं क्रियमाणस्य धर्मस्य वा अप्रयोजकत्वं सूचितम् ॥ कालजयादीनां मृत्युजयादीनामपि भगवान् वा भागवतं वा नान्यो मोक्षदानसमर्थः ॥ ११२ ॥

त० दी०—कृष्णासक्त्या पांडवानां नोत्साहः कलिनिग्रहे ॥
कलिदोषाभिभूतानां न श्रद्धा हरिवर्णने ॥ ११३ ॥

प्र० त०—ननु पांडवाः कथं भगवत्कृपावलोकिताः कलिनिग्रहं न कृतवंतः ॥ तेन परिक्षित्स्वत एव कश्चिन्महान् भविष्यति ॥ तस्य भागवतश्रवणं भागवत-

१ आदिशब्दोऽन्यत्र नास्ति ।

प्रतिष्ठार्थमेव शुकेन कारितमितीमामाशंकां परिहर्तुमाह ॥ कृष्णासक्त्येति ॥ भगवदासक्ता भगवति प्रचलिते समर्था अपि प्रचलिता एव अतः परीक्षितो न सहजं सामर्थ्यम् ॥ ननु भागवतं चेदतिसमर्थं तदा यस्मै कस्मैचिच्छ्रावितं सन्मोक्षं प्रयच्छेत्किं परीक्षितेत्याशंक्याह ॥ कलिदोषाभिभूतानामिति ॥ श्रद्धार्थमेवाधिकार उक्तो न तु भागवतमधिकारमपेक्षते तथा सति "प्रवर्तमानस्य गुणैरनात्मनः" इति वाक्यं विरुध्येत ॥ यतो यस्यैव महती श्रद्धा स एवाधिकारी कलिश्च परीक्षिता भीषितो न भगवद्भक्तान् बाधते ॥ ११३ ॥

त० दी०— ज्ञानाग्निदग्धदेहस्य न दाहो लौकिको मतः ॥
अतः शापमिषेणेशस्तक्षकाग्निमवासृजत् ॥
कलेः स्थानप्रदानाद्धि ब्राह्मणातिक्रमे मतिः ॥ ११४ ॥
युगाभिमानिदेवस्य स्वाधिकारपरिच्युतिः ॥
निग्रहो रूपरक्षार्थं स्थानदानं प्रकीर्तितम् ॥ ११५ ॥ ११६ ॥

त० प्र०— ननु परीक्षितमपि दुर्बुद्धिदानेन कलिर्बाधितवान् कथमन्यान्मोचयेदित्याशंक्याह ॥ ज्ञानाग्निदग्धदेहस्येति ॥ भगवता तथा कृतं न कलिनेति निर्णयः ॥ ननु भगवान् ब्राह्मणातिक्रमे कथं बुद्धिं दत्तवानित्याशंक्याह ॥ कलेः स्थानप्रदानाद्धीति ॥ दुष्टस्य स्थानदानात्तामसे कर्मण्याग्रहः ॥ अनेनाऽधर्मादेव तस्य तथा बुद्धिः ॥ नन्वमूर्तस्य कलेः कालरूपस्य निरंतरं वर्तमानस्य को वा निग्रहः किं वा स्थानदानमिति शंकाव्युदासायाऽऽह ॥ युगाभिमानिदेवस्येति ॥ परीक्षित्समये कालधर्माणामप्रवृत्तिरेव निग्रहः ॥ स्वरूपरक्षा स्थानदानम् ॥ १४ ॥ १५ ॥ १६ ॥

त० दी०— देशकालानुसारेण शुद्ध्यशुद्धी प्रकीर्तिते ॥
कलौ षण्णां तथाऽपेक्षा नास्ति धर्मोन्नतिस्ततः ॥ ११७ ॥

त० प्र०— नन्वधर्मस्य स्थानदानाज्जातस्य ब्राह्मणातिक्रमस्य कथं मोक्षपर्यवसायित्वं तत्राह ॥ देशकालेति ॥ कलिर्नात्यंतं दुष्टः ॥ अंतकाले रोगवद्भगवत्स्मरणे स्वत एव शुद्धत्वात् ॥ अतो धर्मसिद्धावसहायशूर इति तस्य स्वरूपरक्षायां धर्मोन्नतिर्जाता तेन तामसकर्मणोपि मोक्षपर्यवसायित्वम् ॥ ११७ ॥

त० दी०— असिद्धत्वात्तामसत्वात्तामसं फलमस्य तु ॥
चित्तशुद्धिर्न चैव स्यात्पंकिलोदकपूरवत् ॥ ११८ ॥

# अथ तत्त्वार्थदीपनिबंधे

## तृतीये भागवतार्थप्रकरणे

## द्वितीयस्कंधविवरणं प्रारभ्यते.

॥ श्रीकृष्णाय नमः ॥

त० दी०— उत्तमे चोत्तमश्लोतुः प्रश्न आद्ये निरूपितः ॥
अध्यायदशकैस्तत्र सांगं श्रवणमीर्यते ॥ १ ॥

त० प्र०— द्वितीयस्कंधे स्कंधार्थप्रकरणाध्यायार्थान् वक्तुं संगत्यर्थं प्रथमस्कंधे सिद्धमर्थमनुवदति ॥ उत्तम इति ॥ उत्तमे वक्तरि उत्तमश्लोतुः परीक्षित आद्ये स्कंधे प्रश्नो निरूपितः ॥ तत्र उत्तरे सांगं श्रवणमीर्यते ॥ किं कर्तव्यमित्यपेक्षायां सांगं श्रवणं कर्तव्यमिति ॥ तत्र दशांगानीति दशाध्यायैर्निरूप्यते ॥ अनेनांऽगनिरूपणं स्कंधार्थ इत्युक्तम् ॥ संपूर्णस्य भागवतस्य श्रवणविधिशेषत्वम् ॥ तत्र विषयत्वेन दश स्कंधाः ॥ अधिकारार्थं प्रथमः ॥ अंगार्थे द्वितीय इति ॥ एवं भागवताच्छ्रवणं भागवते महावाक्यार्थः कर्तव्यरूपः ॥ १ ॥

त० दी०— शक्तितात्पर्यनिर्धारः श्रवणं पदवाक्ययोः ॥
तत्त्वज्ञानं हृत्प्रसादो मननं चांगमुच्यते ॥ २ ॥

त० प्र०— तच्छ्रवणं किमित्याकांक्षायामाह ॥ शक्तितात्पर्यनिर्धार इति ॥ पदे शक्तिनिर्धारोऽसंकोचरूपः सहजः ॥ वाक्ये तात्पर्यनिर्धारः ॥ उभयमुभयत्र वा ॥ अंगानि कानीत्याकांक्षायामाह ॥ तत्त्वज्ञानमिति ॥ तत्रेति वा ॥ तत्त्वस्वरूपचिंतनं ध्यानम् ॥ हृत्प्रसादश्चित्तशुद्धिः ॥ मननं च तृतीयमंगम् ॥ अनेन प्रकरणविभागोपि निरूपितः ॥ २ ॥

त० दी०— श्रोतव्यविषयत्वेन लीला दशविधा पुनः ॥
वक्तव्या वासुदेवस्य तदर्थमपरा कृतिः ॥ ३ ॥

त० प्र०— केषां शब्दानामित्याकांक्षायां श्रोतव्यविषयमाह ॥ श्रोतव्येति ॥ दशविधा लीला श्रोतव्या ॥ अनेनाऽग्रिमस्कंधानामर्था उद्देशत उक्ताः ॥ ननु धर्मी येन केनचिद्धर्मेण सहितः श्रोतव्यो भवतु कोऽयं निर्बंधो दशविधलीलायुत इति तत्राह ॥ तदर्थमपरा कृतिरिति ॥ अन्यथाऽग्रे निरूप्यमाणा दश स्कंधा

१ भावनात्। २ तत्त्वरूप।

व्यर्थाः स्युः ॥ पदवाक्यानां चाऽनुपस्थितत्वादंगविचारोऽपि व्यर्थः स्यात् ॥ तस्मादपरकृत्स्नानुपपत्त्या दशविधलीलायुक्त एव श्रोतव्यः ॥ ३ ॥

त० दी०— शक्तितात्पर्यनिर्धारः सामान्येन पदादिगः ॥
अंगोक्त्यैव सुसंसिद्धो द्वितीयेंऽगविनिश्चये ॥ ४ ॥

त० प्र०— ननु शक्तितात्पर्यनिर्धारः कथं कर्तव्यः केन कर्तव्य इत्याकांक्षायामाह ॥ शक्तीति ॥ अंगनिरूपणेनैवांग्यपि निरूपितो भवति ॥ न हि सर्वांगेषु सिद्धेषु अंगिसिद्धिरवशिष्यते तदाह ॥ अंगोक्त्यैव सुसंसिद्ध इति ॥ तदर्थं स्कंधमाह ॥ द्वितीय इति ॥ अनेनांगाना स्कंधे अंगिनो निरूपणं युक्तमिति ज्ञापितम् ॥ ४ ॥

त० दी०— कृष्णस्य सर्वरूपत्वे निर्धारः पदवाक्ययोः ॥
गुणातीतस्वरूपत्वे निर्गुणः श्रुतिनिर्णयः ॥ ५ ॥

त० प्र०— शक्तितात्पर्यनिर्द्धारो द्वितीयस्कंधेन स्पष्ट इति तं स्पष्टयति ॥ कृष्णस्य सर्वरूपत्वमिति ॥ शक्तिसंकोचपक्षे नाऽन्यथापदानां भगवद्वाचकत्वं सिद्ध्यति ॥ एवं सति श्रोतव्यविषयो दशविधलीलायुक्त एव भवति ॥ अन्यथाऽनंतत्वाच्छब्दानां श्रवणाशक्तौ श्रवणविध्यपर्यवसानमेव स्यात् ॥ यत्किंचित्पदवाक्यनिर्धारो यत्र कुत्रचित्तत्र श्रवणम् ॥ अतोऽग्रिमा सर्वैव कृतिः सार्थिका ॥ ननु मीमांसयैवायमर्थः सिद्धः ॥ आत्मा श्रोतव्य इति तथैव सर्वैः श्रवणविधिर्निरूपित इत्याशंक्याह ॥ गुणातीतस्वरूपत्व इति ॥ भगवतो हि रूपद्वयं गुणातीतरूपं सगुणं च ॥ तत्र वेदे गुणातीतमेव ॥ पुराणे च सगुणम् ॥ अतो वेदनिर्णयेन निर्णये गुणातीतमेव श्रोतव्यं स्यात् ॥ अतोऽत्र पृथक् निरूपणमुचितमित्यर्थः ॥ यतः श्रुतयो निर्गुणाः ॥ अनेन तत्त्वख्यानस्यांगता निरूपितांतरंगता च ॥ तेन प्रथमं तन्निरूपणमुचितमिति भावः ॥ ५ ॥

त० दी०— श्रोतुर्वक्तुस्तथा श्रद्धा साऽन्यसेवा बहिर्मुखा ॥
श्रोतुर्वक्तुः समुत्साहो नमनाद्यादरात्स्फुटः ॥ ६ ॥

त० प्र०— द्वितीयांगं साधयति ॥ श्रोतुर्वक्तुस्तथा श्रद्धेति ॥ एतदभावेपि श्रवणं न निर्वहतीति तथा ॥ प्रथमप्रकरणवदेव च श्रद्धाऽप्यंतरंगमित्यर्थः ॥ पूर्वत्र भगवतः सर्वरूपत्वे सर्वेषां तदादीनामर्थनिर्णयो भवति ॥ प्रकृते श्रद्धा कथमुपयुज्यते ॥ न हि सर्वत्र शुद्धा भवति । नापि दशविधलीलापरिच्छेदे ॥

अतः स्वरूपोपकारिण्यपि श्रद्धा पर्यवसानाभावान्नांगं भवितुमर्हतीत्याशंक्याह ॥ **सान्यसेवा बहिर्मुखेति** ॥ अन्यसेवा बहिर्मुखत्वेन श्रद्धायाः श्रवणांगत्वम् ॥ यथा दशविधलीलायुक्तातिरिक्तस्य न श्रवणम् ॥ तथा तत्प्रतिपाद्यरूपातिरिक्त-रूपे न श्रद्धा अतः पर्यवसानमस्त्येव ॥ ततोऽन्ये ब्रह्मणस्पतिप्रभृतयः श्रद्धाप्रक-रणे निरूपिताः ॥ तत्रापि श्रोतुस्तस्याऽन्यत्र श्रद्धायां श्रवणं व्यर्थं स्यात् ॥ वक्तुस्तु श्रद्धा नमनाद्यादरात्समुत्साहरूपा स्फुटैव ॥ ६ ॥

त० दी०— उत्पत्त्या चोपपत्त्या च सर्वत्वं तस्य चिंत्यते ॥
तथा च व्यतिरिक्तत्वं फलतस्त्वस्य निर्णयः ॥ ७ ॥

त० प्र०— एवं मध्यमप्रकरणार्थमुक्त्वा तृतीयप्रकरणेऽवांतरप्रकरणभेदोऽस्तीति तद्भेदकं निरूपयति ॥ **उत्पत्त्या चेति** ॥ उत्पत्त्या विमर्शस्त्रिभिः ॥ उपपत्त्या च त्रिभिः ॥ उभाभ्यां भगवतः सर्वत्वमेव विचार्यते । चकारादुत्पत्तावुपपत्तिस्तथोपप-त्तावुत्पत्तिरिति ॥ सर्वस्योत्पत्त्यैव निर्णये पृथक्रूपस्थित्यभावे उत्पत्तिरेव न घटे-तेति व्यतिरिक्तत्वं चोभयत्र वक्तव्यम् ॥ सर्वस्यैवोपपत्तिमत्त्वेन परमं माहात्म्यं भवेत् ॥ तर्हि तस्योत्पत्त्युपपत्त्यभावात्कथं निर्णय इत्याशंक्याह ॥ **फलतस्त्वस्य निर्णय इति** ॥ उभयविचारेण विचारितस्य तत्फलम् ॥ अर्थात्साधकं च ॥ अत-स्तन्निर्णयार्थं न किंचिद्वक्तव्यमित्यर्थः ॥ ७ ॥

त० दी०— ततो लीलाः सदा वाच्याः श्रोतव्याः श्रवणेन हि ॥
क्रियमाणे विशेषेण योगो ह्यष्टांग ईर्यते ॥ ८ ॥

त० प्र०— एवमंगानि निर्णीय तेनांगिसिद्धिमाह ॥ **ततो लीलाः सदा वा-च्या इति** ॥ भगवंतं निर्णीय भगवल्लीला वाच्याः कीर्तितव्याः । अन्यथा लीला-त्वमेव न स्यादिति तथैव श्रोत्रापि श्रोतव्याः ॥ एवं स्मर्तव्या इति ॥ सर्वदा कर्तव्यं सेत्स्यत इति॥ एवं सदा कर्तव्ये श्रवणे सर्वस्य भागवतस्योपयोगमुक्त्वा द्वितीयप्र-श्नोत्तरं विचारयति ॥ **क्रियमाणे विशेषेणेति** ॥ तत्र योगोऽष्टांगः कर्तव्यः॥८॥

त० दी०— अंते मतेर्गतित्वं हि मनश्चंचलमस्थिरम् ॥
पाक्षिकोऽपि हि दोषोत्र परिहार्यः सुसात्त्विकैः ॥ ९ ॥

त० प्र०— तत्र हेतुमाह ॥ **अंते मतेरिति** ॥ अतः पाक्षिकदोषपरिहारार्थं यो-गोपयोगः ॥ ९ ॥

---

१. पा ।

त० दी०— गृहत्यागस्तीर्थवासो योगाभ्यसनमेव च ॥
अंतकाले त्ववश्यं हि यथा चित्तं न भिद्यते ॥ १० ॥

त० प्र०— तस्य साधनान्याह ॥ **गृहत्यागस्तीर्थवास** इति साधनत्रयम् । श्रवणयोगयोर्विकल्प इति विमर्शः ॥ समुच्चय इति केचित् ॥ भिन्नोऽधिकार इत्यन्ये ॥ संस्कारोऽत्र नियामकः ॥ बहिर्मुखांतर्मुखव्यवस्थेत्यपरे ॥ शुकेन पूर्वजन्मनि तथा कृतमिति स्वानुभूतं तदाह ॥ श्रवणं तु व्यासादवगतमिति विमर्शः ॥ अत एवाह ॥ **अंतकाले त्ववश्यं हीति** ॥ १० ॥

त० दी०— श्रुतात्मब्रह्मभावस्य नाऽऽनंदानुभवः सदा ॥
मनसश्चंचलत्वाद्धि स्थिरे योगेन साधिते ॥ ११ ॥
सगुणां मानसीं मूर्तिं हरेः कृत्वांडरूपिणीम् ॥
अंतर्यामिस्वरूपां वा ध्याने सत्त्वमये हृदि ॥ १२ ॥
प्रकटः परमानंदस्तत्र स्थित्वा सुखी भवेत् ॥
गुणानां प्रेरकत्वे हि स्थिरता साधने मता ॥ १३ ॥

त० प्र०— ननु ज्ञानमार्गं परित्यज्य भक्तियोगं वा किमित्यवोचत्तत्राह ॥ **श्रुतात्मब्रह्मभावस्येति** ॥ येन स्वात्मा ब्रह्मत्वेन श्रुतः ॥ तत्त्वमस्यादिवाक्यैस्तस्यावश्यं कर्तव्यांतराभावादानंदानुभवेन भाव्यम् ॥ स न जायत इति किंचिदन्यत्साधनमन्वेषणीयम् ॥ ततो नियतफलेषु साधनेषु पूर्वं श्रुतिरप्रयोजिकेति साधनमेवोपदेष्टव्यमिति भावः ॥ अनेन व्यपदेशपक्षो गृहीतः सिद्धपक्षस्यानुभवविरोधात् ॥ "अयमात्मा ब्रह्म विज्ञानमयः" इति शास्त्रत एव तथोक्तिः ॥ यथा प्रतिमायां विष्णुबुद्धिः ॥ तस्मात्तं पक्षमप्रयोजकं मत्वा मनोराज्यतुल्यमिति तन्नोक्तवान् ॥ योगस्याऽऽवश्यकत्वमाह ॥ **मनसश्चंचलत्वाद्धीति** ॥ अस्य पक्षस्य फलपर्यवसानमाह ॥ योगेन चित्ते स्थिरीभूते मानसीं मूर्तिं तत्र ध्यात्वा तेन ध्यानेन चित्ते सत्त्वमये जाते परमानंदः प्रकटो भवतीति तत्र नित्यं स्थितः सुखी भवेत् ॥ ततो ज्ञानफलमपि तत्र सिध्यति ॥ यदा पुनर्मनो रजस्तमोभ्यामन्यथा भवति तदा साधनपर एव भवेत् ॥ ११ ॥ १२ ॥ १३ ॥

त० दी०— आ मृतेस्तत्र तिष्ठेत बुद्ध्या वा तनुमुत्सृजेत् ॥

---

१. कृती । २. तत्त्वस्वरूप ।

लिंगं च तत्र त्यक्तव्यमग्रे गत्वाऽथ वा त्यजेत् ॥
धर्मस्य वासनाशेषाद्यदीच्छा पारलौकिके ॥ १४ ॥

त० प्र०— एतन्नाऽऽसन्नमरणस्योच्यते किं तु यो मरणं वांछति तस्य तादृशस्य साधनं फलमाह ॥ **आ मृतेस्तत्र तिष्ठेतेति** ॥ योगेनाऽऽयुर्वृद्धौ बुद्धिपूर्वकं वा तनुमुत्सृजेत् ॥ तत्रापि पक्षद्वयम् ॥ सर्वकामनाभावे देहत्यागसमय एव लिंगमपि त्यक्तव्यं तदा सद्योमुक्तिः ॥ क्रमेण वा अंशतस्त्यागस्तदा क्रममुक्तिरिति ॥ ननु सद्योमुक्तौ सत्यां कथं क्रममुक्तिपक्षस्तत्राह ॥ **धर्मस्य वासनाशेषादिति** ॥ पूर्वं कृता धर्माः स्वर्गादिसाधकास्ते योगं साधयित्वा क्रमेण निवृत्ता अपि फलांशे वासनाशेषारितष्ठंति तदा परलोकेच्छा ॥ १४ ॥

त० दी०— स्थूलस्य भावनायां हि यदि मृत्युस्तदा भवेत् ॥
चतुर्मुखत्वं सूक्ष्मे तु प्रधानफलमेव हि ॥ १५ ॥

त० प्र०— इदानीं ध्येयभेदेन फलभेदमाह ॥ **स्थूलस्येति** ॥ अंते या मतिरिति सोपि विराट् भवति ॥ तस्य लोकव्यवहारार्थरूपं चतुर्मुखत्वम् ॥ सूक्ष्मे तु प्रधानफलं सद्योमुक्तिः क्रममुक्तिर्वा ॥ १५ ॥

त० दी०— मनोमय्या अपि यतो मुक्तिदातृत्वमुच्यते ॥
स्थूलेन भाविते चित्ते भक्तिः सूक्ष्मे तदा मनः ॥
भक्त्यभावे तथा रागे न सूक्ष्मे विशते मनः ॥ १६ ॥

त० प्र०— एवं सति योगेनैव मुक्तिर्न भक्त्येति पूर्वमुक्तः श्रवणादिमार्गो व्यर्थ एवेत्याशंक्याह ॥ **मनोमय्या अपीति** ॥ अत्राऽष्टांगे योगे ध्यानमेव प्रसाधकं विपर्ययप्राबल्यात् ॥ ततः कैमुतिकन्यायः ॥ श्रवणादिना तु स्वाभाविको भगवानाविर्भवतीति महानेव विशेषः ॥ नन्वेवं कल्पनायां किं प्रमाणं तत्राह ॥ **स्थूलेन भाविते चित्त इति** ॥ यतोऽयं ध्येयद्वयमाह ॥ तत्रापि यावन्न जायेतेति वाक्येन स्थूलध्यानस्य भक्तिशेषत्वमुक्तम् ॥ सूक्ष्मज्ञानस्य च भक्तिसाध्यत्वेनैव फलसाधकत्वम् ॥ तदाह ॥ **भक्त्यभाव इति** ॥ १६ ॥

त० दी०— सर्वस्य भक्तिशेषत्वं तद्धेतुः श्रवणादिकम् ॥
निर्वाहकं तदऽन्योन्यं तेन त्रयमुदीर्यते ॥ १७ ॥

त० प्र०— अन्यदपि नियामकमस्तीत्याह ॥ **सर्वस्येति** ॥ "न ह्यतोऽन्यः शिवः पंथाः" इत्युपसंहारे भक्तिशेषत्वेनैव सर्वमुपसंहृतम् ॥ तस्याश्च हेतुः श्रवणादिकं

यद्यपि प्रत्येकमेव भक्तिसाधकं तथापि तदन्योन्यनिर्वाहकम् ॥ तेन त्रयमुच्यते ॥ अन्योन्यनिर्वाहकत्वं टीकायां निरूपितम् ॥ १७ ॥

त० दी०— बहुकालविलंबे तु सुगमं त्वेतदेव हि ॥
अन्यथा पापसंवृद्धौ न त्यागे विशते मनः ॥ १८ ॥

त० प्र०— ननु श्रवणयोगयोर्विकल्पे किं सर्वदा श्रवणेन ॥ अंते योग एव साधनीयोऽल्पकालसाध्यत्वादित्याशंक्याह ॥ बहुकालविलंबे त्विति ॥ अंतकालसंदेहे योगे प्रवृत्तो दुःखं प्राप्नोति ॥ श्रवणादौ तु सुखम् ॥ अतः सुगमत्वात्पूर्वोक्तन्यायेनाऽऽवश्यकत्वाच्च श्रवणं कर्तव्यम् ॥ किं च योगपक्षेपि श्रवणमावश्यकमित्याह ॥ अन्यथेति ॥ श्रवणाभावे नित्यमुपचीयमानपापेन योगांगत्यागो न भवेत् ॥ १८ ॥

त० दी०— अत्यागेपि हरिः प्रीतः स्वयं वा साधयेत्फलम् ॥
एवं श्रीकृष्णभजनमध्यायद्वितयेन हि ॥
श्रवणादिभिरुक्तं हि नित्यमेतन्न चेतरत् ॥ १९ ॥

त० प्र०— श्रवणे तु न योगापेक्षेत्याह ॥ अत्यागेऽपीति ॥ प्रथमप्रकरणार्थमुपसंहरति ॥ एवमिति ॥ योगस्य गौणत्वाद्भक्तिमार्ग एवोपसंहृतः ॥ तत्र हेतुं वदन् योगस्य गौणतामाह ॥ नित्यमेतदिति ॥ श्रवणमेव मुख्यं योगो न मुख्य इत्यर्थः ॥ नियतफलसाधकं वा ॥ अकरणे प्रत्यवायो वा ॥ तव्यप्रत्ययस्याऽपि लोके विधित्वांगीकारात् ॥ १९ ॥

त० दी०— कामेन त्वन्यभजनमस्मिन् कामोऽपि सिध्यति ॥
सर्वेंद्रियाणां वैफल्यमसेवायां भविष्यति ॥ २० ॥

त० प्र०— एवमध्यायद्वयार्थं विचार्य तृतीयाध्यायार्थं विचारयति ॥ ॥ कामेन त्वन्यभजनमिति ॥ आवश्यकत्वाभावाद्बाधाभावाच्च नाऽन्यभजनं प्राप्नोति किं तु कामे विद्यमाने तत्तद्विषयाधिकारिणां भजनं भवति ॥ तन्महाप्रभोरपि भजने भवतीति ज्ञापयति ॥ प्रत्युताऽभजने सर्वेंद्रियाणां वैफल्यं च ॥ अतो भजनावश्यकत्वाय तृतीयाध्यायः ॥ अनेन ज्ञानिनोपि देहेंद्रियाणां वैफल्यं निरूपितम् ॥ कामाभावेपींद्रियाणां सार्थकत्वाय भजनं कर्तव्यं तत्तदभिमानिन्यो देवता भगवत्संबंधमप्राप्य दुःखिताः सत्यो मोक्षे ज्ञाने वा विघातं कुर्युरिति भावः ॥

१. भजनं कर्तव्यमित्यक्षरपट्कमन्यपुस्तकेषु नास्ति ।

लिंगं च तत्र त्यक्तव्यमग्रे गत्वाऽथ वा त्यजेत् ॥
धर्मस्य वासनाशेषाद्यदीच्छा पारलौकिके ॥ १४ ॥

त० प्र०— एतन्नाऽऽसन्नमरणस्योच्यते किं तु यो मरणं वांछति तस्य तादृशस्य साधनं फलमाह ॥ आ मृतेस्तत्र तिष्ठेतेति ॥ योगेनाऽऽयुर्वृद्धौ बुद्धिपूर्वकं वा तनुमुत्सृजेत् ॥ तत्रापि पक्षद्वयम् ॥ सर्वकामनाभावे देहत्यागसमय एव लिंगमपि त्यक्तव्यं तदा सद्योमुक्तिः ॥ क्रमेण वा अंशतस्त्यागस्तदा क्रममुक्तिरिति ॥ ननु सद्योमुक्तौ सत्यां कथं क्रममुक्तिपक्षस्तत्राह ॥ धर्मस्य वासनाशेषादिति ॥ पूर्वं कृता धर्माः स्वर्गादिसाधकास्ते योगं साधयित्वा क्रमेण निवृत्ता अपि फलांशे वासनाशेषास्तिष्ठंति तदा परलोकेच्छा ॥ १४ ॥

त० दी०— स्थूलस्य भावनायां हि यदि मृत्युस्तदा भवेत् ॥
चतुर्मुखत्वं सूक्ष्मे तु प्रधानफलमेव हि ॥ १५ ॥

त० प्र०— इदानीं ध्येयभेदेन फलभेदमाह ॥ स्थूलस्येति ॥ अंते या मतिरिति सोपि विराट् भवति ॥ तस्य लोकव्यवहार्यरूपं चतुर्मुखत्वम् ॥ सूक्ष्मे तु प्रधानफलं सद्योमुक्तिः क्रममुक्तिर्वा ॥ १५ ॥

त० दी०— मनोमध्या अपि यतो मुक्तिदातृत्वमुच्यते ॥
स्थूलेन भाविते चित्ते भक्तिः सूक्ष्मे तदा मनः ॥
भक्त्यभावे तथा रागे न सूक्ष्मे विशते मनः ॥ १६ ॥

त० प्र०— एवं सति योगेनैव मुक्तिर्न भक्त्येति पूर्वमुक्तः श्रवणादिमार्गो व्यर्थ एवेत्याशंक्याह ॥ मनोमध्या अपीति ॥ अत्राऽष्टांगे योगे ध्यानमेव प्रसाधकं विषयप्राबल्यात् ॥ ततः कैमुतिकन्यायः ॥ श्रवणादिना तु स्वाभाविको भगवानाविर्भवतीति महानेव विशेषः ॥ नन्वेवं कल्पनायां किं प्रमाणं तत्राह ॥ स्थूलेन भाविते चित्त इति ॥ यतोऽयं ध्येयद्वयमाह ॥ तत्रापि यावन्न जायेतेति वाक्येन स्थूलध्यानस्य भक्तिशेषत्वमुक्तम् ॥ सूक्ष्मज्ञानस्य च भक्तिसाध्यत्वेनैव फलसाधकत्वम् ॥ तदाह ॥ भक्त्यभाव इति ॥ १६ ॥

त० दी०— सर्वस्य भक्तिशेषत्वं तद्धेतुः श्रवणादिकम् ॥
निर्वाहकं तदन्योन्यं तेन त्रयमुदीर्यते ॥ १७ ॥

त० प्र०— अन्यदपि नियामकमस्तीत्याह ॥ सर्वस्येति ॥ "न ह्यतोऽन्यः शिवः पंथाः" इत्युपसंहारे भक्तिशेषत्वेनैव सर्वमुपसंहृतम् ॥ तस्याश्च हेतुः श्रवणादिकं

यद्यपि प्रत्येकमेव भक्तिसाधकं तथापि तदन्योन्यनिर्वाहकम् ॥ तेन त्रयमुच्यते ॥ अन्योन्यनिर्वाहकत्वं टीकायां निरूपितम् ॥ १७ ॥

त० दी०— बहुकालविलंबे तु सुगमं त्वेतदेव हि ॥
अन्यथा पापसंवृद्धौ न त्यागे विशते मनः ॥ १८ ॥

त० प्र०— ननु श्रवणयोगयोर्विकल्पे किं सर्वदा श्रवणेन ॥ अंते योग एव साधनीयोऽल्पकालसाध्यत्वादित्याशंक्याह ॥ बहुकालविलंबे त्विति ॥ अंतकालसंदेहे योगे प्रवृत्तो दुःखं प्राप्नोति ॥ श्रवणादौ तु सुखम् ॥ अतः सुगमत्वात्पूर्वोक्तन्यायेनाऽऽवश्यकत्वाच्च श्रवणं कर्तव्यम् ॥ किं च योगपक्षेपि श्रवणमावश्यकमित्याह ॥ अन्यथेति ॥ श्रवणाभावे नित्यमुपचीयमानपापेन योगांगत्यागो न भवेत् ॥ १८ ॥

त० दी०— अत्यागेपि हरिः प्रीतः स्वयं वा साधयेत्फलम् ॥
एवं श्रीकृष्णभजनमध्यायद्वितयेन हि ॥
श्रवणादिभिरुक्तं हि नित्यमेतन्न चेतरत् ॥ १९ ॥

त० प्र०— श्रवणे तु न योगापेक्षेत्याह ॥ अत्यागेऽपीति ॥ प्रथमप्रकरणार्थमुपसंहरति ॥ एवमिति ॥ योगस्य गौणत्वाद्भक्तिमार्ग एवोपसंहृतः ॥ तत्र हेतुं वदन् योगस्य गौणतामाह ॥ नित्यमेतदिति ॥ श्रवणमेव मुख्यं योगो न मुख्य इत्यर्थः ॥ नियतफलसाधकं वा ॥ अकरणे प्रत्यवायो वा ॥ तव्यप्रत्ययस्याऽपि लोके विधित्वांगीकारात् ॥ १९ ॥

त० दी०— कामेन त्वन्यभजनमस्मिन् कामोऽपि सिध्यति ॥
सर्वेंद्रियाणां वैफल्यमसेवायां भविष्यति ॥ २० ॥

त० प्र०— एवमध्यायद्वयार्थं विचार्य तृतीयाध्यायार्थं विचारयति ॥ ॥ कामेन त्वन्यभजनमिति ॥ आवश्यकत्वाभावाद्बाधाभावाच्च नाऽन्यभजनं प्राप्नोति किं तु कामे विद्यमाने तत्तद्विषयाधिकारिणां भजनं भवति ॥ तन्महाप्रभोरपि भजने भवतीति ज्ञापयति ॥ प्रत्युताऽभजने सर्वेंद्रियाणां वैफल्यं च ॥ अतो भजनावश्यकत्वाय तृतीयाध्यायः ॥ अनेन ज्ञानिनोपि देहेंद्रियाणां वैफल्यं निरूपितम् ॥ कामाभावेपींद्रियाणां सार्थकत्वाय भजनं कर्तव्यं तत्तदभिमानिन्यो देवता भगवत्संबंधमप्राप्य दुःखिताः सत्यो मोक्षे ज्ञाने वा विघातं कुर्युरिति भावः ॥

१. भजनं कर्तव्यमित्यक्षरषट्कमन्यपुस्तकेषु नास्ति ।

आत्मभूतत्वेपि वैफल्यात् ॥ यथा अकल्पोऽग्निं प्रविशति ॥ अतः सर्वेंद्रियैर्भजनं कर्तव्यमिति श्रद्धा निरूपिता ॥ २० ॥

त० दी०— निषिद्धार्थत्वसाम्येन द्वयमेकत्र चोदितम् ॥
श्रोतुरुत्साहकथने संदेहाच्छौनके कृतम् ॥
भजने बाधनिर्धारो द्वयमेकत्र सिध्यति ॥ २१ ॥

त० प्र०— नन्वेकस्मिन्नध्याये कथमर्थद्वयनिरूपणं देवतांतरभजननिषेधो भगवद्भजननिषेधश्चेति तत्राह ॥ निषिद्धार्थत्वसाम्येनेति ॥ तृतीयाध्याये श्रोतुः श्रद्धा वक्तव्या ॥ तत्र राजनि श्रद्धा निश्चिता पूर्वस्कंध उत्तमाधिकारित्वेन निरूपणात् ॥ शौनके संदेहः ॥ श्रोतुरुत्साहकथने वक्तव्ये शौनके संदेहात्तत्रैव कृतं निरूपितमित्यर्थः ॥ भजने बाधनिर्धारस्तु देवांतरभजनरूपः ॥ स साधारण इति शेषः ॥ इंद्रियाणां दुष्टत्वं च ॥ द्वयमेकेनैव प्रकारेण सिध्यतीति विधिमुखतया तृतीयाध्यायार्थः ॥ देवतांतरभजनमिंद्रियदोषश्च बाधक इति ॥ इंद्रियदोषे च देवतांतरभजनम् ॥ अन्यभजने चेंद्रियदोष इति ॥ २१ ॥

त० दी०— यावत्प्रभोः स्वरूपं च गुणाः कर्मादयस्तथा ॥
न सम्यगवगम्यंते[1] तावद्भजनसंशयः ॥ २२ ॥

त० प्र०— नन्वेवं शौनकस्य भजनावश्यकत्वज्ञाने सिद्धे किं प्रश्नेनेत्याशंक्याह॥ यावत्प्रभोरिति ॥ स्वरूपाद्यज्ञानेऽपि भजनं न सिध्यतीति तदर्थं प्रश्नः ॥२२॥

त० दी०— भजनार्थं समुत्साहो ममतानाशपूर्वकः ॥
त्यक्तोऽपि विषयोंतस्थो ज्ञानादेव निवर्तते ॥ २३ ॥
तत्त्यागपूर्वकः प्रश्नः कृतः स्वोत्साहबोधकः ॥
नमनेनैव निर्धारं सामान्येन शुको जगौ ॥ २४ ॥

त० प्र०— एवं शौनकोत्साहं निरूप्य राज्ञोप्युत्साहं चतुर्थाध्यायादौ निरूपयतीत्याह ॥ भजनार्थमिति ॥ प्रश्नात्पूर्वं ममतानाशो निरूपितः स सामान्यतः श्रद्धाप्रतिपादकः ॥ ननु पूर्वमेव प्रायोपवेशनात्त्यक्ता राज्यादौ ममता कथं त्विदानीं पुनस्त्याज्येत्याशंक्याह ॥ त्यक्तोऽपीति ॥ ज्ञानं सर्वं हरिरिति ॥ स एव भजनीय इति वा ॥ उत्तमयोर्द्वितीय इति स्वोत्साहबोधक इत्युक्तं ज्ञानमात्रं प्रथमे ॥ परित्यागसहितं द्वितीय इति ॥ स्वाधिकारानुसारेण शुकस्योत्तरं नमनादिवाक्यैरुच्यते ॥ नमनप्रार्थनाभ्यां चोत्साहोऽपि सिध्यति ॥ २३ ॥ २४ ॥

१. मन्यंते ।

त० दी०— एवमुत्साहसंसिद्धिर्विश्वासार्थं कथावचः ॥
एतज्ज्ञानं भागवतश्रवणादेव नाऽन्यथा ॥ २५ ॥
इति नारदसंदेहो ब्रह्मवाक्यं तथोच्यते ॥
विमर्शोऽपि ततः सिध्येदुत्पत्त्या सा त्रिधा मता ॥ २६ ॥

त० प्र०— उपसंहरति ॥ एवमुत्साहेति द्वाभ्याम् ॥ सर्वेषामेवोत्साहः सिद्धः ॥ स्वत एव प्रमेयकथनं परित्यज्य ब्रह्मनारदसंवादक्षेपोपि विश्वासार्थः ॥ तत्रापि नारदस्य प्रश्न एवं ज्ञापयतीत्याह ॥ एतत् ज्ञानमिति ॥ सर्वशास्त्रार्थनिर्द्धारः सामान्येनोक्तोपि न सम्यगवगम्यते भागवतश्रवणव्यतिरेकेणेति सर्वज्ञस्याऽपि नारदस्य प्रश्नः ॥ अत एव ब्रह्मणोप्युत्तरम् ॥ अन्यथा परीक्षकवचनमिवोपेक्ष्यं स्यात् । तयोर्वचनानुवचनेनैव पूर्वोक्तस्यापि विमर्शः सिध्यति ॥ एवमध्यायत्रयस्योत्पत्त्या विमर्शोर्थ इत्युक्त्वा तस्य प्रकरणस्याऽध्यायत्रयात्मकत्वे हेतुं वदन्नध्यायार्थान् विभजते ॥ सा त्रिधा मतेति ॥ २५ ॥ २६ ॥

त० दी०— अनित्ये जननं नित्ये परिच्छिन्ने समागमः ॥
नित्यापरिच्छिन्नतनौ प्राकट्यं सत्त्वतः स्वतः ॥ २७ ॥

त० प्र०— तामेवाह ॥ अनित्य इति ॥ नित्यापरिच्छिन्नतनावपि द्वेधा प्राकट्यम् ॥ आवेशित्वेनाऽवतारत्वेन च ॥ अनेन लोकेपि वस्तूत्पत्तिनिर्द्धारेण भजनं निर्द्धारितं भवति ॥ अन्यकृता या काचिन्मूर्तिः प्रथमा स्वात्मानमावाह्य भजनं द्वितीया स्वत आविर्भूता तृतीयेति ॥ तत्रापि नित्यस्थितावत्वतारः ॥ कादाचित्के त्वावेशः ॥ विशेषोपि टीकया ज्ञातव्यः ॥ २७ ॥

त० दी०— सूक्तार्थकथनं मध्ये भजनार्थं हि सर्वथा ॥
तन्मूलत्वाद्धि सर्वस्य तज्जे तद्रूप एव च ॥ २८ ॥

त० प्र०— इममर्थं सूचयति ॥ सूक्तार्थकथनं मध्य इति ॥ प्रथमभजनं लौकिकं द्वितीयं वैदिकं तृतीयमांतरानुभवसिद्धमिति ॥ मध्यमभजनं च द्विरूपम् ॥ वेदे सिद्धप्रकारेण ब्रह्मानुभवरूपं यज्ञरूपं वा ॥ तत्र यज्ञरूपं तज्जम् ॥ २८ ॥

त० दी०— मूलभक्त्यैव भजनमतः प्राकट्यसंकथा ॥
तस्याऽपि मूलं कृष्णस्तु विमर्शो तस्य साधनम् ॥ २९ ॥

त० प्र०— भक्तिमार्गेण भजनं मूलभक्त्यैवेति पुरुषोत्तमभक्तिसिद्ध्यर्थं प्राकट्य-

१. सर्वदा । २. सूक्ष्मा ।

कथैवोक्ता सर्वत्राऽवतारेषु ॥ अवताराणामपि मूलं कृष्ण इति बोधयितुं विमर्शे कृष्णस्य पुरुषोत्तमत्वं च साध्यते ॥ अन्यथा साधनमनुपपन्नं स्यात् ॥ अवतारांतरवच्चरित्रमात्रमेव वक्तव्यं स्यात् ॥ २९ ॥

त० दी०— माहात्म्यं च स्वरूपं च द्वयं तत्रैव रूपितम् ॥
अनेन फलसिद्धिर्हि बहूनामिति कीर्तितम् ॥ ३० ॥

त० प्र०— तत्र सिद्धमाह ॥ माहात्म्यमिति ॥ "इतरथार्जुनयोर्न भाव्यम्" इत्यादिना माहात्म्यम् ॥ सितकृष्णकेशो यस्यांऽश इति स्वरूपम् ॥ कथापि तत्र निरूप्यत इति शंकां वारयति ॥ द्वयमिति ॥ ननु "ये च प्रलंब" इत्यादयः संक्षेपेण कथाश्रिताः कथार्थमेव निरूपिता इत्याशंक्याह ॥ अनेन फलसिद्धिरिति ॥ कृष्णेनैव मोक्ष इत्यर्थः ॥ ३० ॥

त० दी०— तावन्मात्रत्वकथनमन्येषां वारयत्यपि ॥
उपपत्त्या विचारोऽपि त्रिधा शंकोत्तरे फलम् ॥ ३१ ॥

त० प्र०— गणनायाश्च प्रयोजनमन्येषां मोक्षनिवृत्तिः ॥ एवमुत्पत्त्या विचारमुक्त्वा उपपत्त्या विचारार्थमध्यायत्रयमाह ॥ उपपत्त्येति ॥ अध्यायार्थान् विभजते ॥ शंकोत्तरे फलमिति ॥ ३१ ॥

त० दी०— ब्रह्मणोऽपि हरिर्मूलमुपपत्तिः कथागता ॥
प्रदर्श्य कथनात्तस्य न मूलान्वेषणं मतम् ॥ ३२ ॥

त० प्र०— नन्वस्योपपत्तित्वं कथं तत्राऽऽह ॥ ब्रह्मणोपि हरिर्मूलमिति ॥ एषोपपत्तिः कथागता सामान्यतो मूलमित्यर्थः ॥ सर्वस्य भगवत्त्वे भगवानेव वक्ष्यति "अहमेवाऽऽसमेवाग्रे" इति ॥ ननु तस्यापि मूलांतरमन्वेषणीयमिति कथमुपपत्तिनिरूपतेत्याशंक्याह ॥ प्रदर्श्य कथनात्तस्येति ॥ भगवान् स्वस्य रूपं प्रदर्श्य पश्चात्स्वस्वरूपमाह ॥ तेन संदेहो नोत्पन्न इति न मूलांतरापेक्षा ॥ ३२ ॥

त० दी०— उक्तेऽर्थेऽनुपपत्तिश्च शिष्टप्रश्नस्तथैव च ॥
आक्षेपस्य समाधानमन्यत्स्थूलेऽतिदिश्यते ॥ ३३ ॥

त० प्र०— एतस्य प्रकरणस्योपपत्तित्वसाधने हेत्वंतरमाह ॥ उक्तेर्थेऽनुपपत्तिश्चेति ॥ योऽर्थ उत्पत्त्या निरूपितः स पुनः पूर्वपक्षीक्रियते ॥ तत्सिद्ध्यर्थमप्यन्यान्यपि पृच्छ्यंते ॥ [1]आक्षेपस्य च वक्ता समाधानं करोति ॥ अन्येषां चोत्तरं न प्र-

१ नाक्षेपस्य ।

यच्छति ॥ अन्यथा कथापक्ष एव स्यात् ॥ तेषामपि परंपरोपयोगोऽस्तीति स्थूले भागवते तस्योत्तरमित्याह ॥ अन्यत्स्थूल इति ॥ ३३ ॥

त० दी०— तस्मात्स्थूलश्रुतिः सिद्धा तत्स्वरूपमतः फलम् ॥
रूपतश्चार्थतश्चैव तत्स्वरूपनिरूपणम् ॥ ३४ ॥

त० प्र०— अनेनोपपत्त्यैव यत्सिद्धं तन्निरूपितमित्याह ॥ तस्मात्स्थूलश्रुतिरिति ॥ दशलक्षणं भागवतं श्रोतव्यमिति सिद्धम् ॥ अतः फलाध्याये भागवतस्वरूपमेव निरूपितम् ॥ तेन सर्वदा म्रियमाणैर्वा भागवतं श्रोतव्यमिति भागवतं फलत्वेन सिद्धम् ॥ अतस्तस्य फलाध्याये रूपतश्चाऽर्थतश्च स्वरूपनिरूपणम् ॥ ३४ ॥

त० दी०— लक्षणोक्त्या स्वरूपस्य त्रैविध्यं चाऽर्थतः स्फुटम् ॥
आनंत्याद्धि विशेषस्य स्थूले कथनतोऽपि च ॥ ३५ ॥

त० प्र०— तदेव कथमित्याकांक्षायामाह ॥ लक्षणोक्त्येति ॥ दशलीलानां लक्षणकथनेन भागवतस्वरूपमुक्तम् ॥ आध्यात्मिकादिभेदेनाऽर्थस्यापि त्रैविध्यं स्फुटम् ॥ नन्वर्थतः स्वरूपतो निरूपणे किं पुनः स्थूलं भागवतं श्रोतव्यमित्याशंक्याह ॥ आनंत्यादिति ॥ त्रयाणां विशेषस्याऽऽनंत्यान्नाऽत्र निरूपणम् ॥ स्थूले च विशेषेण निरूपणम् ॥ अतो लक्षणत्वेनैवात्र निरूपणं विशेषतो ज्ञानं स्थूलभागवत एव ॥ ३५ ॥

त० दी०—सार्थकं च सुरूपं च तस्माच्छ्रोतव्यता स्थिता ॥
तस्यांशश्रवणे चाऽपि निःसंदेहफलं च तत् ॥ ३६ ॥

त० प्र०— दशमाध्याये सिद्धमर्थमनुवदति ॥ सार्थकं च सुरूपं चेति ॥ चकारात्फलरूपोप्यर्थो भगवत्प्रसादलक्षणः संगृह्यते ॥ द्वितीयचकारेण शब्दतोऽप्युत्तमता ॥ एवं मुखतो माहात्म्यमुक्त्वा कैमुतिकन्यायेनाऽपि माहात्म्यं वक्तुं स्थूलश्रोतारं विदुरमाक्षिपतीत्याह ॥ तस्यांशश्रवणे चापीति ॥ लीलाद्वयश्रवणेनापि संपूर्णफलं सिध्यति अतः शौनकेन विदुरकथा पृष्टा "यावतः कृतवान् प्रश्नान्" इति पूर्वं श्रुतवान् ॥ ३६ ॥

त० दी०— तादृशार्थस्य संप्रश्नः कथाक्षेपार्थमुच्यते ॥
विघ्नसंदेहतः शीघ्रं स्वकृतार्थत्वसिद्धये ॥ ३७ ॥

१ सुख्यतो ।

शौनकस्य हि संप्रश्नः शुकोक्तिश्चापि तादृशी ॥
अतः सर्वोत्तममिदमिति वक्तुं तथा वचः ॥ ३८ ॥

इतिश्रीमद्वेदव्यासविष्णुस्वामिमतवर्तिश्रीवल्लभदीक्षितविरचिते
तत्त्वदीपे द्वितीयस्कंधविवरणम् ॥

त० प्र०– "यथा पुरस्ताद्व्याख्यास्ये" इतिस्थूलकथनप्रतिज्ञायां भागवतं बहुधा प्रवृत्तमिति । यत्र शीघ्रं फलं तदेव कथयेति कथाविशेषाक्षेपार्थं प्रश्न इत्यर्थः ॥ शुकोपि तदेव वक्तुं प्रवृत्त इति सूतः शीघ्रमाह ॥ अन्यथा विलंबे शौनकः किंचिदन्यत्पृच्छेत्तदा स्वाभिप्रेतं न सिध्येदिति ॥ ननु शौनकः केनाभिप्रायेण तथा प्रश्नं कृतवान् तत्राह ॥ स्वकृतार्थत्वसिद्धये ॥ शौनकस्य हि संप्रश्न इति सर्वलीलाश्रवणं संभविष्यति न वेति ॥ अयमेवाभिप्रायः शुकस्यापि ॥ मध्ये राज्ञ उद्वेगे स्वस्य वा निमित्तांतरापत्तौ वा कार्यं न सेत्स्यतीति सर्वोत्तमांशाक्षेपार्थमेव कथनम् ॥ अतः सर्वोत्तममिदं वक्ष्यमाणं भागवतमिति फलितमित्यर्थः ॥ ३८ ॥

इति श्रीवल्लभदीक्षितविरचितायां तत्त्वदीपनिबन्धटीकायां प्रकाशाख्यायां
द्वितीयस्कंधविवरणं समाप्तम् ॥ २ ॥










१ निरूपणम् ।

# अथ तत्त्वार्थदीपनिबंधे

तृतीये भागवतार्थप्रकरणे

## तृतीयस्कंधविवरणं प्रारभ्यते.

॥ श्रीकृष्णाय नमः ॥

त० दी०—अधिकारिषु सांगं हि श्रवणं सुनिरूपितम् ॥
स्कंधद्वयेन शेषेषु क्रियते विषयाभिधा ॥ १ ॥

त० प्र०—तृतीयस्कंधनिबंधनं चिकीर्षुरुक्तविवक्षितयोः संगतिमाह ॥ अधिकारिष्विति ॥ अधिकारः प्रथमस्कंधार्थः ॥ सांगश्रवणविधिर्द्वितीयार्थः ॥ तृतीयादिदशस्कंधेषु श्रोतव्यविषयः प्रतिपाद्यत इत्यर्थः ॥ १ ॥

त० दी०—त्रयस्त्रिंशत्तथाध्यायास्तृतीये सर्गवर्णने ॥
स्वाभिप्रेते सविशेषे स्वोपयुक्तार्थसंयुते ॥ २ ॥

त० प्र०—एवं दशानां साधारणमर्थमुक्त्वा तृतीयस्कंधार्थमाह ॥ "त्रयस्त्रिंशदथाध्यायास्तृतीये सर्गवर्णने" इति, एकदेशे सर्गप्रतिपादनव्यावृत्त्यर्थं त्रयस्त्रिंशदध्याया इत्युक्तम् ॥ सर्वेषां सर्ग एवार्थः ॥ "सर्गः कारणसंभूतिः" इति वाक्यात् ॥ सर्गश्च लौकिकालौकिकभेदेन द्विविध इति ॥ अलौकिके त्रयस्त्रिंशद्देवा सृष्टाः संतो यज्ञं साधयंतीत्यविवादम् ॥ लौकिकेप्यष्टाविंशतितत्त्वानि चतुर्विधभूतबीजानि कालश्चेति त्रयस्त्रिंशत्प्रकारा सृष्टिर्भवति ॥ अत एव सर्गस्य विशेषणमाह ॥ स्वाभिप्रेत इति ॥ न तु सर्गो यः कश्चित्सृष्टिसाधारणः । तत्र स्वाभिप्रेतः पूर्वमुक्तो लौकिकालौकिकभिन्नः ॥ तत्रापि भगवद्रूपता सर्वत्रेति विशेषः ॥ तत्रापि स्वोपयुक्तार्थसहितो मोक्षादिफलयुक्तः ॥ जीवस्य हि द्विधा सृष्टिः ॥ बहिः, स्वरूपे च ॥ बहिःसृष्टिर्लोके प्रसिद्धा ॥ स हि वस्तुतो जीवस्य नाशरूपत्वात्प्रलयो भवति । अतो मोक्ष एव मुख्यसृष्टिः । अधिकारिदेहव्यतिरेकेण स न भवतीति मोक्षार्थमुत्पत्तिरपि निरूप्यते ॥ तत्र गृहस्थस्यैव मुक्तिः संदिग्धेति दंपत्योर्मुक्तिनिरूपणम् ॥ तत्र गृहस्थस्य मुक्तौ भगवत्संतोषः प्रयोजकः॥ तस्यापि भक्तिज्ञानं योगश्चाऽऽज्ञाकरणं च ॥ तस्मादेतत्सर्वं सर्गमध्य इति स्वोपयुक्तार्थ इत्युक्तम् ॥२॥

त० दी०—लोके सर्गविसर्गौ हि यादृशौ नेह तौ मतौ ॥
किं तु तौ सार्थकौ [illegible] तेन स्कंधद्वयं ततम् ॥ ३ ॥

त० प्र०—प्रसिद्धिविरोधमाशंक्याह ॥ लोके सर्गविसर्गाविति ॥ सार्थकौ पुरुपार्थपर्यवसायिनौ ॥ तेनैकैका लीला स्वतंत्रेति प्रत्येकमेकैकस्कंधवाच्यता तेन स्कंधद्वयविस्तरः ॥ ३ ॥

त० दी०— लीलाद्वयस्य श्रवणात्सिद्धः क्षत्ताऽधिकारतः ॥
किं पुनः सकलश्रोतेत्यतस्तस्य कथा ततो ॥ ४ ॥

त० प्र०— तत्रापि मैत्रेयविदुरसंवादप्रकारेण लीलाकथनमुचितमित्याह लीलाद्वयस्येति ॥ ४ ॥

त० दी०— तत्र सर्गो रजोभाजो लीला कारणजन्मदा ॥
देवस्य तु द्विरूपत्वात्कारणानां त्रिरूपतः ॥
पंचधा सा स्वतो द्वेधा बंधमोक्षविभागतः ॥ ५ ॥

त० प्र०— सर्गलक्षणमाह ॥ तत्रेति ॥ "भूतमात्रेंद्रियधियां जन्म सर्ग उदाहृतः । ब्रह्मणो गुणवैषम्यात्" इति मूले लक्षणम् ॥ तत्र गुणवैषम्यं रजसैव तस्यैव सृष्टिकारणत्वात् ॥ ब्रह्मण इति संदेहाभावाय ॥ भगवत इति भूतमात्रेंद्रियधियो देहरूपाः कार्या अपि भवंतीति कारणजन्मदा लीलेत्युक्तम् ॥ एवं व्याख्यानस्यार्थांतरमभिप्रेतम् ॥ रजोभाजोपि लीलासृष्टिर्मुख्यब्रह्मणोपि लीला । कालत्वेन कालस्यापि सृष्टिर्लीला ॥ जीवोपि कारणमिति ॥ तस्यापि स्वरूपस्थितिः सृष्टिप्रयोजनत्वेन सर्गमध्यपातिनी भवति। अगुणवैषम्याद्ब्रह्मणोपि जन्मेति व्याख्यानार्थं कारणानां जीवानां जन्म घति खंडयतीति व्याख्यानम् ॥ अतः प्रकरणानि विभजते ॥ देवस्य तु द्विरूपत्वादिति ॥ गुणातीतसगुणभेदेन कारणानां तत्त्वजीवानां त्रयो भेदास्तेन पंचधा पंच प्रकरणानि भवंति ॥ एकप्राधान्येऽन्यस्य विभूतित्वमिति स्थितिः ॥ यथा तत्त्वसृष्टिर्गुणातीतविभूतिः ॥ यथा सगुणसृष्टिर्विसर्गरूपा ब्रह्मप्रभृतीनामुत्पत्तिः ॥ यथा वा दशविधा लीला कालस्य सृष्टिः । यथा तत्त्वानां लीला गुणसृष्टिः सांख्यप्रकरणोक्ता ॥ यथा जीवसृष्टिर्मतांतरभाषया ॥ एवं पंचविधापि लीला सर्गरूपा बंधमोक्षविभेदेन द्विरूपा ॥ सगुणस्य मोक्षलीलायोगो गुणातीतस्य ज्ञानं कालस्य भक्तिस्तत्त्वानां मोक्षो जीवस्य वैराग्यमिति ॥ तस्मादर्थभेदेन दश प्रकरणानि भवंति ॥ तदाह ॥ बंधमोक्षविभागत इति ॥ ५ ॥

१ तथा ।

त० दी०— गुणातीतात्सृष्टिरेका सगुणाद्ब्रह्मणोऽपरा ॥
कालो जीवस्तथा नाम तत्राऽपीशेच्छया भवः॥ ६ ॥

त० प्र०— तान् भेदान् स्पष्टयति ॥ गुणातीतादिति ॥ तत्त्वानां वक्तव्यत्वेपि नामसृष्टेः परिग्रहार्थं नामेत्युक्तम् ॥ तेषां पूर्ववत्स्वातंत्र्यं वारयति तत्रापीशेच्छया भव इति न केवलं कालादेः ॥ ६ ॥

त० दी०— सर्वाधारस्वरूपा या तदर्थं भुव उद्धृतिः ॥
मुक्तोपि जायते जीव इति शापकथा तथा ॥ ७ ॥

त० प्र०— ननु सर्गे भूम्युद्धारस्य कुत्रोपयोगस्तदाह ॥ सर्वाधारस्वरूपाया इति ॥ भूम्युद्धारः सर्वसृष्ट्युपयोगी सर्वेषामाधारभूतः साधारणः । तेन यंधलीलांते निरूपितः ॥ जीवप्रकरणं व्यर्थमित्याशंक्याह ॥ मुक्तोपि जायत इति ॥ मुक्तिर्गौणीति केचित् ॥ वस्तुतस्तु सनकादयो मुक्ता एव पूर्वं सिद्धज्ञाना एवोत्पन्ना अग्रे ज्ञानोपदेशाभावात् ॥ तथा वैकुंठवासिनामपि भक्तानां मुक्तानामीश्वरेच्छया संभवः ॥ अतः शापकथा ॥ एकः कर्ता अपरो विषय इति ॥ ७ ॥

त० दी०— उपपत्तिरनेनोक्ता फलार्थं प्रक्रियांतरम् ॥
मतांतरेण हि फलं राजसत्त्वान्निरूप्यते ॥ ८ ॥

त० प्र०— एवं जीवोत्पत्तावुपपत्तिरेवोक्ता न त्वयं प्रकारो भागवताभिमतस्तेषां जीवानां मोक्षार्थं प्रक्रियांतरं सांख्यप्रकरणम् । मतांतरेण फलनिरूपणे हेतुमाह ॥ राजसत्वादिति ॥ ८ ॥

त० दी०— फले हि नास्ति वैषम्यमितीशस्योद्भवाभिधा ॥
उपपत्तौ फले चैव तेनावतरणद्वयम् ॥
क्रियाज्ञानविभेदेन कर्माधीनाऽन्यथा भवेत् ॥ ९ ॥

त० प्र०— तथा सति फले वैषम्यमाशंक्याह ॥ फले हि नास्तीति ॥ यत ईश एवोद्भूय तत्रापि फलं प्रयच्छति ॥ अतोऽस्यां लीलायामवतारद्वयम् ॥ क्रियावतारो वराहो ज्ञानावतारः कपिल इति ॥ ननु सृष्टौ किमर्थमवतारस्तत्राह ॥ कर्माधीनाऽन्यथाभवेदिति ॥ ९ ॥

त० दी०— मुक्तेपि यदि नोत्पत्तिस्तत्पत्रे मुक्तिरेव वा ॥
तदा कृष्णेच्छया सृष्टिरित्यर्थो हि विरुध्यते ॥ १० ॥

---

१ तता ।

त० प्र०— नन्वपूर्वं निरूप्यते यन्मुक्तानां पुनरुत्पत्तिरिति तत्राह मुक्तेपीति॥ तदा ईश्वरत्वं व्याहतं भवेदित्यर्थः ॥ १० ॥

स्त्रीपुंसमुक्तिकथनात्तदर्थं सृष्टिकृद्धरिः ॥
ऐहिकामुष्मिकफलं मोक्षं प्रीतः प्रयच्छति ॥
तस्मात्स्वष्टयवतीर्णस्तु भजेत हरिमादरात् ॥ ११ ॥

त० प्र०— सृष्टिः सफलेति स्पष्टयति स्त्रीपुंसेति ॥ किमत्र स्कंधार्थे फलितमित्याशंक्याह ॥ ऐहिकामुष्मिकफलमिति ॥ ११ ॥

त० दी०— सांख्येन मुक्तिकथनात्सृष्टिः सामान्यतोदिता ॥
तामसी राजसी चैव सात्त्विकीति क्रमात्त्रिधा ॥
गुणसृष्टेस्तन्मतत्वाद्गौणत्वान्न विरुध्यते ॥ १२ ॥

त० प्र०— ननु सांख्यप्रकरणे तदनुसारिणी सृष्टिः कथं नोक्ता तत्राह ॥ सांख्येनेति ॥ सामान्यतो मता या काचिद्वक्तव्येत्युक्ता ॥ उदितेति ॥ संधिरार्षत्यापकः । अत एव गौणी तदविरोधार्थं निरूपिता ॥ १२ ॥

त० दी०— ज्ञानस्य पूर्वसिद्धत्वान्मुक्तिर्भोगादिसंयुता ॥
उपदेशेन च परा चतुर्भिर्नवभिः क्रमात् ॥ १३ ॥

त० प्र०— ननु कर्दमस्य मुक्तौ साधनं नोक्तमिति चेत्तत्राह ॥ ज्ञानस्य पूर्वसिद्धत्वादिति उपदेशेन स्त्रीमुक्तिः ॥ १३ ॥

त० दी०— चतुःप्रकरणी स्थौल्ये सौक्ष्म्ये तु दशधा मता ॥
अधिकारस्तथा सृष्टिरुपपत्तिः फलं तथा ॥ १४ ॥

त० प्र०— तेन क्रमात्प्रकरणचतुष्टयं भवति ॥ दश प्रकरणानि पूर्वं निरूपितानि ॥ स्थूलानि गणयति अधिकार इति ॥ १४ ॥

त० दी०— पंचधा सृष्टिरुक्ता हि तृतीया तु द्विधा मता ॥
चतुर्थी तु त्रिधा प्रोक्ता दशैते सृष्टिसंगताः ॥
अधिकारस्ततो भिन्नः स्कंधद्वययुतः परः ॥ १५ ॥

त० प्र०— पंचधा सृष्टिः पूर्वमेवोक्ता ॥ चतुर्णामेव दशधात्वमिति ॥ तत्र सृष्टिः पंचविधा । उपपत्तिर्द्विधा । त्रिधा मुक्तिः । एवं त्रयाणां दश भेदाः ॥ अधिकारस्तु ततो भिन्नस्तस्य स्कंधद्वयोपयोगात् ॥ स्कंधद्वयमेकं प्रकरणवत् ॥ तेन षष्ठयध्यायाः सर्गविसर्गयोः॥अधिकारे चतुष्टयमिति॥भगवतः कला निरूपिता भवंति॥१५॥

त० दी०— प्रतिबंधो गृहासक्तिः शुद्धिस्तीर्थाटनं मता ॥
वाह्या हरिकथाश्रुत्या तथा चाऽऽभ्यंतरी मता ॥
कृष्णप्रसादयुक्तश्चेदधिकारी परः स्मृतः ॥ १६ ॥

त० प्र०— एवं प्रकरणार्थं निरूप्य अधिकारेऽध्यायचतुष्टयमिति तत्र प्रथमाध्याये यादृशोऽधिकारः संपन्नस्तं प्रतिपादयितुमाह ॥ प्रतिबंध इति ॥ प्रतिबंधनिवृत्तिः शुद्धिस्तीर्थाटनमिति ॥ भगवदीयत्वेपि त्रयो गुणा अधिकाः । तेन पूर्वस्माद्विशिष्टोऽयं प्रथमः । तस्य भगवत्कथाश्रवणं चेत्ततोप्युत्तमो भवति । तत्राऽप्यांतरश्चेद्भगवद्गुणो भवति तदा तृतीयः । भगवत्कृपायां चतुर्थ इति ॥ भगवदीयत्वेपि चतुष्टयं चेत्परमोऽधिकारी भवति ॥ वाह्या शुद्धिर्द्विधा ॥ दोषनिवृत्तिरूपा गुणाधायिका च ॥ तत्र प्रथमा प्रथमाध्यायार्थः । गृहासक्तिरेव प्रतिबंधः । अतस्तन्निवृत्तिर्वक्तव्येति शेषः ॥ १६ ॥

त० दी०— शतं वर्षाणि शूद्रत्वं पश्चाद्राजन्यताऽस्य हि ॥
तावत्क्षत्ता ततो मंत्री तस्मात्कृष्णसभोज्यता ॥
अतोऽधिकारस्तस्याऽत्र यथायुक्तं तु जीवनम् ॥ १७ ॥

त० प्र०— ननु क्षत्रियात् भगवदीयाच्छूद्रः कथमधिकारी ततोप्युत्तमो वा कथं तत्राह ॥ शतं वर्षाणीति ॥ "शापाद्वर्षशतं यमः" इति वाक्यात् ॥ शतवर्षपर्यंतं शूद्रत्वम् ॥ अन्यथा ब्रह्मवीजस्य मुख्यशूद्रत्वं नोपपद्येत राजत्वार्थं प्रार्थितत्वात् । क्षत्रियत्वमेव पश्चात् ॥ अत एव मंत्रादाह्वानम् ॥ तस्याऽशूद्रत्वे हेत्वंतरमप्याह ॥ कृष्णसभोज्यतेति ॥ अतः क्षत्रियत्वात्तस्याऽधिकारः ॥ ब्रह्मवीजत्वं चाऽधिकप्रयोजनम् ॥ ननु स शतवर्षाण्येव जीवतीत्यभिप्रायेण कथं न शाप इत्यभिप्रायेणाह ॥ यथायुक्तमिति ॥ जीवनं तु युक्त्या तस्य बहुकालं लक्ष्यते ॥ स हि धृतराष्ट्रसमानः ॥ दुर्योधनसमानो भीमः ॥ ततोपि कनिष्ठोर्जुनः ॥ तत्समानः कृष्णः ॥ तत्र च "पंचविंशाधिकशतम्" इति वाक्यम् ॥ अतः सार्धं शतं वा तस्य जीवनं भवति ॥ १७ ॥

त० दी०— अपमानाद्धि निर्विण्णो विशुद्धस्तीर्थसेवया ॥
क्षत्ता सत्संगतः प्रीतः प्रश्नत्रितयकृद्धरेः ॥
सामान्येन विशेषेण कुशलं चरितं तथा ॥ १८ ॥

त० प्र०— एवं चतुर्णामर्थमुक्त्वा प्रथमाध्यायार्थमाह ॥ अपमानाद्धि निर्विण्ण

इति ॥ स्वतो निर्विण्णः कदाचिदागच्छेदपि ॥ अतो हेतुपूर्वको निर्वेदः साधनीयः स चेन्निर्विण्णोऽन्यत्र तिष्ठेत्पुनरासक्तिर्भवेत् ॥ अतस्तीर्थसेवैव कर्तव्या ॥ तत्रापि तीर्थे देवताबुद्धिस्तदैव सेवा भवति ॥ तत्रापि कामनाभावाय विशुद्ध इति ॥ क्षत्तेति ॥ पूर्वमेव जितेंद्रियता सिद्धा ॥ सत्संग उद्धवसंगः ॥ तेनैव प्रीतः ॥ न तु प्रश्नार्थम् ॥ तत्र प्रश्नत्रयं कृतवान् । भगवतः कुशलप्रश्नः सर्वेषां कुशलप्रश्नमिषेण भगवतः सामान्यप्रश्नश्चरितप्रश्नश्चेति ॥ तदाह ॥ सामान्येनेति ॥ १८ ॥

त० दी०— अंतिमं मध्यतः कृत्वा द्वयोः संबंधकारणात् ॥
मारणे प्राप्तदोषस्य भक्तोद्धारेण वारणम् ॥ १९ ॥

त० प्र०— उत्तरे क्रमेण उत्तराभावात्प्रकारमाह ॥ अंतिमं मध्यतः कृत्वेति ॥ अंतिमं चरित्रं मध्यतो विशेषप्रश्नोत्तरमुक्त्वा सामान्योत्तरमनुक्त्वा मध्ये चरित्रमुक्तम् ॥ "कृष्णद्युमणिनिम्लोचे" इति विशेषोत्तरं "राजंस्त्वयाऽनुपृष्टानाम्" इति सामान्योत्तरम् ॥ मध्ये भगवतश्चरित्रं च द्विविधमपि निरूपितमित्यर्थः ॥ तत्र हेतुः । संबंधकारणादिति ॥ भगवतश्चरित्रकथनव्यतिरेकेणोत्तरासंभवात्संबंधे कारणम् ॥ ननु भगवतश्चरित्रं नेदं समीचीनं भक्तानां बंधूनां मारणादतः कथमधिकारसिध्यर्थं तच्चरित्रमुक्तमित्याशंक्याह ॥ मारणे प्राप्तदोषस्येति ॥ यद्यपीश्वरत्वान्न दोषस्तथापि प्रतीत्या दोषसंभवेऽपि ते सर्वे भक्तास्तेन प्रकारेणोद्धृता इति दोषनिवृत्तिः ॥ १९ ॥

त० दी०— सेवनात्कृष्णदेवस्य तदाज्ञाकरणादपि ॥
माहात्म्यस्य श्रुतत्वाच्च श्रेष्ठ उत्तमतो ह्ययम् ॥
अतस्तस्य कथा प्रोक्ता कृष्णविश्वासदायिनी ॥ २० ॥

त० प्र०— ननु तथापि विदुरः परीक्षिदपेक्षया कथमुत्तमो भगवदीयत्वस्य तुल्यत्वादित्याशंक्याह सेवनादिति ॥ पूर्वं भगवत्सेवा तेन महती कृता ॥ तदाज्ञाकरणं पांडवानां रक्षा ॥ विशेषतो भगवन्माहात्म्यश्रुतिश्च ॥ एतद्धेतुत्रयं परीक्षिति नास्तीति ततोऽप्ययमुत्तमः ॥ उत्तमत्वं कुत्रोपयुज्यत इत्याशंक्याह ॥ कृष्णविश्वासदायिनीति ॥ विश्वासस्याभिज्ञापिका निःशंकं प्रवृत्तिः ॥ २० ॥

त० दी०— द्वितीये तु तथाऽध्याये सामान्योत्तरमुच्यते ॥
तदर्थं हरिमाहात्म्यमाधिकं कृतमेव च ॥ २१ ॥

त० प्र०— एवं प्रकरणार्थमुपपाद्य द्वितीयाध्यायार्थमाह ॥ द्वितीय इति ॥ वि-

शेषमाहात्म्यमेव प्रश्नस्य जीवपरत्वे सामान्यमाहात्म्यं भवति ॥ तदैवमर्थः ॥ भगवत्प्रश्नो जीवानां साधारणप्रश्नः ॥ विशेषप्रश्नस्तु तत्तन्नाम्ना ॥ अतो भगवतोऽन्यशेषत्वात्तत्र विश्वासार्थं भगवत आर्थिकं माहात्म्यं प्रथमम् ॥ पश्चात्कृतं निरूप्यते ॥२१॥

त० दी०— कृतं यद्यप्युत्तरांगं साम्यात्संबंधतोऽपि तत् ॥
अत्रोक्तं फलसिद्ध्यर्थमुद्धवप्रेम चोच्यते ॥ २२ ॥

त० प्र०— तस्योत्तरांगत्वमाह ॥ ॥ कृतमिति ॥ तृतीयाध्याये चरित्रमुक्तमिति ॥ तत्साम्यादिदमप्युत्तरशेषत्वेनोच्यते ॥ कथया कथा संबध्यत इति हेत्वंतरम् । नन्वेवं सति किमत्र कथानिरूपणेनेत्याशंक्याह ॥ अत्रोक्तमिति ॥ द्वितीयाध्याये विश्वासार्थं भगवत्कृतं फलमुक्तं तच्चरित्रेपि यथा भवति तदर्थं तत्संबद्धमुक्तम् ॥ भगवतो वार्ताकथनमध्यायार्थः ॥ तत्रोत्तरांगद्वयम् ॥ विश्वासार्थं माहात्म्यम् ॥ कथाया अपि तथात्वं च ॥ पूर्वांगमेकम् ॥ परमा भक्तिः ॥ अभक्तोक्ते सर्वथा न विश्वास इति उद्धवप्रेम चोच्यते ॥ २२ ॥

त० दी०— षड्भिस्तथैकेन पुनर्दशयुक् सप्तभिस्तथा ॥
दशभिश्च क्रमादत्र चत्वारोऽर्था निरूपिताः ॥
तृतीयेऽष्टाविंशतिभिश्चरित्रं केवलं कृतम् ॥ २३ ॥

त० प्र०— तत्र श्लोकान् विभजते षड्भिरिति ॥ २३ ॥

त० दी०— विशेषस्योत्तरं तुर्ये श्लोकाभ्यां विंशतिः पुनः ॥
भक्तोद्धारेऽविद्यमाने चत्वार्येकं वियोजकम् ॥ २४ ॥
द्वयोराज्ञाप्रसिद्ध्यर्थं पंच संदेहवारणे ॥
चतुर्भिः संगमश्चेति षडर्थाः क्रमतोदिताः ॥ २५ ॥

त० प्र०— विशेषस्य कुशलस्य । चतुर्थाध्याये उत्तरं श्लोकद्वयेन ॥ तद्दोषपरिहाराय पुनर्भक्तोद्धारे विंशतिः ॥ अविद्यमानभक्तोद्धारे चत्वारि वाक्यानीति शेषः ॥ एकं वियोजकम् ॥ "इति सह विदुरेण" इति ॥ उभयोरुद्धवविदुरयोः ॥ संदेहनिवृत्तिः परीक्षितः । चतुर्भिर्गुरुशिष्यसंगमः ॥ विद्यमानो भक्त उद्धवः ॥ अविद्यमानो विदुरः ॥ एतदकथने क्रूरत्वादभजनीयः स्यात् ॥ २४ ॥ २५ ॥

त० दी०— मैत्रेयस्यापि वक्तृत्वं श्रवणाज्ज्ञापनान्मतम् ॥
अत एव हरिस्तस्य संगं चक्रे स्वसिद्धये ॥ २६ ॥

१ श्रवणाद् ।

त० प्र०— एवं श्रोतुरधिकारं निरूप्य वक्तुरधिकारमाह ॥ मैत्रेयस्यापीति ॥ श्रोतर्येवाऽनुप्रवेशः ॥ ननु वक्तुः प्राधान्याद्भिन्नतया निरूपणमुचितं तत्कथं श्रोतृशेषत्वमित्याशंक्याह ॥ अत एवेति ॥ न हि मैत्रेयकृपया मैत्रेयो निकटे स्थापितः किं तु विदुरकृपया ॥ अतो भगवन्मार्गे भक्त एव श्रेष्ठो नाऽन्य इत्यर्थः ॥ २६ ॥

त० दी०— अधिकारेऽथ संसिद्धे द्वाभ्यां सृष्टिर्निरूप्यते ॥
तत्त्वकार्यविभेदेन गुणातीता द्विधा हि सा ॥ २७ ॥

त० प्र०— एवं चतुर्भिरधिकारं निरूप्य श्रोतरि सिद्धे मुख्यसृष्टिं निरूपयतीत्याह ॥ अधिकार इति ॥ उभयोर्भेदकमाह ॥ तत्त्वकार्यविभेदेनेति ॥ कार्यं पुरुषशरीरम् ॥ गुणातीता द्विधा हि सृष्टिः ॥ अग्रे उभयोः कारणत्वादद्वयं कारणत्वेनैव निरूपितम् ॥ २७ ॥

त० दी०— समष्टेः कारणत्वं हि कर्माणि प्रति वर्णिनाम् ॥
प्रश्नत्रयं तृतीये तु द्वैविध्यं प्रथमे पुनः ॥ २८ ॥
षड्भेदा नाऽवतारे हि साधनेनोपसंहृतिः ॥
द्वयोरपि विभेदेन प्रकटे ह्येक एव तु ॥
जन्मादयः प्रवेशश्च प्रकारद्वयमेव च ॥ २९ ॥

त० प्र०— तत्र तत्त्वेषु संदेहाभावात्समष्टेः कारणत्वं साधयति ॥ समष्टेरिति ॥ एवं प्रकरणाध्यायार्थं निरूप्य विचारमारभते ॥ तत्र प्रथमं विदुरस्य प्रश्नः "सुखाय कर्माणि" इति पंचदशभिः श्लोकैः ॥ तत्र कष्टमिति विचारणीयम् ॥ उत्तरत्वेन भगवल्लीलामाह उत्पत्तिस्थितिप्रलयरूपाम् ॥ ततस्तदनुरोधेनैकः प्रश्नः कर्तव्य इति भवति तदभावाद्विचारः । तत्र प्रथमं कर्मफले संदेहः फलार्थं विहितानि कर्माणि क्रियमाणानि विपरीतं फलं साधयंतीत्येकः प्रश्नः ॥ तत्रांशत्रयमस्तीत्याह ॥ कर्माणि प्रति वर्णिनामिति ॥ नैतानि कर्माणि लौकिकानि किं तु वैदिकानि । अन्यथा भ्रांतस्य फलविपर्यये न किंचिद्दूषणम् ॥ अतो वर्णिनामेव कर्माणि प्रति प्रश्नत्रयम् । कथं सुखं न जायते दुःखाभावो वाऽनुद्देश्यभेदेन कथं वाऽसंकलितं दुःखं जायत इति ॥ अथ यदि कर्ममार्ग एतादृश एव तदा प्राणिना किं कर्तव्यमिति प्रथमः प्रश्नः ॥ तत्र यद्युत्तरं भगवद्भजनं कर्तव्यमिति तत्रापि भजनमपि कर्मेति येन प्रकारेण कृतं भगवत्प्रीतिजनकं भवति तं प्रकारं कथयेति द्वितीयः प्रश्नः । अवतारचरितप्रश्नस्तृतीयः । अवतारव्यतिरेकेण कृते चरित्रे प्रश्नचतुष्टयम् ॥

उत्पत्तिस्थितिप्रलयां नानात्वमिति । कार्यप्रश्नः पंचमः ॥ सर्वत्र भिन्नप्रकारकरणहेतुः प्रश्नः षष्ठः ॥ एवमवतारचरित्रेण सह सप्त भवंति ॥ एवं सति प्रश्नत्रयं भवति ॥ जीवकर्माणि द्विविधानि । स्वार्थानि भगवदर्थानि चेति ॥ भगवत्कर्माणि च तृतीयानि तत्सामान्यतः प्रतिजानीते ॥ प्रश्नत्रयमिति ॥ एतत्पदं पूर्वेणापि संबध्यते वर्णितानामित्यनेन तद्द्योतितम् ॥ प्रश्नप्रथमश्लोकार्थत्वेन साधारण्येन च प्रतिज्ञा ॥ प्रश्नत्रयमिति ॥ तृतीये भगवत्कर्मप्रश्ने अवतारानवतारभेदेन द्वैविध्यम् ॥ तत्राऽनवतारप्रश्ने षट् भेदाः ॥ स एव प्रथम इति प्रथमे पुनरित्युक्तम् ॥ पश्चादवताराः । उद्देशेन ग्रहणसंदेहं वारयति ॥ नाऽवतारे हीति ॥ अतोऽनभिव्यक्तभगवत एव षट् प्रश्नाः कृता उपसंहारे निरूपिताः ॥ "यानीश्वरः कीर्तय तानि मह्यम्" इति गृहीतावतारस्य च तेन भगवत्कर्मत्वेन द्विविधेष्वपि तस्योपसंहार इति तत्रैवोत्तरमुक्तमिति न दोषः ॥ यतः साधने जीवकर्तृककर्मणि नोपसंहृतिः ॥ हेत्वंतरमपि ॥ द्वयोरपि विभेदेनेति ॥ "तदस्य कौषारव" इति ॥ "स विश्वजन्मस्थिति" इति ॥ इदानीं प्रश्नान् गणयितुं प्रथमे उद्देशप्रकारेण एक एव प्रश्न इत्याह ॥ प्रकटे ह्येक एव स्विति ॥ प्रकटोऽवतारः ॥ अप्रकटे षड्भेदान् वदति ॥ जन्मादय इति ॥ उत्पत्तिस्थितिप्रलयाः ॥ यथा "ससर्जाग्रे" इत्यादिना ॥ प्रवेशनानात्वे एकत्वेन गणिते ॥ तदनंतरं प्रकारद्वयप्रश्नः ॥ यैरतत्त्वभेदैः, येन प्रजानामिति ॥ २८ ॥ २९ ॥

त० दी०— हेतूक्त्या शास्त्रनिर्धारो भक्तत्वज्ञापनाय हि ॥
स्वरुचिश्चापि तत्रैव पदस्तु सर्वं प्रतिष्ठितम् ॥ ३० ॥

त० प्र०— एवं भगवत्कर्मप्रश्नेषु क्रियमाणेषु पूर्वयोरुत्तरं न वक्तव्यमिति स्वरुच्या शास्त्रनिर्धारेण च निरूपयतीत्याह ॥ हेतूक्त्या शास्त्रनिर्धार इति ॥ "कस्तमुयात्" इति चतुर्भिः प्रश्नैर्हेतूक्तिः ॥ अनेनैव शास्त्रनिर्धारः ॥ गृहासक्तिर्दुःखात्मकं संसारं प्रयच्छति ॥ कर्माणि तु गृहासक्तिकार्याणि ॥ अतो दुःखजनकत्वमुचितमेवेति । ननु स्वयं पृष्ट्वा स्वयमेव कथमुत्तरयतीत्याशंक्याह ॥ भक्तत्वज्ञापनाय हीति ॥ भक्तो हि कर्मणामसारतां ज्ञात्वा भगवद्धर्मेषु रमते ततः कर्मप्रश्नस्तस्याऽयुक्तो भवति ॥ एवं ज्ञापनेन स्वस्य भक्तत्वम् ॥ रुच्यापीत्याह ॥ स्वरुचिश्चापीति ॥ "परावरेषाम्" इति श्लोकेन स्वरुचिरुक्ता मह्यमित्युपसंहारेपि ॥ नन्ववतारच-

१ भेदगणिते इति क्वचित् । २ कर्मपदं क्वचित् ।

रित्रमपि नोत्तरे निरूप्यत इत्याशंक्याह ॥ पट्सु सर्वं प्रतिष्ठितमिति ॥ स्थितावबताराणां प्रवेशं मन्यते ॥ पुरुषे वाऽनुप्रवेशः ॥ ३० ॥

त० दी०— इष्टे प्रसिद्धान्यहेतोर्भगवत्प्रीणनेऽपि च ॥
उत्तमे पथि संप्रश्न आद्यावेतौ यथोत्तरम् ॥ ३१ ॥

त० प्र०— ननु "तत्साधुवर्यादिश वर्त्म शं नः" इति प्रश्नोऽनुपपन्नः प्रश्ने वा उत्तरे वा समानाभावादित्याशंक्य समाधत्ते ॥ इष्ट इति ॥ इष्टे सुखदुःखाभावे भगवत्प्रीणने वा प्रसिद्धहेतोरभावादन्यो हेतुर्वक्तव्य इति लोकोपकारार्थं प्रश्न उचितः॥ अत एवाद्यावेतौ सर्वसाधारणौ लोकोपकारार्थं स्वार्थं च यतनीयमिति ॥ नन्वस्योत्तराभावात्कथं प्रश्न इति तत्राह ॥ यथोत्तरमिति ॥ यथावदुत्तरम् ॥ उत्तरवाक्ये प्रथमत एव "लोकान् साध्वनुगृह्णता" इति प्रशंसायाः कृतत्वात् । तृतीयोत्तरेणैवाऽऽद्योत्तरं यथावदुक्तमित्यर्थः ॥ ३१ ॥

त० दी०— उत्तरत्वेन कथनादुत्तरं कर्मणि स्थितम् ॥
अतः सभाजनं तस्य तेनैवोत्तरमाद्ययोः ॥ ३२ ॥

त० प्र०— तत्र हेतुः ॥ उत्तरत्वेन कथनादिति ॥ तदेव स्पष्टयति ॥ उत्तरं कर्मणि स्थितम् ॥ भगवच्चरित्रकथने पर्यवसितम् ॥ अत एव सभाजनम् ॥ तदुत्तरेणैव आद्ययोरप्युत्तरमिति दुःखाभावः ॥ सुखावाप्तिः कथाश्रवणादेव ॥ तेनैव भगवानपि तुष्यति ॥ ३२ ॥

त० दी०— कार्यसृष्टौ स्वतंत्रत्वं तेषां वारयितुं स्तुतिः ॥
विशेषतस्तु कथनं ब्रह्मणोपि सुदुष्करम् ॥
श्रवणादिप्रसिद्ध्यर्थं किंचिदुक्तमिति स्थितिः ॥ ३३ ॥

त० प्र०— ननु तत्त्वानां स्तुतिः कुत्रोपयुज्यते तत्राह ॥ ॥ कार्यसृष्टौ स्वतंत्रत्वमिति ॥ पौत्रोत्पत्तौ पुत्राणामिव न प्रकृते तत्त्वानां स्वतंत्रता ॥ ननु सामान्यतो निरूपणं प्रकृतोपयोगि भारतादावप्येतावच्छ्रुतत्वादित्याशंक्याह ॥ विशेषतस्तु कथनमिति ॥ तर्हि कथनस्य किं प्रयोजनं तत्राह ॥ श्रवणादिप्रसिद्ध्यर्थमिति ॥ श्रवणकीर्तनादेर्विषय एतादृश इति ज्ञापनार्थः ॥ ३३ ॥

त० दी०— सर्वावतारबीजत्वात्पुरुषेणैव तत्कथा ॥
गुणातीतात्सृष्टिलीला द्वयेनेवं निरूपिता ॥ ३४ ॥

---

१ नेत्र ।

त० प्र०— अवतारचरित्रस्याऽनंतर्भावमाशंक्याह ॥ सर्वावतारवीजत्वादिति॥ अध्यायद्वयार्थमुपसंहरति ॥ गुणातीतादिति ॥ ३४ ॥

त० दी०— सगुणा तु त्रयेणाऽऽह पूर्वपक्षाधिकत्वतः ॥
ततः कारणसंभूतिः स्तुतिस्तस्य फलावधि ॥ ३५ ॥

त० प्र०— सगुणा तु लीला त्रिभिः॥ सृष्टिभगवतोर्मध्ये गुणानामधिकारत्वात्॥ ते हि पूर्वपक्षत्वेनैव मतांतरभाषया सिद्धा निरूप्यंत इति ज्ञापयितुमाह ॥ पूर्व-पक्षाधिकत्वत इति ॥ अत्रापि कारणसंभूतिः कार्यसंभूतिरित्यध्यायद्वयम् ॥ तत्र कारणं ब्रह्मा कार्यं सर्वं जगत् ॥ तत्कालशेषत्वेन निरूपणीयमिति स्तोत्रमेव कार्यत्वेन निरूप्यते सफलम् ॥ ३५ ॥

त० दी०— एतद्विभूतिरूपत्वादन्येषां न विसर्गता ॥
साधारण्येन कथनं प्रकृते नोपयुज्यते ॥ ३६ ॥
अतो विभूतिरूपेण सर्वेषां विनिरूपणम् ॥
यादृशो हि विसर्गोऽत्र स चतुर्थे विविच्यते ॥ ३७ ॥

त० प्र०— एवं सामान्यतस्त्रयाणामध्यायानामर्था निरूपिताः ॥ अधुना विचार्यंते ॥ नन्वियं लीला विसर्गे प्रविशति न सर्गे इत्याशंक्याह ॥ एतद्विभू-तिरूपत्वादिति ॥ एतदिति प्रथमसृष्टिस्वरूपपुरुषरूपमुच्यते ॥ अन्येषां ब्रह्मा-दीनाम् ॥ अस्तिविभूतित्वं ब्रह्मादीनामस्ति च विसर्गता ॥ उभयोः किं प्रयोज-नमित्याकांक्षायामाह ॥ साधारण्येन कथनमिति ॥ भागवतं हि सारोद्धारात्म-कमुत्तमाधिकारसहितं च । तेन पुराणांतरसाम्येन न विसर्गत्वेन निरूपणीयम् ॥ तर्हि विसर्गो न वक्तव्य इत्याशंक्याह ॥ यादृशो हि विसर्ग इति ॥ तस्य न विभूतित्वं संभविष्यतीति भावः ॥ ३६ ॥ ३७ ॥

त० दी०— कृष्णोक्तं तु पुराणं हि श्रीभागवतमुच्यते ॥
अयमर्थस्त्वन्यमुखान्नोद्भविष्यति कर्हिचित् ॥ ३८ ॥

त० प्र०— गुणातीतात्सृष्टिलीला मैत्रेयेण स्वत एव निरूपिता भगवदाज्ञया ॥ तावता विदुरस्याकांक्षायां समाप्तौ सर्वसंदेहवारकं भागवतमेवेति सूतवत् शुकवत् भागवतमेवोपक्षिपति इति ॥ तत्राऽस्य परंपरा शेषात्संकर्षणात् । तथा सति ब्रह्मादिक्रमेण नाऽऽगतमिति कथं भागवतत्वमित्याशंक्याह ॥ कृष्णोक्तमिति ॥ भगवता प्रोक्तं भागवतम् ॥ गीतादीनामपि भागवतत्वमेव परं न पुराणत्वम् ॥

न ह्यन्यो भगवल्लीलां जानातीत्यभिप्रायेणाऽऽह ॥ अयमर्थ इति ॥ ३८ ॥

त० दी०— वैष्णवादिपुराणानि तच्छेषाणीति निश्चितम् ॥
सर्वतोमुखमेतद्धि तदर्थं शेषतः कथा ॥
अर्थमात्रप्रधानत्वान्न दूषणमिहाऽण्वपि ॥ ३९ ॥

त० प्र०— नन्वत्र परंपरायां पराशरान्मैत्रेयस्याऽध्ययनम् ॥ स तु विष्णुपुराणमाहेति प्रसिद्धिस्तस्मादस्य न भागवतत्वमित्याशंक्याह ॥ वैष्णवादिपुराणानीति ॥ "त्रयोविंशति वैष्णवम्" इति ॥ त्रयोविंशतिसहस्रपरिमितं पुराणं भिन्नमेव तद्व्यासेनैव कृतम् ॥ "अष्टादशपुराणानाम्" इति वाक्यात् ॥ इयं तु पराशरसंहिता भिन्नैव ॥ पराशरो हि भागवतं श्रुत्वा मैत्रेयाय तथा बोधितवान्[१] ॥ तस्मात्तदपि भागवतमेवेति न कोपि विरोधः ॥ ननु तथापि परंपरा भिन्नैवेति कथं भागवतमिति चेत्तत्राह ॥ ॥ सर्वतोमुखमिति ॥ भगवतो हि स्वरूपं भागवते वक्तव्यम् ॥ तद्भगवान् स्वयमेव कदाचिद्वदति ॥ कदाचित्संकर्षणो वासुदेवस्यैव तत्त्वं वदति "तत्त्वमतः परस्य" इति वाक्यात् ॥ ननु तत्र वाक्यानुपूर्वी विसदृशी तत्कथमनयोरेकत्वं तत्राऽऽह ॥ अर्थमात्रप्रधानत्वादिति ॥ सर्गादयोर्था यादृशा भागवते विवक्षितास्त एव पराशरवत्कृष्णेपि संतीति न किंचिदनुपपन्नम् ॥ ३९ ॥

त० दी०— स्थूलसूक्ष्मविभेदेन केचिदाहुर्मृषैव तत् ॥
पंचमादन्यवत्कला तथा शास्त्रविरोधतः ॥ ४० ॥

त० प्र०— केचित्पुनः सूक्ष्मं भागवतं भगवद्ब्रह्मसंवादपरंपरया समागतं द्वितीयस्कंधमात्रम् ॥ स्थूलं तु दशस्कंधात्मकं शेषतः समागतमिति ॥ तं पक्षं दूषयति ॥ स्थूलेति ॥ पंचमस्कंधादिकं न पराशरेणोक्तं नापि व्यासः पराशराच्छ्रुत्वा पंचमादिकं कथयति ॥ तथा सति कस्मै येन पुरेति श्लोकोक्ता समासौ परंपरा विरुध्यते ॥ मध्ये च मैत्रेयप्रवेशो व्यर्थः स्यात् ॥ अतः सर्वतोमुखत्वख्यापनार्थमेव अर्थप्राधान्यविवक्षया शेषकथा निरूपितेति निश्चयः ॥ ४० ॥

त० दी०— गुणातीतात्सृष्टिकथा स्वत उक्ताऽतिगोप्यतः ॥
कृष्णाज्ञया तन्मुखतः श्रुतत्वान्न स्वतंत्रता ॥ ४१ ॥

त० प्र०— एवं दूषणसमाधानमुक्त्वा प्रकृते संगतिमाह ॥ गुणातीतादिति ॥ एतत्पराशरमुखान्न श्रुतमिति किमत्र मूलमित्याकांक्षायामाह ॥ कृष्णाज्ञया

१ निभा।

तन्मुखत इति ॥ अनेन मैत्रेयस्य कृष्णमुखादेव भागवतश्रवणमिति निरूपितम्॥ भगवानादिरूपेण ब्रह्मणे प्रोवाच ॥ अवतीर्य तु मैत्रेयोद्धवाभ्याम् ॥ उद्धवात्परंपरा न स्पष्टा ॥ मैत्रेयो विदुराय प्रोवाच ॥ ४१ ॥

त० दी०—अत्यंतशुद्धचित्तस्य युक्तिर्नाऽपेक्ष्यते क्वचित् ॥
इति वक्तुर्न संदेहः श्रोतुस्त्वस्तीति संशयः ॥ ४२ ॥

त० प्र०—इदमत्यंतशुद्धचित्तस्य फलजनकम् ॥ विदुरस्तु नैवंविध इत्याह ॥ अत्यंतशुद्धचित्तस्येति ॥ अनेन भागवतानां बहुत्वमपि ज्ञापितम् ॥ भगवदीयो यः कश्चिद्भगवता प्रोक्तं कथयति तदेव भागवतमिति सामान्यलक्षणम् ॥ ४२ ॥

त० दी०—गुणातीतात्सृष्टिकथा सर्वथा नोपपद्यते ॥
कार्यकारणवैजात्याल्लोकहेतोरभावतः ॥
निरुपाधिकरूपे हि संदेहद्वयमीरितम् ॥ ४३ ॥

त० प्र०—युक्त्या पदार्थनिर्धारो लौकिकः ॥ भागवतार्थस्त्वलौकिक इति ॥ तथाऽप्यधिकाराभावे सोऽर्थो न स्फुरतीति संदेहे जाते तन्निराकरणमवश्यं कर्तव्यम् ॥ तत्र यावता यो मन्यते तथा तस्मै निरूपणीयमिति स्थितिः ॥ तथा मैत्रेयोपि विदुरबुद्धिमाश्रित्य समाधत्ते ॥ तत्र पूर्वपक्षं सिद्धांतं चाह ॥ गुणातीतादिति ॥ यथा बालः पुरुषस्य निषेकाज्जन्माऽज्ञात्वा भोजनमेहनावेव पश्यन् तत्रापि तथा कल्पयन् तदप्यनुपपन्नमिति संशयी भवति ॥ तत्र वक्ता बालं यथा कथंचिद्बोधयति वस्तुतस्तु न स सिद्धांतः ॥ किं तु यथा निरूपितं "भगवानेक आसेदम्" इति स एव सिद्धांतः ॥ विदुरस्य संशये हेतूनाह ॥ कार्यकारणवैजात्यादिति ॥ कारणं गुणरहितम् ॥ कार्यं सगुणमिति ॥ लोकहेतुश्च कामः ॥ एवं गुणातीते संदेहद्वयम् ॥ ४३ ॥

त० दी०—सोपाधित्वे परीहारस्तदेव न भवेदिति ॥
तृतीयो ब्रह्मगः सिद्धो जीवेऽप्येवमभेदतः ॥ ४४ ॥

त० प्र०—तत्परिहारार्थं यदि सोपाधिक एव जगत्कर्ता निरूप्यते तदा पूर्वोक्तदोषपरिहारो भवति ॥ तथापि तदेव न संभवतीति तृतीयो दोषः समायातीत्याह॥ सोपाधित्व इति ॥ एतस्य दूषणस्य समाधानाभावात् तृतीयो ब्रह्मगः सिद्धः इत्युक्तम् ॥ इदमेव दूषणं ब्रह्मणो जीवभावेपि ॥ ४४ ॥

त० दी०— मायासंबंधकार्ये हि परिहार्ये तयोः क्रमात् ॥
प्रथमस्य परीहारः षष्ठ्या नित्यतयोदितः ॥ ४५ ॥

त० प्र०— मायासंबंधे निरूपयितुं शक्ये हि दुर्भगत्वादिकं संभवतीति एतयोः समाधानं मायासंभवे निरूपयितुं शक्ये सति तत्कार्ये च निरूपयितुं शक्ये सति भवतीत्याह ॥ **मायासंबंध इति** ॥ एवमेका शंका ब्रह्मगा अपरा जीवगेति ॥ पूर्वपक्षं निरूप्य सिद्धांतं निरूपयति ॥ **प्रथमस्य परीहार इति** ॥ "सेयं भगवतो माया यन्न येन विरुध्यते" इति भगवतो मायायाश्च नित्य एव संबंधः षष्ठ्या निरूपितः ॥ ४५ ॥

त० दी०— भगवत्त्वाविरोधित्वं प्रकृत्ये व च सूचितम् ॥
असमासात्प्रधानत्वं तेन नोपाधिसंभवः ॥ ४६ ॥

त० प्र०— नन्वेवं सति भगवत्त्वहानिः स्यादित्याशंक्याह ॥ **भगवत्त्वाविरोधित्वमिति** ॥ भगवत्पदेनेत्यर्थः ॥ ननु विक्षेपशक्तिपक्षेपि भगवत्त्वाविरोध उपपद्यत इत्याशंक्याह ॥ **असमासात्प्रधानत्वमिति** ॥ भगवतो मायेति पदद्वयस्याऽसमासादेकार्थत्वाभावः ॥ तेन न मायावैशिष्ट्यं भगवतः किं तु सा पृथगेव दासीवत्तिष्ठतीत्युक्तम् ॥ ४६ ॥

त० दी०— द्वितीयस्य परीहारे विरोधात्कार्यबाधनम् ॥
विरोधमात्रमाहोस्विदाद्ये सेयं दर्शितः ॥ ४७ ॥

त० प्र०— एवं भगवति परिहारमुक्त्वा जीवपरिहारमाह ॥ **द्वितीयस्येति** ॥ भगवतो मायेति पदद्वयेनैव प्रथमस्य परीहारः ॥ द्वितीये पक्षं विकल्पयति ॥ विरोधात्कार्यबाधनं, आहोस्विद्विरोध एवेति ॥ आद्ये समाधानं सेयं दर्शित इति ॥ कार्यबाधनं कर्तुं न शक्यते संसारस्याऽसिद्धत्वात् ॥ नन्वेतदेव न स्यादित्युच्यत इति चेद्भगवन्मायया तदुपपत्तिरिति बुध्यताम् ॥ ४७ ॥

त० दी०— द्वितीये भूषणं तस्या विरोधो न तु दूषणम् ॥
विरुद्धकार्यसंबंधस्तत्कृतस्तेन वर्ण्यते ॥ ४८ ॥

त० प्र०— तथापि युक्तिविरोध इति द्वितीयपक्षे समाधानमाह ॥ **द्वितीय इति** ॥ कथं भूषणमित्याशंक्याह ॥ **विरुद्धकार्यसंबंध इति** ॥ मायया हि विरुद्धं कार्यं दृश्यते । शिरश्छिद्यते जीवति । अंत्राणि निष्कास्यंते स्वस्थश्चेति ॥ ४८ ॥

---

१ षष्ठ्या । २ विरोधार्यमिति ।

त० दी०— विरोधोपि प्रतीत्यैव न वस्तुनि यतो वृहत् ॥
दर्शनं ज्ञानिनोप्येवं जीवे सर्वस्य नेश्वरे ॥ ४९ ॥
इति दृष्टांततस्तस्य सत्ये भेदो निरूपितः ॥
तन्निवृत्तिप्रतीकारो दुर्लभस्तेन तत्कथा ॥ ५० ॥

त० प्र०— नन्वत्रापि कोपपत्तिरित्याकांक्षायामाह ॥ विरोधोपि प्रतीत्यैवेति ॥ सर्वभवनसमर्थत्वाद्ब्रह्मणस्तच्छक्तित्वान्मायायाश्च तथात्वम् ॥ अयमात्मविपर्यय ईश्वरस्य कार्पण्यादिः स्वरूपे ज्ञाते न भविष्यतीत्याशंक्याह ॥ दर्शनं ज्ञानिनोऽप्येवमिति ॥ यस्तु जीवे ज्ञानी जीवस्वरूपाभिज्ञः ॥ जीवस्वरूपं तु सर्वावस्थासु भासत एव ईश्वरस्वरूपमेव परं न भासते ॥ अतः स्वप्नद्रष्टा भगवानेवेति तेन सह स्वस्याऽभेदज्ञानात्स्वशिरश्छेदः स्वप्ने भासते ॥ वस्तुतस्तु जीवस्वाप्नशरीरस्य शिरश्छेद ईश्वरेण दृश्यते स्वयं च तदभेदात्पश्यति ॥ सुषुप्त्युत्क्रांत्योरेव भेददर्शनम् ॥ शारीरात्मा प्राज्ञेनाऽऽत्मना संपरिष्वक्तेऽन्वारूढ इति भेदेन निरूपणात् ॥ ब्रह्मविदस्तत्र भेदेनाऽनुभवः । अन्यस्य त्वऽबोधस्तदाह ॥ इति दृष्टांतत इति ॥ स्वप्नदृष्टांतेन सत्ये भगवत्स्वरूपे देहाद्भेदो निरूपितः ॥ तत्र द्रष्टा भगवानेवेति ॥ तर्हि शिरो जीवस्येत्यत्र किं प्रमाणम् ॥ तत्र द्वितीयो दृष्टांतो यथा जले चंद्रमस इति ॥ यस्तु देहादिसंसारे जलप्राये अहमिति मन्यते तस्यैव कंपादिर्न त्वाकाशस्थस्य ॥ अतो भेदेपि जीवस्यैव तच्छिरः ॥ अस्याऽनर्थस्य निवृत्तिः स्वतो न भवतीति तन्निवृत्त्युपाय उच्यत इत्याह ॥ तन्निवृत्तिप्रतीकार इति ॥ "स वै निवृत्तिधर्मेण" इत्यादिना ॥ ४९ ॥ ५० ॥

त० दी०— निदर्शनं सुलभं साधनं च गूढा सूक्तिस्तेन वै तत्प्रकाशः ॥
तदुक्तं वै दर्शनं यत्र भेद्यं सेवा हेतुः शास्त्रनिष्ठेयमाद्या ॥५१॥

त० प्र०— मार्गद्वयेनानर्थनिवृत्तिः ॥ भक्तिमार्गेण ज्ञानमार्गेण च । तत्र प्रथमे शनैस्तिरोभाव इति मैत्रेयाभिप्रायः ॥ सर्वतिरोभावस्तु भगवत्साक्षात्कारे ॥ तदा न स्वप्नदर्शनम् ॥ जागरणेपि न देहादावात्मबुद्धिः किंतु सुषुप्तिवत्सर्वदा ब्रह्मानंदानुभवः ॥ तत्र प्रथमपक्षे मुक्तिर्वक्तव्येति मैत्रेयः कैमुतिकन्यायेन "अशेषसंक्लेशशमम्" इति श्लोकेन निरूपयतीत्याह ॥ निदर्शनं सुलभमिति ॥ दृष्टांतोऽत्र सुलभः ॥ सर्वेषामेव भगवद्गुणानुवादे परमानंदानुभवात् ॥ साधनं च सुलभं सर्वत्र सतां भगवद्गुणकीर्तनस्य नित्यत्वात् ॥ चकारान्नात्र देशाद्यपेक्षा ॥ नन्वेवं सति

कथं न सर्वेषामनर्थो निवर्तते तत्राह ॥ गूढा सूक्तिरिति ॥ समीचीना भगव-च्चरित्रोक्तिः, गूढा गुप्ता ॥ तेनैव हि भगवत्प्रकाशः स च दुर्लभ इति न सर्व-मुक्तिः ॥ अत एव भक्तिमार्गो दुर्लभ इति तद्दर्शनमुक्तम् ॥ ज्ञानमार्ग उक्तः ॥ तदपि तदेव दर्शनम् । यत्र मेद्यमात्मनो भेदं न भासयति ॥ एवं मार्गद्वयस्यापि सेवा हेतुः ॥ भगवत्सेवया द्वयमपि प्राप्यत इति ॥ सापि सेवा शास्त्रनिष्ठा पंच-रात्रोक्ता न स्वेच्छया यथा कथंचित्कृता ॥ इयमाद्या प्रथमत एवं कर्तव्या ॥ पश्चाद्भगवत्प्रसादे तदुक्तप्रकारेण स्वेच्छयापि सेवा भवतीत्यर्थः ॥ ५१ ॥

त० दी०— तदर्थमेव सकलं पृष्टं दुर्लभसंगतः ॥
अतोपि न विसर्गत्वमन्यशेषाद्यवीयसाम् ॥ ५२ ॥

त० प्र०— अयं सिद्धांतो ज्ञातव्य इत्येवाभिप्रेत्य सर्वं पृष्टमित्याह ॥ तदर्थमे-वेति ॥ अनेन सर्गत्वमेव समर्थितमित्याह ॥ अतोपि न सर्गत्वमिति ॥ यवीयसां ब्रह्मादीनां सृष्टिकर्तुर्भगवतो विभूतिशेषत्वात् ॥ एवं पूर्वपक्षाध्याये वि-भूतिज्ञानार्थं प्रश्नः समर्थितः ॥ ५२ ॥

त० दी०— श्रीभागवतमेवाऽत्र श्रोतव्यं नान्यदस्ति हि ॥
स्वज्ञानख्यापनार्थं हि तदुपाख्यानमीरितम् ॥ ५३ ॥

त० प्र०— विभूतिज्ञानं च भागवतादेव भवतीति तस्य प्रस्तावनेत्याह ॥ श्रीभागवतमेवात्रेति ॥ अन्यतः श्रवणं वारयितुं परंपरामाहेत्याह ॥ स्वज्ञानख्या-पनार्थमिति ॥ ५३ ॥

त० दी०— तदुद्भवस्तदाऽऽज्ञप्तस्तपसा तोषिते हरौ ॥
स्तुते संप्रार्थिते चैव बोधितः सर्वमेव हि ॥ ५४ ॥
चतुर्मुखश्चकारेदं यथापूर्वं तदाज्ञया ॥
इति दर्शयितुं पृष्ट उपोद्घातं त्रिभिर्जगौ ॥ ५५ ॥

त० प्र०— कथं ब्रह्मणो विभूतित्वमित्याशंक्याह तदुद्भवस्तदाज्ञप्त इति ॥ सतधा यो भगवत्संबंधी स तस्य विभूतिः ॥ आवेशी भवतीत्येके ॥ अत्र गुणा-तीतात्सृष्टिमुक्त्वा सगुणात्सृष्टिर्वक्तव्या सापि "विरिंच्योपि तथा चक्रे" इति दशमा-ध्याये वक्तव्या ॥ मध्येऽध्यायत्रयेण कथं सगुणात्सृष्टिरित्याशंक्याह ॥ इति दर्श-

१ संगतम् ।

यितुं पृष्ट इति ॥ त्रिभिरुपोद्घातो निरूपितः ॥ अनेन विभूतित्वनिरूपण एव तात्पर्यमिति ज्ञापितम् ॥ यतः सृष्टिरल्पेनैवोक्ता ॥ ५४ ॥ ५५ ॥

त० दी०— पद्मकल्पः सात्त्विकानां श्रेष्ठस्तं तत उक्तवान् ॥
पूर्वस्य प्रलयं शिष्टं हेतुं चाह विशुद्धये ॥ ५६ ॥

त० प्र०— पद्मकल्पस्य विशेषतो निरूपणे हेतुमाह ॥ पद्मकल्प इति ॥ पद्मकल्पात्पूर्वकल्पस्तामसो भवितुमर्हति ॥ अतस्तस्य प्रलयो निरूप्यते ॥ तत्र शिष्टः शेषशायी भगवान् स चोत्तरत्र हेतुत्वार्थं निरूप्यते ॥ अतः पद्मकल्पोऽत्यंतं शुद्धो भवति ॥ ५६ ॥

त० दी०— जघनाब्जपृथग्रूपैस्त्रिधा भूमेर्निरूपणम् ॥
ब्राह्मे पाद्मे वराहे च तेन नाऽन्योन्यदूषणम् ॥ ५७ ॥

त० प्र०— अत्र कल्पभेदेषु पदार्थानामन्यथात्वं दोषाय न भवतीति ज्ञापयितुं पृथिव्यास्त्रिरूपत्वमाह ॥ जघनाब्जपृथग्रूपैरिति ॥ ब्रह्मकल्पे विराजो जघनरूपा पृथिवी ॥ पद्मकल्पे तस्यैव नाभिपद्मरूपा ॥ वराहकल्पे तु पृथग्रूपा ॥ तत्राप्यादिवराहकल्पे ब्रह्मणाऽतलादिपंचलोकानां हस्तेनोद्धृतिः कृता पुष्करपर्णे च स्थापिता ॥ सैव मग्ना पुनर्भगवतोद्धृता वराहकल्पे ॥ अयं तु श्वेतवाराहकल्पस्ततोपि विसदृशस्तेन दृष्टश्रुतयोर्विरोधो न मंतव्यः ॥ ५७ ॥

त० दी०— प्राकृतं त्रयमेतत्स्यादन्येष्वेकं यथोचितम् ॥
अतस्त्रिधा भागवते भुवो रूपनिरूपणम् ॥ ५८ ॥

त० प्र०— ननु बहूनां कल्पानां विद्यमानत्वात्कथं त्रयमेव निरूपितं तत्राह॥ प्राकृतं त्रयमेतदिति ॥ अन्ये कल्पा एतद्विकाराः ॥ अत एतेषामन्यतरस्य तेषु पृथिव्यादीनां रूपं भवति ॥ अत्र निदर्शनार्थमाह ॥ अतस्त्रिधा भागवत इति॥५८॥

त० दी०— पुरुषावयवैः सर्वं यदा तस्य पृथङ्न हि ॥
पृथिवी वा समुद्रो वा परिखामध्यवत्परम् ॥
तदा सर्वं हरिर्मानी न मानीत्यपरे विदुः ॥ ५९ ॥

त० प्र०— तेषु कल्पेष्वन्यानपि धर्मान् विवेचयति ॥ पुरुषावयवैरिति ॥ ब्रह्मकल्पव्यवस्थेयम् ॥ तदा भगवतः सकाशात्पृथिव्यादीनां न भिन्नतयावस्थानम् ॥ एकमेव विराड्रूपमावरणजलमध्ये परिखामध्यनगरमिव तिष्ठति ॥ तस्मिन् कल्पे सर्वं हरिरेव शरीरत्वात्, यतः स मानी ॥ अन्ये त्वाहुः ॥ विराट्शरीरं भगवता

नारायणेन लीलार्थं करणत्वेनैव गृहीतमिति ॥ तस्मिन्पक्षे क्रीडाभांडं विश्वं न भगवत्स्वरूपमित्यर्थः । स्वस्यैव समवायित्वेपि कामधेन्वादिदृष्टांतैर्न तत्राऽऽत्म-स्फूर्तिः ॥ किं तु आत्मीयत्वेनैव स्फुरणम् ॥ ५९ ॥

त० दी०— यदा पद्मात्सर्वमिदं तदा पूर्वकथा न हि ॥
जलं च मध्यतः सृष्टमथवांऽडस्य मध्यगम् ॥ ६० ॥

त० प्र०— द्वितीयपक्षं निरूपयति ॥ यदेति ॥ पद्मकल्पपक्षे प्रलयजलमपि नास्ति ॥ किं तु तिरोहितो नारायणः केवलं नाभिपद्ममेव स्थलकमलवत्तिष्ठति ॥ जलं च तन्मध्ये पुनः सृष्टम् ॥ अंडमध्ये वा विराजि तिरोहिते कमलमात्रं प्रादुर्भूतं तिष्ठति ॥ तदा कमलात्सर्वम् ॥ सर्वे भगवदंशा भगवन्मायासहिताश्चेति ॥ ६० ॥

त० दी०— कदाचिज्जलवद्भूमिः पृथगेव विनिर्मिता ॥
कटाहमूले गमनं तदा तस्या निरूप्यते ॥
न समुद्रास्तदा सप्त न तथा विस्तृता च भूः ॥ ६१ ॥

त० प्र०—तृतीयकल्पमाह ॥ कदाचिज्जलवद्भूमिरिति ॥ यथा पद्मकल्पे जलनिर्माणमेवं वराहकल्पे भूमिनिर्माणम् ॥ कटाहमूले रसातले तदा सप्तसमुद्राणां सद्भावे प्रमाणाभावात्पंचाशत्कोटिविस्तीर्णा पृथिवी न भवति ॥ ज्योतिःशास्त्रविरोधाच्च ॥ ६१ ॥

त० दी०— न शेते प्रथमे कल्पे तिरोभावस्तु तस्य हि ॥
द्वितीये शयनं तस्य तृतीयेपि क्वचिद्भवेत् ॥ ६२ ॥

त० प्र०— अन्यदपि वैलक्षण्यमाह ॥ न शेत इति ॥ ६२ ॥

त० दी०— तदुद्धारात्तदाधारात्तन्मूलं सर्वमत्र हि ॥
अयं नारायणः शेते पूर्वसृष्टं निपीय तु ॥ ६३ ॥

त० प्र०— ननु ब्रह्मकल्पातिरिक्तकल्पेषु कथं सर्वस्य भगवन्मूलत्वं तत्राह ॥ तदुद्धारादिति ॥ भगवतैवोद्धारः पृथिव्याः कृतः ॥ पद्मकल्पे पद्मस्य स एवाऽऽधारः ॥ अतस्तन्मूलत्वम् ॥ एवं कल्पभेदेन विरोधं परिहृत्य "उदाप्लुतं विश्वम्" इत्यत्र कस्यचिच्छयनं निरूपितम् ॥ तत्र पूर्वपक्षपरिहारार्थमाह ॥ अयं नारायणः शेत इति ॥ विराजः शयनं न संभवतीति शंका ॥ उत्तरं तु तिर्यग्गोलाभिप्रायेण ॥ अस्यापि कल्पस्य पूर्वमपि पद्मकल्प एव ॥ "अनेन लोकान् प्राग्लीनान्" इति वाक्यात् ॥ ६३ ॥

त० दी०—स्वाधारेंडकटाहे वा जलमध्ये तु तत्स्थितिः॥
उदरस्थं जगत्सर्वं रजोरूपेण वर्तते ॥ ६४ ॥

त० प्र०—शयनस्थानमाह ॥ **स्वाधार इति** ॥ स्वस्मिन्नेव जलं कल्पयित्वा तस्मिन् शेते दैनंदिनप्रलयस्तादृशोपि भवति॥ अन्यथा नारायणस्य शयनं न संभवति ॥ अथवा ॥ यथाश्रुतानुरोधेन पक्षांतरं कल्पनीयमित्याह ॥ अंडकटाहे वेति ॥ तदा निद्रानिमित्तं प्रलयोऽभूर्लोकत्रयस्य । तदा नारायणोऽवेक्षको भिन्न एव पूर्वोक्तपुरुषाद्भिन्नस्तस्य वांऽतर्यामिरूपः । उभयत्रापि जलमध्य एव स्थितिः यावत्संभवानां पदार्थानां हानोपादाने कर्तव्ये ॥ अत्र विरोधमाशंक्य परिहरति ॥ **उदरस्थं जगत्सर्वमिति** ॥ जले मग्नं जगदिति प्रथमतो निरूप्य "अंतः शरीरेर्पितभूतसूक्ष्मः" इति पुनरंतर्निरूप्यते । तत्राधिभौतिकं नष्टमाध्यात्मिकमंतःप्रवेशितमिति व्यवस्था ॥ तदाह ॥ **जगत्सर्वं रजोरूपेण वर्तत इति** ॥ ६४ ॥

त० दी०—न मूढं न प्रकाशं च कृष्णदृष्ट्या तदुद्गमः ॥
संकोचश्च विकाशश्च नाऽन्यथेति तथोद्गमः ॥ ६५ ॥

त० प्र०—राजसत्वे हेतुमाह **न मूढमिति** ॥ तस्य निर्गमने हेतुमाह ॥ **कृष्णदृष्ट्येति** ॥ तत्रापि हेतुमाह **संकोचश्चेति** ॥ अन्यथा संकोचविकाशौ न संभवतः ॥ ६५ ॥

त० दी०—प्रथमे तु महत्तत्त्वं यथा पद्मं तथाऽपरे ॥
परिपालकरूपेण प्रविष्टो वेदरूपतः ॥ ६६ ॥
ब्रह्मा स्वयमभूद्द्वेधा स्वयमर्थांतरः पृथक् ॥
अनंतर्दर्शितो भ्रांतस्तद्दृष्ट्या तस्य दर्शनम् ॥ ६७ ॥

त० प्र०—अस्मिन् कल्पे तत्त्वानां न नियम इति ज्ञापयितुं स्थानापत्तिमाह ॥ **प्रथमे तु महत्तत्त्वं यथेति** ॥ महत्तत्त्वस्थानीयं पद्मं तदेव जगदाधारम् ॥ ततः कथं ब्रह्मोत्पत्तिरित्याशंक्य भगवानेव तत्र प्रविष्टो ब्रह्मरूपेण जातः परं शब्दब्रह्मरूपेण प्रविष्टः ॥ अतः पुरुषस्थानीयोऽप्ययं ततो न्यूनरूपतया व्यपदिश्यते ॥ पद्मकल्पेऽयमेव विराट्स्थानीयः ॥ अस्य शब्दब्रह्मात्मरूपस्य कार्यद्वयसिध्यर्थं रूपद्वयमाह ॥ **ब्रह्मा स्वयमभूद्द्वेधेति** ॥ तत्रार्थरूपः स्वयं चतुर्मुख एव जातः ।

१ नान्यस्येति । २ पद्म ।

यतो रूपप्रपंचोद्भवः ॥ अतः शब्दब्रह्मरूपोपि जातः ॥ यतो वेदा जाताः । यद्य-प्यभेदेन वचनं तथाऽप्यर्थाच्छब्दात्मकः पृथक् ॥ नन्वेवं महतस्तस्य पद्मे समुद्भूतस्य कथं स्वकारणान्वेषणे भ्रमस्तत्राह ॥ अनंतदृष्टितो भ्रांत इति ॥ यदा पुनरस्तदृष्टिरंतर्दृष्टिस्तदा तस्य दर्शनम् ॥ ६६ ॥ ६७ ॥

त० दी०— साकारमेव तद्ब्रह्म कारणं च तदेव हि ॥
इति तद्वर्णनं स्तोत्रं तद्ब्रह्मत्वाय वर्ण्यते ॥ ६८ ॥

त० प्र०— तत्र यादृशो दृष्टस्तादृशमेव ब्रह्मस्वरूपमित्याह साकारमेवेति ॥ अस्मिन्कल्पे पद्मं ब्रह्मा च नाऽतोऽन्यत्किंचिदस्ति । एतस्य यत्कारणं तच्चेत्साकारं तदा ब्रह्मैव तथा ॥ कारणान्वेषिणा हि कारणमेव दृश्यते ॥ अतस्तदेव कारण-मिति ज्ञात्वा भगवद्वर्णनं स्तोत्रं च ॥ अस्मिन् स्तोत्रे भगवत्स्वरूपनिर्णयः ॥ ६८ ॥

त० दी०— एकविंशतिभिर्नित्यं भजनं जन्मनः फलम् ॥
चतुर्भिः प्रार्थ्यते तावत्संसारे तद्धि दुर्लभम् ॥ ६९ ॥

त० प्र०— संख्ययापि स्तोत्रश्लोकानां ब्रह्मत्वनिर्णय इत्याह ॥ एकविंशति-भिरिति ॥ "एकविंशो हि पुरुषो भवति दशहस्त्या अंगुलयो दशपद्या आत्मैक-विंशः" इति ॥ किमनेन सिद्धमित्याकांक्षायामाह नित्यं भजनं तदेव जन्मनः फलं तच्चतुर्भिः श्लोकैः प्रार्थ्यते ॥ वस्तुतो भगवत्प्रसादः प्रार्थनीयः । तस्याप्ये-तत्कारणमिति तावदिदमेव प्रार्थ्यते । यतः संसारे दुर्लभमेतत् ॥ भजनसिध्यर्थं तत्र चत्वारोऽर्थाः प्रार्थिताः । तेनैवार्थाद्भजनं प्रार्थितं भवति ॥ ६९ ॥

नुसारेण नोत्तरं किं तु "भूयस्त्वं तप आतिष्ठ" इत्यादिभिन्न एवोपदेश इत्याशंक्याह ॥ आद्ये तप इति ॥ साधनं ह्युपदिश्यते सात्त्विकत्वं तपसा भवति ॥ भगवद्गुणेष्वासक्तिर्ज्ञानेन भवति ॥ तेनैव वाचकाविस्मृतिरपि ॥ वेदानामपि स्मरणम् ॥ एतत्त्रितयसंपत्तौ तत्फलमनुद्वेगः सेत्स्यति ॥ अन्यदपि फलं भगवल्लीलापरिज्ञानम् ॥ तस्मिन् सिद्धे हृदयोत्साहोऽपि वेदाविस्मरणमपि सम्यक् सेत्स्यति ॥ ७१ ॥

त० दी०— कृष्णासक्तथा त्वनुद्वेगः प्रीतो भक्ते हरिः सदा ॥
अतोऽष्टभिर्वचस्तेन तिरोभावाच्च नित्यता ॥ ७२ ॥

त० प्र०— अनुद्वेगे हेत्वंतरमप्याह ॥ कृष्णासक्तयेति ॥ नन्वप्राप्ते कृष्णे सुतरामुद्वेगः स्यादत आह ॥ प्रीतो भक्ते हरिः सदेति ॥ नित्यं प्रीतियुक्तभक्ते हरिः प्रीतः सन्नोद्वेगं प्रयच्छतीत्यर्थः ॥ इममेवार्थं ज्ञापयितुमष्टभिः श्लोकैर्भगवद्वचनं निरूपितम् ॥ तेनैव रूपेण तिरोभूत इति नित्यताऽपि तस्य ॥ एवं नवमेनाऽध्यायेन ब्रह्मपितुर्ब्रह्मता साधिता ॥ ७२ ॥

त० दी०— चरित्रपरचित्तत्वादग्रे पृष्टं न पूर्वतः ॥
अत एव गुरुः प्रीतः क्रमेणैवाऽऽह नाऽन्यथा ॥ ७३ ॥

त० प्र०— ननु नवमाध्याय एव सगुणात्सृष्टिर्वक्तव्या तदर्थं प्रश्नश्च कर्तव्यस्तत्कथमत्रानुक्त्वा कालप्रकरणे दशमाध्याये प्रश्नोत्तरे इत्याशंक्याह ॥ चरित्रपरचित्तत्वादिति ॥ उपोद्घातत्वेन भगवच्चरित्रं मध्ये प्रस्तुतं तत्परं चित्तं जातमिति तत्पूर्तिपर्यंतं न किंचित्पृष्टमित्यर्थः ॥ प्रश्नाभावादेवोत्तरमपि न ॥ उत्तरत्रोच्यमानमपि पूर्वशेष एव भविष्यतीति भावः ॥ अनेन भगवद्भक्तानां प्रसंगादपि भगवत्कथासंपत्तौ प्रक्रांत औदासीन्यं सूचितम् ॥ तदैव भक्तत्वम् ॥ एतत्परीक्षार्थमेव गुरुणा तथोक्तम् ॥ "प्रीतः प्रत्याह" इति वाक्यात् ॥ पश्चात्प्रश्नेन प्रीतस्तदाह ॥ अत एव गुरुरिति ॥ प्रीतिलिंगमाह ॥ क्रमेणैवाऽऽह नाऽन्यथेति ॥ पूर्वसंबद्धरूपेणैव प्रश्नोत्तरमाह न तु भिन्नतया ॥ अन्यथा तथा प्रश्नान् पूर्वासंबद्धानेव वदेत् ॥ ७३ ॥

त० दी०— पद्मकल्पाश्च बहवस्तेन ज्ञानं तथोदितम् ॥
पद्मतः सर्वसंभेदं ब्रह्मभेदं तथोक्तवान् ॥ ७४ ॥

त० प्र०— यद्येक एव पद्मकल्पः स्यात्तदा "अनेन लोकान् प्राग्लीनान्" इति वाक्यं नोपपद्येत ॥ अतस्तत्समर्थनार्थमाह ॥ पद्मकल्पाश्च बहव इति ॥ किं

यतो रूपप्रपंचोद्भवः ॥ अंतः शब्दब्रह्मरूपोपि जातः ॥ यतो वेदा जाताः । यद्यप्यभेदेन वचनं तथाऽप्यर्थाच्छब्दात्मकः पृथक् ॥ नन्वेवं महतस्तस्य पद्मे समुद्भूतस्य कथं स्वकारणान्वेषणे भ्रमस्तत्राह ॥ अनंतदृष्टितो भ्रांत इति ॥ यदा पुनस्तद्दृष्टिरंतर्दृष्टिस्तदा तस्य दर्शनम् ॥ ६६ ॥ ६७ ॥

त० दी०— साकारमेव तद्ब्रह्म कारणं च तदेव हि ॥
इति तद्वर्णनं स्तोत्रं तद्ब्रह्मत्वाय वर्ण्यते ॥ ६८ ॥

त० प्र०— तत्र यादृशो दृष्टस्तादृशमेव ब्रह्मस्वरूपमित्याह साकारमेवेति ॥ अस्मिन्कल्पे पद्मं ब्रह्मा च नाऽतोऽन्यत्किंचिदस्ति । एतस्य यत्कारणं तच्चेत्साकारं तदा ब्रह्मैव तथा ॥ कारणान्वेषिणा हि कारणमेव दृश्यते ॥ अतस्तदेव कारणमिति ज्ञात्वा भगवद्वर्णनं स्तोत्रं च ॥ अस्मिन् स्तोत्रे भगवत्स्वरूपनिर्णयः ॥ ६८ ॥

त० दी०— एकविंशतिभिर्नित्यं भजनं जन्मनः फलम् ॥
चतुर्भिः प्रार्थ्यते तावत्संसारे तद्धि दुर्लभम् ॥ ६९ ॥

त० प्र०— संख्ययापि स्तोत्रश्लोकानां ब्रह्मत्वनिर्णय इत्याह ॥ एकविंशतिभिरिति ॥ "एकविंशो हि पुरुषो भवति दशहस्त्या अंगुलयो दशपद्या आत्मैकविंशः" इति ॥ किमनेन सिद्धमित्याकांक्षायामाह नित्यं भजनं तदेव जन्मनः फलं तच्चतुर्भिः श्लोकैः प्रार्थ्यते ॥ वस्तुतो भगवत्प्रसादः प्रार्थनीयः । तस्याप्येतत्कारणमिति तावदिदमेव प्रार्थ्यते । यतः संसारे दुर्लभमेतत् ॥ भजनसिध्यर्थं तत्र चत्वारोऽर्थाः प्रार्थिताः । तेनैवार्थाद्भजनं प्रार्थितं भवति ॥ ६९ ॥

त० दी०— सात्त्विकत्वं गुणासक्तिर्वाचकाविस्मृतिस्तथा ॥
अनुद्वेगश्च सर्वत्र कृष्णतस्तद्धि नाऽन्यथा ॥ ७० ॥

त० प्र०— तान् गणयति ॥ सात्त्विकत्वमिति ॥ नन्वेतच्चतुष्टयं प्रमाणादेव साधनीयमित्याशंक्याह ॥ कृष्णतस्तद्धि नान्यथेति ॥ ७० ॥

त० दी०— प्रेम्णा न सेवनं यस्मादुपदेशस्ततः कृतः ॥
आद्ये तपस्ततो ज्ञानं तेनाऽन्यस्तत्फलं ततः ॥
द्विरूपं हृदयोत्साहस्तेनैवाऽविस्मृतिस्ततः ॥ ७१ ॥

त० प्र०—नन्वेवं प्रार्थनायां कथं न सिद्धवत्कारेण सर्वं दत्तवान् किमिति साधनमुपदिष्टवानित्याशंक्याह ॥ प्रेम्णा न सेवनं यस्मादिति ॥ ननु प्रार्थना-

१ अंतः ।

त० दी०— इदं कालस्य कालत्वमाविर्भावादिकं स्वतः ॥
कार्यतः कालकथनात्सामान्येन निरूपणम् ॥ ७९ ॥

त० प्र०— कथमेवं सामर्थ्यमित्याशंक्यैतदर्थमेव कालरूपत्वमित्याह ॥ इदं **कालस्य कालत्वमिति** ॥ रसाद्यभिनये हि केवलेनैव हस्तेन सर्वे पदार्था-श्चेष्टाविशेषेण प्रदर्श्यंते ॥ अतः काल एव ब्रह्मणः सर्वभावेनाऽऽविर्भावे परिच्छे-दहेतुः ॥ केचन आविर्भावहेतुत्वेन वर्णयंति तन्निषेधार्थमाह ॥ **आविर्भावादिकं स्वत इति** ॥ आविर्भावतिरोभावादिकं ब्रह्मणः स्वत एव ॥ परिच्छेद एव परं कालात् ॥ कालो हि निरूपणीयः स सामान्यविशेषप्रकारेणाऽध्यायद्वयेन निरूप-णीयः ॥ तत्र कार्यनिरूपणस्य कुत्रोपयोग इत्याशंकायामाह ॥ **कार्यतः कालक-थनादिति** ॥ कार्यनिरूपणमेव सामान्यतो निरूपणम् ॥ ७९ ॥

त० दी०— कंचित्प्रकारमाश्रित्य बुद्धिसौकर्यसिद्धये ॥
खगानां गणना प्रोक्ता भल्लूके लोमपक्षता ॥
पक्षिजातिविशेषो वा तच्छब्देन तथोदितः ॥ ८० ॥

त० प्र०— नन्वत्र दशविधगणना किमिति कृता सामान्यत एव कालकार्य-त्वेन सर्वमेव जगद्वक्तव्यमित्याशंक्याह ॥ **कंचित्प्रकारमाश्रित्येति** ॥ तथा सति सर्वं कार्यं न ज्ञातं भवति ॥ बुद्धिसौकर्यसिध्यर्थं ततो गणना ॥ तत्र खगानां गणनामध्ये भल्लूको गणितः स च मृगविशेषो लोके प्रसिद्धो जांबवज्जातीयः ॥ तस्य पक्षिषु गणना न युक्तेत्याशंक्याह ॥ **भल्लूके लोमपक्षतेति** ॥ पक्षांतरमाह॥ **पक्षिजातिविशेषोवेति** ॥ ८० ॥

त० दी०— अकृत्रिमनराणां च त्रैविध्यं गुणतोपि हि ॥
ते जायस्व म्रियस्वेति मार्गगा एव कीर्तिताः ॥ ८१ ॥

त० प्र०— ननु "अर्वाक् स्रोतस्तु नवमः" इत्यत्र कथं नराणामेकविधत्वं मानुषेषु उत्तमा अपि "मध्यमा मानुषा ये तु" इत्यादिषु भेदेन गणनात् ॥ तत्राह ॥ **अकृत्रिमनराणां चेति** ॥ एते हि कालकार्यत्वेन कृत्रिमनरा गणिताः ॥ अकृ-त्रिमाः सहजास्तु त्रिविधाः ॥ उत्तमाः सात्त्विकाः ॥ ते ज्ञाननिष्ठा भक्तिनिष्ठा वा ॥ अन्येऽपि ज्ञातव्याः ॥ तेषां कर्माधीनत्वमाह ॥ **ते जायस्व म्रियस्वेति** ॥ ८१ ॥

---

१ विधानाम् । २ यथो ।

तेन सिद्धमित्याकांक्षायामाह ॥ पद्मतः सर्वसंभेदमिति ॥ ननु "तस्यैव चांऽते कल्पोऽभूत्" इति वाक्यं विरुध्येतेत्यत आह ॥ ब्रह्मभेदं तथोक्तवानिति ॥ ब्रह्मांडांतरे भिन्नस्य ब्रह्मणः पूर्वपरार्धांतपक्षे न दोषो भवतीति ब्रह्मभेदोऽप्यनेन सूचित इत्यर्थः ॥ ७४ ॥

त० दी०— सामान्यतो विभागोयं सर्वेषामुक्त एव हि ॥
सृष्टिर्द्विधापि संपूर्णा कारणानामतः कथा ॥ ७५ ॥

त० प्र०— अथवा वर्षाभिप्रायोंतशब्दः । तदा त्रिशतं षष्टिर्ब्रह्मकल्पा भवंति ॥ तदाह ॥ सामान्यतो विभागोयमिति न तु चरमदिवसस्य ॥ एवं कल्पांतराणामपि विभागः सूचितो ज्ञातव्यः ॥ अथवा ॥ सगुणाद्ब्रह्मणः सृष्टिः कथं न विशेषाकारेणोक्तेत्याशंक्याह ॥ सामान्यत इति ॥ सामान्यप्रकारेण सर्वेषामेवोक्तम् ॥ एतावान् जीवलोकस्येति ॥ उपसंहरति ॥ सृष्टिर्द्विधापीति ॥ विभूतिरत्र मुख्येति कालद्वारा सृष्टिं वक्तुमाह ॥ कारणानामतः कथेति ॥ ७५ ॥

त० दी०— कालो जीवश्च वै रूपे नाम्नि वैदिकमुच्यते ॥
कालस्य कार्यतो जन्म तदुपाधिवशादपि ॥ ७६ ॥
त० दी०— अव्यक्तत्वात्कृष्णभावान्नोत्पत्तिः क्वापि तस्य तत् ॥
तथापि कारणत्वाद्धि प्रश्नो युक्तं तथोत्तरम् ॥ ७७ ॥

त० प्र०— तत्र कालस्याऽध्यायद्वयेन निरूपणं कथयन् भेदमाह ॥ कालस्य कार्यत इति ॥ स्वभावतो जन्माभावे हेतुमाह ॥ अव्यक्तत्वादिति ॥ 'जनी प्रादुर्भावे' इति धात्वर्थाभावाद्भगवदवतारत्वाच्च त्रिविधाऽप्युत्पत्तिर्नास्ति ॥ तर्हि सृष्टौ कथं तत्कथेत्याशंक्याह ॥ तथापीति ॥ कालस्य कारणत्वमनुभवसिद्धम् ॥ " यद्भयाद्वाति वातोयम् " इत्यादिवाक्याच्च ॥ अतः प्रश्न उत्तरं च युक्तम् ॥ ७६ ॥ ७७ ॥

त० दी०— लक्षणं च स्वरूपं च तस्य कारणताऽपि च ॥
सर्वस्य ब्रह्मरूपत्वात्परिच्छेदकरः स्वयम् ॥ ७८ ॥

त० प्र०— कालस्य कारणत्वे यन्निमित्तं तदाह ॥ सर्वस्य ब्रह्मरूपत्वादिति ॥ कालेनैव परिच्छिन्नं कालेनैव क्रियते ॥ ७८ ॥

---

१ गेर । २ नास्ति ।

तेषां च धर्मभेदको धर्म एवेति धर्मनिरूपणम्॥ नन्वेवं सति कृतादिष्वहोरात्रमपि धर्मप्रवृत्तिः स्यात्तत्राह ॥ दिनरात्रिव्यवस्थायामिति ॥ तत्तु साधारणं दिवस एव कार्यं न रात्राविति ॥ ८७ ॥

त० दी०— तत्राऽपि कार्यभेदान् हि वक्तुं धर्मादिवर्णनम् ॥
तत्सिध्यै षड्विधत्वं हि ते हि भिन्ना यतः पृथक् ॥ ८८ ॥

त० प्र०— किंच ॥ रात्रौ दिवसे च कार्यविभेदाः प्रतिकल्पं भिन्नाः ॥ अतोऽपि धर्मादिवर्णनं कर्तव्यम् ॥ धर्मसिध्यर्थमेव मन्वंतरनिरूपणम् ॥ मन्वंतरस्य षड्विधत्वं धर्मस्य षडंगनिरूपणार्थम् ॥ यतस्ते मन्वादयः षडपि भिन्ना देशादयो यतो भिन्नतया स्थिताः ॥ अतः षण्णां योगे धर्मो भवतीति सिद्धम् ॥ ८८ ॥

त० दी०— सर्वेषां स्थितिसिद्ध्यर्थं भगवत्कृतिवर्णनम् ॥
तन्मूल एव प्रलयः शयने सर्वनिर्वृतिः ॥ ८९ ॥

त० प्र०— यथाकथंचिदप्युत्पन्नाः परस्परं विरुद्धगुणा नाशं यास्यंतीत्याशंक्य भगवता पालनमुक्तम् ॥ तर्हि कदाचित्प्रलयो न स्यादित्याशंक्याह ॥ तन्मूल एव प्रलय इति ॥ भगवतैव प्रलयः क्रियते ॥ ननु परमदयालुः किमित्येवं करोतीत्याशंक्याह ॥ शयने सर्वनिर्वृतिरिति ॥ निरंतरमुत्पत्तिप्रलयाभ्यां पीडिता जीवा भगवच्छयन एव निर्वृतिं प्राप्नुवंति ॥ ८९ ॥

त० दी०— पद्मानुसारिशयनं ब्रह्मा चांऽडवपुः स्मृतः ॥
भोक्तृत्वं कर्तृता चैव तस्य भेदेन वर्ण्यते ॥ ९० ॥

त० प्र०— एतच्छयनं ब्रह्मकल्प एव भवतीत्याह ॥ पद्मकल्पानुसारीति ॥ नन्वेवं सति त्रिलोक्या नाशे "स्तूयमानो जनालयैः" इति वाक्यं नोपपन्नं स्यादत आह ॥ ब्रह्मा चांऽडवपुः स्मृत इति ॥ ब्रह्मांऽडविग्रहः ॥ एवं लोकत्रये कल्पादिव्यवस्था ॥ अन्यथा "तस्यैव चांऽते" इति वाक्यं नोपपद्येत ॥ नन्वेवं सति नाभिकमले को वा ब्रह्मा को वा सत्यलोक इति शंकायामाह ॥ भोक्तृत्वं कर्तृता चैवेति ॥ अभिमानी ब्रह्मांडविग्रह इत्यवोचाम ॥ एवं त्रयो ब्रह्माणो भवंति ॥ ९० ॥

त० दी०— भोक्ता सत्ये द्वितीयस्तु पद्मे नोदरगः सुखी ॥
प्रलयोऽयं समाख्यातः सर्गः पद्मे पुनस्तथा ॥ ९१ ॥

त० प्र०— दैनंदिनप्रलये कर्तुर्ब्रह्मणः शयनोपायमाह पद्मे नोदरग इति ॥

त० दी०— अनेकविधसृष्टिश्चैद्वेपम्यादि हरेर्भवेत् ॥
आत्मानं हि स्वयं चक्रे तेन नाऽत्रोक्तदूषणम् ॥ ८२ ॥

त० प्र०— आत्मानं लीलया सृजतीत्यभिप्रायमाह ॥ अनेकविधसृष्टिश्चेति ॥ ८२

त० दी०— तत्तदुत्पत्तिहेतुत्वाद्वेदानां तत्कथा तता ॥
कार्यनाशोऽणुपर्यंतं परमस्तेन स स्मृतः ॥ ८३ ॥

त० प्र०— नन्वेते दश प्रकाराः सर्वदा कालाज्जायंते आहोस्वित्सकृदित्यादि-त्याशंक्य सकृदेव कारणतया जाता इत्याह ॥ तत्तदुत्पत्तिहेतुत्वादिति ॥ तत्कथा कालकथा ॥ परमाणुपदनिरुक्तिमाह ॥ कार्यनाशोऽणुपर्यंतमिति ॥ स्थौल्याभावे हि सूक्ष्मता सा यत्र पर्यवसिता स परमाणुः ॥ ८३ ॥

त० दी०— मानसोत्तरभूमेस्तु सोंशः सूर्यरथेन हि ॥
यावता क्रम्यते कालः परमाणुः स उच्यते ॥ ८४ ॥

त० प्र०— तत्र कालस्य परमाणुत्व उपपत्तिमाह ॥ मानसोत्तरभूमेरिति ॥ ८४

त० दी०— सर्वं नभोमंडलं हि यावता क्रम्यते स तु ॥
संवत्सरः परः प्रोक्तस्तदावृत्तिरतः परम् ॥
षष्टि भेदा द्वादशात्मा तेन पंचात्मकः स्मृतः ॥ ८५ ॥

त० प्र०— पंचसंवत्सरादिभेदेषूपपत्तिमाह ॥ षष्टि भेदा इति ॥ प्रभवादयः षष्टि भेदा बार्हस्पत्यमान एव सिद्धाः ॥ तत्र बृहस्पतिर्द्वादशारं कालचक्रं द्वादश-भिर्वर्षैराक्रामति तस्य षष्टिवर्षेषु पंचवारमाक्रमणमिति संवत्सरादयः पंच ॥ ८५ ॥

त० दी०— यत्राऽऽवृत्तिर्न चैवास्ति परार्धानधिकत्वतः ॥
संख्यायास्तेन गणना युगादिभिरुदीर्यते ॥ ८६ ॥

त० प्र०— संख्या च परपर्यंता न ततोऽधिका ॥ संवत्सरगणनया ब्रह्मणो दिनं गणितुमशक्यमिति युगकल्पना कृतेत्याह ॥ यत्राऽऽवृत्तिरिति ॥ ८६ ॥

त० दी०— उत्पद्यमानसंदेहे धर्ममाह विभेदतः ॥
दिनरात्रिव्यवस्थायां कार्याकार्ये तु सर्वतः ॥ ८७ ॥

त० प्र०— "यत्र धर्मो विधीयते" इत्यादि निरूपणं कालनिरूपणे व्यर्थमि-त्याशंक्याह ॥ उत्पद्यमानसंदेह इति ॥ "कृतकृत्याः प्रजा जात्या" इत्या-दिधर्मः कृतादिशब्दप्रवृत्तिः ॥ अतो मनुष्या अपि तन्निरूपणार्थं निरूपणीयाः ॥

१ सस्मृतः ।

त० दी०— लोकातीता लौकिकाश्च तत्राऽऽद्या नाऽधिकारिणः ॥
उत्पत्तिर्दुर्घटा तेषामविद्या निर्मिता ततः ॥ ९५ ॥

त० प्र०— तत्र मुक्तानां द्वैविध्यमाह ॥ लोकातीता इति ॥ प्रथमानां मुक्तौ कारणत्वम् ॥ सा हि जीवानां स्वरूपत आविर्भावरूपतेति पूर्वमुक्तम् ॥ तत्र लोकातीतवैकुंठेपि विरक्तास्तिष्ठंति । अतः सृष्टौ ते नाऽधिकारिणः । मुक्त्यर्थं चोत्पादनीयाः। ज्ञानांशं त एव गृहीत्वावतरंतीति अतस्तान् व्यामोहयितुमविद्याया उत्पत्तिः ॥ ९५ ॥

त० दी०— अभिमानी देवतेयं यतः सर्वं भविष्यति ॥
मूलाविद्यावृत्तिरूपाः पंचैका वाऽत्र देवता ॥ ९६ ॥

त० प्र०— सा हि आधिदैविकी तेन सर्वानेव व्यामोहयिष्यतीति सर्वकार्यसिद्धिः । अत्राऽविद्यायां पक्षद्वयमाह ॥ मूलेति ॥ एकैव देवतेति सिद्धांतः ॥ ९६ ॥

त० दी०— मूढस्तया चतुर्वक्त्रः कृष्णध्यानं चकार ह ॥
लोकातीतास्ततो जाताः काये ध्यानं प्रतिष्ठितम् ॥ ९७ ॥

त० प्र०— लोकातीतोत्पादनार्थमुत्पादिता प्रथमं बाह्याभावाद्ब्रह्माणमेव मोहितवतीत्याह ॥ मूढ इति ॥ देवतारूपत्वान्न ध्यानप्रतिबंधिका लोकातीतानामुत्पत्त्यनंतरं तद्ध्यानं सृष्टिप्रकरणे जातं ब्रह्मणः शरीरे प्रतिष्ठितं तत्कार्यमग्रे भविष्यति ॥ ९७ ॥

त० दी०— सर्गावेशात्संनिधानादविद्याकार्यसंभवः ॥
तदुत्पत्तिविचारेण नियंतुमुपचक्रमे ॥ ९८ ॥

त० प्र०— मध्ये सनकादीनामुत्पत्त्यनंतरं क्रोधो जात इत्याह ॥ सर्गावेशादिति ॥ ब्रह्मणो हृदये सृष्टिराविष्टा तत्प्रतिबंधे क्रोधस्फूर्तिर्युक्तैव ॥ अविद्यासंनिधानमपि हेतुः । तथापीच्छाभावे कथमुत्पत्तिरित्याशंक्याह ॥ अविद्याकार्यसंभव इति ॥ क्रोधस्त्वविद्याकार्यं तत एवोत्पद्यते ॥ स च क्रोध आधिदैविकः ॥ आध्यात्मिकभ्रमाच्चन्नियमनार्थं प्रवृत्त इत्याह ॥ तदुत्पत्तिविचारेणेति ॥ सनकादयो महांतो ज्ञानार्थमेवोत्पादिता इति तदुत्पत्तिविचारः ॥ ९८ ॥

त० दी०— क्रोधे हि ध्यानसंयोगात्कृष्णांशः प्रविवेश ह ॥
तेनोभयस्य निःस्तारो ह्यन्यथैकस्य संक्षयः ॥ ९९ ॥

१ चात्र ।

अनेनाऽभेदेन वर्णनपक्षो निवारितः ॥ द्वितीयपद्मकल्पे पुनस्तथैव सर्गः ॥ वराह-कल्पे त्वन्यथा तां सृष्टिमग्रे वक्ष्यामः ॥ ९१ ॥

त० दी०— अस्मिन्नंडे त्रयोऽप्यासन् कल्पाः सर्वकथोक्तये ॥
तेषामुक्तिस्तथा चाऽऽद्ये नाम्ना रूपस्य वर्णनम् ॥
अन्यथा भगवानेव तेनाद्यो ब्राह्म उच्यते ॥ ९२ ॥

त० प्र०— नन्वेकेनैव सर्गेणभगवल्लीलासिद्धौ किमित्यनेकवर्णनं तत्राह अस्मिन्नंड इति ॥ पौरुषोऽत्र विभूतिरूपः । सोऽस्मिन्नंडे यादृशस्तादृशो वर्णनीयः ॥ अतः सर्वेषां कथासिद्धये कल्पानामुक्तिः ॥ तत्र प्रथमकल्पे ब्राह्मे सृष्टिकर्ता ब्रह्मा छंदोमयो निरूपितः स नोपपद्यइत्याशंक्य समाधानमाह ॥ तथा चाद्य इति ॥ नामसृष्टिर्भिन्ना निरूपिता सापि रूपसृष्टिपरतंत्रेति न कोपि दोषः ॥ आधिदैविकं वा रूपम् ॥ अत एव "व्यक्ताव्यक्तात्मनः" इति वचनम् । अन्यथा प्रकारांतरेणेति पूर्वेणैव संबध्यते । आधिदैविकस्य शरीरित्वसंपादकत्वं भगवत एव युक्तं नान्यस्तथा कर्त्तुं शक्नोति । इममर्थं शब्दप्रसिध्यापि समर्थयते तेनाद्यो ब्राह्म उच्यत इति ॥ ब्रह्मशब्देन भगवानेव ॥ ९२ ॥

त० दी०— अतोऽधिकस्य गणना नास्ति कालस्य पूरुषे ॥
तत्रोपपत्तिकथनमेवं कालो निरूपितः ॥ ९३ ॥

त० प्र०— कालनिरूपणप्रस्तावे सर्वप्रभुत्वं कालस्य निरूप्य अक्षरे प्रभुत्वं भविष्यतीत्याशंक्य आध्यात्मिकभेदानां तत्र वृत्त्यभावमाह ॥ अतोऽधिकस्येति ॥ भेदे हि संख्या नियामिका द्विपरार्द्धाधिकसंख्याया अभावात् ॥ कालप्रवृत्तिः पुरुषेनास्ति "निमेष उपचर्यते" इति तत्रोपपत्तिः । अध्यायद्वयेन कालप्रकरणं निरूपितमित्युपसंहरति ॥ एवं कालो निरूपित इति ॥ ९३ ॥

त० दी०— अतः परं जीवसर्गो मुक्तामुक्तविभेदतः ॥
मुक्तानां कारणत्वं हि तदिच्छावशगा यतः ॥ ९४ ॥

त० प्र०— अतः परमेकेनाध्यायेन जीवा निरूप्यंते तत्राऽमुक्ता जीवा मुक्तिप्रकरणे वक्तव्याः । तेन कारणभूता मुक्तास्तु जीवाः कारणभूता एकेनाध्यायेनोच्यंते । मुक्तानां कथं कारणत्वमित्याह ॥ मुक्तानामिति ॥ मुक्ता हि भगवत्संनिधाने तिष्ठंति । अतो यदा भगवान् सृष्टिं कर्तुमिच्छति तदा स्वलीलासिध्यर्थं तान्प्रेरयति अतो भगवदिच्छावशास्ते कारणभूता इत्यर्थः ॥ ९४ ॥

त० प्र०— एवं लोकातीतानामुत्पत्तिमुक्त्वा लौकिकांश्चेत्स्वत एवोत्पादयेत्त-दाऽभीष्टसिद्धिर्न भविष्यतीति तदुत्पादने प्रकारं कृतवानित्याह ॥ सृष्ट्यर्थमिति॥ पृथक् स्थानात्सर्वे उत्पादिताः । तत्प्रयोजनं धर्मव्यवायसिद्धिः ॥ एवं सात्त्विकानां राजसानामुत्पत्तिमुक्त्वा तामसोत्पत्तिं करिष्यन् "पुत्रैर्निवारितः" इति वक्तुं. कथं ब्रह्मणः सकाशात्तामसोत्पत्तिरिति शंकाव्युदासायाह ॥ एका स्त्रीति ॥ वागेका स्त्री अन्ये सर्वे पुरुषाः आस्याद्वागिति ॥ १०३ ॥

त० दी०— अविद्यासंनिधानाद्धि सृष्ट्यावेशाच्च तद्धृदि ॥
जातः कामो मतिं चक्रे तस्यां सर्गाय भूयसे ॥ १०४ ॥

त० प्र०— ततः किमत आह ॥ अविद्यासंनिधानादिति ॥ दोषत्रयात्तस्यां सर्गार्थं मतिं चक्रे ॥ अविद्यासृष्ट्यावेशो हृदि कामोत्पत्तिः ॥ १०४ ॥

त० दी०— अधर्मे धर्मनाशः स्यादिति कृष्णेन वारणम् ॥
तद्भावस्य परित्यागे सा रिरंसाभवत्तनुः ॥ १०५ ॥

त० प्र०— निवारणे हेतुमाह ॥ अधर्मे धर्मनाशः स्यादिति ॥ तामसीमपि सृष्टिं भगवाननुमन्येत यदि सा धर्मनाशिका न स्यात् ॥ तथा सति पूर्वसृष्टिद्वय-मपि गच्छेत्[२] ॥ अतो निवारणं युक्तम् ॥ ननु तनुत्यागो नाम कः पदार्थस्तत्राह॥ तद्भावस्य परित्याग इति॥ तनोः किं प्रकृतिकत्वमित्याकांक्षायामाह सा रिरं-सेति ॥ १०५ ॥

त० दी०— सृष्टिध्याने वाचकानां प्रकारस्य समुद्गमः ॥
तन्मूलस्य च शब्दस्य ब्रह्मणो रूपकीर्तनम् ॥ १०६ ॥

त० प्र०— ततस्तृतीया सृष्टिर्न जातेति तदर्थं ध्याने क्रियमाणे वेदानामुत्पत्ति-र्जातेत्याह ॥ सृष्टिध्याने वाचकानामिति ॥ प्रकारः पूर्वादिमुखतः ॥ तेन शब्दानां प्रकारभेदः ॥ लौकिकालौकिकभेदेन तृतीया सृष्टिः ॥ तेन जीवानां रूपनामनी सिद्धे नाम्नामखंडप्रवृत्त्यर्थं तन्मूलदेवतामाहेत्याह ॥ तन्मूलस्येति॥१०६

त० दी०— नामावेशं परित्यज्य रूपावेशात्तु पूर्ववत् ॥
इच्छाध्याने समुद्भूते द्विधा चक्रतुरंगकम् ॥ १०७ ॥

त० प्र०—एवं गुणसृष्टिमुक्त्वा केवलौ प्रपंचब्रह्मभावमाशंक्य संनिपातसृष्टिं वक्तुं प्रवृत्त इति वदन् संनिपातविरोधिनं परित्यक्तवानित्याह ॥ नामावेशं

१ जातकामः । २ न गच्छेत् इति पाठान्तरम् ।

त० प्र०— आधिदैविकः क्रोधो न नियम्यः ॥ ततो नियमनार्थं व्यापृतो ब्रह्म-शरीरं दग्धुमुद्यतः ॥ तत्र पूर्वं ध्यानं प्रतिष्ठितमिति क्रोधस्य ध्यानेन सह संबंधो जातः ॥ ततो ध्यानयुक्ते क्रोधे कृष्णावतारः प्रविष्टः ॥ ततो यज्जातं तदाह ॥ तेनोभयस्येति ॥ सनकादीनां ब्रह्मशरीरस्य च ॥ ९९ ॥

त० दी०— उत्पत्स्यमानानखिलान् दृष्ट्वा रोदनमागतम् ॥
संक्लिष्टवचनं प्राह ब्रह्मप्रीत्यै स्वयं पुनः ॥
संसारानुपयुक्तान् हि स्रक्ष्ये सर्वानिति स्मरन् ॥ १०० ॥

त० प्र०— तस्य रोदनमयुक्तमित्याशंक्याह ॥ उत्पत्स्यमानानिति ॥ अय-मंशः कृपारूपः । "नामानि कुरु मे धातः" इति वाक्यं रोदनस्य नामादिकरणहे-तुत्वार्थं न भवतीत्याह ॥ संश्लिष्टवचनादिति ॥ तथा वचनस्य प्रयोजनमन्य-दप्यस्तीत्याह ॥ स्वयं पुनरिति ॥ तदाज्ञाव्यतिरेकेण सृष्टिरशक्या तस्यैव तत्रा-धिकारात् ॥ १०० ॥

त० दी०— अतः शीघ्रमनेकेषामुत्पत्तिः प्रतिकूलतः ॥
निवारणं तपोबोधः प्रतिबंधनिवृत्तये ॥ १०१ ॥

त० प्र०— स तु पूर्ववद्ब्रह्माविशेषानभिज्ञ आज्ञां दत्तवान् ॥ तच्छीघ्रमनेकेषामु-त्पादनं तैः कारणक्षये सृष्टिर्न भविष्यतीति निवारणम् ॥ निवारितः प्रतिबंधं करिष्यतीत्याशंक्य तपोबोधनम् ॥ १०१ ॥

त० दी०— उपाधिविनिवृत्त्यर्थं कारणत्वान्न निर्गमः ॥
अतोऽभिनंद्य कृष्णस्य ध्यानमेव चकार ह ॥ १०२ ॥

त० प्र०— तपसा हि क्रोधकारणीभूताऽविद्या नाशमेष्यति ॥ ततः शुद्धः क्रोधो यथायुक्तमेव कार्यं करिष्यतीति ब्रह्मवाक्यार्थः । तमाह ॥ उपाधिविनि-वृत्त्यर्थमिति ॥ नन्वेवं सति महादेवे क्रोधकारणीभूताऽविद्या तपसा कथं न दग्धा दग्धायां वा कारणस्य नष्टत्वात्कथं न लयः कथं केवलं प्रतिबंधनिवृत्तिरेवेत्या-शंक्याह ॥ कारणत्वान्न निर्गम इति ॥ महादेवस्य कारणभूता सा ॥ कार्य-भूतं तु तपः ॥ तेन कार्येण कारणस्य न निर्गम इत्यर्थः ॥ अतः प्रतिबंधनिवृत्ति-रेव जातेत्याह ॥ अतोऽभिनंद्य कृष्णस्येति ॥ १०२ ॥

त० दी०— सृष्ट्यर्थं भगवद्ध्यानान्मरीच्याद्युद्भवः पृथक् ॥
धर्मव्यवायसिद्ध्यर्थमेका स्त्री पुरुषाः परे ॥ १०३ ॥

त० दी०— सत्ये स्थितः सृजत्येवमित्यर्थो विनिरूप्यताम् ॥
स्थानमन्विष्य तु पुनर्गतस्य वचनं मनोः ॥
दिनांते दर्शनात्पूर्वं सृजतः प्रातरेव हि ॥ १११ ॥

त० प्र०— नन्वत्र कल्पे का व्यवस्था ॥ ब्रह्मा हि पूर्वकल्पे नाभिपद्मे स्थितः सृजति । तदभावे ब्रह्मणः सृष्टिरस्ति न वेति संदेहः । सृष्टिकरणपक्षे किं मनुना । कुत्र वा सृजतीत्येतज्ज्ञातव्यं तत्राह ॥ सत्ये स्थित इति ॥ असर्गपक्षे "सृजतो मे क्षितिर्वार्भिः" इति वाक्यं विरुध्यते ॥ अनेनैव वाक्येन पूर्वं ब्रह्मणा स्वयं भूमिरुद्धृतेति ज्ञातव्यम् ॥ तस्यामेव पालनाज्ञापनम् ॥ तथा सति या प्रियव्रतादीनां पूर्वं सृष्टिरुक्ता सा आदिवराहकल्प इत्येव ज्ञेया ॥ विज्ञापनं तु द्वितीयदिवसे प्रातरित्याह ॥ स्थानमन्विष्येति ॥ "आदेशेऽहं भगवतो वर्ते" इति ज्ञापनापेक्षा कथं ब्रह्मण इत्याशंक्याह ॥ दिनांते दर्शनात्पूर्वमिति ॥ आदिवराहकल्पस्य दिनांते यावद्भूम्यादीनामदर्शनं भवति तावदेव ब्रह्मा सत्यलोके गतः ॥ तत्रैव च सृष्टिं करोति तदा प्रातरेव मनोर्विज्ञापनमित्यर्थः ॥ १११ ॥

त० दी०— विज्ञापनेऽतिनैकट्यात्तथा वचनमादरात् ॥
सर्वेंद्रियनिरोधेन ध्यायतः परमात्मनः ॥
प्रथमं श्वाससंभेदस्तेन कृष्णस्तथोद्गतः ॥ ११२ ॥

त० प्र०— नन्वेवं सति कथमिदानीमेव प्लाव्यमानेति वचनमुपपद्यते तत्राह ॥ अतिनैकट्यादिति ॥ आदरादित्यग्रेण संबध्यते ॥ पुनरुद्धारेपि पूर्ववदेव प्लवनं भविष्यतीति भगवद्ध्यानम् ॥ यादृशो ध्यातस्तादृशस्तमज्ञापयित्वैव निर्गत इत्याह ॥ प्रथमं श्वाससंभेद इति ॥ भक्तस्य दुःखनिश्वासात्पूर्वमेव भगवानाविर्भवतीति ज्ञापितम् ॥ अस्याऽवतारस्य स्वरूपमाह ॥ कृष्णस्तथोद्गत इति वराहरूपेण ॥ ११२ ॥

त० दी०— यज्ञेन समता त्वस्य जलाद्भस्त्वृद्धृतौ क्षमौ ॥
गजो वा शूकरो वाऽपि यज्ञस्त्वेवंविधः पुनः ॥ ११३ ॥

त० प्र०— तथारूपे हेतुमाह ॥ यज्ञेन समता त्वस्येति ॥ यज्ञो हि मन्युशब्दवाच्यः ॥ अत एव पशून्मारयति ॥ वराहोपि तथा ॥ "पशूनां वा एष मन्युः" इति श्रुतेः ॥ हेत्वंतरमप्याह ॥ जलाद्भस्त्वृद्धृताविति ॥ अवश्यमेकं रूपं कर्त्तव्यं

१ न्वर्थ । २ काल । ३ ज्ञात । ४ विज्ञापितेपि ।

परित्यज्येति ॥ ततोऽपरामुपादायेत्यादिना ॥ तत्र ब्रह्मणोंतःकरणं न सन्निपात-रूपमिति भगवदपेक्षायां भगवदिच्छया तच्छरीरमेव द्विधाभूतं तदाह ॥ इच्छा-ध्यान इति ॥ १०७ ॥

त० दी०— कारणत्वान्मुक्तजीवा एवमेके निरूपिताः ॥
नामोत्पत्तिश्च तच्छेषा तृतीयस्त्वधुनोच्यते ॥ १०८ ॥
कल्पस्तत्र हि सृज्यानां न पूर्वस्माद्विशिष्यते ॥
भूसंस्थानविशेषोस्ति तदेवात्रोच्यते परम् ॥ १०९ ॥
ध्यानरूपो मनुर्जातः क्षत्तुः प्रश्नस्तु पूर्ववत् ॥
पित्राज्ञयैव तद्धर्मस्त्रेधेत्येवं कथा तता ॥ ११० ॥

त० प्र०— एवं चतुर्विधा सृष्टिं निरूप्योपसंहरति ॥ कारणत्वादिति ॥ अमुक्तानामुत्पत्तिः पूर्वमेवोक्ता जीवप्रकरणे नामोत्पत्तेरयुक्तत्वमाशंक्य पुनः स्मार-यति ॥ नामोत्पत्तिश्च तच्छेष इति ॥ इदानीं तृतीयः कल्प उच्यत इत्याह ॥ तृतीय इति ॥ कालजीवौ निरूपितौ ॥ तदर्थं ब्रह्मकल्पपद्मकल्पौ च निरूपितौ॥ अधुना भूमिर्निरूप्यते सापि सर्वं कारणमिति ॥ तदर्थं वराहकल्पोऽपि निरूप्यते॥ अत्र आदित आरभ्य सर्वनिरूपणमाशंक्याह ॥ तत्र हि सृज्यानामिति ॥ अति-देशन्यायेन सर्वकल्पेषु साधारणधर्माः समायांति ॥ विशेषधर्मा एव वक्तव्याः । ते चेत्कस्यचित्स्थाने समायांति तदा स्थानानां बाधः ॥ तत्र भूसंस्थानं न पूर्व-वदिति ॥ तदुच्यते ॥ तेन पद्मजघनयोर्बाधः ॥ पूर्वधर्माणामनुवृत्तिं ज्ञापयितुं मनोरत्र प्रयोजकत्वं निरूपयतीति तस्य भावमाह ॥ ॥ ध्यानरूपो मनुर्जात इति ॥ पूर्वमिच्छाध्याने निरूपिते ॥ तत्रेच्छा शतरूपा । ध्यानं मनुः ॥ तेन ब्रह्मणो विस्मरणेपि ध्यानमेव तं प्रेरयतीति भावः ॥ विभूतिविस्तारार्थं मनोरु-त्पत्तिः सा भगवल्लीलेति भक्तत्वज्ञापनाय प्रश्न इत्याह ॥ क्षत्तुः प्रश्न इति ॥ सर्वत्र कामाच्चोदनया वा प्रवृत्तिः ॥ तत्र कामप्रवृत्तौ वराहकल्पो न मोक्षपर्यव-सायी भविष्यतीत्याशंक्य चोदनया प्रवृत्तिमाह ॥ पित्राज्ञयैवेति ॥ "उत्पाद्य शास धर्मेण" इति वाक्ये प्रजोत्पादनं पृथिवीपालनं यज्ञकरणमिति धर्मा उक्ताः ॥ ते ब्रह्मण एव आज्ञया कृताः ॥ एवं ज्ञापयितुं मनुब्रह्मसंवादप्रकार इत्यर्थः ॥ १०८ ॥ १०९ ॥ ११० ॥

१ दपेक्षायां ।

कल्पेऽस्य जननमिति ॥ महाकल्प एव पूवर्दृष्टेनांशः ॥ अवांतरकल्पेषु तु त्रि-लोक्यां विद्यमानानां मध्ये असुराणामधोगमनम् ॥ देवानामूर्ध्वगमनम् ॥ मनुष्याणां तु नाशः ॥ मनुप्रभृतीनां देवत्वम् ॥ ऋषीणामप्यूर्ध्वगमनम् ॥ विशेषोप्यस्ति ॥ सत्यलोके स्थितिः ॥ तेन कश्यपस्योर्ध्वगमनं दितेरधोगमनमिति विमर्शः ॥ ११७ ॥

त० दी०—कृत्रिमेऽपि हि वैकुंठे मुक्तिरेव तथापि तु ॥
कृष्णेच्छया तु तज्जन्म नष्टानां गतिरीदृशी ॥ ११८ ॥

त० प्र०—अत्र षडध्याया हिरण्याक्षवधप्रस्तावे निरूपिता मतांतरभाषासिद्धाः अतो भागवतार्थेन न विरोधः ॥ अत्रैषा व्यवस्था ॥ प्रकृतकथायां प्रासंगिककथा चेद्विशेषाकारेण पृच्छ्यते तदा न तावन्मात्रं वक्तव्यम् । किं तु यस्मिन् कल्पे तत्प्रमेयमुत्कृष्टतया सिद्धं तदेव वक्तव्यं भक्तिजननस्य प्रयोजकत्वादिति । अतो यस्मिन्कल्पे हिरण्याक्षादीनामुत्कर्षः स निरूप्यते । तत्र वैकुंठगतानां कथं पुनरावृत्तिः, न च वक्तव्यं कृत्रिमवैकुंठगतानां पुनरावृत्तिरिति ॥ तत्राह ॥ कृत्रिमेऽपि हि वैकुंठ इति ॥ ये "अनिमित्तनिमित्तेन धर्मेणाऽऽराधयन् हरिम्" इति भगवदा-राधनया वैकुंठगताः पुनरावृत्तिरहितमेव पदं प्राप्नुवंति तथापि कृष्णेच्छया जय-विजययोर्जन्म । तत्रेच्छायाः प्रयोजनं लोकज्ञापनम् ॥ तत्र किं ज्ञापयतीत्याकांक्षा-यामाह ॥ नष्टानां गतिरीदृशीति ॥ त्रिलोक्यां हिरण्याक्षादिसुखमिंद्रादेरपि दुर्लभं तद्वैकुंठच्युतानां निरूप्यते ॥ सा हि तेषां परमाऽऽपत् ॥ अनेन वैकुंठसुखमुन्नेय-मिति भावः ॥ ११८ ॥

त० दी०—भूमावेव हि तद्युद्धमिच्छया मुक्तिरस्य हि ॥
मारणानंतरं तस्य ह्युदरस्य विभेदनम् ॥ ११९ ॥

त० प्र०—अस्मिन् पक्षे भूमावेव युद्धं भगवदिच्छयैव हिरण्याक्षस्याऽमुक्तिः । क्रियाशक्त्या हननाद्वा । मुक्त्यर्थमवतार एव । मुक्तिरिति वा । उदरभेदनेन न मारणं किंतु मारणानंतरमुदरभेदः ॥ अन्यथा प्राणा भगवन्मुखे प्रविशेयुः ॥ पुनर्दैत्यत्वाभावाय संस्कृतानामंशानां स्वस्मिन् प्रवेशनार्थमुदरभेदनम् ॥ ११९ ॥

त० दी०—ब्रह्मणो दिनमेकं हि तद्युद्धमिति लक्ष्यते ॥
अथवा देवदत्तस्य दिनं मेरुगतश्च सः ॥ १२० ॥

त० प्र०—हिरण्याक्षस्य माहात्म्यार्थमाह ॥ ब्रह्मणो दिनमेकं हीति ॥ अनेन वराहकल्पस्तेनैव समाप्त इति ज्ञापितम् ॥ पश्चात् श्वेतवाराहकल्पे सृष्टिर्हिरण्य-

मग्नपृथिव्युद्धारार्थम् ॥ तत्र गुणातीतकार्यं यज्ञादेव भवतीति गजरूपता न कृता ११३

त० दी०— सृष्टौ तत्कारणत्वं च कर्मरूपत्वतः स्फुटम् ॥
ब्रह्मणोऽप्यवितर्क्यं हि रूपं भगवतो निजम् ॥ ११४ ॥

त० प्र०— यज्ञस्य जगत्कारणत्वे युक्तिर्न वक्तव्येत्यत आह ॥ सृष्टाविति ॥ तर्ह्यस्य क्रियांशत्वमेवास्तु किमित्यवतारत्वमित्याशंक्याह ॥ ब्रह्मणोप्यवितर्क्यं हीति ॥ एतादृशं रूपं निजमेव भवति ॥ ११४ ॥

त० दी०— एतदानंदरूपं हि क्रियांशज्ञप्तये तथा ॥
लक्षमात्रमियं भूमिः प्रायेणेति मतिर्मम ॥ ११५ ॥

त० प्र०— स्वरूपमाह ॥ एतदानंदरूपं हीति ॥ अन्यथाप्रतीतौ हेतुमाह ॥ क्रियांशज्ञप्तय इति ॥ भगवतः क्रियाशक्त्यवतार इति ज्ञापयितुं यज्ञानुकारिरूपपरिग्रहः ॥ "सलिले स्वखुराक्रांते" इतिवचनात्पंचाशत्कोटिविस्तीर्णा न भविष्यतीति लक्षमात्रमित्युक्तम् ॥ जंबूद्वीपस्यैव कर्मक्षेत्रत्वादियं च भूमिर्यज्ञार्थमेवेति ॥ मतिर्ममेति नात्राऽन्यसंमतिः ॥ "पंचाशत्कोटिविस्तीर्णा" इतिवाक्यं कल्पांतरपरम् ॥ पंचसहस्रमात्रमेवेति ज्योतिर्विदः ॥ तच्च विंशतिभागगणनयापि फलमायातीत्येतज्ज्ञापनार्थम् ॥ इयं च भूमिर्ज्योतिश्चक्रमध्ये वर्तते ॥ ११५ ॥

त० दी०— यज्ञत्वबोधकं स्तोत्रं कथंचिन्मारणं त्विह ॥
उद्धृतिः स्थापनं स्तोत्रं मारणं चेति तत्क्रमः ॥ ११६ ॥

त० प्र०— अत्र स्तोत्रप्रयोजनमाह ॥ यज्ञत्वबोधकमिति ॥ नाऽस्माकमत्र श्रद्धाभाव इति । हिरण्याक्षमारणं तु यथाकथंचित् ॥ इदं प्रकरणं भूम्युद्धार एव पर्यवसितम् ॥ नाऽत्र मारणमभिप्रेतम् ॥ अन्यथा वाक्यभेदः स्यात् ॥ तस्मात्प्रधानानुरोधेनाऽन्येषां कालादिकृतिः ॥ अकिंचित्करश्चाऽस्मिन्कल्पे दैत्यः ॥ यज्ञश्च तस्य दाहक एव ॥ अत आगमनमात्रेणैव मारणम् ॥ मारणमुख्यपक्षे क्रममाह ॥ उद्धृतिरिति ॥ स्तोत्रं यद्यपि संदिग्धं तथाप्युत्कर्षवर्णने तस्य दुःखं भवतीति पूर्वमुक्तम् ॥ ११६ ॥

त० दी०—पूर्वकल्पेऽस्य जननं रसायां प्रलये स्थितिः ॥
देवानामूर्ध्वगमनमन्येषां नाश एव हि ॥
ऋषीणां तत्सुतानां च ब्रह्मसाम्यमबाधके ॥ ११७ ॥

त० प्र०— ननु कल्पादौ भूम्युद्धारस्तत्कुतस्त्यो हिरण्याक्ष इत्याशंकायामाह ॥पूर्व-

नैतयोरयं स्वभाव इति ॥ एवं प्रथमाध्यायार्थस्याऽयुक्तत्वमुपपादितम् ॥ १२४ ॥

त० दी०— संक्षोभो न क्वचिद्येषां काले देशे च वस्तुनि ॥
ते कृष्णभावनायुक्ता वैकुंठे कृष्णभृत्ययोः ॥
सनंदनादयः क्रुद्धाः शापं दुर्विषहं ददुः ॥ १२५ ॥

त० प्र०— तथापि द्वितीयाध्यायार्थस्याऽयुक्तत्वमाह ॥ संक्षोभ इति ॥ वस्तुनि अयुक्तकरणे ॥ अवस्था च कृष्णभावनायुक्ता ॥ स्वयं च क्रुद्धाः । शापश्च दुर्विषहः ॥ १२५ ॥

त० दी०— भगवद्भावसंपन्ना भगवद्गुणतत्पराः ॥
लतापक्षिस्त्रियश्चापि निरहंमत्सराः शुभाः ॥ १२६ ॥
सालोक्यसार्ष्टिसामीप्यसारूप्यं सर्वथा गतौ ॥
वैकुंठे भक्तसंदर्शविघ्नं चक्रुश्च गर्वितौ ॥
स्वभावविनिवृत्त्यर्थमुभयोश्च तथा कृतिः ॥ १२७ ॥

त० प्र०— एवं मुनीनामयुक्ततां निरूप्य जयविजययोरपि तथात्वमाह ॥ भगवद्भावसंपन्ना इति द्वाभ्याम् ॥ पूर्ववदत्रापि स्वभावनिवृत्त्यर्थं शापानंतरचेष्टे-त्याह ॥ स्वभावविनिवृत्त्यर्थमिति ॥ १२६ ॥ १२७ ॥

त० दी०— मोहनं तदुपेक्षा च दुर्घटं पतनं तथा ॥
द्वेषोत्पत्तिस्तयोः कृष्णे सर्वं कृष्णेच्छयाऽभवत् ॥ १२८ ॥

त० प्र०— तृतीयाध्यायार्थोऽप्ययुक्त इत्याह ॥ मोहनमिति ॥ मोहनवाक्यैः सनकादीनां मोहनम् ॥ तयोरुपेक्षा ॥ तथा वैकुंठाद्दुर्घटं पतनम् ॥ भगवति द्वेषो-त्पत्तिः ॥ अन्यथोत्तरत्र द्वेषवृद्धिर्न स्यात् ॥ १२८ ॥

त० दी०— अलौकिकी तदुत्पत्तिर्वृद्धिर्दिग्विजयस्तथा ॥
स्वामिनो दुर्वचो वादो युद्धं ब्रह्मभ्रमस्तथा ॥
संमुखे मरणे कृष्णान्न मुक्तः किं ततोऽद्भुतम् ॥ १२९ ॥

त० प्र०— एवमध्यायत्रयार्थं दुर्घटत्वेन निरूप्य पुनरन्येषां तथात्वं निरूपयति ॥ अलौकिकी तदुत्पत्तिरिति ॥ न हि महत उत्पत्तौ दुर्निमित्तानि भवंति ॥ वृद्धि-र्दिग्विजयश्चालौकिकौ ॥ पंचमाध्यायार्थानुपपत्तिमाह ॥ स्वामिनो दुर्वचो वाद इति ॥ युद्धमपि स्वामिना सहाऽयुक्तम् ॥ ब्रह्मणश्च भ्रमः सुतरामयुक्तः ॥

१ धिकम् ।

कशिपुराज्यं चेति ज्ञापितम् ॥ पक्षांतरमाह ॥ अथवेति ॥ तदा मासषट्कं युद्धम् ॥ अस्मिन् पक्षे ब्रह्मवाक्यानां संगत्यर्थमाह ॥ मेरुगतश्च स इति ॥ भूमिस्थापनानंतरं पूर्ववन्मेरावेव ब्रह्मा स्थितः ॥ १२० ॥

त० दी०— षड्भिः संसारकथनमुत्पत्तिर्मरणं च सः ॥
उपाधिजननं पूर्वं स्थानभ्रंशश्च जन्म च ॥ १२१
प्रादुर्भावः सर्वतश्च विनश्यत्ता नशिस्तथा ॥
ईश्वरेच्छैव षट्कस्य कारणं नान्यथा तु तत् ॥ १२२ ॥

त० प्र०— किमनेन सिद्धमित्याकांक्षायामाह ॥ षड्भिः संसारकथनमिति ॥ मुक्तानां जीवानां भगवदिच्छया संसारः ॥ सा भगवद्रूपेति षड्भिरध्यायैः संसारो निरूप्यते ॥ संसारस्वरूपमाह ॥ उत्पत्तिर्मरणं च स इति ॥ उत्पत्तिस्त्रिभिरध्यायैर्मरणं च तथेति ॥ अनित्ये जननमित्यादिना त्रिविधोत्पत्तिर्निरूपिता ॥ "कालद्रव्यगुणैरस्य त्रिविधः प्रतिसंक्रमः" इति मरणमपि त्रिधा। तत्र बीजोत्पत्तिः प्रथमाध्यायार्थः ॥ तत्र जीवसंबंधो द्वितीयाध्यायार्थः ॥ भगवद्विभूत्यावेशस्तृतीयार्थ इति ॥ अन्यथा तथा महत्त्वं नोपपद्येत ॥ तदाह ॥ उपाधिजननमिति बीजजननम् ॥ स्थानभ्रंशो वैकुंठात्क्षतिः-जन्म प्रादुर्भावश्चैकेन ॥ उत्कर्षस्य नाशरूपत्वमिति ज्ञापयितुं नाशाध्यायेषु निरूपणम् ॥ वरुणवाक्येन नाशबीजकथनाद्विनश्यत्ता पंचमाध्यायार्थः ॥ "नाशबीजं विनश्यत्ता विनाशश्चेति तद्विदा" कथं सुजीवस्यैवंभाव इत्याशंक्याह ॥ ईश्वरेच्छैव षट्कस्य कारणमिति ॥ १२१॥१२२ ॥

त० दी०— दक्षकन्या ऋषेः पत्नी संध्यायामग्निहोत्रिणम् ॥
निर्लज्जा बोधिता स्थातुं क्षणं न त्यक्तवत्यपि ॥ १२३ ॥

त० प्र०— अन्यथा बाधकमाह ॥ दक्षकन्येति ॥ सत्कुलोत्पन्ना ऋषेरतींद्रियद्रष्टुः पत्नी क्षणमात्रं स्थित्यर्थं याचिताऽपि न स्थितवती ॥ न ह्येतद्भगवदिच्छाव्यतिरेकेण मर्यादया सिध्यति ॥ १२३ ॥

त० दी०— मौनत्यागस्तयोर्भाषा स्तोत्रं तद्वश्यता तथा ॥
अन्यत्रागमनं तत्र प्रतीकाराकृतिर्मुनेः ॥
सभावविनिवृत्त्यर्थं संवादस्तादृशः पुनः ॥ १२४ ॥

त० प्र०— अस्तु वा स्त्रियाः ॥ मुनेरपि तथाभावो नोपपद्यत इत्याह ॥ मौनत्याग इति ॥ मुनौ षडर्था अनुपपन्नाः । पुनर्यो धर्मरूपः संवादः सोपि ज्ञापकः ॥

सांख्याचार्यास्तु कल्पेऽस्मिन्मुक्तिमार्गं हरीच्छया ॥
ज्ञानमेकप्रकारेण हृदि प्राप्य परं गताः ॥ १३४ ॥

त० प्र०— सांख्यमतसृष्टिः कस्मिन् कल्पे जातेत्याकांक्षायामाह ॥ आंडकोशे पद्मकल्प इति ॥ ब्रह्मांडमध्ये यः पद्मकल्पः केवलाद्भिन्नस्तस्मिन्नेव सांख्यमतं प्रसिद्धम् ॥ तत्रैव ते सिद्धा इति हेतुः ॥ ननु तेषां ज्ञानं तत्त्वसूत्रे निंदितमिति कथं मुक्तिरित्याकांक्षायामाह ॥ हरीच्छया ज्ञानमेकप्रकारेणेति ॥ १३४ ॥

त० दी०— इति दर्शयितुं सांख्ये कल्पस्याऽस्य च वर्णनम् ॥
पंचशः प्राकृतोत्पत्तिस्तत्त्वत्वज्ञापनाय हि ॥ १३५ ॥

त० प्र०— अस्य कल्पस्य पद्मकल्पस्य ॥ चकाराद्वराहकल्पस्य च वर्णनम् ॥ अन्यथा प्रकृते तेन मार्गेण मुक्तिर्न स्यात् ॥ तस्य सृष्टिप्रकारस्य पूर्वस्माद्वैलक्षण्यं ज्ञापयितुमाह ॥ पंचशः प्राकृतोत्पत्तिरिति ॥ "पंचभिः पंचभिर्ब्रह्मन्" इत्यग्रे वक्ष्यति ॥ तथा संख्यायुक्तत्वकथने सांख्यं मतं भवति ॥ तत्त्वता च पदार्थानां भवति ॥ १३५ ॥

त० दी०— उपलक्षणमात्रत्वादल्पोक्तिर्न विरुध्यते ॥
तत्रैका दशधा सृष्टिः स्वभावगुणकार्यतः ॥ १३६ ॥

त० प्र०— अस्मिन्मते सृष्टेर्विस्तरेणाऽकथने हेतुः ॥ उपलक्षणमात्रत्वादिति ॥ सैव सृष्टिः प्रकारांतरेण निरूप्यत इति निरूपकं वाक्यमुपलक्षकं भवति ॥ तत्रैकस्मिन्नेवाध्याये एकादशधा सृष्टिर्निरूपितेत्याह ॥ तत्रेति ॥ स्वभावगुणानां कार्यभेदात् ॥ तत्र स्वभावस्य भेदद्वयम् ॥ गुणानां नव भेदा इति ॥ १३६ ॥

त० दी०— त्रैगुण्यं निर्गुणावस्था भगवच्चिंतनं तथा ॥
एवमेकादश प्रोक्ताः सभावे विसृतिः स्फुटा ॥ १३७ ॥

त० प्र०— तानेवाह ॥ त्रैगुण्यमिति ॥ निर्गुणावस्था दशमं ज्ञानरूपम् ॥ भगवच्चिंतनमेकादशरूपमिति ॥ उपसंहरति ॥ एवमिति ॥ गुणसृष्टिरेकाध्याये संक्षेपेणोक्ता ॥ स्वभावसृष्टिस्तु ज्ञानभक्तिभेदेन चतुर्भिर्नवभिः क्रमाद्विस्तरेणोक्ता स्वयमेवाग्रे स्फुटा भविष्यति ॥ १३७ ॥

त० दी०— यक्षरक्षांसि देवाश्च दैत्याश्च प्रथमास्त्रयः ॥
उपाधिरपि तेषां हि तथेति प्रतिपादितम् ॥ १३८ ॥

त० प्र०— तत्र प्रथमं तामसादिभेदानाह ॥ यक्षरक्षांसीति ॥ अत्राविचो-

पष्ठाध्यायार्थोऽप्युक्त इत्याह ॥ **संमुखे मरणे कृष्णादिति** ॥ १२९ ॥

त० दी०— सोपपत्तिकमाख्यानं जीवानां जननं हरिः ॥
ऐहिकामुष्मिकफलं दातुं सृजति नाऽन्यथा ॥ १३० ॥

त० प्र०— उपसंहरति ॥ **सोपपत्तिकमिति** ॥ हरिरेवोत्पादयत्यैहिकामुष्मिकफलदानार्थम् ॥ अतः सर्गो लीला भवतीत्युक्तं भवति ॥ १३० ॥

त० दी०— इति दर्शयितुं सांख्यमते सृष्ट्यादिवर्णनम् ॥
तेषां गुणप्रधानत्वाद्गौणी सृष्टिर्निरूप्यते ॥ १३१ ॥

त० प्र०— एवं भाषांतरेण निरूप्य समाधिभाषायामप्ययमेवार्थ इति निरूपयितुमाह ॥ **इति दर्शयितुमिति** ॥ सांख्यपुरुषा जीवन्मुक्ताः ॥ अतस्तन्मतानुसारेणोत्पन्ना मुक्त्यर्थमेव भवंतीति सिद्धम् ॥ तत्र सृष्टिभेदा एकादशप्रकाराः ॥ तत्र हेतुमाह ॥ **तेषां गुणप्रधानत्वादिति** ॥ अत एव प्रथमतो गौणी सृष्टिर्निरूप्यते ॥ १३१ ॥

त० दी०— प्रकारांतरसंप्रश्नः स्वकृतः परतस्तथा ॥
भक्तकर्तृत्वतस्तस्य कृष्णलीलात्वमुच्यते ॥ १३२ ॥

त० प्र०— अत्र शौनकानां भगवत्कथाप्रस्तावे मनुकथाप्रश्नो न युक्त इत्याशंक्याह ॥ **प्रकारांतरसंप्रश्न इति** ॥ अयमपि प्रश्नो भगवत्कथाया एव किं तु प्रकारांतरेण ॥ मनुर्भक्तस्तेन क्रियमाणं भगवत्प्रीतिजनकमेव भवतीति लीलाहेतुत्वात्सा लीलैव ॥ १३२ ॥

त० दी०— प्रक्रियांतरबोधाय व्यासोक्तिः शुकसूतयोः ॥
एकरूपत्वकथनादेकोक्तिः पाक्षिकोऽन्ययोः ॥ १३३ ॥

त० प्र०— "एवमुग्रश्रवाः पृष्टः" इति व्यासवाक्यं नोपपद्यत इत्याशंक्याह ॥ **प्रक्रियांतरबोधायेति** ॥ तथा शुकसूतयोरप्युक्तिः शुकवाक्येनैव निरूप्यते ॥ अन्यथा सूतो विदुरवाक्यं न वदेत् । शुकश्च वदेदिति ॥ एकोक्तौ हेतुः एकरूपत्वकथनं शब्दतोऽर्थतश्च समानम् ॥ अन्ययोः परीक्षिच्छुकयोः पाक्षिकोऽत्र ज्ञातव्यः ॥ यथा शौनकेन पृष्टं तथा राज्ञा पृष्टं यथा सूतेनोच्चरितं तथा शुकेनेति तुल्यत्वादेकः पक्षः कश्चिदुक्त इति ॥ १३३ ॥

त० दी०— आंडकोशे पद्मकल्पो विशेषेणोच्यतेधुना ॥

कृतकृत्यता च नैर्गुण्यं कृष्णत्वं तपआदिभिः ॥
ऋषिभावस्ततो भाव्यो नाऽन्यत्र विरमेद्बुधः ॥ १४३ ॥

त० प्र०— तृतीयं त्रिकमाह ॥ सिद्धाश्चेति ॥ का निर्गुणावस्थेत्याकांक्षायामाह ॥ कृतकृत्यता च नैर्गुण्यमिति ॥ कृतकृत्यता नाम स्वस्यैव परमपुरुषार्थता ॥ तपआदिभिस्तु कृष्णत्वम् ॥ प्रकृते स ऋषिभावः ॥ ततो ब्रह्मणाऽपि स भावो भाव्यः ॥ ततः किमत आह ॥ नाऽन्यत्र विरमेद्बुध इति ॥ अन्यथा सृष्टिं कुर्यादेव ब्रह्मा न विरमेत् ॥ एवमेकाध्यायार्थो निरूपितः ॥ १४३ ॥

त० दी०— चतुर्भिः सुखपूर्वो हि पुंमुक्तिर्नवभिः स्त्रियाः ॥
एकस्य तु स्वतः सिद्धं ज्ञानं कृष्णप्रसादतः ॥ १४४ ॥

त० प्र०— अतः परं ज्ञानभक्त्योर्विस्तारं वक्तुं त्रयोदशाध्याया इति तत्र भेदद्वयमाह ॥ चतुर्भिरिति ॥ ननु कथमेवमेकस्याल्पमपरस्य बह्विति तत्राह ॥ एकस्य तु स्वतः सिद्धमिति ॥ पुरुषस्य तु पुरुषार्थचतुष्टयसिद्ध्यर्थं चत्वारोऽध्यायाः ॥ तत्रापि तस्य साधनरूपं ज्ञानं स्वतः सिद्धम् ॥ भगवत्कृपयैव पुरुषार्थानां ससाधनानां सिद्धेः ॥ १४४ ॥

त० दी०— अन्यस्या उपदेशे हि स्त्रीत्वात्सर्वं प्रकाश्यते ॥
नवकन्याः कारणत्वात्स्त्रीजीवा अत्र बोधिताः ॥ १४५ ॥

त० प्र०— अनेनैव स्त्रिया अपि धर्मार्थकामाः सिद्धाः सहभावात् ॥ मोक्षः परं पृथक् वक्तव्यः स केवल एव भवति न मिथुनीभावे ॥ अतो बहुवक्तव्यत्वाभावात्पुंमुक्तिरेकेन ॥ स्त्रीमुक्तिस्तु अंतःकरणदोषाणां नवानां गुणरूपाणां त्याजनार्थं नवभिरध्यायैर्बह्वेव साधनजातं निरूप्यत इत्याह ॥ अन्यस्या उपदेशे हीति ॥ नन्वत्र नवकन्यानामुक्तिरयुक्तेत्याशंक्याह ॥ नव कन्या इति ॥ स्त्रीजीवाः प्रकृतिपरवशाः ॥ १४५ ॥

त० दी०— प्रकृतेः कारणत्वाय मायाशक्तिर्हि तादृशी ॥
रमणौपयिकरूपा हि शुद्धसत्त्वादिभेदतः ॥ १४६ ॥

त० प्र०— ननु जीवानां कारणत्वं पूर्वमेव निरूपितं पुनः किमर्थं निरूप्यत इत्याशंक्याह ॥ प्रकृतेः कारणत्वायेति ॥ स्त्रीजीवो हि प्रकृत्यधीनः ॥ अतस्तस्य कारणत्वे प्रकृतेः कारणत्वं सिध्यति तथापि नवानां क्वोपयोग इत्याशंक्याह

---

१ ध्यायार्थं इति ।

त्पत्तिः पूर्ववदेव ॥ विशेषस्त्वत्र यक्षरक्षसामप्युत्पत्तिरविधया सह ॥ तथा भावांतरेण देवानामप्युत्पत्तिः ॥ १३८ ॥

त० दी०— विलक्षणत्वसिद्ध्यर्थं देहत्यागः प्रजापतेः ॥
तत्तत्कालाभिमानिन्यो देवतास्ताः पृथक् स्थिताः ॥ १३९ ॥

त० प्र०— तत्रापि तनुत्यागो भावांतरग्रहणार्थः ॥ तनूनां स्वरूपमाह ॥ तत्तत्कालाभिमानिन्य इति ॥ १३९ ॥

त० दी०— देवतोपाधिसंबंधात्कार्योत्पत्त्याऽतिविह्वलः ॥
तामसत्वात्तु ते मूढा वाक्यमात्रेण संस्थिताः ॥ १४० ॥

त० प्र०— ननु पंचपर्वाविद्योत्पत्त्यनंतरं किमिति देहं त्यक्तवाँस्तत्राह ॥ देवतोपाधिसंबंधादिति ॥ देवतारूपा पंचपर्वाऽविद्या सा ब्रह्मण उपाधिरूपा जाता यदा तदैव यक्षरक्षसामुत्पत्तिस्ततस्तान्विसदृशान् दृष्ट्वा भयविव्हलः सन् तनुमुत्ससर्जेति मंतव्यम् ॥ तदा भगवदिच्छया जातास्ते ब्रह्मा तत्र सहत इति भगवत्प्रेरणया भक्षयितुं प्रवृत्ताः ॥ तर्हि कथं निवृत्ता इत्याशंक्याह ॥ तामसत्वादिति॥ "अहो मे यक्षरक्षांसि" इति वाक्यमात्रेण निवृत्ताः ॥ १४० ॥

त० दी०— सात्त्विके नास्ति शंकैव राजसत्वे महान् श्रमः ॥
पृथक् स्थितां देवतां हि वर्णयंति कुबुद्धयः ॥ १४१ ॥

त० प्र०— देवपक्षस्तु सुगम इत्याह ॥ सात्त्विक इति ॥ राजसेषु महान् श्रमः ॥ अतो यमनमारभ्य भगवदाज्ञया तनुत्यागपर्यंता कथा निरूपिता ॥ अन्यास्तनवः शीघ्रमेव कालरूपतामापन्नाः कालभेदेनैव व्यवह्रियंते ॥ रजसा राजसीत्येषा तनुर्न संध्यायामेकभावतामापन्ना किं तु पृथक् स्थिता कियत्कालम् ॥ अतस्तां वर्णयंतीत्याह ॥ पृथगिति ॥ पश्चात्कालेन सहैक्ये दैत्यानां निवृत्तिरिति भावः॥१४१

त० दी०— गंधर्वाश्च पिशाचाश्च पितरस्त्रिविधा गुणैः ॥
सत्त्वं तमो रजश्चेति न तेदोषोऽस्वभावतः ॥ १४२ ॥

त० प्र०—द्वितीयं त्रिकमाह ॥ गंधर्वाश्चेति ॥ तत्र गुणक्रममाह ॥ सत्त्वमिति ॥ तेषु दोषा न वर्णिताः । तत्र हेतुः । अस्वभावत इति ॥ तेषां गुणत्वेपि न दोषस्वभावत्वम् ॥ दोषरूपेणेतरप्रवेशाभावादिति भावः ॥ १४२ ॥

त० दी०— सिद्धाश्च किंनराः सर्पाः सत्त्वादिभिरुदीरिताः ॥

रपि विश्लेषे मुक्तिर्भवतीति त्यागेनोभयोर्मुक्तिकथनं च युक्तं भवति ॥ एवं प्रकरणार्थं शोधयित्वा प्रथमाध्याये तपसा भगवत्तोषस्य प्रयोजनमाह ॥ सर्वस्येति ॥ अत एव प्रकरणादौ भगवत्तोषार्थं कर्दमप्रवृत्तिः ॥ १४९ ॥

त० दी०— भक्तानां निर्णयस्तोत्रे सर्गार्थमुपयुज्यते ॥
कामितं च हरिः पूर्वं स्वयमेव विधास्यति ॥
व्यर्थं वचनमित्यर्थं बोधयत्युत्तरं वदन् ॥ १५० ॥

त० प्र०— ननु केन तुष्टो भगवानित्याकांक्षायामाह ॥ भक्तानां निर्णय इति ॥ भगवान् तपसा न तुष्टः ॥ नापि स्तोत्रेण । किंतु यथार्थभापणेन ॥ तत्रापि स्वगृहमर्मकथनेन ॥ तदा हि भक्तानां निर्णय इति ॥ तथा वचनस्य प्रयोजनं स्वार्थम् ॥ महतो निष्कपटभजने प्रसादो भवति ॥ भगवत्प्रसादस्याऽनित्यतामाशंक्य समाधानमाह ॥ ॥ कामितमिति ॥ पूर्वमेव करणान्न कारणसाध्यत्वम् ॥ कारणमपि प्रसाद एव ॥ भगवदीयपदार्थभोगार्थं शरीरेंद्रियसंस्कारतपआदीनां कार्यम् ॥ अतो भगवंतं प्रति प्रार्थनावचनं व्यर्थम् ॥ एतद्भगवद्वचनादेवावगम्यते ॥ अन्यथा वृत्तांतं न कथयेत् ॥ १५० ॥

त० दी०— पुरुपार्थाः स्वयं सर्वे समायांति हरिप्रिये ॥
इति दर्शयितुं राज्ञः स्वयमुद्यम्य याचनम् ॥ १५१ ॥

त० प्र०— नन्वीश्वरप्रेरणाव्यतिरेकेण कथं पदार्थसिद्धिः ॥ प्रेरणायां वा को हेतुः ॥ निर्हेतुकत्वे वा सर्वेष्वेव पदार्थसिद्धिः स्यादित्याशंक्याह ॥ पुरुपार्थाः स्वयं सर्व इति ॥ भगवत्प्रियत्वमेव साध्यं नाऽन्यत् ॥ तेनैव सर्वसिद्धिरिति भावः ॥ १५१ ॥

त० दी०— दुहितुर्वर्णनं प्रीत्यै राज्ञो भक्तत्वतः समम् ॥
भक्तिश्च कार्यशुद्ध्यै हि तपश्चैव स्वमुक्तये ॥ १५२ ॥

त० प्र०— कर्दमस्य कन्यावर्णनमयुक्तमित्याशंक्याह ॥ दुहितुर्वर्णनं प्रीत्या इति ॥ राजकर्तृत्वं वा वर्णनमृषिप्रीत्यै ॥ ननु सकृदुपभोगप्रतिज्ञायामपि कथं कन्यादानं तत्राह ॥ राज्ञो भक्तत्वतः सममिति ॥ सर्वेषां पुरुपार्थसिद्धिर्भवत्विति समता ॥ ननु विवाहानंतरं कथं भक्तिः कथं वा तप इत्याशंक्याह ॥ ॥ भक्तिश्चेति ॥ अन्यथा कार्यदोषेणापि कारणं दुष्टं भवेत् ॥ पुत्रापचारे पितुर्नरकवत् । कार्यं दुहितरः । चकारेण भक्तेर्नांतरीयकार्यधर्मा गृह्यंते ॥ तपसो भिन्नं

मायाशक्तिर्हि तादृशीति ॥ सा हि गुणमयी प्रत्येकं गुणानां त्रैविध्यात्स्वरूपेति भावः ॥ ननु स्त्रीत्वं नाम किमित्याकांक्षायामाह ॥ रमणौपयिकरूपा हीति ॥ प्रकृतिस्त्रिगुणात्मिका ॥ तत्र गुणप्राधान्ये क्रोधादिवशानामपि स्त्रीत्वं स्यात् ॥ गुणातिरिक्ता तु प्रकृतिर्नास्तीति मतं निराक्रियते ॥ "गुणभावं परित्यज्य स्वरूपेण स्थिता तु या ॥ पुरुषं रमयंती सा स्त्रीरूपेति निगद्यते ॥ १ ॥ पुरुषस्य च तस्याश्च सर्वतत्त्वेष्वथांशवः ॥ पृथक् संति ततो यत्र दृष्टादृष्टादिकारणात् ॥ २ ॥ भोग्यभावत्वमापन्नाः प्रकृत्यंशाः समागताः ॥ बीजभावं आप्नुवंति तद्वृद्धौ स्त्रीभवे तु सा" ॥ ३ ॥ एवमभिप्रेत्याह ॥ शुद्धसत्त्वादिभेदत इति ॥ मिश्राणामेव गुणत्वम् ॥ सत्त्वप्राधान्ये देवस्त्रीत्वम् ॥ रजःप्राधान्ये मनुष्यस्त्रीत्वम् ॥ तमःप्राधान्ये पशुस्त्रीत्वमिति ॥ १४६ ॥

त० दी०— आनंदांशस्वरूपेपि शुद्धसत्त्वादिरूपतः ॥
शक्तिप्राधान्यतः स्त्रीत्वं तत्त्वतः पुरुषाकृतिः ॥ १४७ ॥

त० प्र०— आनंदांशस्तत्र प्रविष्ट इति भोग्यत्वम् ॥ यद्यपि पुरुषेऽप्यानंदांशः प्रविशति स्त्रियाः पुरुषो भोग्य इति तथापि गुणाः प्रबला इति शक्तिप्राधान्यतः स्त्रीत्वम् ॥ पुरुषाकृतिस्तु तत्त्वतः परमार्थतः ॥ पुरुषांशसमवाये पुरुषत्वमिति भावः ॥ १४७ ॥

त० दी०— मोहकत्वमतःस्त्रीणा शक्त्याकृतिविशेषतः ॥
विसर्गस्यात्र संप्रश्न उत्तरत्रोपयुज्यते ॥ १४८ ॥

त० प्र०— किमत्र नियामकमित्यत आह मोहकत्वमतः स्त्रीणामिति ॥ पुरुषं मोहयंती यतः, अतः प्रकृत्याकृतित्वं स्त्रीणामित्यर्थः ॥ ननु सर्गलीलायां मनुवंशादे रुच्यादेर्वंशप्रश्नः कुत्रोपयुज्यत इत्याशंक्याह ॥ विसर्गस्यात्र संप्रश्न इति ॥ १४८ ॥

त० दी०— नित्यसंबंधतासिद्ध्यै कर्दमोऽत्रैव योजितः ॥
सर्वस्य कारणं कृष्णप्रसाद इति तत्कथा ॥ १४९ ॥

त० प्र०— नन्वेवं सति मध्ये कर्दमचरित्रमत्र किमर्थं निरूपितं तत्राह ॥ नित्यसंबंधतासिद्ध्या इति ॥ प्रकृतिपुरुषयोर्नित्यः संबंध इति ज्ञापयितुं कर्दमस्य कथा ॥ संबंधस्तु सर्ग उपयुज्यते । भिन्नतया प्रसिद्धावपि स्वभावत एव परस्पराकांक्षा मुक्तौ । अतोयमर्थो निरूपणीय इति कर्दमः सर्गे निरूपितः ॥ सहजयो-

त० प्र०— एवं करणे प्रयोजनान्याह ॥ **मरीच्यादीति** ॥ मैथुनधर्मेणैव सृष्टिर्भवत्विति भगवदिच्छया मरीच्यादीनां भार्यापेक्षया स्त्रिया अपि बहुपत्येच्छा ॥ स्ववाक्यं "यावत्तेजो बिभृयादात्मनो मे" इति ॥ नन्वेवमपि वाक्यं स्वकीयं न कृतं तेजस एकत्वाभावात्प्रत्युत बहुपुरुषसंबंधेन स्वस्य स्त्रियाश्च दोषजननमिति चेन्नैवम् ॥ 'आत्मनो मे' इत्यत्राहंकारो व्याख्येयः ॥ स च त्रिगुणात्मक इति नवरूपाणि भवंति ॥ सांख्यप्रक्रिया चेयम् । जात्यपेक्षया चैकवचनम् ॥ मन्वादीनां चित्तपरीक्षार्थमेव तथा वचनमिति युक्तमुत्पश्यामः ॥ नन्वेवं समर्थस्य योगेन देहत्यागेपि मुक्तिसंभवात्कथं वनगमनमित्याशंक्याह ॥ **गमनं स्त्रीविरक्तय इति** ॥ वस्तुतस्तु योगेपि त्यागोऽपेक्षितः । गृहत्यागेनाऽर्द्धं कैवल्यं भवति । ततोऽर्धे देहांतःकरणभेदेन द्विधा कृत्वा चेत्त्यजति तदैव कैवल्यमिति योगसांख्ययोर्निष्कर्षः ॥ भगवन्मार्गे त्वन्यथा ॥ पराश्रयत्वात् । यथा भगवानेव फलं तट्टीकायामुपपादितमिति विरम्यते ॥ १५७ ॥

त० दी०— विरक्तो ज्ञानसिद्ध्यर्थं कृष्णं भावयते यदि ॥
ज्ञानांशश्च तदा व्यक्तो येन सर्वं फलिष्यति ॥ १५८ ॥

त० प्र०— ननु कपिलावतारस्य किं प्रयोजनमित्याकांक्षायामाह ॥ **विरक्तो ज्ञानसिद्ध्यर्थमिति** ॥ अनेन 'यावत्तेजः' इत्यत्रैव वाक्यं पर्यवसितं ज्ञेयम् ॥ नव रूपाणि त्वन्यानि ॥ १५८ ॥

त० दी०— अवतारो हरेर्यावान् तत्र ब्रह्मा स्वयं व्रजेत् ॥
वरादनुक्तेप्येवं हि स्तुतिः पूर्णे तु सर्वतः ॥ १५९ ॥
बोधनं सर्वबोधाय गमनं सर्वबोधकम् ॥
पुत्रेपि च हरौ सर्वत्यागादावश्यकी भजिः ॥ १६० ॥

त० प्र०— एतत्सर्वं ब्रह्मणोऽभिप्रेतमिति ब्रह्मगमनम् ॥ लोकप्रतीत्यर्थं प्रयोजनांतरमप्याह ॥ **अवतार** ॥ इति नन्वेवं सति सर्वत्र तद्गमनं वक्तव्यं स्यात्तत्राह ॥ **वरादनुक्तेप्येवं हीति** ॥ "यद्यत्करिष्यति गृहीतगुणावतारः" इति प्रार्थनया वरो दत्तः ॥ अतोऽनुक्तेपि स्थले ब्रह्मगमनं ज्ञातव्यम् ॥ परं मुख्यतया स्तुतिः पूर्णे कृष्ण एव ॥ कन्यादानबोधनं भगवानयमिति च बोधनं सर्वेषामेव बोधाय ॥ दंपत्योस्तु बोधः पूर्वमेव सिद्धः ॥ ननु मरीच्यादीनां विवाहानंतरं यद्गमनमुक्तं तस्य कुत्रोपयोग इत्याकांक्षायामाह ॥ **गमनं सर्वबोधकमिति** ॥ अन्यथा स्वेच्छया

प्रयोजनमाह स्वमुक्तय इति चकारात्तस्या अपि मुक्तये ॥ अथवा तपसोपि भक्तिसंग्रहः । तस्यास्तु तपः पूर्ववत्संस्कारार्थम् ॥ १५२ ॥

त० दी०— अलौकिकस्य करणादनासक्तिः फलिष्यति ॥
ध्यानं भगवतो योगो भगवत्प्रेपितं च तत् ॥ १५३ ॥
कन्याश्चैव तथा ज्ञानं तत्कृपातोऽस्य जायते ॥
स्त्रिया माहात्म्यबुद्ध्यर्थमृपिकर्तृत्वमुच्यते ॥ १५४ ॥

त० प्र०—प्रार्थिताधिककरणे हेतुमाह ॥ अलौकिकस्य करणादिति ॥ विमानादिनिर्माणमलौकिकमन्यथा चित्ते अनासक्तिर्न भविष्यति ॥ "कर्दमो योगमास्थितः" इत्यत्र योगपदार्थमाह ॥ ध्यानं भगवतो योग इति ॥ अन्यथा भगवत्प्रसादजन्यत्वं न स्यात्, बंधश्च भवेत् ॥ तर्हि कथं विमानोत्पत्तिस्तत्राह ॥ भगवत्प्रेपितं च तदिति ॥ विमानं तामसं कन्या राजस्यो ज्ञानं सात्त्विकमिति ॥ नन्वेवं सति किमिति स्पष्टं नोच्यते तत्राह ॥ स्त्रिया इति ॥ १५३ ॥ १५४ ॥

त० दी०— अत एव ऋषौ यातेऽप्यवस्थानं तु तस्य हि ॥
कायव्यूहेन नवधा स्वरूपकरणं मतम् ॥ १५५ ॥

त० प्र०— तथापि नियतोपपत्तिर्वक्तव्येत्याशंक्याह ॥ अत एव ऋषौ यात इति ॥ यस्माद्भगवता प्रेपितं न योगेन ऋपिणा जातम् ॥ अन्यथा भोगार्थं सृष्टा भोगाभावे गच्छेयुः ॥ अत्र "नोधा विधाय रूपं स्वम्" इति निरूपितं तत्कथं नवधा निरूपणमित्याकांक्षायामाह ॥ कायव्यूहेनेति ॥ अग्रे परस्परविवाहसिद्ध्यर्थं भिन्नपारंपर्यकथनाय नवरूपाणि । गौण्येवैषा सृष्टिः । गुणातीता तु भगवद्रूपा ॥ अतः कायव्यूहं कृत्वा नवधा बीजाधानं कृतवान् ॥ १५५ ॥

त० दी०— समानत्वान्न वैपम्यं दोपाभावः फलं ततः ॥
रेतःसेकः क्रमेणैव सूक्ष्मत्वात्स न दृश्यते ॥ १५६ ॥

त० प्र०— नन्वेवं क्रियमाणे देवहूतिः कथं मन्यत इत्याशंक्याह ॥ समानत्वान्न वैपम्यमिति ॥ अत एव दोपाभावोपि ॥ फलं तु रेतःसेकलक्षणं भिन्नं भिन्नं जातमेव ॥ ननु सेकभेदे कथं तस्याऽज्ञानं तत्राह ॥ सूक्ष्मत्वादिति ॥ कालः सूक्ष्म इति भेदो न दृश्यते ॥ १५६ ॥

त० दी०— मरीच्यादिविवाहेच्छा बह्वपत्ये स्त्रियास्तथा ॥
स्वगार्स्थ्यं च ऋतं कर्तुं गमनं स्त्रीविरक्तये ॥ १५७ ॥

त० दी०— गुरूपसत्त्या निर्विण्णो हेयांशं ज्ञापयेद्गुरौ ॥
श्रद्धाभक्तियुतस्तस्मै तत्त्वं वाच्यं न चाऽन्यथा ॥ १६५ ॥
भर्त्तुश्च ब्रह्मणो वाक्याद्भगवत्त्वं तु तस्य हि ॥
सांख्यप्रणेतृतां चैव ज्ञातवत्याऽऽह तादृशम् ॥ १६६ ॥

त० प्र०— ननु देवहूतिः कथं "निर्विण्णातितराम्" इत्यादिवाक्यं कथयति किमर्थं चेत्याकांक्षायामाह ॥ गुरूपसत्त्येति द्वाभ्याम् ॥ तत्र प्रथमे प्रकार उच्यते॥ तथा वचने हेतुस्तु ब्रह्मणो वाक्याद्भर्तुश्च तस्य भगवत्त्वं निश्चितम्॥ अतो भगवति तथा वचनं नाद्भुतम् ॥ १६५ ॥ १६६ ॥

त० दी०— देहादिष्वात्मविज्ञानान्मोहस्तेनेह संसृतिः ॥
मोहाभावः सांख्ययोगस्तद्धेतुस्तेन याचितौ ॥ १६७ ॥

त० प्र०— सामान्यतो भर्त्रा सांख्यप्रकारो निरूपितः ॥ अतः प्रकारकथनमित्याह ॥ देहादिष्वात्मविज्ञानादिति ॥ मोह एव संसारस्तदभावः सांख्यात्तद्धेतुः कपिल एवेति तेन कारणेन याचितौ प्रकृतिपुरुषौ ज्ञातौ ॥ १६७ ॥

त० दी०— शाब्दं सांख्यं नोपयोगि सहकारि तु चेतसः ॥
ज्ञानशंकानिवृत्तिश्च मनसः सहकारिणी ॥ १६८ ॥
अतो हि यादृशं चेतः साक्षात्कारे प्रयोजकम् ॥
तादृशं साधनैः साध्यमित्याह गुरुरादृतः ॥ १६९ ॥
अतो दोषनिवृत्त्यर्थं योगः प्रथममुच्यते ॥
निर्दुष्टमेव रमते समता लिंगमस्य हि ॥ १७० ॥

त० प्र०— प्रकृतिपुरुषयोर्विवेके प्रार्थिते योगादिकथनमयुक्तमित्याशंक्य ससाधनमुपदिशतीत्याह ॥ शाब्दं सांख्यमिति त्रिभिः ॥ तत्रादौ योगो मुख्यो दोषनिवर्तकत्वात् ॥ दोषनिवृत्तिपर्यंतं स कर्तव्यस्तदभिज्ञापकमाह ॥ समता लिंगमस्य हीति ॥ १६८ ॥ १६९ ॥ १७० ॥

त० दी०— शुष्कयोगेनैव शक्यं स्वनिर्वाहोऽपि दुर्लभः ॥
अतो भक्तिर्भगवति विना सद्भिर्न सा क्वचित् ॥ १७१ ॥

त० प्र०— केवलयोगेनापि कार्यं न सिध्यतीति तदर्थं भक्तिमाहेत्याह ॥ शुष्कयोग इति ॥ भक्तिरहितो योगो न चित्तशोधकस्तस्य स्वनिर्वाहोपि संदिग्धः । योगोऽपि न सिध्येदित्यर्थः ॥ तत्राऽपि भगवत्येव भक्तिः [1]सर्वसाधिका ॥ सापि स्वत

[1] सर्वतोऽधिका ।

स्त्रीणां पतिसंबंध इत्यप्यस्मिन् कल्पे बोधितं स्यात् ॥ हरेर्ज्ञानरूपस्य परित्यागेन गमनमयुक्तमित्याशंक्याह ॥ पुत्रेपि च हराविति ॥ १५९ ॥ १६० ॥

त० दी०— एवं चतुर्भिर्भोगादिमुक्त्यंतं पुंसि वर्णितम् ॥
वैराग्यादिः स्त्रियाः प्रोक्ता मुक्तिर्नवभिरुत्तमा ॥ १६१ ॥

त० प्र०— पुंमुक्तिमुपसंहरति ॥ एवमिति ॥ अतः परमेकेनाऽध्यायेन स्त्रीमुक्तिर्वक्तव्येत्याशंक्याह ॥ वैराग्यादिरिति ॥ वैराग्यादयोऽत्र विशेषतो वक्तव्या इति नैकेन वक्तुं शक्याः ॥ पुंमुक्तेः सकाशाद्धीना भविष्यतीत्याशंक्याह॥ उत्तमेति ॥ साधनप्रकारैरुत्तमा ॥ १६१ ॥

त० दी०— यदौपनिषदं ज्ञानं श्रीभागवतमेव वा ॥
वर्णिनामेव तद्धि स्यात्स्त्रीशूद्राणां ततोऽन्यथा ॥ १६२ ॥

त० प्र०— ननु कपिलेन औपनिषदं परित्यज्य किमिति सांख्यं ज्ञानमुपदिष्ट-मित्यत आह ॥ यदौपनिषदं ज्ञानमिति ॥ गार्गी मैत्रेयीप्रभृतीनां भर्त्रा सह यज्ञसंबंधो वेदसंबंधोऽस्तीति तासां मुख्यमेव ज्ञानं कर्दमस्य तु न तथा ॥ अन्यथा "स्त्रीशूद्रद्विजबंधूनाम्" इत्यत्र स्त्रीग्रहणं व्यर्थं स्यात् ॥ भागवतज्ञानमपि त्रैवर्णि-कानामेव उपासनायाः प्राधान्यात् ॥ यदेव भगवता ब्रह्मणे प्रोच्यते तत्त्रैवर्णिकाना-मेवेति ज्ञातव्यम् ॥ १६२ ॥

त० दी०— विदुरस्याऽधिकारोऽत्र प्राधान्याद्बीजरूपयोः ॥
अतः सांख्यप्रकारेण तस्यै ज्ञानमुदीर्यते ॥ १६३ ॥

त० प्र०— अत्र मुख्यप्रकरणी विदुरस्तस्याऽप्यनुगुणं सांख्यमेव ज्ञानम् ॥ नन्वतिशूद्रस्य सांख्येपि नाधिकार इत्याशंक्याह ॥ प्राधान्याद्बीजरूपयोरिति ॥ बीजं ब्राह्मणस्य ॥ रूपं क्षत्रियस्य ॥ १६३ ॥

त० दी०— यथाकथंचिदात्मा हि ज्ञायतां साधने दृढे ॥
ज्ञाने वा भक्तियोगे वा फलं भवति सर्वथा ॥
अतोऽत्र त्रितयं प्रोक्तं योगेनैषा परं गता ॥ १६४ ॥

त० प्र०— प्रमेयबलमाश्रित्य समाधानमाह ॥ यथाकथंचिदिति ॥ सांख्ययो-गौ भक्तिमार्गश्चेति त्रयमुपदिष्टम् ॥ तत्रैषा योगेन परंगता ॥ तेन त्यागाभावेपि न दोषः—भगवतो गमनेपि ॥ १६४ ॥

---

१ च ।

त० प्र०—एवं प्रतिज्ञां संदिग्धां मत्वा स्पष्टमाह ॥ एवं चतुर्भिरध्यायैरिति ॥ प्रथमाध्याये भक्तिः सांख्यज्ञानयोगा उत्तरत्र ॥ ननु भक्तेरसहायशूरत्वात्किं चतुष्टयनिरूपणेनेत्याशंक्याह ॥ भक्तावनधिकारित्वमिति ॥ न हि देवहूत्यर्थं भक्तिर्निरूपिता स्त्रीत्वात्सत्संगाभावात् ॥ "अथ ते संप्रवक्ष्यामि" इति भिन्नप्रक्रमेण देवहूत्यर्थमेव सांख्यादेरुक्तत्वाच्च ॥ तत्रापि सांख्ययोगयोः प्रकारभेदाद् देवहूत्याः किम् ॥ को मार्गः सिद्ध इत्याकांक्षायामाह ॥ कर्तिर्योगे प्रतिष्ठितेति ॥ भक्तिमार्गवत्सांख्यस्यापि तदनुपयोगो निरूपणेनैव ज्ञायत इति सांख्यनिरूपणमिति भावः॥१७५॥

त० दी०— भक्तिमार्गस्य निर्धारस्त्रयोदशभिरीर्यते ॥
द्वाभ्यां त्रिभिस्तथा चाऽग्रे त्रयमेकैकतस्तथा ॥ १७६ ॥
सफले लक्षणे मोक्षे लोकेष्वैहिकवस्तुषु ॥
हेतौ च संमतौ सर्वनिर्धारे क्रमतो मतः ॥ १७७ ॥

त० प्र०— नाऽत्र भक्तिस्वरूपं निरूप्यते किं तु सर्वोपि मार्ग इत्याह ॥ भक्तिमार्गस्येति देवानामित्यादिभिः ॥ त्रयोदशश्लोकानामवांतरविनियोगमाह ॥ अत्र सप्त पदार्था निरूप्यंते । भक्तेः स्वरूपं, नांतरीयकं फलं, मोक्षः, लोकेषु भयाभावनिर्धारः, लोकानां विशेषणमैहिकवस्तुष्विति ॥ ज्ञानविषयत्वे तु नैवमिति भावः ॥ हेतुश्च, संमतिश्च महतां सर्वनिर्धारश्चेति ॥ तत्र श्लोकानां विभागः ॥ द्वाभ्यां भक्तिस्वरूपं निरूप्यते ॥ "नैकात्मताम्" इत्यादित्रिभिरानुषंगिकं फलम् ॥ "अतो विभूतिम्" इति द्वाभ्यां सालोक्यलक्षणो मोक्षः ॥ तथा चाऽग्रे द्वाभ्यामिति योजना ॥ पुनर्द्वाभ्यां मोक्षनिर्धारः ॥ एवं मोक्षे भेदद्वयं सर्वभावभजनवैराग्यभेदेन ॥ तथा सति द्वाभ्यां प्रत्येकं त्रयं सिद्धं भवतीति ॥ अग्रिमाणामेकैकत इति ॥ एकेनैकेन निरूपणम् ॥ एवं सप्त वा अष्टौ वा अर्था निरूपिता भवंति ॥ एवं सोपपत्तिको भक्तिमार्गो निरूपितः ॥ १७६ ॥ १७७ ॥

त० दी०— संगाभावान्मुमुक्षुत्वात्त्यागाशक्तेरशक्तितः ॥
अयुक्ता मुख्यभक्तौ हि तेनार्थांतरमुच्यते ॥ १७८ ॥

त० प्र०— तत्र देवहूतेरनधिकारमाह ॥ संगाभावादिति सत्संगाभावात् । मुमुक्षुत्वमपि बाधकम् ॥ बाधकरूपाणां स्त्रीणां त्यागश्च कर्तव्यः ॥ स्वस्य च वैराग्यमशक्यं स्त्रीत्वात् ॥ अतो मुख्यभक्तावयोग्या तेन सांख्यादिकं निरूप्यते॥१७८॥

१ रशक्यतः ।

उत्पन्ना अन्यदर्शनजनिता वा न पुरुषार्थपर्यवसायिनीत्यभिप्रायेणाऽऽह ॥ विना सद्भिर्न सा क्वचिदिति ॥ नूतनसंदेहानां तत एव निवारणसंभवात् ॥ १७१ ॥

त० दी०— संतश्च लक्षणैरेव संगश्च हरिवाचकः ॥
अतो विलोमविधिना साक्षात्कारः फलिष्यति ॥ १७२ ॥

त० प्र०— संतोपि न लोकप्रसिद्धया स्वरुच्या वा मंतव्याः किं तु लक्षणैरेव ज्ञातव्याः ॥ संगोपि भगवत्कथार्थमेव । कथायामेव तत्साधने वा ॥ एवं शृंखलारूपेण पदार्थान्निरूप्य पर्यवसानमाह ॥ अतो विलोमविधिनेति ॥ तत्संगे कथाश्रवणे तदुक्तप्रकारेण योगसिद्धौ चित्तनैर्मल्ये तद्धर्मरुच्या सद्भावे संपन्ने भगवत्साक्षात्कारस्ततः सर्वज्ञता ततः स्वरूपज्ञानमिति विलोमविधिः ॥ १७२ ॥

त० दी०— भक्त्यैव हि सतां सर्वमित्यर्थादुक्तमित्यवैत् ॥
अतो भक्तिं च योगं च द्वयं पृच्छति सा पुनः ॥ १७३ ॥
श्रद्धया पृष्टमित्याह भक्तिं ज्ञानं च तस्य तत् ॥
प्रतिज्ञातं त्रयं तस्मात्सांख्ये ज्ञानं फलं तथा ॥ १७४ ॥

त० प्र०— सांख्ये भक्तेरंगत्वं निरूप्य स्वमार्गे प्रधानरूपतेत्याह ॥ भक्त्यैव हि सतां सर्वमिति ॥ मां प्रति तु प्रसंगादेवोक्तवानित्यवैद्देवहूतिः ॥ तेन संगार्थं न यत्नं कृतवती ॥ पुनर्विशेषप्रश्ने अयमेव हेतुः । मां प्रति यदि वक्ष्यति तदा भक्तियोगो योगो वा मया कर्तव्य इति वेद एव साधारण्येन पदार्थान्निरूपयति ॥ अन्ये पुनः प्रष्टुरधिकारानुसारेणेति तदाह ॥ अतो भक्तिं च योगं चेति ॥ भक्त्या प्रश्ने पुत्रभावो गत इति संतुष्टः सन् चतुष्टयमाह ॥ भक्तिरात्मानात्मविवेको ज्ञानं योगश्चेति ॥ तत्राऽऽत्मानात्मविवेकस्यांगत्वात्त्रयं प्रतिज्ञातं "विदित्वार्थम्" इतिश्लोके ॥ तत्त्वाम्नायं सांख्यम् ॥ भक्तिवितानेन सहितो योगश्च । तेन त्रयं भवति ॥ नन्वेवं सति प्रथमनिर्दिष्टं सांख्यमनिरूप्य कथं भक्तिनिरूपणं तत्राह ॥ सांख्ये ज्ञानं फलमिति ॥ ज्ञानं हि मुख्यम् ॥ तच्च प्रतिज्ञातं मंतव्यम् ॥ अन्यथा केवलसांख्यप्रतिज्ञा व्यर्था स्यात् ॥ अतः ससाधनस्य ज्ञानस्य बहुवक्तव्यत्वाद्भक्तेः प्रथमं निरूपणमित्यर्थः ॥ १७३ ॥ १७४ ॥

त० दी०— एवं चतुर्भिरध्यायैश्चतुष्टयमुदीर्यते ॥
भक्तावनधिकारित्वमस्या अर्थादुदीरितम् ॥
त्रयं तदर्थमेवाऽऽह कृतिर्योगे प्रतिष्ठिता ॥ १७५ ॥

हात्म्यनिरूपणं भक्तावपि माहात्म्यमंगमिति बोधनार्थम् ॥ तत्र भक्तिस्वरूपनिरूपणमष्टाविंशतिश्लोकैः सार्धैः "भक्तियोगश्च योगश्च" इत्यतः प्राक्तनैः । माहात्म्यं दशभिः श्लोकैः ॥ १८२ ॥

त० दी०— मृत्युजन्मविभेदेन दोषो वैराग्यबोधकः ॥
तेनाऽध्यायद्वयं प्रोक्तं यच्छ्रुत्वाऽभयमाप्नुयात् ॥ १८३ ॥

त० प्र०— वैराग्यमध्यायद्वयेनोच्यत इत्याह ॥ मृत्युजन्मविभेदेनेति ॥ भयाद्वैराग्यम् ॥ तत्र प्रथमाध्याये मृत्युर्निरूपितः ॥ स च जन्मावधिरिति "पुनरत्राव्रजेत्" इत्युक्तम् ॥ १८३ ॥

त० दी०— संगत्यागं विना ज्ञानं नोपयोगाय कल्पते ॥
इति दर्शयितुं स्तोत्रं यतः सर्वोपि तादृशः ॥ १८४ ॥

त० प्र०— गर्भस्तुतेरुपयोगमाह ॥ संगत्यागं विनेति ॥ सर्वेषामेव गर्भे ज्ञानं भवति ॥ अन्यथा तादृशस्यैव संसारकथनं नोपपद्येत ॥ तस्माद्वैराग्यप्रकरणे ज्ञानस्याऽप्रयोजकता निरूपिता ॥ १८४ ॥

त० दी०— तस्मात्सर्वपरित्यागाद्भ्रमणं साधनं महत् ॥
एवं त्रिभिर्द्वयं प्रोक्तं सर्वनिर्धारकं परम् ॥ १८५ ॥

त० प्र०— अध्यायद्वयेन सिद्धमाह ॥ तस्मात्सर्वपरित्यागादिति ॥ "अथ यो गृहमेधीयान्" इत्यध्यायार्थमाह ॥ सर्वनिर्धारकं परमिति ॥ राजसानां सात्त्विकानां तामसानां च निर्धारो निरूपितः ॥ सात्त्विकनिरूपणे ब्रह्मादीनां निरूपणम् ॥ "ये त्विहाऽऽसक्तमनसः" इति तामसाः ॥ "तस्मात्त्वम्" इति निर्गुणावस्था ॥ एवं सर्वनिर्धारो विस्तरेणैकस्मिन्नध्याये निरूपितः ॥ संक्षेपेण निरूपणार्थमंतिमाध्यायार्थः ॥ १८५ ॥

त० दी०— भविता सर्वथैवैतत्संवादस्य निबंधनम् ॥
गुणदोषास्त्वतस्तस्य विविच्यंते ह्यनेकधा ॥ १८६ ॥

त० प्र०— "नैतत्खलाय" इत्यादिश्लोकानां प्रकृतोपयोगमाह ॥ भविता सर्वथैतदिति ॥ अयं संवादो व्यासादिभिर्भागवतादाववश्यं निरूपणीयः ॥ अतो गुणदोषा निरूप्यंते ॥ प्रकृते तु नोपयोगः ॥ अतः संगत्यभावो न दोषाय ॥१८६॥

---

१ ज्ञापनार्थम् । २ यच्छ्रुत्वा ।

त० दी०— द्वयं तत्र प्रतिज्ञातं हेतुः षड्भिर्द्वितीयके ॥
सर्वभिन्नतया ज्ञानं खंडं स्त्रीणां तदेव हि ॥
वेदानधिकृतानां च सांख्यं तस्मान्निरूप्यते ॥ १७९ ॥

त० प्र०— सांख्यनिरूपणप्रस्तावे ज्ञानमपि प्रतिज्ञायत इत्याह ॥ **द्वयं तत्र प्रतिज्ञातमिति** ॥ "अथ ते संप्रवक्ष्यामि" "ज्ञानं निश्रेयसार्थाय" इति द्वाभ्याम्॥ ज्ञानार्थमभ्यासः षड्भिः श्लोकैर्निरूप्यते॥ अनेनासंगतिः परिहृता ॥ "अनादिरात्मा" इत्यादीनाम् ॥ ननु सर्वं ब्रह्मेत्येवं ज्ञानं बोधनीयं किं संघातविलक्षणात्मज्ञानेने-त्याशंक्याह॥ **सर्वभिन्नतयेति**॥ इदं हि खंडज्ञानं स्त्रीणां मुख्ये ज्ञानेऽधिकाराभा-वाद्युक्तम् ॥ अनधिकारे हेतुः, **वेदानधिकृतानां चेति** ॥ अभ्याससमर्थनार्थं सांख्यनिरूपणं, वस्तुतो भेदे हि अभ्यासो भवतीति ॥ तदाह ॥ **सांख्यं तस्मा-न्निरूप्यत इति** ॥ १७९ ॥

त० दी०— उत्पत्त्या चोपपत्त्या च सर्वभेदो निरूपितः ॥
तदर्थमेव संप्रश्नो भेदात्संसारभिन्नता ॥ १८० ॥

त० प्र०—तत्र यदुक्तं तदाह ॥ **उत्पत्त्येति** ॥ ज्ञानार्थं सांख्यनिरूपणमित्यत्र हेतुमाह ॥ **तदर्थमेव संप्रश्न इति** ॥ भेदज्ञानं बाधकं मत्वा समाधानमाह ॥ **भेदात्संसारभिन्नतेति** ॥ अनर्थरूपात्संसारात्स्वस्य भिन्नतया ज्ञानं मुख्यानधि-कृतेषु न बाधकमित्यर्थः ॥ १८० ॥

त० दी०— साधनान्युपपत्तिश्च स्वरूपार्थं तथोच्यते ॥
अष्टांगश्च तथा योगः कर्तव्यत्वाच्च विस्तृतः ॥ १८१ ॥

त० प्र०— "प्रकृतिस्थोऽपि पुरुषः" इत्यध्यायार्थमाह॥ **साधनान्युपपत्तिश्चेति**॥ उपपत्तिः प्रथमतः। "यमादिभिः" इति साधनानि ॥ विचारोऽपि साधनमिति चका-रार्थः ॥ तेन "पुरुषं प्रकृतिर्ब्रह्मन्" इत्याद्युपपद्यते ॥ "योगस्य लक्षणम्" इत्यध्या-यार्थमाह ॥ **अष्टांगश्चेति** ॥ तस्याः कर्तव्यत्वाद्विस्तरेण कथनम् ॥ १८१ ॥

त० दी०— वैराग्यभक्त्योः संप्रश्नः साधनत्वाद्विशेषतः ॥
तत्त्वैर्द्वितीयनिर्धारो दशभिः कारणं परे ॥ १८२ ॥

त० प्र०— ततो वैराग्यभक्त्योः प्रश्नानुपपत्तिमाशंक्य साधयति ॥ **वैराग्येति** ॥ **विशेषत इति** ॥ उभयाभावे योगो न सिध्यतीति भक्त्यध्याये भयहेतोर्मा-

# अथ तत्त्वार्थदीपनिबंधे

भागवतार्थप्रकरणे

## चतुर्थस्कंधविवरणं प्रारभ्यते.

॥ श्रीकृष्णाय नमः ॥

त० दी०— एवं सर्गस्तृतीये तु सफलः सुनिरूपितः ॥
अथैकत्रिंशताध्यायैर्विसर्गस्तुर्य उच्यते ॥ १ ॥

त० प्र०— अलौकिकं विसर्गं वदन् अनौचित्यमाशंक्य सर्गोप्येवमेव वर्णित इति पूर्वस्कंधार्थमुक्तमनुवदति ॥ एवं सर्ग इति ॥ अनेन सर्वा लीलाः शृंखलारूपा अपि प्रत्येकं सफलाः ॥ तेनैकदेशसमुदाययोः सर्वत्र फलसिद्धिर्ज्ञापिता ॥ अथेति भिन्नप्रक्रमे ॥ तेन लौकिको विविधः सर्गो निराकृतः ॥ विशिष्टः सर्गो हि विसर्गो देवतारूपः ॥ ते[1] च वसुरुद्रादित्यरूपा देवाः ॥ भगवतो लीलाया विपरीतत्वाद्वसवोंते निरूप्यंते ॥ रुद्रा मध्ये ॥ आदित्या आदौ ॥ अत एकत्रिंशदध्यायाश्चतुर्थे स्कंधे ॥ १ ॥

त० दी०— सर्वयुक्तरजोभाजो लीला कार्यस्य जन्मदा ॥
विसर्गो लौकिको ह्यत्र कार्यं बुद्ध्या चतुर्विधम् ॥ २ ॥

त० प्र०— विसर्गलक्षणमाह ॥ सर्वयुक्तरजोभाज इति ॥ सर्वजीवैर्युक्तं यद्रजः क्रियाशक्तिस्तेनाऽत्रोत्पद्यमानाः सर्वसामर्थ्ययुक्ता भविष्यंतीति विशिष्टत्वम् ॥ कार्यपदं मुक्तजीवाभिप्रायम् ॥ अत्रोत्पन्नाः सामर्थ्यं प्रकटीकृत्य मुक्ता भविष्यंति॥ अतो लौकिको विसर्गः ॥ एवं स्कंधार्थं निरूप्य प्रकरणभेदार्थमाह ॥ कार्यं बुद्ध्या चतुर्विधमिति ॥ यद्यपि भगवत्सामर्थ्यमनंतं तथापि सद्बुद्ध्या धर्मार्थकाममोक्षा एव साध्या इति कार्यं चतुर्विधम् ॥ २ ॥

त० दी०— पौरुषस्त्वयमेवोक्तो माहात्म्यं सर्वथा यतः ॥
वंशः प्रसंगसिद्ध्यर्थं लौकिकानुग्रहादपि ॥
साधारणो न वै वाच्यः सारोद्धारस्ततोऽस्य हि ॥ ३ ॥

त० प्र०— भागवते विसर्गलक्षणं तथा नोक्तमित्याशंक्याह ॥ ॥ पौरुषस्त्वयमेवोक्त इति ॥ "विसर्गः पौरुषः स्मृतः" इति लक्षणम् ॥ तत्र पौरुषपदं न

[1] तेन ।

त० दी०— एवं व्यासप्रकारेण तत्त्वमुक्तं विभागशः ॥
समासेन तथैकस्मिन् सफलं पूरणं तथा ॥ १८७ ॥

त० प्र०— अध्यायाष्टकार्थमुपसंहरति ॥ एवमिति ॥ विस्तारप्रकारेण सर्ववस्तुनिर्धारार्थं तत्त्वमुक्तम् ॥ सुखप्रतिपत्त्यर्थं संक्षेपेणाऽऽह ॥ तस्याऽफलत्वमाशंक्य सारोद्धारत्वज्ञापनाय शीघ्रं फलसिद्धिमाह ॥ सफलमिति ॥ १८७ ॥

त० दी०— गुरुप्रसादसिध्यर्थं स्तोत्रं वागेव स स्मृतः ॥
प्रतिपत्तिमकृत्वा चेल्लीना को वेद किं भवेत् ॥ १८८ ॥
इत्यग्धारणया देहं जलं चक्रे महामतिः ॥
अवतारचरित्रत्वाच्छ्रवणे फलमुच्यते ॥ १८९ ॥

इतिश्रीविष्णुस्वामिमतवर्तिश्रीवल्लभदीक्षितविरचिते
श्रीभागवततत्त्वदीपे तृतीयस्कंधविवरणम् ॥

त० प्र०— अवांतराध्यायार्थमाह ॥ गुरुप्रसादेति ॥ स्तोत्रं देवहूतिकृतम् ॥ स्तोत्रमात्रेणैव तोषे हेतुमाह ॥ वागेवेति ॥ " ज्ञानकलावतीर्णः" इति सरस्वतीरूपः कपिलः ॥ देहस्य संस्कारस्तथा कथं कृत इत्याशंक्याह ॥ प्रतिपत्तिमकृत्वेति ॥ स्वस्य स्त्रीत्वाद्गुरोश्च सरस्वतीरूपत्वात्तिर्यग्गतावपि जलधारणैव कृता ॥ अग्निभावेऽप्यूर्ध्वगतिर्गुरुसायुज्याद्भविष्यति ॥ इति ज्ञात्वैव तथाकृतवतीत्याह ॥ महामतिरिति ॥ कथाया अपि सफलत्वमाह ॥ १८८ ॥ १८९ ॥

इति श्रीभागवततत्त्वदीपप्रकाशे भागवतप्रकरणे वल्लभदीक्षितविरचिते
तृतीयस्कंधविवरणम् ॥

---

एतं वर्णचणैः कदर्थिततमं श्रीतत्त्वदीपं मह-
न्मान्यं वेदपुराणशास्त्रवचसामादर्शबिम्बायितम् ॥
चत्वारि प्रतिपुस्तकानि विदुषां संगृह्य भूरिश्रमा-
दित्थं नन्दकिशोरसंज्ञकसुधीः शुद्धं व्यधादुज्ज्वलम् ॥ १ ॥

---





यत्वमिति ॥ मनुष्याधिकारपक्षस्तु भ्रांतपरिकल्पितो वानरादीनामप्यधिकारात् ॥७॥

त० दी०— स्त्रीणामनर्थहेतुत्वं न भार्यापरमेव हि ॥
पुत्र्या मातुस्तथाऽन्यस्या देवताया अपि स्फुटम् ॥
पुरुषार्थविरोधित्वकथनाय तथा वचः ॥ ८ ॥

त० प्र०— तर्हि स्त्रीसतीप्रसंगः कथं प्रथमप्रकरणे कृत इत्याशंक्याह ॥ स्त्रीणामनर्थहेतुत्वमिति ॥ पुरुषार्थविरोधित्वात्तासां कथनम् ॥ ८ ॥

त० दी०— सप्ततंतुर्यतो यज्ञो धर्मे सप्त ततः कृताः ॥
धर्मः सिध्येद्वरेरेव नाऽन्यथेति निरूप्यते ॥
दक्षो मुख्यो यतो धर्मे ततस्तस्य कथा तता ॥ ९ ॥

त० प्र०— प्रथमप्रकरणे सप्ताऽध्यायाः ॥ द्वितीये पंच ॥ उभौ मिलितावादित्याः ॥ तत्र सप्तसंख्यायां प्रयोजकमाह ॥ सप्ततंतुरिति ॥ तंतुशब्दः सूत्रे संततौ च वर्तते ॥ यज्ञश्च सूत्रात्मकत्वाचंतुर्भवति संततिरूपश्च ॥ अतो ज्योतिष्टोमः सप्तसंस्थो भवतीति सप्ततंतुः ॥ अतो धर्मप्रकरणे सप्ताऽध्यायाः ॥ वाजपेयो गणनार्थं सप्तम इति ॥ तस्याऽप्युत्तरांगभूते बृहस्पतिसवे विघ्नो निरूप्यते ॥ तस्य प्रयोजनमाह ॥ धर्मः सिध्येदिति ॥ वसिष्ठादिषु विद्यमानेषु दक्षनिरूपणस्य प्रयोजनमाह ॥ दक्ष इति ॥ अन्वर्थनामा कर्ममार्गे दक्षः ॥ ९ ॥

त० दी०— पीठिकासहितोऽनर्थः प्रसंगः पोषकैर्युतः ॥
प्रथमेऽनंतरे हेतुर्भावित्वज्ञापनाय हि ॥ १० ॥

त० प्र०— अत्र प्रकरणे कथानां धर्मोपयोगं वक्तुमाह ॥ पीठिकासहित इति ॥ तत्र प्रथमाध्याये अनर्थप्रसंगः सतीसंबंधो निरूप्यते ॥ द्वितीयाध्याये तु तस्य प्रसंगस्य कार्यमनर्थहेतुरंकुरवच्छापकथा ॥ तस्य प्रयोजनमाह ॥ भावित्वज्ञापनाय हीति ॥ अन्यथांकुरोत्पत्त्यभावे बीजात्फलं न भवेत् ॥ १० ॥

त० दी०— तृतीयेऽनर्थसंभूतिः स्वशक्त्या च निवारणम् ॥
चतुर्थे पंचमे नाशः षष्ठे पूर्वांगमुत्तरे ॥
सप्तमे यज्ञसंसिद्धिर्विष्णोः स्तोत्रे विनिर्णयः ॥ ११ ॥

त० प्र०— द्विपत्ररूपस्तृतीयाध्यायार्थ इत्याह ॥ तृतीय इति ॥ अनर्थवृक्षस्य सम्यक्भूतिरुद्गमो द्वेषस्थिरीकरणात् ॥ द्वेषो न कर्तव्य इति स्थापनमन-

१ कृतः ।

पुरुषाद्ब्रह्मादीनामुत्पत्तिमाह किं तु माहात्म्यं सर्वथा यतो ज्ञातं भवति तेन पुरु-षकारो विसर्गः ॥ एवं सति वंशेन कथं प्रारंभस्तत्राह ॥ वंशः प्रसंगसि-द्ध्यर्थमिति ॥ असंबद्धार्थकथने लीलानां परिज्ञानं न भवतीति प्रसंगो वक्तव्यः ॥ लौकिकाश्च कथाश्रोतारोऽनुग्राह्याः ॥ एवं स्वाभिप्रेतं विसर्गमुक्त्वा साधारणं निषेधति ॥ साधारण इति ॥ "सर्ववेदेतिहासानां सारं सारं समुद्धृतम्" इति-वाक्यात्[1] ॥ ३ ॥

त० दी०— धर्मार्थकाममोक्षाख्यं कार्यं कृष्णांघ्रिसेवया ॥
सिध्येत सर्वजीवानां नाऽन्यथेत्यस्य संभवः ॥ ४ ॥

त० प्र०— प्रकरणैर्विशिष्टं स्कंधार्थमाह ॥ धर्मार्थेति ॥ अस्य स्कंधस्य संभवः ॥ ४ ॥

त० दी०— धर्मः सिद्धस्तु दक्षस्य ध्रुवस्याऽर्थस्तथा पृथोः ॥
कामः प्रचेतसां मोक्षः सुरुच्यादेर्न सिध्यति ॥ ५ ॥

त० प्र०— विविच्य धर्माद्यधिकारिण आह ॥ धर्म इति ॥ पृथोः कामः ॥ पूर्वं दक्षस्याऽपि न धर्मसिद्धिः ॥ सुरुचेर्नाऽर्थसिद्धिः ॥ इन्द्रस्य न कामसिद्धिः ॥ पूर्वं पुरंजनस्याऽपि न मोक्षः ॥ अतः कृष्णांघ्रिसेवयैव पुरुषार्थसिद्धिर्नाऽन्यथेति समर्थितम् ॥ ५ ॥

त० दी०— विसर्गः पौरुषो वाच्यः पुरुषार्थः स नेतरः ॥
तत्कर्तारोऽथवा वाच्या विशिष्टत्वं तदेव हि ॥ ६ ॥

त० प्र०— विसर्गस्यार्थांतरत्वमाशंक्य निराकरोति ॥ विसर्ग इति ॥ ६ ॥

त० दी०—स्त्रीबालयुववृद्धानां प्रक्रियेति मतिर्वृथा ॥
क्रिया न कापि संसिद्धिस्तत्त्वं नाऽत्र प्रयोजकम् ॥
सेंद्रियत्वं न चाऽन्यद्धि भजनांगं विवेकिनाम् ॥ ७ ॥

त० प्र०— मतांतरमाशंक्य निराकरोति ॥ स्त्रीबालेति ॥ स्त्री सती ॥ बालो ध्रुवः ॥ युवा पृथुः ॥ वृद्धः प्राचीनबर्हिः ॥ एवं स्त्रीपुंभेदोऽवस्थाभेदश्च वि-सर्गार्थ इत्युक्तं भवति ॥ एवं मतिर्वृथा ॥ सर्वथा साक्षाद्भगवत्कृतं कार्यं कथं पुरुषार्थरहितं चेद् अनर्थपर्यवसायि वा ॥ तस्मात्क्रिया न प्रकरणित्वम् ॥ स्वरू-पतस्तु स्त्रीत्वं न प्रयोजकम् ॥ भजने तु इंद्रियत्वमेव प्रयोजकमित्याह ॥ सेंद्रि-

[1] वचनात् ।

त० प्र०— तत्रोत्पन्नयोर्विवाहो न युक्त इत्याह॥ लक्ष्मीनारायणो भोक्तेति॥ अनेन यज्ञप्रकरणे भोक्ता च निरूपित इति प्रयोजनांतरम् ॥ तस्य मन्वंतरस्य पंचविधत्वात् षड्विधत्वाभावे हेतुमाह ॥ इंद्राधिकारिजीवानामिति ॥ १५ ॥

त० दी०— यज्ञस्य तु द्विरूपत्वात् षड्विधत्वं भुजिद्वयात् ॥
क्रियाज्ञानोभयैस्त्रेधा धर्मायाऽवतरिष्यति ॥ १६ ॥

त० प्र०— षड्विधत्वमाह ॥ यज्ञस्येति ॥ अंशावतारित्वेन सर्वभोक्तृत्वमिन्द्रत्वेन हविर्भोक्तृत्वं चेति भुजिद्वयम् ॥ अत्राऽध्यायेऽवतारत्रयं निरूपितम् ॥ तस्य कथमुपयोग इत्याकांक्षायामाह ॥ क्रियाज्ञानोभयैरिति ॥ क्रियावतारो यज्ञः । ज्ञानावतारो दत्तः ॥ उभयावतारो नारायण इति धर्मार्थं त्रेधाऽवतरणम् ॥ १६ ॥

त० दी०— नारायणस्तथा दत्तः सर्वसाधारणौ मतौ ॥
क्रियाशक्त्यवतारस्तु तत्र तत्र भविष्यति ॥ १७ ॥

त० प्र०— नारायणदत्तयोर्नैकमन्वन्तरोपयोग इति विशेषमाह ॥ नारायण इति ॥ अतो मन्वन्तरान्तरेषु न ज्ञानोभयावतरणनिरूपणम् ॥ प्रथमस्तु वक्ष्यत इत्याह ॥ क्रियाशक्त्यवतारस्त्विति ॥ १७ ॥

त० दी०— अवश्या कार्यसृष्टिर्हि बंधोपि न भवेद्यथा ॥
अतः सर्वत्र सृष्टौ हि भगवद्भजनाभिधा ॥ १८ ॥

त० प्र०— ननु धर्मप्रकरणे भगवद्भजननिरूपणस्याऽत्रेरुपाख्यानं किंप्रयोजनमित्याशंकायामाह ॥ अवश्येति ॥ १८ ॥

त० दी०— धर्मप्रकरणत्वाच्च निश्चयो नाऽभवत्पुरा ॥
अत्रेः सामान्यरूपेण भजनं तेन वर्णितम् ॥ १९ ॥

त० प्र०— नन्वत्रेः सर्वज्ञस्य भगवद्भजनं परित्यज्य कथं साधारणभजनं तत्राऽऽह ॥ धर्मप्रकरणत्वादिति ॥ कर्ममार्गे सर्वे देवास्तुल्याः ॥ परब्रह्मणोऽपि देवत्वमेव ॥ १९ ॥

त० दी०— कर्मणस्त्रिविधत्वाय त्रयाणां संभवाभिधा ॥
अधिदैवं त्रिधा यस्मात्त्रैविध्ये धर्मकर्मणि ॥ २० ॥

त० प्र०— तथापि त्रयाणामागमने को हेतुस्तत्राऽऽह ॥ कर्मण इति ॥ त्रिविधत्वज्ञापनाय ॥ २० ॥

र्थहेतुत्वज्ञापनाय ॥ अतः स्वशक्त्या कन्यकया स्वबुद्ध्या निवारणमुक्तम् ॥ चतुर्थाध्यायार्थो न सतीमरणं किं तु द्वेषस्यानर्थहेतोरवांतरव्यापारः ॥ पंचमे यज्ञस्य नाशः पांक्तत्वात् ॥ षष्ठे सिद्धेः पूर्वांगम् ॥ उत्तरं रूपं सिद्धिः ॥ यज्ञस्य सप्ततंतोः सप्तमे सिद्धिः ॥ तत्रैव स्तोत्रे विष्णोरेव सिद्धिरित्यंशः समर्थितः ॥ एवं सप्ताध्यायार्थो निरूपिताः ॥ ११ ॥

त० दी०—षड्भिर्मन्वादिभिर्धर्मः प्रथमे त्वस्य संभवः ॥
अतः प्रथमषट्कस्य स्वरूपं प्रथमं जगौ ॥ १२ ॥

त० प्र०— अधुना प्रथमाध्याये प्रासंगिका बहवोऽर्था वर्तंते तेषां धर्मोपयोगं वक्तुमाह ॥ षड्भिरिति ॥ प्रथमं मन्वंतरनिरूपणं धर्महेतुत्वात् ॥ "मन्वंतराणि सद्धर्मः" इति वाक्यात् ॥ अस्यापि हेतुमाह ॥ प्रथमे त्वस्य संभव इति ॥ प्रथमाध्याये मन्वंतरस्य षड्विधस्यापि संभवः ॥ तेन धर्मे स्पष्ट एव हेतुः ॥ अनेन कालो हेतुत्वेन निरूपितः ॥ १२ ॥

त० दी०— येऽग्निमंतोऽतिसंपुष्टा ऋत्विजस्ते हि संमताः ॥
अतो वंशः पृथक् प्रोक्तः सर्वेषां समनुक्रमात् ॥ १३ ॥

त० प्र०— कर्त्तारश्च कर्दमजामातरो निरूप्यंत इत्याह ॥ येऽग्निमंत इति ॥ तेधर्मात्मान इति ज्ञापयितुं वंशो निरूप्यते ॥ धर्माभिमानिन्या देवताया निरूपणं स्पष्टमेव १३

त० दी०— पूर्वकल्पे ऋषिः सिद्धः सत्ये चैव व्यवस्थितः[1] ॥
रुचिर्ब्रह्मसुतैस्तुल्यस्तेनाऽयं पुत्रिकापतिः ॥ १४ ॥

त० प्र०—एवं कथासंगतिमुक्त्वा अनुपपत्तिपरिहारार्थमपेक्षितमर्थं निरूपयन् रुचिं निरूपयति ॥ पूर्वकल्प इति ॥ दैनंदिनकल्पेषु निरूप्यमाणकल्पात्पूर्वकल्पे रुचेरुत्पत्तिः ॥ प्रलये सत्यलोके स्थितः ॥ तस्य कारणत्वाभावान्न तृतीयस्कंधे निरूपणम् ॥ अत्र तस्य कीर्तनं प्रयोजनायेति ॥ हीनत्वाभावायाह ॥ ब्रह्मसुतैस्तुल्य इति ॥ अनेन किंचिद्धीनतापि निरूपिता तेत[2] आह ॥ तेनाऽयं पुत्रिकापतिरिति ॥ अन्यथा सर्वोत्तमो न पुत्रिकापतिर्भवेत् ॥ १४ ॥

त० दी०— लक्ष्मीनारायणो भोक्ता यज्ञस्याऽवततार ह ॥
इंद्राधिकारी जीवानामभावादंशतः पृथक् ॥
देवानामप्यभावेन सांशान् पुत्राँश्चकार ह ॥ १५ ॥

१ व्यवस्थितः । २ तत्र ।

त० प्र०—मुख्यसिद्धांते अंशतोऽविभक्त इति विष्णुर्भगवानेव ॥ तत्र हेतुः ॥ **तस्य सर्वकृत्येति** ॥ स एव हि सर्वं करोति ॥ उत्पत्तिविनाशौ यथाकथंचिदपि भवतः ॥ स्थितौ तु सर्वा कृतिरपेक्ष्यत इति स्वतः परमेश्वरादेव सर्वं फलं नांशतः-अभिमानात् ॥ अन्यथा तामसान्न पालयेत् ॥ हेत्वंतरमाह ॥ **पुष्ट्या कार्यासिद्धेरिति** ॥ पुष्टिमार्गेण कार्यं च न कुर्यात् ॥ विभागशश्च सर्वमार्गप्रवर्तनं न स्यात् ॥ अतो ब्रह्मादीनां सामान्यतो वांछाऽपि सिध्यति ॥ स्वत एवोत्तमत्वात्तुल्यत्वादिदोषाभावश्च ॥ तस्मात्सुष्ठूक्तं दत्तात्रेयस्य भगवत्त्वम् ॥ २४ ॥

त० दी०—भिन्ना जातास्त एवाऽत्र भेदे कार्यस्य संभवात् ॥
अधिकाभिमतित्यागादंशतस्ते हि जज्ञिरे ॥ २५ ॥

त० प्र०—ननु सोमादिषु ब्रह्मादीनां धर्मा न दृश्यंते उत्पत्त्यादयः ॥ तत्कथमवतार इत्याशंक्याह ॥ ॥ **भिन्ना जाता इति** ॥ त एवैते परं भिन्नप्रकारेण जाताः ॥ तत्र हेतुः ॥ **भेदे कार्यस्य संभवादिति** ॥ एवं प्रकारेणाऽवतारे स्वामिप्रेतं कार्यं न सिध्यति ॥ तत्कार्यं वंशकरणम् ॥ योगेन रक्षा ॥ तपसा चानुग्रहनिग्रहौ ॥ कथमेवमत आह ॥ **अधिकाभिमतित्यागादिति** ॥ अंशत एव जाता इति नात्यंतं गुणाभिमानस्तेषु ॥ २५ ॥

त० दी०—अत्यंतं धार्मिको दक्षः पितृदेवव्रतः पुमान् ॥
अभिमानी च तेनाऽस्य कन्याः षोडश ताः स्मृताः ॥ २६ ॥

त० प्र०—एवं धर्मे परंपरोपयुक्तान्निरूप्य दक्षे साक्षाद्धर्मोपयोगं विचारयति ॥ अत्यंतं धार्मिको दक्ष इति ॥ अभिमानित्वेन तामसः ॥ तेनाऽस्य षोडशकलस्य मनोमयस्य कन्याः षोडश जाताः ॥ पंचदश सगुणाः ॥ एकाऽतिरिक्ता चेति ॥२६॥

त० दी०—सर्वेषु धर्मो मासेषु तज्जाता शुद्धिरेव च ॥
त्रयोदश ततः कन्यास्ता धर्माय समर्पिताः ॥ २७ ॥

त० प्र०—धर्माय त्रयोदशसमर्पणे हेतुमाह ॥ **सर्वेष्विति** ॥ कालोयं धर्मे निमित्तमिति ॥ मासाभिमानिन्यः शुद्ध्यभिमानिनी चेति ताः ॥ २७ ॥

त० दी०—सत्त्वमूर्तौ हरेर्जन्म धर्मादाकल्परक्षणे ॥
केवलो धर्ममार्गे हि नात्यंतमुपयुज्यते ॥
इति दर्शयितुं रूपद्वयेनाविरभूद्धरिः ॥ २८ ॥

१ अभिमानत्वात् । २ शुद्धाभिमानी ।

त० दी०— बोधोपि हरिणा पश्चादेवं द्वेषापनुत्तये ॥
तस्मादन्यतरद्वेषे नेतरत्कर्म सिध्यति ॥ २१ ॥

त० प्र०— उत्तरं हरिणैवोक्तं त्रयाणां ज्ञानरूपम् ॥ तत्र हेतुः—बोधोऽपि हरिणेति ॥ अथवा दक्षं प्रति भगवद्वाक्यं सप्तमे वक्ष्यते ॥ तदप्यत्र संमतित्वेनोच्यते फलितमाह ॥ तस्मादिति ॥ २१ ॥

त० दी०— सर्वेषां ब्रह्मवित्त्वेऽपि यन्निष्ठा यस्य तद्वचः ॥
अतो हि भगवाँस्तेषु क्रियांशादिभिरुद्गतः ॥ २२ ॥

त० प्र०— नन्वत्र भागवते ऋषयो निरूप्यमाणाः सर्वज्ञास्ते कथमन्यथाऽन्यथा परस्परविरुद्धानर्थान् वदन्ति ॥ कथं कर्दमो विष्णुमेव सेवते ॥ कथमत्रिः साधारण इत्याशंक्याह ॥ सर्वेषामिति ॥ सर्वज्ञत्वेपि स्वभावभेदाद्रुचिर्भिन्ना ॥ अतो रुच्यनुसारेण तेषां तथा वचनमित्यर्थः ॥ ननु रुच्यनुसारेण वस्तुकथमन्यथा भवेत् । तेन मिथ्यावचनमेव केषांचिद्भवितुं युक्तमित्याशंक्याह ॥ अतो हि भगवानिति ॥ भगवानेव तथा रूपाणि कृतवान् ॥ तेन न प्रमेये तथा तथा वचनं दोषाय ॥ २२ ॥

त० दी०— धर्मे समाधिरुत्कृष्टो ज्ञाने साध्यं तपः परम् ॥
गुणाभिमानिज्ञानं हि खंडे तन्मत ईश्वरः ॥ २३ ॥

त० प्र०— इदानीं नारायणावतारस्य दत्तस्य चरित्रे उपपत्तिमाह ॥ धर्म इति ॥ "अयं हि परमो धर्मः" इति वाक्यात्पितृवृद्ध्यर्थं नारायणः समाधिं कृतवान् दत्तश्च ज्ञानावतार इति तपश्च ॥ ननु दत्तात्रेयो न भगवदवतारो गुणाभिमानिदेवत्वाद्यथा चन्द्र इत्याशंक्याऽऽह ॥ गुणाभिमानिज्ञानं हीति ॥ खंडसिद्धांत एव विष्णोर्गुणाभिमानित्वम् ॥ मुख्यसिद्धांते तु सत्त्वेप्यऽवतार एव ॥ यथा नरायवतारः—यथा मत्स्यत्वादिप्राकट्यं तथाभिमानित्वप्राकट्यमिति ॥ तथापि संदेहात्कथं जीवमध्ये भगवदवतार इत्याशंक्याह ॥ तन्मत ईश्वर इति ॥ खंडमते वैष्णवे स एवेश्वरस्तेन न संदेहः ॥ २३ ॥

त० दी०— अविभक्तोंशतस्तस्य सर्वकृत्या स्वतः फलम् ॥
नांशतोऽभिमतेः पुष्ट्या कार्यासिद्धेर्विभागशः ॥
अतः सामान्यतो वांछा दोषाभावेपि सिध्यति ॥ २४ ॥

नाशशापकारणात् ॥ षोडशत्वं च ॥ तस्य अंतभाग एवोत्पत्तेः ॥ ब्रह्मा तस्या एवं रूपत्वं ज्ञात्वा तामसत्वेन स्वमूलकारणेर्पिता सती न स्वकार्यसमर्था भविष्यति स्वमूलकारणतैलार्पिततद्वदन्यत्र स्थापिता तु वायूपनीततद्वत्कालवशात्सर्वत्र स्वप्रचारं करिष्यतीति विचार्य तदधिष्ठातृदेवाय शिवाय दापयामासेत्यर्थः ॥ सिद्धये स्वरूपसिद्धय इत्यर्थः ॥ सात्त्विकादिभ्यो दाने तामसत्वेन तस्याः स्वरूपनाशप्रसंगादिति भावः ॥ यद्वा ॥ सिद्धिः स्वमूलरूपे लयः ॥ शिवद्वेषहेतुमाह ॥ अभिमानेति ॥ तस्या भिन्नत्वेन स्थितत्वात्तत्रापि तत्कार्यमिति भावः ॥३१॥३२॥

त० दी०— दुहितुः स्मरणान्नित्यमभिमानो विवर्धते ॥
द्वेषश्च धर्माकरणात्कर्तुश्चाऽनादराद्वहिः ॥ ३३ ॥
उद्बोधविनिवृत्त्यर्थमदृष्ट्यै धर्मकर्मणि ॥
संबंधविनिवृत्त्यर्थं शापमाहाधिदैविके ॥ ३४ ॥

त० प्र०— नन्वत्र तत्संबंधेन द्वेषो युक्तो दक्षस्य त्वभिमानस्य पृथग्भावात्कथं स इत्याशंक्याऽस्याप्यभिमानं संबंधहेतुमाह ॥ दुहितुरिति ॥ अत एव द्वेषश्च ॥ ननु शापे को हेतुस्तत्राप्येवंविधशापे को हेतुस्तत्राह ॥ धर्माकरणादिति ॥ स्वयं वैदिकधर्माकरणात्तद्धर्मकर्तुर्दक्षस्यानादराच्चेति हेतुद्वयं शिवनिष्ठं शापे ॥ द्वेषस्यांतःसत्त्वेन तस्य हविर्भागित्वे दर्शननियमेन तत्संभवे च बहिरपि द्वेषोद्बोधः स्यादिति तन्निवृत्त्यर्थं धर्मरूपे कर्मणि तस्याऽदर्शनाय तादृशे कर्मणि संबंधनिवारणं शापं दत्तवानित्यर्थः ॥ ३३ ॥ ३४ ॥

त० दी०— धर्मोऽसहिष्णुस्तु नंदिरधिदैवनिराकृतिम् ॥
फलहानिमुवाचाऽऽदौ साधनानामतः परम् ॥ ३५ ॥

त० प्र०— ननु प्रभौ तूष्णींभूते स्वस्यापि तथैवोचितं तत्कथं नंदिशाप इत्यत आह ॥ ॥ धर्म इति ॥ तुशब्देन शिवव्यवच्छेदः ॥ शिवस्य सहिष्णुत्वेपि नंदिनो धर्मरूपत्वेन स्वाधिदैवनिराकृतिमसहिष्णोः शापोक्तिरित्यर्थः ॥ फलहानिस्तत्त्ववैमुख्यम् ॥ सर्वस्यापि धर्मस्य तत्फलकत्वात् ॥ धर्मेणाऽतथाभावेपि सत्संगादिनापि कदाचिद्वैराग्यादिसाधनसंपत्तौ तत्प्राप्तिः स्यादिति तन्निवृत्त्यर्थमपि पृथक्साधनहानिशापः ॥ अन्यथा साधनानां स्वतोपुरुषार्थत्वात्फलाभावकथनेनैव चारितार्थ्यात्तद्धानिकथनं व्यर्थं स्यात् ॥ ३५ ॥

१ षोडशी । २ रात ।

त० प्र०— परमा सिद्धिः सत्त्वेनेति प्रार्थनाभावेपि शुद्धसत्त्वे भगवदवतारो जात इत्याह ॥ सत्त्वमूर्ताविति ॥ मूर्तिरित्येकदेशनाम सत्यादिवत् ॥ अवतारप्रयोजनमाकल्पांतं रक्षणम् ॥ अयं विशिष्टः सर्ग इति न केवलं पुष्टिरहितो धर्म उपयुज्यते अत उभयज्ञापनार्थं रूपद्वयेनाऽवतीर्ण इत्याह ॥ केवल इति ॥ २८॥

त० दी०— सर्वातिरिक्तरूपेण नरः स्वावेशधारकः ॥
तपोतिरिक्तकार्यं तु पूर्णे कृष्णे न चाऽन्यथा ॥ २९ ॥

त० प्र०— रूपद्वयस्वरूपमाह ॥ सर्वातिरिक्तरूपेणेति ॥ सर्वकार्यकर्तृत्वात्सर्वरूपो नारायणः पुष्टिकार्यकर्तृत्वादतिरिक्तोवतारः ॥ तत्राऽधिकारमाशंक्य परिहरति ॥ स्वावेशधारक इति ॥ नरस्तु तादृशमंशं बिभर्ति न त्ववतार इत्यर्थः ॥ "ताविमौ वै भगवतः" इति मूलवाक्यं कृष्णः स्वयं भगवानेतेन विरुध्यत इति समाधत्ते ॥ तपोतिरिक्तकार्यं त्विति ॥ मार्गद्वयस्थापनार्थमवतीर्णोपि पूर्णप्राकट्याभावे कार्यं न सेत्स्यतीति पूर्णे कृष्ण एव प्रविष्टावंशाविति मूलार्थः ॥ २९ ॥

त० दी०— पितृदेवव्रतत्वाच्च स्वाहान्ये सर्वदेवता ॥
तथा चाग्निः पितॄणां तु नोपायस्तेन तत्तथा ॥ ३० ॥

त० प्र०— एतस्मात्स्वाहास्वधोत्पत्तिं समर्थयन्नेवाग्निपित्रोस्तद्दाने हेतुमाह ॥ पितृदेवेति ॥ अन्या स्वधा ते उभे जाते इति शेषः ॥ स्वाहाया अग्निसमर्पणे हेतुः सर्वदेवतेति ॥ यतः स्वाहा सर्वदेवतारूपा। अग्निरपि तथा "अग्निः सर्वादेवता" इतिश्रुतेः ॥ अतस्तस्मै सा दत्तेत्यर्थः ॥ पितॄणामेकरूपस्याभावात्सर्वेभ्य एव सा दत्ता ॥ तुशब्देन स्वधायाः सर्वपितृरूपतया सा व्यवच्छिद्यते ॥ ३० ॥

त० दी०— अभिमानांशमादाय दीपकज्जलवत्परा ॥
षोडशी कन्यका जाता ब्रह्मावेत्य विचार्य च ॥ ३१ ॥
तदधिष्ठातृदेवाय दापयायास सिद्धये ॥
अभिमानेन संबंधस्तेन द्वेषः प्रवर्धितः ॥ ३२ ॥

त० प्र०— भवाय सत्याः समर्पणे हेतुमाह ॥ अभिमानेति ॥ ननु धर्मिणं विहाय केवलधर्मस्यैव कथमुत्पत्तिः संभवतीत्यत आह ॥ दीपकज्जलवदिति ॥ यथा तेजसः स्वतः शुद्धत्वेन स्नेहजत्वे तन्मलरूपं कज्जलं ततः पृथक् भवति तथा वैदिककर्मणोपि सर्वत्रवस्तुयाथात्म्यप्रकाशकस्य सदोपकर्तृकत्वेनाऽत्र तद्दोपमूतोभिमानः पृथक् जात इत्यर्थः । अत एव तस्याः स्वजनकगृहभर्तृमालिन्यहेतुत्वं

त० प्र०— अस्य शापस्य पूर्वस्मादाधिक्यमाह ॥ ॥ एतस्येति ॥ "ब्रह्मदंडं दुरत्ययम्" इति वाक्यादिति भावः ॥ एतेन वेदानुसारेण भगवद्भजनं विहाय नाऽन्यमार्गे यतनीयमिति सूचितम् ॥ ननु नंदिनापि धर्मसंबंधवारणात्कथं निस्तार इत्यत आह ॥ शिवद्वेषेति ॥ "संमुह्यंतु हरद्विषः" इतिवाक्यात्तद्द्वेषयुक्तेष्वेव तस्य शापात्तन्निवृत्तौ धर्मः सिध्येदित्यर्थः ॥ अपीति संभावनायाम् ॥ पूर्वोक्तवैपरीत्ये संभावनापि नास्तीति भावः ॥ क्वचिदिति यदि भगवति समर्पितं भवतीत्यर्थः ॥ ३८ ॥

त० दी०— द्वैतोत्पत्त्या शिवः किंचिद्विमना न हि पूर्ववत् ॥
अंतरायसमुत्पत्त्या भीतास्ते कृष्णसात्कृतम् ॥
सत्रं विधाय तत्तीर्थे स्नाता निर्मलतां ययुः ॥ ३९ ॥

त० प्र०— शिवस्य पूर्णज्ञानत्वेन कथं वैमनस्येन गमनमित्याशंक्य तत्र हेतुमाह ॥ द्वैतेति ॥ पाखंडधर्मोत्पत्त्या शिवो विमना जात इत्यर्थः ॥ तथापि स्वस्य न काचित्क्षतिरिति किंचिदेव तथा ॥ नन्वेवं सति वैमनस्यमयुक्तम् ॥ धर्मस्यापि सत्त्वादित्यत आह ॥ नहीति ॥ पूर्वं यथा धर्मप्रचारस्तथाग्रे न हीत्यर्थः ॥ पाखंडानां प्रचुरत्वादिति भावः ॥ कालमर्यादया तथात्वे स्वस्य वैमनस्यं न स्यात् स्वनिमित्तं तथात्वे युक्तमेव तथात्वमिति हिशब्द आह ॥ ननु नंदिशापे सति कथं सत्रसमाप्तिरित्यत आह ॥ अंतरायेति ॥ सत्रमध्य एव सत्रनाशकविघ्नोत्पत्त्या भीताः संत ऋषित्वेन भगवतैव निर्दोषत्वेन तत्सिद्धं ज्ञात्वा तदधीनं तत्र समर्पितं तदेकैश्यं च कृत्वेति तत्र समाप्तौ साधनमुक्तम् ॥ तत्तीर्थे भगवत्तीर्थे ॥ गंगया त्वलौकिकशरीरसंपत्तिर्भविष्यति पूर्वदोषनिवृत्तिश्च सर्वदोषनिवर्तकचरणरजोयुक्तत्वात् ॥ कालिंदी पुष्टिमार्गीयेति मर्यादया तथाभावेपि पुष्ट्यैव सर्वं करिष्यतीति विचार्य तदुभयसंगमे स्नाता निर्मलता ययुरित्यग्रिमधर्मसंपत्तौ हेतुरुक्तः ॥ ३९ ॥

त० दी०— शापेन धर्मसंबंधे वारितेपि शरीरतः ॥
संबंधसत्तया द्वेषो ह्यौ निमित्तं विवर्धते ॥
संबंधस्य द्विरूपत्वादुभयोर्द्वेषसंकथा ॥ ४० ॥

त० प्र०— अतः परं तृतीयाध्यायार्थं विचारयन् कर्मजनिताभिमानरूपसतीसंबंधप्रयुक्तत्वेन द्वेषस्य शापेन कर्मसंबंधाभावे च तत्प्रयुक्तद्वेषः शिवे संभावितः

१ न तत्र । २ ष्यानिमित्तम् ।

त० दी०— दैवाभावे धर्महानिरित्येवं सुनिरूपितः ॥
संबंधवारकृद्धर्मे तन्नाशासहनो भृगुः ॥
अदृष्टत्वे धर्मरूपत्वे दर्शनात्क्षोभसंभवः ॥ ३६ ॥

त० प्र०— नन्वेवं कथं ब्राह्मणानां सर्वनाशं कृतवाँस्तत्राह॥ दैवाभाव इति॥ नंदिना स्वयमधिकं किंचिन्नोक्तं किं तु दक्षशापकृताधिदैवसंबंधाभावे धर्मस्य स्वत एव हीनत्वात्तत्फलाभावोप्यनुक्तसिद्ध एव स्पष्टतयोक्तोऽनेनेत्यर्थः ॥ अत एव सुनिरूपित इत्युक्तम् ॥ भृगुशापे हेतुमाह ॥ तन्नाशासहन इति ॥ धर्मनाशासहन इत्यर्थः ॥ तत्र हेतुः॥ भृगुरिति ॥ धर्मरूपब्रह्मशरीरत्वग्रूपत्वादिति भावः॥ प्रथमतो हि त्वच्येव बाह्यदुःखसंभवः ॥ अत एव धर्मे तत्संबंधवारणकर्ता जातः॥ अत्र हेतुः ॥ अदृष्ट्या इति ॥ विपरीते बाधकमाह ॥ धर्मरूपत्व इति ॥ ३६॥

त० दी०— मुख्ये तदप्रवेशश्च तस्याधर्मत्वमेव च ॥
अधर्मे परिनिष्ठा च तथा कापालिकावधि ॥
तदुपाधेः स्वधर्मेऽस्मिन्नाधिदैवत्वमेव च ॥ ३७ ॥

त० प्र०— पंचभिर्भृगूक्तार्थमनुवदति सार्धेन मुख्य इति ॥ वैदिके तद्धर्मस्याऽप्रवेश उक्त इति ज्ञेयम् ॥ चकाराच्चत्कर्तृणामपि ॥ तस्य धर्मस्येत्यर्थः ॥ एवकारेणेतरव्यवच्छेदः ॥ चकारात्तेषामपि ॥ अग्रिमचकारान्नरकोऽपि "यत्र दैवं सुरासवम्" इत्यनेन कापालिकावधित्वम् ॥ तेषां तथात्वात् ॥ तदुपाधिः पाषंडत्वोपाधिः ॥ पाषंडत्वप्रयोजको वेदनिंदेति यावत् ॥ यद्वा ॥ तदुपाधेस्तेषां पाषंडिनां स्वमते निंद्यत्वेनाऽधर्मतावच्छेदक उपाधिर्वेदस्तस्य स्वमत आधिदैवत्वमित्यर्थः ॥ यद्वा ॥ तद्ब्रह्म ॥ उपाधिः पाषंडित्वावच्छेदको धर्मस्तान्निंदा ॥ तयोः समाहारस्तथा ॥ तथा च स्वधर्मे वेदस्याधिदैवत्वम् ॥ अस्मिन् पाषंडधर्मे तन्निंदायास्तथात्वं मुख्यत्वमिति ॥ यद्वा ॥ तत्पदेनाशौचवेदनिंदादिकमुच्यते ॥ तत्र स्वयं तदुक्तधर्माकरणात्तत्प्रयोजकस्तादृक्शरीरो वा शिव एव तस्य तथात्वमिति "दैवं वो यत्र भूतराट्" इति वाक्यात् ॥ एवकारेणेतरव्यवच्छेदः ॥ चात्तत्कृत्त्वमपि ॥ ३७ ॥

त० दी०— एतस्य प्रतिघातस्तु न कदाचिद्भविष्यति ॥
शिवक्षेपनिवृत्त्या तु धर्मः सिध्येदपि क्वचित् ॥ ३८ ॥

---

१ तत्र ।

त० दी०— दैवान्निर्ऋतिगृहीते देवयजनेऽभवन्मखः ॥
तेन नाशस्ततो नाऽत्र वैदिकेऽपि हि दूषणम् ॥ ४३ ॥

त० प्र०— ननु "अपहतपाप्मा स्वाध्यायः" इति श्रुतेः कथं वैदिके कर्मणि तत्राऽप्युत्कर्षकाष्ठाभूते ब्रह्मिष्ठब्राह्मणकर्तृके नाश इत्यत आह ॥ दैवादित्यादि ॥ "निर्ऋतिगृहीते देवयजने याजयेद्यं कामयेत निर्ऋत्याऽस्य यज्ञं ग्राहयेयमित्येतद्वै निर्ऋतिगृहीतं देवयजनं यत्सैद्रश्यै सत्यायं निर्ऋत्यैवाऽस्य यज्ञं ग्राहयति" इति श्रुतेस्तादृग्देवयजने मखस्य जातत्वान्नाशस्याऽऽवश्यकत्वे तन्नाशे वैदिके मार्गे न दूषणमित्यर्थः ॥ श्रुत्युक्तत्वाच्चप्रत्युत भूषणमिति भावः ॥ इममेवाऽर्थं हिशब्देनाऽऽह ॥ भृग्वादीनां सर्वज्ञत्वेन कथं तादृग्देवयजनसंपत्तिरित्यत उक्तं दैवादिति ॥ भगवदिच्छातो दक्षादिदुरदृष्टाद्वेत्यर्थः ॥ एतेनाऽधिकारकर्म तादृग्देवयजनरूपं दोषत्रयमुक्तम् ॥ ४३ ॥

त० दी०—उच्छ्रितिः शिवविद्वेषे नेयं भवति कस्यचित् ॥
अतः सा विघ्नकर्त्री हि तत्प्रारब्धविनिर्मिता ॥
अधिदेवो महादेवस्तेन वारणमुक्तवान् ॥ ४४ ॥

त० प्र०— ननु "तस्मिन् ब्रह्मर्षयः" इत्यादिना दक्षयज्ञोत्सवनिरूपणस्य किं प्रयोजनं कथं वा पतिभक्तायाः सत्यास्तद्गमने गमनाभिलाषेत्याशंक्य तदभिप्रायमाह ॥ उच्छ्रितिरिति ॥ अयमर्थः ॥ "हंति श्रेयांसि सर्वाणि पुंसो महदतिक्रमः" इति वाक्याच्छिवविद्वेषे सतीदृश्युन्नतिरसंभावितेति जानंती तां दृष्ट्वा विघ्नकरणार्थमेव प्रवृत्तेति ज्ञापयितुं तन्निरूपणमिति तादृगुच्छ्रित्यदर्शने विघ्नमेव न कुर्यादिति भावः ॥ पतिभक्तत्वाद्युक्तं तत्करणमिति हिशब्दार्थः ॥ तर्ह्युन्नतौ कोपपत्तिरित्यत आह ॥ तत्प्रारब्धेति ॥ भगवद्दत्तव्यावृत्त्यर्थं च ॥ तथा सति तत्र विघ्नकरणमशक्यमेव स्यात् ॥ अथवा यतः सा विघ्नकर्त्री जाता तत्तस्मात्कारणात्प्रारब्धविनिर्मितैवोच्छ्रितिर्न भगवत्कृतेत्यर्थः ॥ ननु प्रारब्धस्य भोगैकनाश्यत्वेन तन्निर्मितायाः कथमेतन्नाश्यत्वम् ॥ न च तत्प्रारब्धं तावदेवेति वाच्यम् ॥ स्वकारणाभावादेव तदभावे सत्यास्तत्राऽहेतुत्वापातात् ॥ न च कारणनाश एवाऽनया कृत इति वाच्यम् ॥ अनारब्धकार्य एव तु पूर्वे तदवधेः ॥ "भोगेन त्वितरे क्षपयित्वा संपद्यते" इति तत्त्वसूत्रविरोधात् ॥ न च द्वारत्वम् ॥ स्वतंत्रकर्तृत्वोक्ति-

१ सद्रश्यै ।

दक्षेऽप्यत एवाऽसंभावित इत्यत्र द्वेषनिरूपणमनुपपन्नमित्याशंका शापेनेत्यादि-नाऽनूद्य समाधत्ते ॥ शरीरत इति ॥ कारणसंबंधाभावेऽपि प्राचीनतत्कार्याभि-मानरूपसतीशरीरस्य स्वजन्यत्वाचत्सत्तया तत्प्रयुक्तसंबंधस्याऽपि सत्वाद्द्वेषोप्य-निमित्तं निमित्तभूतसतीशरीरं मर्यादीकृत्य विशेषेण वर्धत इत्यर्थः ॥ शिवे हेतु-माह ॥ ॥ संबंधस्येति ॥ ४० ॥

त० दी०— अतिवृद्धया पतन् द्वेषं त्यक्ष्यतीति चतुर्मुखः ॥
मानवृद्धयधिकारं हि दत्तवान् धर्मनाशकम् ॥ ४१ ॥

त० प्र०— ननु महद्द्वेषिणं ब्रह्मा कथमभिषिक्तवानित्याशंक्य तथा करणे तस्याऽभिप्रायमाह ॥ अतिवृद्धयेति ॥ महद्द्वेषेण पतनस्यावश्यकत्वेऽप्यतिवृद्धौ मानस्य शीघ्रं पतन् पाते तद्द्वेषस्य हेतुत्वं ज्ञात्वा तं त्यक्ष्यतीति विचार्य मानस्य वृद्धिर्यस्माचादृशमधिकारं दत्तवानित्यर्थः ॥ अधिकारस्य महद्विषयत्वाद्धर्मनाशक-त्वम् ॥ तत्र तदवमाननसंभवाच्छिवावमानकर्तुस्तादृशाधिकारो युक्त एवेति हि-शब्दार्थः ॥ तेन शिवद्वेषजपातसहायकरणं ब्रह्मण उक्तम् ॥ अत एव दक्षप्र-तीत्या मानदानं स्वाभिप्रायस्त्वेतादृश इति सर्वतोमुखमेतत्करणमिति ज्ञापनाय चतुर्मुख इत्युक्तम् ॥ ४१ ॥

त० दी०— कर्मणा चाऽभिमानोऽभूद्वाजपेयो यतोऽधिकः ॥
बृहस्पतिसवो मुख्यः क्रममात्रमिहोच्यते ॥
सा काष्ठा ब्राह्मणस्योक्ता चितिरंगमसत्रिणाम् ॥ ४२ ॥

त० प्र०— तेनाभिमानोऽभूत् ॥ कर्मणा वाजपेयेनाप्यभूत् ब्रह्मिष्ठाभिभावनेन चेत्युक्तानुक्तसमुच्चयार्थश्चकारः ॥ तत्र हेतुः ॥ वाजपेय इति ॥ सर्वेभ्यः कर्मभ्य इति शेषः ॥ तदा बृहस्पतिसवकरणं किमर्थमित्यत आह ॥ बृहस्पतिसव इति॥ ब्राह्मणस्याऽयमेव मुख्य इत्येतत्करणार्थमेव तत्करणं "वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत" इति विधिवाक्यात् ॥ एतदेवाह ॥ क्रममात्रमिति ॥ अत्र सर्वत्र हेतुः॥ सा काष्ठेति ॥ उत्कर्षावधिरित्यर्थः ॥ अस्यैतादृशत्वेनैतत्करणेऽन्यस्य वाजपेयादेः करणासंभवेन तस्य च सर्वाधिकत्वेनोच्छित्तिर्मा भूदिति पूर्वकर्तव्यत्वेन विधिरिति भावः ॥ ननु वाजपेयेऽग्निचयनस्य छांदोग्य उक्तत्वात्कथं न तत्कृतिरित्यत आह ॥ चितिरिति ॥ अस्य सत्रित्वान्न करणापेक्षेति भावः ॥ ४२ ॥

१ तथा ।

चेत्तुल्यम् ॥ ननु स्यादेवं यदि "सुहृदः साधुकृत्याम्" इत्यादिषु पूर्वं वाक्यार्थबोधः स्यात् ॥ स एव न संभवति ॥ अमूर्तत्वेनाऽयोग्यताज्ञानस्य प्रतिबंधकत्वात् ॥ अन्यथाऽनलः शीतल इत्यत्राप्यन्वयबोधः स्यात् ॥ अतोऽन्योर्थः कल्प्यते प्रमाणवाक्यत्वादिति चेन्न अनवबोधात् ॥ तथा हि ॥ न हि पित्तदूनरसनेंद्रियस्येदं प्रथमतया सितां भक्षयतः सिता मिष्टेति वाक्येऽयोग्यताज्ञानमस्तीति तद्वाक्यं बाधितार्थं भवति ॥ न ह्यविद्यावलिप्तबुद्धीनामनुभवादिकं ब्रह्मविदनुभूतिविषयं श्रौतमर्थं बाधितुमर्हति ॥ अत एव "पुत्रादायमुपयंति" इत्युक्त्वा तदुक्तमेतत्साम्यसूचनार्थम् ॥ तेन महदनुग्रहादन्याप्रतिबध्यशुभफलप्राप्तिर्विनापि पुण्यम् ॥ द्वेषात्तादृशदुःखप्राप्तिर्विनापि पापमिति फलितम् ॥ एवमेव दक्षेऽपि ॥ प्रकरणार्थोऽप्यत एव संगच्छते ॥ भगवतैव धर्मसिद्धिरितिरूपस्तेन महद्द्वेषतदनुग्रहासहकृतयोरेव शुभाशुभप्रारब्धयोर्भोगैकनाश्यत्वमित्यलं विस्तरेण ॥ अथवा सत्या विघ्नकरणावश्यकत्वे हेतुमाह ॥ तत्प्रारब्धेति ॥ तत्राविविघ्नजनकं यत्प्रारब्धं तन्निर्मिता सतीत्यर्थः ॥ पत्यर्थमेव तथा प्रवृत्तावस्यास्तेन निवारणं कुत इत्यत आह ॥ अधिदेव इति ॥ यज्ञस्य सत्या अप्यधिदेवः शिव इत्यस्यास्तत्र गमनेऽस्या अपि नाशो यज्ञस्यापीत्युभयरक्षणार्थं निवारणमुक्तवान् ॥ न तु कृतवान् ॥ ४४ ॥

त० दी०— स्वगृहे मरणे तस्या द्वेषवृद्धिर्भवेत्परा ॥
उपेक्षिता ततश्चक्रे स्वकार्यं सा तु सर्वतः ४५ ॥

त० प्र०— तत्र हेतुः स्वगृह इति ॥ दुःखभरेण मरणमत्राऽप्यावश्यकम् ॥ परं तु तत्र मृतौ वक्ष्यमाणप्रकारेण कदाचिद्द्वेषनिवृत्तिः स्यादत्र मृतौ तु मद्द्वेषान्मत्पुत्र्यपि मद्गृहमाजिगमिषंती मारिता शिवेनेति ज्ञात्वाऽधिकमेव द्वेषं कुर्यादिति न स्थापिता ॥ तत्रापि मरणस्यावश्यकत्वान्नानुज्ञोचितेति उपेक्षितेत्यर्थः ॥ तुशब्दः शिवस्य तूष्णींभावेऽपि सती न तथेतिभिन्नप्रक्रमार्थः ॥ स्वकार्यं स्वस्यैवाऽसाधारणं कार्यम् ॥ न हि सतीशरीरनाशः शिवेन दक्षेणाऽन्येन वा कर्तुं शक्यः ॥ न च तन्नाशं विना तद्द्वेषनाशः कदाचित्पातिव्रत्यरक्षया पतिभक्त्या नंदिशापसत्यत्वप्रयोजकतया च सर्वत इत्युक्तम् ॥ जन्मांतरेऽपि तस्यैव भजनात् ॥ तद्द्वेपिजनितदेहस्याऽप्यनंगीकारादजमुखत्वप्रयोजकदक्षशिरश्छेदोपयोगित्वात् ॥ ४५ ॥

त० दी०— ध्यानात्प्रविष्टा सा पत्यौ नारदो देवगुह्यकृत् ॥
सेवकानां त्वकथनं लज्जया प्रेषणादपि ॥ ४६ ॥

---

१ तीति ।

विरोधात् ॥ अग्रे च तस्य भोगकथनाच्चेति चेत्सत्यम् ॥ नाऽत्र प्रारब्धनाश उच्यते किं तु सर्वकर्मदहनतत्त्वज्ञानाप्रतिबद्धस्याऽपि प्रारब्धजनितभोगारंभस्य महद्द्वेषेण प्रतिबंधो जात इति महद्द्वेषस्याऽधिकबलत्वमिति संप्रदायविदः ॥ वस्तुतस्तु महद्द्वेषेण तस्य शुभप्रारब्धमपि नष्टम् ॥ न च तस्या अप्रयोजकत्वम् ॥ द्वेषस्य स्वजनितत्वेन तस्मिन् फलपर्यवसायित्वकर्तृत्वादेतस्याः ॥ न च तत्त्वसूत्रविरोधस्तयोरीदृग्भिन्नतद्विषयत्वात् ॥ अत एव तादृक्प्रारब्धदक्षशरीरनाशोपि ॥ अग्रिमा संपत्तिस्तु भगवतैव दत्ता जीवनमपि ॥ अत एव भगवान् बादरायणो महता प्रबंधेन तत्त्वज्ञानिनस्तूभयकर्मनाशं प्रतिपाद्याऽऽह ॥ "अतोऽन्यापि ह्येकेषामुभयोः" इति हि। यस्मात्कारणात्पूर्वोक्तश्रुतिविलक्षणाऽन्यापि श्रुतिरस्ति ॥ अतो हेतोरेकेषां पुरुषाणामुभयोः प्रारब्धाप्रारब्धयोर्नाशो भवतीत्यर्थः ॥ श्रुतिस्तु ॥ "तस्य पुत्रा दायमुपयंति सुहृदः साधुकृत्यां द्विषंतः पापकृत्याम्" इति ॥ स्पष्टार्थेयम् ॥ न च काम्यकर्मविषयेयमिति वाच्यम् ॥ "तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात्" इतिसूत्रेण ज्ञानप्राप्त्यनंतरं पूर्वोत्तरपापसंबंधाभावमुक्त्वा "इतरस्याऽप्येवमसंश्लेषः पाते तु" इतिसूत्रेण पुण्यस्याप्यविशेषेण तथोक्तत्वात्तत्कथनेनैव काम्यस्याऽप्युक्तत्वात्पुनस्तत्कथनमनुपपन्नमेव स्यात् ॥ किंचैवं "द्विषंतः पापकृत्याम्" इतिपदं निरर्थकं स्यात् ॥ पापस्य काम्यस्याऽसंभवात् ॥ उभयशब्दस्य च व्यासजैमिनिपरत्वमसंगतम् ॥ संनिधौ जैमिनेरश्रुतत्वात् । सामान्यशब्दस्योपस्थितार्थार्थकत्वनियमात् ॥ न च पुण्यपापयोरमूर्तत्वेन यथाश्रुतार्थस्याऽसंभवाद्ब्रह्मविदि सौहार्दकरणद्वेषाकरणयोरेव श्रुतेरतात्पर्यमिति वाच्यम् ॥ एकादश्युपवासाशक्तस्य पत्नीकृतोपवासदानेन तत्पुण्यप्राप्तेः ॥ पूरोश्च ययातिजराप्राप्तेः श्रवणादत्रापि तथासंभवात् ॥ ननु तदुद्देशेन कृतकर्मणा तस्मिन्नेव पुण्यमुत्पद्यत इति चेन्न ॥ पुण्यदानवैयर्थ्यापातात् ॥ जरायामेवं वक्तुमशक्यत्वाच्च ॥ किंच ॥ तदनुद्देशेनाऽपि कृतैकादशीरात्रिजागरणपुण्यलेशदानेन प्रेतत्वमुक्तिश्रवणाच्च ॥ न चोपाख्यानानामयथार्थत्वं बाधकाभावात् ॥ ननूक्तमपूर्वत्वमिति चेत् ॥ अत्रेदं विचारणीयम् ॥ लौकिकी युक्तिरलौकिकार्थनिरूपणे बाधिका न वेति ॥ किमत्र युक्तं, नेति, कुतः, भिन्नविषयत्वात् ॥ अन्यथा स्वकृतकर्मणान्यस्मिन् फलभोगस्य युक्तिबाधितत्वेन तत्राऽपि प्रवृत्त्यनुपपत्तिरन्योद्देशेन कर्मकरणे गयाश्राद्धादिषु च वचनमेव तत्र साधकमिति

१ पुस्तकान्तरेषु किंचेतिपदं नास्ति । २ न चापि नत्रापि ।

त० प्र०— संज्ञपनेनैव तन्मारणे हेतुमाह ॥ प्राणा इति ॥ "नाऽस्य प्राणा ह्युत्क्रामंतीहैव समवनीयंते प्राणाः" "ब्रह्मैव सन् ब्रह्माप्येति" इति श्रुत्युक्तप्रकारेण मोक्षे यथा ब्रह्मविदः प्राणा ब्रह्मण्येव लीनाश्चेत्स्युस्तदा तस्यौदनत्वम् ॥ भगवद्भोजनयोग्यता भगवदंतःप्रवेशयोग्यतेति यावत् ॥ "यस्य ब्रह्म च क्षत्रं च" इतिश्रुतिरत्राऽनुसंधेया ॥ तथा दक्षप्राणा अपि यज्ञभावनया यज्ञभूततदात्मन्येव चेल्लीना भवंति तदा "यज्ञो वै विष्णुः" इतिश्रुतेर्यज्ञ एव सन् स्वाधिदेवयज्ञरूपे विष्णौ लीनः सन् पुनरुत्पत्तिशंकारहितो भवतीति हेतोस्तथेत्यर्थः ॥ ननु "नास्य प्राणाः" इत्यादिश्रुतेर्ब्रह्मविदि तथात्वं युक्तमत्र तथात्वे कोपपत्तिरित्यत आह ॥ अत्रापीति ॥ साक्षात्तादृशश्रुत्यभावेऽपि पश्वालंभने प्रकारांतरसंभवेपि यत्संज्ञपनविधिरेवोक्तस्तेन तदाधेयविशेषस्याऽऽवश्यवाच्यत्वे विश्वजिन्न्यायेन तथैवांतःश्वासतयोपरतज्ञानमार्गीयस्य ज्ञानरूपात्मनिलयं प्रसिद्धं दृष्टांतीकृत्य कर्ममार्गीयत्वेनास्य यज्ञरूपात्मनिलय एव तथेति कर्मिणामभिमतमित्यर्थः ॥ प्रसिद्धिनिरूपणार्थमेव पूर्वार्धे तदुक्तिरिति ज्ञेयम् ॥ ५० ॥

त० दी०— साक्षाद्यज्ञशिरश्छेदो न युक्तो भगवत्त्वतः ॥
यज्ञस्य यजमानत्वात्तच्छेदो योजनं तथा ॥ ५१ ॥

त० प्र०— तथापि साक्षाद्यज्ञं विहायौपचारिकं किमिति कृतवानित्यत आह ॥ ॥ साक्षादिति ॥ अत एव यथा साक्षाद्यज्ञे तथाऽनुचितत्वेन तदतिदेशवति तथाकरणमेवंसाक्षाद्यजमानशिरो योजयितुं दग्धत्वेनाशक्यत्वात् "यजमानः पशुः" इति श्रुत्या तत्त्वेनातिदिष्टपशुशिरोयोजनमित्याह ॥ योजनं तथेति ॥ ५१ ॥

त० दी०— ज्ञानेंद्रियाणां सर्वेषां स्थानं मूर्द्धा विभागशः ॥
अदग्धे पूर्ववत्तस्य दोषः संभवतीति हि ॥
राक्षसानां तु तद्भागो दक्षिणाग्नौ ततोऽजुहोत् ॥ ५२ ॥

त० प्र०— ननु तदेव कुतो न रक्षितं दग्धं वेत्याशंक्य तत्र हेतुमाह ॥ ज्ञानेंद्रियाणामिति ॥ तस्य ज्ञानेंद्रियाणामेव दुष्टत्वेन शिरसश्च तदाश्रयत्वेन तददाहे तद्योजने पुनः शिवद्वेषं कुर्यादिति तदभावाय दग्धमित्यर्थः ॥ तत्संस्कारवत्त्वेन तेषां पुनस्तथात्वं युक्तमेवेति हिशब्दार्थः ॥ दक्षिणाग्नावेव होमे हेतुमाह ॥ राक्षसानामिति ॥ "तत्पूर्वोक्तधर्मविशिष्टं शिरस्तामसत्वेन राक्षसानां भागो भवति ततो हेतोर्दक्षिणेऽग्नौ जुहोति भ्रातृव्यमेव वरुणपाशेन ग्राहयतीति" "अग्नये

त० प्र०— देहत्यागानंतरं तस्या गतिमाह ॥ ध्यानादिति ॥ ननु यज्ञादिनाशकं सतीमृतिश्रावणं नारदस्याऽयुक्तमित्यत आह ॥ नारद इति ॥ सती त्वभिमानरूपेति स्वशरीरं दग्धवती ॥ अधुना च शिवदेहे प्रविष्टा ॥ अत्राऽपि तथा कृतौ देवानां महदनिष्टं स्यादिति तस्मात्तद्दूरीकरणार्थं स्फुटमहितकरणेऽपि गुप्ततया हितं चिकीर्षुस्तथोक्तवानित्यर्थः ॥ लज्जा पराभवेन स्वजीवनेन च ॥ अपिशब्दाद्भयात् ॥ ४६ ॥

त० दी०— स्वप्रविष्टनिराकृत्यै जटामुत्कृत्य निर्ममे ॥
वीरभद्रं द्वेषयुतमभिमानं सुदुर्जयम् ॥ ४७ ॥

त० प्र०— तदा नारदविचारितं जातमित्याह ॥ स्वप्रविष्टेति ॥ अभिमानः कस्याऽप्यधो न तिष्ठतीति जटास्थ इति तस्याः कृंतनं द्वेषयुतं कार्यसहितम् ॥ अधिकारकर्मादिजनितदक्षाभिमानेनाऽस्याभिभवमाशंक्याह ॥ सुदुर्जयमिति ॥ सुदुर्जयोऽयं तु तस्यापि तथेत्युपसर्गः ॥ ४७ ॥

त० दी०— देवहीनो यतो यज्ञस्ततो नष्टोऽभिमानतः ॥[1]
तदभिव्यक्तिकर्तॄणां साधनानां तु संक्षयः ॥ ४८ ॥

त० प्र०— तद्द्वारा यज्ञनाशने शिवे दोषमाशंक्य तदभावायाऽऽह ॥ देवेति ॥ यथा शिरोहीनो देहः स्वजनितकृमिभिर्विशीर्यते तथा प्रधानरूपदेवहीनो यज्ञः स्वजनिताभिमानरूपवीरभद्रेण नष्ट इत्यर्थः ॥ तेन दक्षदोषेणैव दक्षयज्ञो नष्टो न तु शिवेनेति भावः ॥ तादृशयज्ञाभिव्यक्तिकर्तॄणां शालापात्रादीनां तथा करणं पुनस्तादृग्यज्ञानभिव्यंजनार्थम् ॥ ४८ ॥

त० दी०— प्रधानत्वाच्छिरस्तस्य छिन्नं यज्ञोऽस्य भावतः ॥
यजमानत्वमापन्नस्तेन तस्याऽपि संक्षयः ॥ ४९ ॥

त० प्र०— दक्षस्यैव शिरश्छेदे हेतुमाह ॥ प्रधानत्वादिति ॥ हेत्वंतरमाह ॥ यज्ञेति ॥ "यज्ञो वै यजमानः" इति श्रुतेः ॥ "यो यच्छ्रद्धः स एव सः" इति वाक्याच्च ॥ तस्य यज्ञविषयकरतितो यज्ञस्तत्त्वं प्राप्त इति तदच्छेदे यज्ञस्य सर्वात्मना न नाश इति तथा कृतिरित्यर्थः । फलितमाह ॥ तेनेति ॥ तस्यापि यज्ञस्याऽपीत्यर्थः ॥ ४९ ॥

त० दी०— प्राणास्तत्रैव चेल्लीना मोक्षे ब्रह्मविदो यथा ॥
तदोदनत्वमत्राऽपि तथा संज्ञपनं मतम् ॥ ५० ॥

---

१ ध्यानिमित्तम् ॥

निरूपिताः (१) *त्रिभिश्चतुर्भिस्त्रिशद्भिस्त्र्यधिकैरष्टभिस्तथा ॥ चतुर्भिश्च क्रमेणाऽत्र* तत्तात्पर्यं निरूप्यते" ॥ (२) ॥ **अपराधेपीति** ॥ अपराधेन तथा भूत्वाऽप्यन्यांतिकगमनेऽन्यः कोपमेव करोति ॥ पिता तु तथात्वेपि स्वभावादेव प्रसीदतीति हेतोस्तथेत्यर्थः ॥ चरत्वर्थः ॥ बोधनप्रयोजनमाह ॥ **बोधनं त्विति** ॥ ते तु पितृत्वेनाऽस्मत्पक्षपातं कृत्वा शिवे तदनुरूपं किंचित्करिष्यति ॥ ब्रह्मेति शिवे दोषदृष्टय एवाऽऽगतास्तथा सति नाऽनर्थनिवृत्तिरिति स्वस्मिन् शिवे च तेषामैक्यज्ञाननिमित्तं बोधनं कृतवानित्यर्थः ॥ ५५ ॥

त० दी०— निर्गतित्वव्युदासाय सख्युः स्वस्य च सर्वशः ॥
वनादिसर्वरूपाणां वर्णनं स्तवनं तथा ॥ ५६ ॥

त० प्र०— तत्र गत्वा शिवं दरिद्रं दृष्ट्वाऽस्मत्कृतहविर्भागप्रतिबंधेनाऽयमेवं जात इति गर्वेपि कृते न सम्यगिति तदैश्वर्यज्ञापनार्थं वनादिवर्णनमित्याह ॥ **निर्गतित्वेति** ॥ सख्युर्धनदस्य ॥ स्वस्य शिवस्य ॥ आदिशब्देनाऽद्रिपुरीनदीवाप्यादय उच्यंते ॥ तेषां सर्वाणि यानि रूपाणि पुष्पफलसौगंध्यखगमृगसुरस्त्रीविलासमुन्यादिचतुर्वर्गोपयोगीनि ॥ तेषां तथा स्तुतिप्रयोजनमाह **स्तवनमिति** ॥ तथा ब्रह्मत्वनिरूपणेन तन्माहात्म्यज्ञापनार्थमित्यर्थः ॥ ५६ ॥

त० दी०— ब्रह्मत्वायोपपत्तिश्च तथैव प्रार्थनं कृतम् ॥
यज्ञसिद्धिं चकारेशो न तथाऽभगवत्त्वतः ॥ ५७ ॥

त० प्र०—*एतच्चैकेनैव श्लोकेन निरूपितमित्यग्रिमाणां प्रयोजनमाह* ॥ **ब्रह्मत्वायेति** ॥ चकारात्क्रोधाभावेपि यथा सर्वकर्तृत्वेन ब्रह्मत्वं निरूपितं तथा तेनैव धर्मेणैतेष्ववयवसृष्टिमपि करोत्विति प्रार्थनमपि कृतमित्याह ॥ **तथेति** ॥ देवावयवानां भगवत्सृष्टिगतत्वेनाऽलौकिकत्वात्तथैवोचितमिति भावः ॥ **न तथेति** ॥ यथा प्रार्थनं न तथेत्यर्थः ॥ तत्र हेतुः ॥ **अभगवत्त्वत इति** ॥ पूर्णभगवत्त्वाभावादित्यर्थः॥ तथा च संहारशक्तिमात्रवत्त्वेन तमोगुणमात्राधिकृतत्वेन च तादृक्दृष्टिसामर्थ्यमिति भावः ॥ ५७ ॥

त० दी०— अन्यथा दंडहानिः स्यादन्यथा करणं स्वतः ॥
सान्निध्ये सर्वसंसिद्धिरिति सर्वः समागमः ॥ ५८ ॥

त० प्र०— तर्हि प्रार्थनया भगवद्द्वारा कुतो न कृतवानित्याशंक्य तथा करणे

---

१ थें। २ गत.।

रुद्रवते पुरोडाशमष्टाकपालं निर्वपेत् " इत्यादिभिश्च श्रुतिभिर्दक्षिणाग्नावेव क्रूरहोमस्योक्तत्वात्स क्रूर इति तस्मिन्नेवाऽजुहोदित्यर्थः ॥ ५२ ॥

**त० दी०— पापसाम्येन देहेषु च्छेदस्तेन पशोर्यथा ॥**
**तथैव कृतवाँश्छेदं नाऽन्यथेत्यस्य संभवः ॥ ५३ ॥**

त० प्र०— ननु सूचनादिदोषमात्रेण भगादीनां नेत्राद्युत्पाटनं न युक्तमित्यत आह ॥ पापसाम्येनेति ॥ "कर्तुः शास्तुरनुज्ञातुस्तुल्यं यत्प्रेत्य तत्फलम्" इति वाक्यादनुज्ञातॄणामेषां नेत्रादिसूचनादीनां दक्षपापसाम्येन ऋषीणां देहेषु तथेत्यर्थः ॥ तर्हि यथैषां नान्येंद्रिययोजनं तथा दक्षेपि युक्तमित्यत आह ॥ पशोरित्यादि ॥ अन्यथा अस्त्रशस्त्रादिभिर्न कृतवानिति हेतोर्दक्षस्य पुनर्जीवनमित्यर्थः॥ अयं भावः॥ यथा क्रोधभरयुक्तद्वेषेण स्वसामर्थ्यसचिवशस्त्रादिभिश्च तेषु च्छेदस्तथैव चेदस्मिन्नपि स्यात्तथैव स्यात् ॥ किं तु शस्त्रादिवैफल्यजविस्मयध्यानादिभिश्च रोषभरस्य क्षीणत्वेन स्वाम्याज्ञया च वधस्याऽऽवश्यकत्वेन तत्साधनं तत्कर्मानुरूपमेव ज्ञात्वा तथा कृतवानिति तत्संज्ञप्तपशूनां देहांतरप्राप्तिवदस्यापि तथात्वमिति नंदिशापसत्यत्वार्थमीश्वरेच्छयैव तद्वैफल्यम् ॥ ननु वैधहिंसाया धर्मत्वेन कथं तत्प्रकारस्यैतद्वधहेतुत्वं पापवदित्यत उक्तं तेनेति ॥ पूर्वोक्तहेतुना पापसाम्येन ॥ अत्र लौकिकपशुहिंसापापसाम्येनेत्यर्थः ॥ अधिदेवरहितत्वेन तत्त्वेन तन्मखस्य वैदिकत्वाभावाल्लौकिकत्वेऽपि तत्सारूप्येण मखपदप्रयोग इति भावः ॥ ५३ ॥

**त० दी०— अस्थित्यै कस्यचित्तत्र तथाऽनुपकृतिः फलम् ॥**
**मंडपज्वालनस्येति गमनं कृतकृत्यता ॥ ५४ ॥**

त० प्र०— अस्थित्या इति ॥ ज्वलनमिति शेषः ॥ मुख्यं फलमाह ॥ तथेति ॥ तत्रच्छायार्थमपि कस्याप्युपवेशने तदुपकृतिजनितधर्मोऽस्मिन्नागच्छेत्सोपि मा भूदिति मंडपज्वलनं कृतमित्यर्थः ॥ फलितमाह ॥ कृतकृत्यतेति ॥ नाऽतः परमत्र कार्यमस्तीति हेतोर्गमनमित्यर्थः ॥ ५४ ॥

**त० दी०— अपराधेऽपि जनकः प्रसीदति न चेतरः ॥**
**इति ब्रह्मसभां जग्मुर्बोधनं त्वैक्यदर्शने ॥ ५५ ॥**

त० प्र०— अथ षष्ठाध्यायार्थं विचारयन् ब्रह्मण एवांतिकगमने तेषां हेतुमाह॥ "गमनं बोधनं स्थानवर्णनं स्तवनं तथा ॥ प्रार्थनं चेति पंचार्थाः क्रमेणैव

१ त्येन । २ पापत्वात् । ३ लोके ॥ लौकिक ।

त० दी०— तस्मादशक्यसंप्राप्तौ वैदिकत्वप्रसिद्धये ॥
पुरोडाशं निरवपन् वैष्णवं सत्त्वमात्रतः ॥ ६१ ॥

त० प्र०— यस्मात्साधनोच्छित्तिस्तस्मादशक्यसंप्राप्तौ सत्यां विष्णुरेव पालकत्वेन यज्ञं पालयिष्यतीति विष्णुभजनेऽवश्यकर्तव्ये स्तोत्रादिना करणे चाऽवैदिकत्वेन यागामध्यपातो भविष्यतीति स्वकृतस्य वैदिकत्वसिध्यर्थं वैष्णवं पुरोडाशं निरवपन्निति संबंधः ॥ नन्वस्य यागस्य प्रधानांगत्वेनैव करणाद्यज्ञस्य सर्वात्मना भावे कुत्रांगत्वमित्यत आह ॥ सत्त्वमात्रत इति ॥ पूर्वोक्तत्रितयरूपतिरोभावेऽपि यस्यैतत्त्रितयं रूपं तस्य यज्ञस्वरूपस्वधर्मिमात्रस्य सत्तारूपेण सत्त्वात्तन्मात्राद्धेतोस्तत्करणमित्यर्थः ॥ ६१ ॥

त० दी०— विशिष्टं तत्तिरोभूतं विष्णुः सर्वोपपत्तये ॥
ध्यातः सत्त्वं तिरोधाय तथा प्रादुरभूद्धरिः ॥ ६२ ॥

त० प्र०— तर्हि व्यर्थमित्यत आह ॥ विशिष्टमिति ॥ तद्यज्ञस्वरूपं देशकालादिविशिष्टं तिरोभूतमित्यर्थः ॥ तादृशस्यैव कार्यसाधकत्वात्तदभिव्यक्त्यर्थं करणमिति भावः ॥ नन्वष्टभुजप्रादुर्भावस्य किं प्रयोजनमित्यत आह ॥ सर्वोपपत्तये ध्यात इति ॥ यज्ञस्वरूपसंपत्तिदोषाभावपालनाद्युपपत्तय इत्यर्थः ॥ विष्णुर्हि सतो यज्ञादेः पालकः ॥ अत्र यज्ञस्वरूपसत्तामपि विधाय स पालनीय इति द्विगुणक्रियाशक्तिप्रादुर्भाव इति भावः ॥ एतेन कर्मणैव फलमिति निरस्तम् ॥ प्रादुर्भावप्रकारमाह ॥ सत्त्वमिति ॥ शुद्धसत्त्वं तिरोंतरायरूपमधिष्ठानरूपमिति यावत् ॥ तत्कृत्वा तत्र प्रादुर्भूत इत्यर्थः ॥ ६२ ॥

त० दी०— प्रभुरूपमिदं प्रोक्तं सर्वमेतेन सिध्यति ॥
सर्वोत्तमत्वबोधाय वर्णनं स्तोत्रमेव च ॥ ६३ ॥

त० प्र०— अवतारनामाह ॥ प्रभुरूपमिति ॥ प्रोक्तमिति प्रमाणसूचनम् ॥ शुद्धसत्त्वावतारगणनायां "कल्किर्धन्वंतरिः प्रभुः" इत्युक्तत्वात् ॥ कार्यमाह सर्वमिति ॥ सर्वं पूर्वोक्तम् ॥ ननु यज्ञसिद्धिमात्रस्योद्देश्यत्वात्तस्य च स्वरूपमात्रेणैव संभवाद्विदोषवर्णनस्तोत्रयोः किं प्रयोजनमित्यत आह ॥ सर्वेति ॥ एवकारेण स्तोत्रस्याऽऽवश्यकतोक्ता ॥ चकारात्प्रणामादिः ॥ अत एव सर्वैर्न यज्ञसिद्धिरिति भावः ॥६३॥

त० दी०— दोषहानिः पृथक् वाच्या स्तोत्रभेदास्ततः स्मृताः ॥

१ ता।

बाधकमाह ॥ अन्यथेति ॥ प्रार्थनानुरूपकरणे दंडः कृतोप्यकृत एव स्यादित्यर्थः॥ किंच ॥ अन्येन तथा करणे स्वस्य यथापूर्वं समाधानमुचितं न तु स्वकृत इत्याशयवानाह ॥ अन्यथा करणमिति ॥ अथवा दक्षादिमूर्धादिच्छेदे स्वकृतस्य देवैः सह हविर्भागप्राप्तिनिषेधस्यैव हेतुत्वात्स्वत एव दक्षादित एवाऽन्यथाकरणमित्यर्थः ॥ तथा च तस्य यतो न यथापूर्वविधानं ततोऽत्रापि तथा ॥ यथोच्छिष्टदानं तथान्योच्छिष्टैरिंद्रियैरेव तत्कार्यदानमपीति भावः ॥ सान्निध्य इति ॥ वचनेनैव सर्वकार्यसिद्धावपि यज्ञसिद्ध्या फलोपधानलक्षणा सम्यक्सिद्धिः सांनिध्ये शिवादीनां भवेदिति सर्वैः शिवादिभिः सह देवजयने समागम इत्यर्थः ॥ ५८ ॥

त० दी०— यजमानः पशुश्चैव तौ पशुर्देवपोषणात् ॥
सवनीयपशुर्मुख्यः शिष्टं तस्य शिरः परम् ॥
अपेक्षितं तदेवाऽत्र तेन संधानमीरितम् ॥ ५९ ॥

त० प्र०— दक्षस्याजमुखकरणं शिवस्याऽयुक्तमित्याशंक्य तस्य तात्पर्यमाह ॥ यजमान इति ॥ एवकारेण लौकिकपशुव्यावृत्तिः ॥ देवपोषणस्य हेतोरविशेषात्तावुभावपि पशुरूपावित्यर्थः ॥ एकवचनं त्वेकस्यैवोभयत्र प्रयोजकत्वादुक्तम्॥ उपनिषत्सु "यथा पशुः परपोषक एवं यजमानोऽपि पश्वादिद्वारा देवपोषकः" इति 'यजमानः पशुः' इत्युक्तत्वादिति भावः॥ अत एव नाऽयुक्तमिति भावः॥ तत्र कस्य पशोः शिरो योजितव्यमित्याकांक्षायां देवपोषणहेतुत्वेन सवनीयपशोरेव मुख्यत्वेन यजमानशिरस्त्वयोग्यत्वात्तदवयवानां च पूर्वमेव हुतत्वेन शिरोमात्रावशेषादत्र च तस्यैवापेक्षितत्वात्तस्यैव योजनमुक्तं मूल इत्याह ॥ सवनीयेति श्लोकेन ॥ ५९ ॥

त० दी०— यज्ञस्तिरोहितः सर्वो विघ्नाद्दोषात्तथा मृतेः ॥
पुनः कृतिरशक्या हि कालादेर्विनिवर्तितः ॥ ६० ॥

त० प्र०— ननु मध्ये वैष्णवयागस्य किं प्रयोजनमित्यत आह ॥ यज्ञ इति ॥ सर्वे आधिभौतिक आध्यात्मिक आधिदैविकश्च ॥ तत्र क्रमेण हेतुमाह ॥ ॥ विघ्नादित्यादिना ॥ अग्निशमनादिरूपविघ्नादाद्यः ॥ रुद्रगणस्पर्शदोषाद्द्वितीयः ॥ यजमानमृतेस्तृतीयः॥ पुनस्तादृक्क्रियया यज्ञप्रादुर्भावककरणे बाधकमाह ॥ कालादेरिति ॥ कालः प्रातःसवनादिः ॥ आदिशब्देन प्राग्वंशादिदेशप्रोक्षितद्रव्यादय उच्यंते ॥ ६० ॥

---

१ करणे ।

तिकथनप्रस्तावे सत्याः पुत्रालाभहेतुकथायाः प्रस्तुतत्वात्तन्मध्ये दक्षकथयांतरितत्वात्पूर्वकथासिद्ध्यर्थं पुनः सतीकथेत्यर्थः ॥ ६५ ॥

त० दी०— तदर्थं व्यक्तदेहत्वात्तामसत्वात्पुनस्तथा ॥
प्रक्रियायाः समाप्तत्वात्कीर्तनादिफलाभिधा ॥ ६६ ॥

त० प्र०—ननु पुनः शिवपत्नीत्वे गिरिदुहितृत्वे च को हेतुरित्यत आह ॥ तदर्थमिति ॥ शिवार्थं तथात्वात् ॥ "यो यो यां यां तनूं भक्तः" इतिन्यायेन पुनस्तत्पत्नीत्वमित्यर्थः ॥ तामसत्वादिति हेत्वन्तरम् ॥ तेनाद्रावुत्पत्तावपि हेतुरुक्त इति ज्ञेयम् ॥ प्रकरणसमाप्तिज्ञापिका फलश्रुतिरित्याह ॥ प्रक्रियाया इति ॥ ६६ ॥

त० दी०— अतः पंचभिरध्यायैरर्थप्रकरणं मतम् ॥
बालस्यापि हरौ प्रीते सिध्येदर्थ इति ध्रुवः ॥ ६७ ॥

त० प्र०— अतः परं पंचभिरध्यायैरर्थप्रकरणमुच्यत इत्याह ॥ अत इति ॥ केचित्तु चतुर्भिरध्यायैर्बालप्रकरणमित्याहुस्तत्पूर्वोक्तसोपपत्तिकदूषणेन नाऽस्मत्संमतं किं त्वेतदितिज्ञापनाय मतमित्युक्तम् ॥ नन्वन्यथा बालं कथं वदेद्भगवत्संपादितार्थानां महतां सत्त्वादित्यत आह ॥ बालस्येति ॥ अपिरत्र संभावनायाम् ॥ न हि पंचवार्षिकेण तादृग्रूपोऽर्थो वा साधयितुं शक्यः ॥ हरिप्रीतेरेवार्थसाधनत्वेनोक्त्या तत्प्रयोजकतपआदिष्वपि तदेव साधनमिति सूचितम् ॥ तथा चेति ज्ञापनाय ध्रुव उक्त इति शेषः ॥ ६७ ॥

त० दी०— अर्थस्तु द्विविधस्तस्य ह्युभयोर्विषमत्वतः ॥
मातापित्रोस्ततो राज्यं ध्रुवस्थानं च कामितम् ॥
न्यायेनैकस्य सिद्धत्वान्नारदे न्यस्य संस्तुतिः ॥ ६८ ॥

त० प्र०— तर्ह्यर्थद्वयसाधनं व्यर्थमेकेनैव चरितार्थत्वादित्यत आह ॥ अर्थस्त्विति ॥ "यदीच्छसेऽध्यासनमुत्तमो यथा" इत्यारभ्य "भौमं सुखं दिव्यमथाऽपवर्ग्यम्" इत्यंतेन मातृवाक्येनैहिकस्य पारलौकिकस्य चार्थस्य फलत्वेन श्रुतत्वात्तस्य ध्रुवस्य संबंधी कामनाविषयो द्विविधोऽयं इत्यर्थः ॥ तुशब्दः पूर्वपक्षव्यवच्छेदकः ॥ तेनोभयसाधनमिति भावः ॥ नन्वश्वमेधचित्रायागादिभिरिंद्रपदप्राप्त्यादिवत्तपसैव तदुभयसंभवे पित्रादित एव चैहिकसंभवेन भगवतैव कुतस्तत्कारणमित्याशंक्य तत्र बाधकमाह ॥ उभयोरिति ॥ ऐहिकपारलौकिकयोरेकदैकस्मिन्

१ वैदिक।

एकोनविंशतिर्भेदाः कृष्णावतरणात्तथा ॥
मुख्यं धर्मविरुद्धं च तत्प्रतिप्रसवं विना ॥ ६४ ॥

त० प्र०— ननु प्रधानमुख्यतयैकमेवस्तोत्रं सर्वेषामुचितं तत्कथं प्रत्येकं पृथक्स्तोत्रकरणमित्यत आह ॥ दोषहानिरिति ॥ स्तोत्रं हि स्वस्वापराधनिवृत्त्यर्थं स च प्रत्येकं भिन्न इति तन्निवृत्तिरपि तथैवेति स्तोत्रभेदोक्तिरित्यर्थः ॥ तत्र कियंतो भेदा इत्याकांक्षायां भ्रमाभावायाऽऽह ॥ एकोनविंशतिरिति ॥ दक्षादि-ब्राह्मणांतैरुक्तास्तावंतः प्रकारा इत्यर्थः ॥ ननु यथा यज्ञदोषनिवृत्त्यर्थं वैदिकमेव कर्म कृतं तथा स्वस्वदोषनिवृत्त्यर्थमपि तथैवोचितं तत्संबंधित्वात्सर्वेषामित्यत आह ॥ कृष्णेति ॥ भगवद्प्राप्तौ हीतरसाधनकरणं न तु प्राप्तावपि यतोऽयं कृष्णः सदानंदरूपः ॥ अतो यथाकथंचित्संबंधेनैव सत्त्वेन दोषनिवर्तकस्यानंदत्वेन च धर्मादिगुणसंपादकस्याऽऽवतरणात्सेवकत्वेन च सर्वेषां स्वस्वदैन्यख्यापनेनैव दोष-निराकरणं तदपेक्षया मुख्यमित्यर्थः ॥ स्तोत्रकरणे तूपपत्तिमुक्त्वा कर्मकरणे बाध-कमाह ॥ मुख्यं धर्मविरुद्धमिति ॥ यथा मुख्ययागनाशे "वैष्णवं त्रिकपालं निर्वपेत्"इति प्रतिप्रसवो विष्णुयागस्य तथैतेषां दोषनाशहेतुः कर्मणः प्रतिप्रसवा-भावात्तदर्थं तत्करणं धर्ममार्गविरुद्धमित्यर्थः ॥ चकाराद्भगवत्प्रादुर्भावानंतरं तत्क-रणं भगवन्मार्गविरुद्धमपि ॥ ६४ ॥

त० दी०— धर्मस्तस्याऽतिसंसिद्धो बोधश्चाऽपि दृढीकृतः ॥
वराद्धर्मातिसंवृद्धिः कथासिध्यै सतीकथा ॥ ६५ ॥

त० प्र०— प्रकरणार्थमुपसंहरति ॥ धर्म इति ॥ कृष्णावतरणादेव हेतोर्द-क्षस्य धर्मः सिद्ध इत्यर्थः ॥ भगवत्कृतत्वमतिशयः ॥ कालाद्यत्ययेपि तत्तद्वृ-त्तस्य तस्य सिद्धेरायासाभावाच्च सम्यक्त्वम् ॥ भगवद्वाक्यानां तात्पर्यमाह ॥ बोध इति ॥ ब्रह्मविष्णुरुद्रैक्यैक्यदर्शनरूपो बोधः पूर्वसिद्ध एव भगवता दृढी-कृत इत्यर्थः॥ तेन नाऽन्यथासिद्धिरिति भावः ॥ "यथा शिवमयो विष्णुरेवं विष्णु-मयः शिवः" इत्यादिवाक्यैस्तद्बोधस्य धर्मांगत्वेन तद्दृढीकरणेनाऽपि धर्म एव दृढी-कृत इत्यपेरर्थः ॥ अनुक्तसर्वसमुच्चयार्थश्च ॥ ननु भगवतैव सर्वसिद्धौ देववरस्य किं प्रयोजनमित्यत आह ॥ वरादिति ॥ नंदिशापेन सहजधर्मस्याऽग्रे संभवेन वराद्धर्मस्य शापातिक्रमेण सांगस्य वृद्धिर्भवतीत्यर्थः ॥ कथेति ॥ प्रसूतिकन्याप्रसू-

१ त्य। २ धर्म।

त्वयमिति ज्ञापयितुमधर्मैकथेत्याह ॥ प्रतिपक्ष इति ॥ तर्हि धर्मप्रकरण एवेदं वक्तुमुचितमित्यत आह ॥ अर्थस्येति ॥ ७१ ॥

त० दी०— कृष्णप्रसादादर्थत्वं तेनाऽर्थस्याऽत्र वर्णनम् ॥
अधर्मेपि फलं तेन निवृत्तावुपयोगतः ॥ ७२ ॥

त० प्र०— नन्वनर्थहेतुत्वे कथमर्थत्वेन निरूपणमस्मिन् प्रकरण इत्यत आह ॥ कृष्णप्रसादादिति ॥ भगवत्प्रसादप्राप्तार्थस्यार्थत्वं तदितरस्याऽनर्थत्वमिति व्यवस्थेति भावः ॥ तत्र निदर्शनमाह ॥ अधर्मेपीति ॥ ज्येष्ठे सति यवीयसो राज्यकरणमधर्मस्तस्मिन्नपि सत्ये तादृशं फलं सिद्धं तेन भगवत्प्रसादेनेत्यर्थः ॥ अनर्थहेतावप्यर्थसाधकत्वं नाऽन्यस्येति भावः ॥ प्रसादात्प्राप्तार्थस्यानर्थत्वाभाव उपपत्त्यंतरमाह ॥ निवृत्ताविति ॥ अनर्थरूपसंसारप्रवृत्तिहेतुत्वेन ह्यर्थस्यानर्थत्वं न तु स्वतः प्रसादकृतस्य तद्विपरीतत्वेन वैराग्यहेतुत्वादर्थत्वमेवेत्यर्थः ॥ ७२ ॥

त० दी०— प्रियव्रतस्तु ज्येष्ठोऽत्र स्थाने तस्य प्रयोजनम् ॥
प्रक्रिया नास्तिकस्याऽपि ह्यष्टमे त्वस्य संभवः ॥
ध्रुवादयस्त्वपेक्ष्यंते तेनोत्तानपदन्वयः ॥ ७३ ॥

त० प्र०— ननु ज्येष्ठानुक्रमेणैव कथनमुचितम् ॥ तत्कथं पूर्वं कनीयस इत्याशंक्याऽत्र हि सर्गादिलीलाः क्रमेण वाच्या न तु मनुपुत्रादिराज्यम् ॥ तथा च यस्यां लीलायां यस्योपयोगस्तस्यां स निरूप्यत इति नोक्तदोष इत्याह ॥ प्रियव्रतस्त्विति ॥ अत्र मनुवंशे स्थाने अग्रिमलीलायां तस्य प्रयोजनमस्तीति तत्रैव स निरूपणीयः ॥ यथैतत्तथा वक्ष्यते तत्रैव ॥ अत एवाऽत्र कस्यापि मन्वादेः प्रक्रियाक्रमेण निरूपणं मुख्यतया नास्ति ॥ तत्र हेतुः ॥ अष्टमे त्विति ॥ "मन्वंतरं मनुर्देवा मनुपुत्राः सुरेश्वरः ॥ ऋषयोंशावतारश्च हरेः षड्विधमुच्यते" इति वाक्यादेतेषां मन्वंतररूपत्वादष्टमे स्कंधेऽस्य मन्वादेः संभवो वक्ष्यत इत्यर्थः ॥ अन्यत्र यथाप्रयोजनं निरूपणान्न दोष इति भावः ॥ तर्ह्युत्तानपादन्वये किं प्रयोजनं तत्राह ॥ ध्रुवादय इति ॥ भगवतः पुरुषार्थचतुष्टयसर्गरूपलीलायां यस्य योऽर्थः साधितस्तस्यापि निरूपणस्याऽऽवश्यकत्वादर्थादिपुरुषार्थानां ध्रुवपृथुप्रचेतोभ्यः प्रत्येकं साधितत्वात्तेषां चोत्तानपदन्वयस्थत्वात्तन्निरूपणमित्यर्थः ॥ ७३ ॥

त० दी०— अभिमानेन सुखदः पूर्वभागोऽपि यस्य हि ॥

विरुद्धत्वाच्चतपसा तच्छक्यम् ॥ मातापित्रोरस्मिन्विषमत्वान्न ततोपि राज्यम् ॥ अतस्ततो भगवत एव हेतोर्मातापित्रो राज्यं निश्चलस्थानं चेत्यर्थः ॥ तस्येत्युभयत्र संबध्यते ॥ तेनोपनयनादिसंस्काराभावेन तपस्यनधिकाराच्चस्य ध्रुवस्याऽपि विषमत्वादित्यर्थः ॥ एतदेव हिशब्देनाऽऽह ॥ अत एव चकारादधिकारादिरपि ॥ कामितपदेनाऽवज्ञातृतत्प्रयोजकभ्रातृनाशोपि गृह्यते निर्गमकाले तथात्वात् ॥ अन्यथा भगवान्न तद्वदेदिति भावः ॥ ननु द्वयोरर्थत्वं न संगतं ध्रुवेण नारदे साधनप्रार्थनदशायां "पदं त्रिभुवनोत्कृष्टम्" इत्यादिनैकस्यैव स्तुतत्वादित्यत आह ॥ न्यायेनेति ॥ एकस्य पितृराज्यस्य स्वस्य ज्येष्ठपुत्रत्वेन न्यायत एव सिद्धत्वान्न विशेषसाधनापेक्षया भगवान् दास्यति किं तु प्रतिबंधनिरसनेनैवेति न प्रार्थना ॥ अन्यस्य ध्रुवस्थानस्य प्रमाणांतरेणाऽसिद्धत्वाच्चथेत्यर्थः ॥ अथवा सत्रे कृतनारदस्तुतौ तत्पदस्यैव कथने हेतुरुक्तः ॥ ६८ ॥

त० दी०— साधनेन च साध्येन राज्ये दोषेण[1] हानतः ॥
फलेन च द्वितीये तु पंचाध्यायाः प्रवर्तिताः ॥ ६९ ॥

त० प्र०— एवं प्रकरणार्थमुपपाद्याऽध्यायार्थानाह ॥ साधनेनेत्यादि ॥ साधनं प्रथमाध्यायार्थः ॥ चकारात्साधनसाधनमवज्ञादिः ॥ साध्यं द्वितीयार्थो भगवत्प्रादुर्भावादिराज्यप्राप्तिरूपः ॥ राज्ये क्रोधादिदोषनिरूपणं तृतीयार्थोऽग्रिमफलप्रयोजकः॥ उपदेशेन दोषत्यागश्चतुर्थार्थः ॥ फलनिरूपणं पंचमार्थः ॥ चकारान्नारदादिकृतस्तुतिरूपा कीर्तिः ॥ एवं द्वितीयेऽर्थप्रकरणे तथेत्यर्थः ॥ ६९ ॥

त० दी०— धर्मस्याऽनतियुक्तत्वाद्विवेकी तत्त्यजेद्ध्रुवम् ॥
सनकादिकथा तस्माद्विसर्गे पुनरुच्यते ॥ ७० ॥

त० प्र०— अतः परं प्रथमाध्यायार्थं विचारयन् सर्गलीलायामेव मुक्तजीवसृष्टौ सनकादीनां निरूपितत्वात्पुनरत्रैकेन श्लोकेन तद्व्यर्थमित्याशंक्य तत्प्रयोजनमाह ॥ धर्मस्येति ॥ मर्यादायां विहितत्वेन कर्तुं युक्तत्वेऽपि पुष्टिरूपपुरुषार्थलीलायामप्रयोजकत्वेनाऽनतियुक्तत्वाद्युक्तविवेकवानवश्यं तं त्यजेदिति ज्ञापनार्थं तत्कथेत्यर्थः॥७०॥

त० दी०— प्रतिपक्षो ह्यधर्मस्तु धर्मस्येति ततः कथा ॥
अर्थस्याऽनर्थहेतुत्वात्तत्संबंधेन वर्ण्यते ॥ ७१ ॥

त० प्र०— विहितत्यागे प्रत्यवायशंकायां नाऽयं धर्मप्रतिपक्षो मार्गः ॥ किं

[1] राज्यदोषेण ।

त० प्र०— ननु भजनार्थं प्रवृत्ते ध्रुवे नारदस्य निवारणमयुक्तमित्याशंक्य तत्र हेतुमाह ॥ सकामत्वादिति ॥ निष्कामभजने तु न विद्याद्यपेक्षा ध्रुवस्य च सकामत्वात्तादृशफलकामाधिकारिकतद्विधिश्रवणाभावेन तत्प्रकारस्य चाऽज्ञानादयथाकरणेन बालत्वाच्च मरणमेव स्यादिति ज्ञात्वाऽऽगत्य नारदः कामनिवारको जात इत्यर्थः॥ ननु किंचित्कालं कृत्वा फलमप्राप्य क्लेशेन च स्वयमेव त्यक्ष्यतीति व्यर्थमिदमित्यत उक्तं विश्वासादिति ॥ भजनेनाऽवश्यं फलमिति जनन्युक्तार्थे विश्वासादित्यर्थः ॥ अतो न त्याग इति भावः ॥ ७७ ॥ ७८ ॥

त० दी०— साधनं तु तदेवाऽत्र काममात्रं निवार्यते ॥
प्रतिबंधोऽत एवाऽऽसीत्सामग्रीसाधनेऽपि हि ॥ ७९ ॥

त० प्र०— तर्हि साधनांतरं कुतो नोपदिष्टमित्यत आह ॥ साधनं त्विति ॥ "सर्वासामपि सिद्धीनाम्" इतिवाक्यान्नान्यदित्यर्थः ॥ ध्यानादिकथनमपि कामवारणार्थमेवेत्याह ॥ काममात्रमिति ॥ "एवं भगवतो रूपम्" इतिवाक्येन "विरक्तश्चेंद्रियरतौ" इत्यनेन ध्यानस्य पूजादिसाधनानां चोपयोगस्य तेनैवोक्तत्वादिति भावः ॥ ननु कोऽयं निर्बंधोऽस्य कामवारण इत्याशंक्याऽऽह ॥ प्रतिबंध इति ॥ सकामत्वादेव हेतोर्नारदेन भजनसामग्र्याः साधनेपि नारदागमनरूपः शीघ्रं भगवत्प्राप्तौ प्रतिबंध आसीदित्यर्थः ॥ अयं भावः ॥ स तदा यादृग्दैन्यभावेन चलितो यदि नारदो नाऽऽगच्छेत्तदा तादृग्भावेन बालत्वेन शुद्धभावेन च संतुष्टः स्वयमेव भगवान् कियद्दूरे प्रकटो भवेत्तन्मिलने च प्रकारादिज्ञाने साधनबाह्येन तादृग्दैन्यापचयान्नारदे तथात्वमिति ॥ अत एव नारदः सकामत्वेनाऽधुना विघ्नोऽभूदग्रेपि मा भवत्विति तथोक्तवान् ॥ अत एव निर्बंधं दृष्ट्वा निराकृतदैन्यं सततसन्निहितहरिं[1] च देशमुक्तवान् विघ्नाभावायेति ॥ ७९ ॥

त० दी०— चतुष्टयत्वसिध्यर्थमर्थानां प्रेरणाद्धरेः ॥
नोपदेशः फलायाऽऽसीदत्यंताभिनिवेशतः ॥ ८० ॥

त० प्र०— तर्हि नारदस्य कथमागमनमित्यत आह ॥ प्रेरणादिति ॥ ननु तदपि कुतस्तत्राह ॥ चतुष्टयत्वेति ॥ यदि पूर्वोक्तरीतिः स्यात्तत्रैवाऽस्य लयः स्यात् तथा चार्थासिद्ध्या पुरुषार्थानां त्रितयत्वमेव स्यान्न चतुष्टयत्वमतस्तेषां तथात्वसिध्यर्थं तथेत्यर्थः ॥ अस्यैव विसर्गलीलायामेवांगीकारादिति भावः । ननु

१ सन्निहितं हरिम् ।

अविद्यमानपूर्वः स्यादर्थः सोऽत्र निरूप्यते ॥
विद्यमाने तु विषये कामः सोऽग्रे विविच्यते ॥ ७४ ॥

त० प्र०— ननु राज्यादेरितरसमानत्वाद्भगवत्कृतत्वेन को विशेषोऽस्यार्थ इत्याकांक्षायां तदर्थरूपमाह ॥ अभिमानेनेति ॥ यस्याऽर्थस्य पूर्वभागोपि साधनकालेपि सुखदो भगवदाविर्भावात्तत्राऽप्यनर्थसाधनेनाऽभिमानेन साधितस्तादृशो योऽर्थः सोऽत्र प्रकरणे निरूप्यत इत्यर्थः ॥ न हि हरिकृतिं विनैवं संभवतीति भावः ॥ ननु पृथोरप्येवमेवेष्टसिद्धेः को भेद इत्यत आह ॥ अविद्यमानेति ॥ न विद्यमानः पूर्वः स्वसजातीयो यस्य सोऽर्थः स्यादित्यर्थः ॥ न हि ध्रुवस्थानं पूर्वं केनचित्प्राप्तमनेन ज्ञातं वा ॥ अतस्तथात्वं, विद्यमाने विषये यत्र सिद्धिः स काम इत्याह ॥ विद्यमानेति ॥ अयमेवोभयोर्भेद इति भावः ॥ भूमौ पूर्वमेव सिद्धानां दोहादिति ॥ स यथा तथाऽग्रे कामप्रकरण एवोच्यत इत्याह ॥ सोऽग्र इति ॥७४॥

त० दी०— धर्मार्थमवतीर्णोऽपि जड एव स्त्रिया भवेत् ॥
इत्यारुरुक्षोः पुत्रस्य नाऽभिनंदनमीरितम् ॥ ७५ ॥

त० प्र०— नन्वस्य मनुपुत्रत्वेन "मन्वंतराणि सद्धर्मः" इतिवाक्यात्तद्रक्षार्थमेवाऽवतारात्कथं बालावमाननम् ॥ "बालाश्च कुलवृद्धाश्च निर्दहंत्यवमानिताः" इति वाक्यादित्यत आह ॥ धर्मार्थमिति ॥ प्रकरणादावेवैतन्निरूपणेन पूर्वोक्तं निवृत्त्युपयोगित्वं समर्थितम् ॥ ७५ ॥

त० दी०— नाशकारणमस्यास्तु सापेक्षकथनं हरेः ॥
अन्यथा दूषणं नाऽस्ति नच मृत्युर्ध्रुवेष्टदः ॥ ७६ ॥

त० प्र०— ननु भजनोपदेशकर्त्र्याः सुरुच्येः कथं नाश इत्यत आह ॥ नाशकारणमिति ॥ "तपसाऽऽराध्य पुरुषं तस्यैवाऽनुग्रहेण मे ॥ गर्भे त्वं साधयात्मानं यदीच्छसि नृपासनम्" इति हरेरपि स्वगर्भसापेक्षत्वकथनमस्यास्तथेत्यर्थः ॥७६॥

त० दी०— रोदनं च मृतिश्रुत्या दुःखापारोऽत एव हि ॥
साधनं तु तदेवाऽत्र मरणं तु न मन्यते ॥
असाध्यमपि संसिद्धं ब्रह्मादीनां यतो हरेः ॥ ७७ ॥
सकामत्वाद्धिद्वयभावे प्रकाराज्ञानतो मृतिः ॥
विश्वासाद्भवतीत्येतन्नारदः कामवारकः ॥ ७८ ॥

१ सापेक्ष्य । सापेक्षा ।

त० दी०— भक्तिभावेन संहृष्टः प्रादुर्भूतो भविष्यति ॥
कृपया सर्वरूपेण हरिरित्यक्षरं तथा ॥
निरुच्छ्वासेन पीडाऽभूदतः सर्वशरीरिणाम् ॥ ८४ ॥

त० प्र०— नन्वेवं प्रादुर्भावेऽक्षरस्य हेतुस्तत्राऽऽह ॥ भक्तिभावेनेति ॥ प्रादुर्भावे हेतुरयम् ॥ सर्वरूपेण प्रादुर्भावे हेतुः कृपैव ॥ तस्य सकामत्वादतिकृपया सर्वमस्य संपद्यतामिति सर्वरूपेण हरिः प्रादुर्भूतो भविष्यतीति हेतोस्तथा पूर्वोक्तरूपेणाऽक्षरमपि प्रादुर्भूतमित्यर्थः ॥ अत एव सर्वोपरिभागस्थलोकप्राप्तिरिति भावः ॥ निरुच्छ्वासेति ॥ सर्वप्राणरूपमुख्यप्राणस्य यतः कारणादंतर्निरोधोत एव ध्रुवस्योच्छ्वासाभावेन सर्वेषां पीडाऽभूदित्यर्थः ॥ ८४ ॥

त० दी०— अद्याऽपि भगवान्नाऽभूदिति संप्रार्थ्यते सुरैः ॥
जाते गत्यादिशक्तिश्च नश्येदिति तथा वचः ॥ ८५ ॥

त० प्र०— ननु प्राणऽनिरोधे भगवत्प्रार्थनं कथं जातमित्यत आह॥अद्यापीति॥ उक्तरूपाक्षररूपचरणप्रादुर्भावेपि सर्वात्मरूपो भगवान् प्रादुर्भूतो नाऽभूदिति तथा॥ तथा सति किं स्यात्तत्राऽऽह ॥ जात इति ॥ तद्धृदि प्रकटे जात इत्यर्थः ॥ आदिपदेन सर्वेंद्रियशक्तिर्गृह्यते ॥ इतीति ॥ इतिहेतोरेव "प्रतियात स्वधाम" इति भगवद्वचनमित्यर्थः ॥ ८५ ॥

त० दी०— बहिःप्रकटनात्सर्वं साधयिष्यति वै हरिः ॥
प्रसादे गरुडो नीतः कालग्रसनकारणात् ॥ ८६ ॥

त० प्र०— ननु कथमत्र समाधानमतःप्राकट्ये पूर्वोक्तदूषणात् ॥ बहिःप्राकट्ये चांऽतःप्रकटाक्षररूपमस्य वैयर्थ्यापातादित्यत आह ॥ बहिरिति ॥ बहिःप्राकट्येन ध्रुवस्योच्छ्वासादिसंभवात्सर्वप्राणपीडापगमः ॥ यो ह्यागच्छति स पूर्वं चरणस्थापनेनाऽऽगच्छतीति तत्प्राकट्यहेतुत्वेन न तद्वैयर्थ्यम् ॥ केवलस्य तस्यांतरेव प्राकट्यनियमेन च तथात्वम्। ततोऽक्षरस्य बहिष्ठचरणैक्यतयाऽऽविर्भावो मुख्यप्राणस्य भगवत्स्थितजगत्प्राणरूपतयेत्येतत्सर्वपदवाच्यम् ॥ तद्बहिःप्रकटनादेव हरिः साधयिष्यतीत्यर्थः ॥ गरुत्मता सह गमने विशेषप्रयोजनमाह ॥ प्रसाद इति ॥ कालरूपो हि गरुडः स चेत्तादृग्भवत्प्रसादं तस्मिन् स्वयं पश्यति तदाऽन्तेन ग्रसतीति तन्निमित्तं स्वप्रसादसमये स नीत इत्यर्थः ॥ आगतस्यांतःस्फूर्तौ

ध्यानादौ कृतेपि कुतो न कामनिवृत्तिरित्यत आह ॥ नोपदेश इति ॥ फलाय परमफलाय कामनिवृत्तय इत्यर्थः ॥ ८० ॥

त० दी०— प्रतिबंधनिवृत्त्यर्थं राजांतिगमनं मुनेः ॥
वृथैव मरणं वा स्यात्साधने वार्थदुर्लभे ॥ ८१ ॥

त० प्र०— अस्य गमने भगवदिच्छां ज्ञात्वा नारदस्तत्सिद्ध्यर्थमेव राजकृतो मनुष्यप्रेषणादिना प्रतिबंधो मा भवत्विति तन्निकटे गत इत्याह ॥ प्रतिबंधेति ॥ तदवज्ञातुरपि राज्ञश्चितायां हेतुमाह ॥ वृथैवेति ॥ पुरुषार्थसाधनव्यतिरेकेणैव वृकादितस्तथा स्यात् ॥ पुरुषार्थसाधने वाऽर्थो दुर्लभो यत्र तादृशे साधने प्रवृत्तौ तथा स्यादिति संशयात्तथेत्यर्थः ॥ ८१ ॥

त० दी०— अतश्चिता विलंबस्तु भार्यातोऽसंशयो मुनेः ॥
पूर्वर्षित्वात्तपोत्युग्रं कामावेशात्पुनस्तथा ॥ ८२ ॥

त० प्र०— ननु यदि प्रतिबंधं कुर्यात्तदैव कुर्याद्विलंबाच्च न तथेत्यवगम्यत इति व्यर्थं मुनिगमनमित्यत आह ॥ विलंबस्त्विति ॥ तावत्सा निकटे स्थिता तद्भयश्च स इति तथेत्यर्थः ॥ ननु राजोक्तप्रकाराणां संभवात्कथं नारदस्य तादृक्सांत्वनमित्याशंक्य मननशीलत्वेन सर्वज्ञत्वात्तथेत्याह ॥ असंशय इति ॥ तर्हि पंचवार्षिकस्य तादृशतपःकरणे कोपपत्तिरित्यत आह ॥ पूर्वर्षित्वादिति ॥ ऋषेः कथमेवं भावस्तत्राह ॥ कामावेशादिति ॥ पूर्वजन्मनि तपः कुर्वाण एव कंचन राजकुमारं दृष्ट्वा तत्स्पृहावान् जातस्ततस्तद्वासनावानेव मृत इति जन्मांतरे ध्रुवो जात इति पुराणांतरप्रसिद्धिः ॥ तदिदमुक्तं कामावेशादिति च ॥ अतः पुनरग्रिमजन्मन्यपि तथा सकाम एवेत्यर्थः ॥ ८२ ॥

त० दी०— जगत्कारणरूपं हि यदक्षरमुदीरितम् ॥
मुख्यप्राणयुतं पूर्वमाविर्भूतं हरेः पदम् ॥ ८३ ॥

त० प्र०— ननु ध्रुवहृदयस्थविश्वाधाररूपं देवप्रार्थितरूपं चैकमेव भिन्नं वा ॥ आद्ये तस्यैव बहिष्ठत्वान्निरुच्छ्वासत्वं लोकानां न स्यात् ॥ द्वितीये तयोः स्वरूपं वाच्यमित्याशंकायां हृदयस्थस्वरूपमाह ॥ जगदिति ॥ "प्रकृतिः पुरुषश्चोभौ परमात्माऽभवत्पुरा" इत्यादिना सर्वनिर्णयप्रकरणोक्तोऽर्थोऽत्रानुसंधेय इति ज्ञापनायोक्तमुदीरितमिति ॥ मुख्यप्राणयुतमिति ॥ लोकप्राणनिरोधे प्रयोजनमुक्तम् ॥ पूर्वमिति ॥ भगवदाविर्भावात्पूर्वमित्यर्थः ॥ ८३ ॥

तथा मतिरयुक्तेत्यत आह ॥ **ऋपित्वादिति** ॥ तुशब्दः पूर्वपक्षव्यवच्छेदकः पुष्ट्यैवास्य कार्यसिद्धेर्मर्यादामार्गीयदूषणं न दोषायेति ज्ञापकः ॥ ऋपित्वं तत्सिद्धौ स्वरूपयोग्यतामात्रसंपादकमिति भावः ॥ ८९ ॥

**त० दी०— सर्वेश्वरत्वभजने स्तुत्या साधु निरूपिते ॥**
**विसर्गार्थप्रकरणात्स्वकार्यादभिनंदनम् ॥**
**पुष्टावनभिनंदश्च प्रक्रियाभेदतो भवेत् ॥ ९० ॥**

त० प्र०— तथापि स्वाधिकारानुसारेणैव स्तुतिरित्यभिप्रायेण स्तुत्यर्थमाह ॥ **सर्वेश्वरत्वेति** ॥ समासात्तत्त्वेनैव भजनं च ॥ न त्वात्मत्वेन ॥ स्वार्थमेवाविर्भूतत्वेन वा ॥ सर्वेश्वरत्वात्तद्भजनेनैवार्थसिद्धिरिति हेतुहेतुमद्भावेन स्वोपयोगित्वेन च निरूपणात्साधुत्वम् ॥ अत्र हेतुः ॥ **विसर्गेति** ॥ यतो विसर्गलीलेयमतो भजननिरूपणम् ॥ एतल्लीलास्यानामंते मुक्त्यधिकारित्वात् ॥ अर्थप्रकरणत्वात्पूर्वस्येत्यर्थः ॥ स एव ह्यर्थसाधकः ॥ ननु कथमंत्यप्रार्थनाया एवाभिनंदनं भगवता कृतम् ॥ "भक्तिं मुहुः प्रवहताम्" इत्यादेर्न प्रार्थनाया अविशिष्टत्वादित्याशंकायां भगवदभिप्रायमाह ॥ **स्वकार्यादिति** ॥ भगवदभिप्रेतं कार्यं हि स्थानदानम् ॥ तेन तस्यैवाऽभिनंदनमित्यर्थः ॥ पूर्वपदमत्राऽनुपज्यते ॥ तथा च भक्तिमित्यादिना प्रार्थितस्याऽभिनंदनेन तद्दाने शीघ्रं मोक्षप्रसंगेनाऽर्थासिद्ध्या स्वाभिप्रेतलीलैव न सिध्येदिति भावः ॥ एतदेव स्पष्टयति ॥ **पुष्टाविति** ॥ पुष्टिमार्गे इच्छाया एव बलिष्ठत्वात्प्रार्थनाविशेषेपि स्वविचारितार्थप्रार्थनस्यैवाऽभिनंदनमन्यस्याऽनभिनंदश्च पूर्वोक्तप्रक्रियाभेदतो भवतीत्यर्थः ॥ अन्यत्राऽप्येवमिति ज्ञापनाय भवेदित्यतिदेशः ॥ ९० ॥

**त० दी०— दृष्टोत्कर्षो ध्रुवान्नास्ति मरणाद्भावितास्मृतिः ॥**
**प्रजापालनयज्ञौ हि धर्मस्तेनेह संस्मृतिः ॥ ९१ ॥**

त० प्र०— ननु एवं न्यूनतेत्याशंक्य परिहरति ॥ **दृष्टोत्कर्ष इति** ॥ ध्रुवादन्यत्र दृष्टपदार्थैर्य उत्कर्षः स नास्तीत्यर्थः ॥ न त्वदृष्टोत्कर्षोपि ॥ अर्थप्रकरणत्वादस्य तस्य च दृष्टार्थत्वादिति भावः ॥ एतेन नाऽन्यैरधिष्ठितमित्यादिभगवद्वाक्यानां प्रयोजनमुक्तम् ॥ ननु आद्यतन्मात्रोरेतदानुकूल्येनाऽपि स्थितिसंभवे कुतो भगवता तयोक्तमित्यत आह ॥ **मरणादिति** ॥ ध्रुवेणातिदुःखेन तयोस्तत्स्वहृदये भावितमिति

१ स्मृतिः ।

प्रयोजनमाह ॥ अस्फूर्ताविति ॥ तदंतर्भगवतोऽस्फूर्चौं सत्यां पूर्ववन्मुख्यप्राणयुतजगत्कारणरूपाक्षरस्फूर्चौ विश्वनाशः स्यादित्यर्थः ॥ ८६ ॥

**त० दी०— अस्फूर्तौ पूर्ववत्स्फूर्तौ विश्वनाश इति स्वयम् ॥**
**अवेक्षारूपधृक् कृष्णस्तडिद्धृदये बभौ ॥ ८७ ॥**

त० प्र०— इदमत्राकूतम् ॥ हृदि दृश्यमानरूपतिरोभावं विना न हि तस्य बाह्यानुसंधानम् ॥ तदर्थं च तत्तिरोभावे मुख्यप्राणस्य कारणरूपे लये जाते निरुच्छ्वासेन प्राणपीडावन्मरणमेव स्याद्विश्वस्य ॥ इतो हेतोर्येन रूपेणेक्षयैव पालयति तद्रूपधृक् सत्तां संपाद्याऽऽनंददायकरूपो रक्षाया एव संपाद्यत्वाचस्याश्च प्राकट्यमात्रेण संभवाचिरकालस्थितौ प्रयोजनाभावाच्च तडिद्वद्धृदये बभावित्यर्थः ॥ एतत्स्फूर्चौ तत्प्रयत्नस्य हेतुत्वनिरासाय स्वयमिति ॥ ततः पालकरूपसहभावेन न नाश इति भावः ॥ पूर्ववत्स्फूर्चौ सत्यामेव पूर्वरूपस्याऽकस्मादस्फूर्चाविति वा योजना ॥ ८७ ॥

**त० दी०— मध्येपि जातकामानां पूरणाय दरस्पृशिः ॥**
**अपां तत्त्वे स्वतृप्त्यर्थमासन्यो वर्तते हरेः ॥**
**वेदमूलत्वतस्तस्य दरो ब्रह्ममयः स्मृतः ॥ ८८ ॥**

त० प्र०— मूले दरस्पर्शस्य वाणीप्राप्तिफलकथनमुपलक्षणपरमित्याह ॥ मध्येपीति ॥ अत एव शस्त्रास्त्रसामर्थ्यशत्रुजयादिरिति भावः ॥ "यस्य ध्वनिर्दानवदर्पहंता" इतिवाक्यात् ॥ ननु "अपां तत्त्वं दरवरम्" इतिवाक्याचादृशेन तेन कथं शब्दब्रह्मस्फूर्तिरित्याशंक्य तत्रोपपत्तिमाह ॥ अपामिति ॥ एतादृशेऽस्मिन् हरेरासन्यप्राणवायुः पूरणाद्वर्तते स च वेदमूलहेतुरिति शब्दब्रह्ममयः स इत्यर्थः ॥ सततत्स्थितिप्रयोजनं स्वतृप्त्यर्थमिति ॥ जलेन प्राणतृप्तिः प्रसिद्धा ॥ स्मृत इति प्रमाणं सूचितं मूले "ब्रह्ममयेन कंबुना" इतिवाक्यात् ॥ ८८ ॥

**त० दी०— प्रेमबोधकमन्यद्धि सर्ववेदात्मसात्कृतौ ॥**
**यथा मतिस्तथा जाता क्षपित्वात्तु तदुद्भवः ॥ ८९ ॥**

त० प्र०— अन्यदिति दृग्भ्यां प्रपश्यन्नित्यादीत्यर्थः ॥ ननु मंत्रादिभ्य इव दरस्पर्शेनाऽपिशब्दमात्रमुत्पद्यते न त्वर्थज्ञानमपीत्यत आह ॥ सर्वेति ॥ सर्ववेदमूलभगवदासन्यपूर्णत्वाचथेति भावः ॥ ननु क्षत्रियस्य तत्राऽप्यकृतसंस्कारस्य

१ तर्षेण ।

त० प्र०— ननु भ्रातृनाशस्य भगवतैवोक्तत्वाद्वैष्णवत्वाच्च क्रोधोऽनुचित इत्यत आह ॥ राज्यस्येति ॥ अनर्थपदं भावप्रधानम् "एते पंचदशाऽनर्थाः" इत्युपपर्विहिशब्देनोच्यते ॥ ननु वैष्णवत्वात्तथाऽप्यनुचितत्वमुक्तमित्यरुच्या प्रयोजनांतरमाह ॥ लौकिक इति ॥ तदोपेक्षायां लोकेऽपकीर्तिर्भवेदिति लौकिके जने तथासिद्ध्यर्थमित्यर्थः ॥ जात्यभिप्रायमेकवचनं सर्वेषामेकरूपताभिज्ञापकम् ॥ तथापि मारणं नोचितमित्यत आह ॥ युद्धेति ॥ ससव्यसनित्वाद्ग्राह्य इति भावः ॥ एतेन दोषत्रयमुक्तम् ॥ ९४ ॥

त० दी०— ईशविस्मृतिरावेशादतो विप्रैर्विबोधनम् ॥
पितामहेन गर्वस्य दोषस्याऽपि निवारणम् ॥ ९५ ॥

त० प्र०— अत एव तज्जनितमहारोगरूपादावेशात्क्रोधावेशाद्भगवद्विस्मृतिरपि ॥ अस्य भगवदीयत्वात्तत्स्मरणेनैवाऽनर्थनिवृत्तिर्भविष्यतीति तत्सिद्ध्यर्थं विप्रवचनमित्याह ॥ अत इति ॥ तर्हि मनुवाक्यस्य किं प्रयोजनमित्यत आह ॥ पितामहेनेति ॥ दोषस्य क्रोधावेशस्य ॥ इदमत्राऽऽकूतम् ॥ विप्रैस्तु मृत्युनिवारकत्वेनैव भगवान् स्मारितो न तु सर्वात्मत्वेन स्वप्रभुत्वेन सर्वकर्तृत्वेन वा ॥ अतस्तथा स्मरणेन "ये यथा मां प्रपद्यंते" इतिन्यायेन तत्कालीनदुःखमेव निवृत्तं न त्वन्यत् ॥ प्रत्युत तन्निराकरणे दोषस्याऽनिवृत्तत्वात्स्वसामर्थ्यस्फूर्त्या गर्वो जातः सोऽप्यनेनैव निराकृत इति ॥ ९५ ॥

त० दी०—संसारित्वादगमनं बालत्वात्तदुपेक्षणम् ॥
तद्ज्ञापनायाऽऽगमनं वरश्चैव तथोच्यते ॥ ९६ ॥

त० प्र०—ननु "तं प्रसादय वत्स" इति श्रुत्वा तत्र गत्वा कथं न तं प्रसादितवानित्यत आह ॥ संसारित्वादिति ॥ मानुषभावस्य सत्त्वादिति भावः ॥ बालत्वादिति ॥ "न वै शिशूनां गुणदोषयोः पदम्" इतिवाक्यात्तदपराधोपेक्षणमित्यर्थः ॥ तर्हि धनदागमनं कुत इत्यत आह ॥ तद्ज्ञापनायेति ॥ तदुपेक्षाज्ञापनायेत्यर्थः ॥ तथेति स्वप्रसादज्ञापनायेत्यर्थः ॥ ९६ ॥

त० दी०— मारिता कृष्णसंबंधिवधाद्युद्धाच्च राक्षसाः ॥
ततो यज्ञस्मृतिध्यानगतयः परिकीर्तिताः ॥ ९७ ॥

त० प्र०— ननु पूर्वमपि भक्तेः सत्त्वाद्विप्रमनुभ्यां भगवत्स्मृतिदोषनाशयोः कृत-

१ तयो ।

तथेत्यर्थः ॥ तेन तद्भावितमिष्टमनिष्टनिवृत्तिं च भगवान् संपादितवानित्युक्तं भवति ॥ अर्थभोगस्य भगवद्विस्मारकत्वेन प्रकृते तदभावाय तद्धेतुभूतस्वधर्मो भगवतोक्त इत्याह ॥ प्रजापालनेति ॥ सोऽपि दृष्टफलक एवेत्याह ॥ इहेति ॥ अस्मिन्नेव जन्मनीत्यर्थः ॥ धर्मैकांतस्येतिवाक्यादर्थप्रकरणेपि धर्मकथनं युक्तम् ॥ "धर्मस्य ह्यापवर्ग्यस्य" इतिवचनात्तेन स्मृतिकथनं च युक्तम् ॥ तदाह हिशब्देन ॥ अन्यस्मरणराहित्यमेतदविच्छेदश्च सम्यक्त्वम् ॥ ९१ ॥

त० दी०— सिद्धेऽर्थे गुरुवाक्येन भगवद्दर्शनेन च ॥
शुद्ध्या सिद्धेऽपि वैराग्ये कृष्णेच्छातो गृहं गतः ॥ ९२ ॥

त० प्र०— ननु पश्चादनुतापे को हेतुस्तथात्वे वा वैराग्यस्य संपन्नत्वाद्गृहे गमनं कुत इत्यत आह ॥ सिद्धेऽर्थ इति ॥ "गुरोर्मातुः आराधय" इत्यादिवाक्येन ॥ नारदस्य वा "भगवान्वासुदेवस्तम्" इत्यादिरूपेण ॥ अथवा नारदेनापि "जनन्याऽभिहितः पंथाः" इत्युक्तत्वादुभयोर्वाक्यमेवेति गुरोर्वाक्येनेत्यर्थः ॥ भगवद्दर्शनेन चाऽर्थे सिद्धे ताभ्यामेव हेतुभ्यामंतःकरणशुद्धिर्जातेति वैराग्यं जातम् ॥ एतेनाऽनुतापे हेतुरुक्तः ॥ अत एवेच्छाज्ञानम् ॥ तेन तथेत्यर्थः ॥ अथवाऽर्थे सिद्धे अर्थसिद्ध्यनंतरं पूर्वदर्शनजशुद्ध्या हृदि स्फुरितेन "दुराराध्यो मतो मम" इत्यादितद्वाक्येन भगवद्दर्शनेन च तथाविधेनेत्यग्रे पूर्ववत् ॥ ९२ ॥

त० दी०— भयादपि हरेस्तस्मादन्यस्याऽप्यनुपायतः ॥
आदरो दृढविश्वासे फले चोत्कर्षसूचकः ॥ ९३ ॥

त० प्र०— गृहगमने हेत्वंतरमाह ॥ भयादिति[1] ॥ प्रस्थितेरिवति "इष्ट्वा माम्" इत्याद्याज्ञोल्लंघने को वेद भगवान् किं कुर्यादितिभयाद्गृहं गत इति संबंधः ॥ किं च तस्माद्भगवदुक्तप्रकारादन्यस्यैतत्कालीनत्यागस्याऽस्मिन् भगवत्प्राप्त्यनुपायत्वादित्यर्थः ॥ पित्रादिद्वारा कारितादरस्य सुरुचिकृतस्य वा प्रयोजनमाह ॥ आदर इति ॥ द्वेषिणामपि तथात्वे भगवदुक्ते विश्वासः स्यादिति तन्निमित्तं स निरूपित इत्यर्थः ॥ यत्र गृहगमनेऽप्येवमवांतरं फलं तत्र परमफले भगवदुक्ते का वार्तेति तदुत्कर्षोऽप्यनेन सूचित इत्याह ॥ फल इति ॥ ९३ ॥

त० दी०— राज्यस्याऽनर्थबोधाय क्रोधावेशो हि लौकिके ॥
भ्रातृवत्सलतासिद्ध्यै युद्धव्यसनतोऽपि हि ॥ ९४ ॥

---

[1] भयादपि ।

सर्वथेति ॥ भगवत्साक्षात्कारे जातेपीत्यर्थः ॥ अत एव स नारद इत्युक्तम् ॥ दुराराध्यो मतो ममेति येनोक्तमितिज्ञापनार्थम् ॥ ९९ ॥

त० दी०— कामेन सिद्धः सर्वेषां कामस्य च स साधकः ॥
कामः संपादितः स्वस्य कामः प्रकरणं ततः ॥ १०० ॥

त० प्र०— अथाग्रिमप्रकरणार्थं विचारयंस्तत्रांते मोक्षस्य निरूपितत्वान्मोक्षप्रकरणत्वमाशंक्याह ॥ कामेनेति ॥ कामनयेत्यर्थः ॥ सर्वेषामित्युभयत्र संबध्यते ॥ तथा च आदिमध्यावसानेषु कामस्यैव निरूपितत्वात्कामप्रकरणमेवेत्यर्थः ॥ १००॥

त० दी०— एकादशेंद्रियैः कामस्तेनाध्यायास्तथा मताः ॥
चतुर्भिश्च तथा द्वाभ्यां पंचभिश्च क्रमात्त्रयम् ॥ १०१ ॥

त० प्र०— तस्यैकादशाध्याय्या निरूपणे हेतुमाह ॥ एकादशेति ॥ कामः सिध्यतीति शेषः ॥ अध्यायसंख्ययाऽपि कामप्रकरणत्वमेव सिध्यतीति भावः ॥ अध्यायान् विभजते ॥ चतुर्भिरिति ॥ सहेतुकपृथुप्रादुर्भावनिरूपणं चतुर्भिः ॥ सर्वकामसाधनं द्वाभ्याम् ॥ स्वकामसाधनं पंचभिः ॥ १०१ ॥

त० दी०—स्वरूपेण गुणैश्चापि प्रथमे भेदकद्वयम् ॥
हेतुकार्यविभेदेन राज्यान्यगुणभेदतः ॥ १०२ ॥

त० प्र०— अध्यायार्थानाह ॥ स्वरूपेणेति ॥ कामस्वरूपं गुणाश्च प्रथमप्रकरणस्थावांतप्रकरणद्वयार्थः ॥ तदुभावपि प्रत्येकं द्विधेति ॥ चतुर्भिरध्यायैरिदं प्रकरणमुक्तम् ॥ तद्वैविध्यमाह ॥ हेत्विति ॥ कामहेतुः प्रथमाध्यायार्थो रक्षकाभावरूपः ॥ अधर्मस्थापनरूपं कार्यं द्वितीयाध्यायार्थः ॥ राज्यं तृतीयस्य ॥ आविष्टगुणाश्चतुर्थस्य ॥ १०२ ॥

त० दी०— क्रियाफलविभेदेन सर्वकामे द्वयं तथा ॥
शुद्धिः कृष्णप्रसादश्च स्वधर्मो ज्ञानमेव च ॥
मोक्षश्चेति विभेदेन स्वकामेऽध्यायपंचकम् ॥ १०३ ॥

त० प्र०— द्वितीयप्रकरणस्याऽध्यायद्वयार्थक्रमेणाऽऽह ॥ क्रियेति ॥ तृतीयाध्यायार्थान् क्रमेणाह ॥ शुद्धिरित्यादिना ॥ १०३ ॥

त० दी०— मोक्षकामोऽत्र युक्तो हि सर्वकामस्तथैव हि ॥
मोक्षप्रकरणार्थाय प्रक्रियेयमतः कृता ॥ १०४ ॥

त० प्र०— ननु कामस्य तृतीयपुरुषार्थस्य स्त्रीसंभोगादिजसुखरूपत्वान्मोक्षस्य

त्वाच्च तद्द्वारेण किमायातमित्यत आह ॥ मारितेति ॥ मारितोऽकृष्णसंबंध्युत्तमो यैस्तेषां यक्षाणां वधादिति योजना ॥ अयमर्थः ॥ भगवदीयस्य प्राणिवधमात्रमेव नोचितं तत्रापि भगवद्धेतुरहितम् ॥ तथात्वेऽपि भगवद्भ्रूनिरीक्षणमेवोचितं न तु स्वतो युद्धमपि ॥ भगवदिच्छाभावश्च मनुवाक्यैरवगम्यते ॥ तथा चाऽस्मिन्नुभयोर्जातत्वादंतःकरणसंबंधिषु क्रियासंबंधिषु चाऽर्थेषु रक्षःसंबंधो जात इति ते राक्षसा जाता इति ॥ एवं च पूर्वोक्तभक्त्यादेर्बीजभावेन सत्त्वेपि फलपर्यवसायित्वं न भविष्यतीति पूर्वोक्तदोषनिवर्तिका भक्तिस्तेन दत्तेति भावः ॥ किं च एतद्दोषनिवृत्त्यर्थमेव यज्ञादिकमपीत्याह ॥ तत इति ॥ यज्ञैः क्रियादोषनिवृत्तिः स्मृत्या वधदोषस्य निवृत्तिः ॥ ध्यानेन भगवत्संबंधाभावजस्य ॥ एवं मनुवाक्यैर्वरेण यज्ञादिभिश्चाधिदैविकाध्यात्मिकाधिभौतिकदोषाणां निवृत्त्या शुद्धस्य पश्चाद्गतिरुक्ता ॥ १७ ॥

**त० दी०— फलाधिक्यमतः प्रोक्तं तथाऽत्रानुपयोगतः ॥**
**प्रकारोयं समीचीनो भगवत्प्रीणनाय हि ॥ ९८ ॥**

त० प्र०— यद्यप्येवं निर्दोषस्य भक्त्या च विस्मृतप्रपंचस्य परममुक्तिरेव वाच्या तथाऽप्यर्थप्रकरणे तथा कथनस्याऽनुपयोगात्तत्साधनानां फलोत्कर्षकारित्वमेवोक्तमित्याह ॥ फलाधिक्यमिति ॥ भगवद्दत्तलोकप्राप्तिः फलम् ॥ सा च पूर्वशरीरत्यागपूर्विकैवाऽन्यत्र प्रसिद्धेत्यत्राऽन्येभ्य आधिक्यं तदत्यागः ॥ अत इति ॥ यतः पूर्वोक्तरीत्या तद्देहोपि निर्दोष इति भावः ॥ यद्वा ॥ ननु देहांतरमेव कुतो नोक्तमित्यत आह ॥ तथेति ॥ अत्र लोकांतरप्राप्तौ तथा देहांतरस्याऽनुपयोगादप्रयोजकत्वादित्यर्थः ॥ निर्दोषत्वस्यैव प्रयोजकत्वादिति भावः ॥ तच्चोक्तम् ॥ प्रकरणार्थमुपसंहरंस्तत्तात्पर्यमाह ॥ प्रकारोऽयमिति ॥ संस्कारवेदाध्ययनतदर्थविचारानंतरकर्तव्ययागतपस्यादिभ्यो विषयानभिवेशदशायामेव गुरूपदेशेन क्वचिद्भगवत्सांनिध्यवद्देशे भजनं समीचीनमिति ज्ञापितमेतत्प्रकरणेनेत्यर्थः ॥ शीघ्रप्रसादहेतुत्वरूपोपपत्तिर्हिशब्देनोच्यते ॥ ९८ ॥

**त० दी०— यतः सर्वनिषेधेन श्लोकानाह स नारदः ॥**
**सर्वथा दुर्लभा सेवेत्यतस्तस्य कथा ततः ॥ ९९ ॥**

त० प्र०— अत्र निदर्शनमाह ॥ यत इति ॥ "दृष्ट्वाऽभ्युपायानपि वेदवादिनः" इतिवाक्यात्सर्वनिषेधः ॥ ननु प्रचेतसां सत्रे तत्कथागाने हेतुः क इत्यत आह ॥

१ तथा ।

गानंतरजातवैराग्यदशायामुत्कल इति सोपि तथा ॥ अत उभावपि मुक्तौ जातौ ॥ एतदेवाह ॥ **पूर्वपश्चाद्विभेदत इति** ॥ मध्ये रागदशायामुत्पन्नो वत्सर इति तस्यैव राज्यम् ॥ ननु कथमन्येषां निर्दोषत्वमंगस्य च सदोषत्वमित्याशंक्य भगवत ऐश्वर्यादिगुणा यथासंख्यं तेषु स्थिता इति तद्रक्षया तेषां निर्दोषत्वम् ॥ अंगस्तु सप्तम इति तद्रक्षाभावात्सदोषत्वमित्याशयवानाह ॥ **अंगस्त्विति** ॥ अत एवाऽग्रे दोषनिवृत्तिपूर्वकं स्वरूपेणैव भगवान् रक्षिष्यतीति भावः ॥ १०६ ॥

त० दी०—**अन्यवंशास्तु नाऽत्रोक्ता देवमुक्तिविभेदतः ॥**
**पूर्वत्राऽधर्मकरणप्रमादादंगकर्तृकम् ॥ १०७ ॥**

त० प्र०— ननु तिग्मकेतुप्रभृतीनां वंशाः कुतो नोक्ता इत्याशंक्याऽस्य कामप्रकरणत्वात्तद्वंशे च केषांचिद्देवत्वेन केषांचिन्मुक्तिमार्गीयत्वेनाऽत्रानुपयोगान्न निरूपिता इत्याह ॥ **अन्येति** ॥ तर्ह्युद्देशो व्यर्थ इति चेन्मैवम् ॥ कालचक्राधिष्ठातृध्रुवात्मजो हि वत्सरात्मक एव स च दक्षिणायनोत्तरायणाद्यवयवभेदेन कश्चन कालो मुक्त्युपयोगी कश्चन कर्मोपयोगीति तदवयवतारूपा एवैत इतिज्ञापनार्थत्वात् ॥ तेन तस्य वत्सरात्मकत्वं समर्थितं भवति ॥ अंगकृताधर्मस्वरूपमाह ॥ **पूर्वत्रेति** ॥ यथाकालं धर्मकरणाभावलक्षणो धर्मो जातस्तत्र हेतुः प्रमादः ॥ तेन स्वभावतस्तु धार्मिक इति सूचितम् ॥ पूर्वजकृतस्याऽस्मिन् प्रतिफलनमाशंक्यांगकर्तृकमित्युक्तम् ॥ अत एव तद्दोषरूपस्य वेनस्य 'न होतव्यम्' इत्याद्युद्घोष इति भावः ॥ १०७ ॥

त० दी०—**येनाऽधर्मेण संबंधो रुचिः संबंध एव च ॥**
**वंशस्य धर्ममूलत्वात्पुत्रो नाऽभूत्स्वभावतः ॥ १०८ ॥**

त० प्र०— तत्कार्यमाह ॥ **येनेति** ॥ अधर्मेण मृत्युना सह संबंधः ॥ अधर्मरूपायामेव तत्पुत्र्यां रुचिस्तत्संबंधश्च तत्संबंधे वा रुचिरित्यर्थः॥ अरुचिरिति वा॥ देवतानामिति शेषः ॥ तस्या दोषज्ञानेनांगस्य बंधाभावादेव पुत्राभाव इत्यत आह **वंशस्येति** ॥ अत एव संबंधस्याऽऽवश्यकत्वज्ञापनाय पूर्वमेवकारो दत्तः ॥ स्वभावत ऋतुकालीननिषेकादित्यर्थः ॥ तत्र हेतुः ॥ **धर्ममूलत्वादिति** ॥ तद्धेतुधर्माभावश्चोक्त एव ॥ अत एव सर्वमारकेण सह संबंध इति भावः ॥ १०८ ॥

त० दी०—**दोषाभावायाऽश्वमेधः कृष्णार्थो मुक्तये तु सः ॥**

स्वतंत्रत्वाच्च कामत्वमयुक्तमित्यत आह ॥ **मोक्षकाम इति** ॥ अत्र भगवच्छास्त्रे सकामभजने मोक्षकामः ॥ सर्वकामश्च पुरुषो युक्त इत्यर्थः ॥ न तु स्त्रीकामः ॥ तस्य तुच्छत्वात् ॥ यद्यपि भगवद्दत्तः सोपि नाऽनर्थरूपस्तथापि तदर्थं भजनं स्वस्याऽयुक्तमिति भावः ॥ यत्तु द्वितीयस्कंधे "स्त्रीकामोप्सरउर्वशीम्" इत्युक्त्वा सर्वकामोपि पुरुषं यजेतेत्युक्तं तत्रापि भजनार्थमेव स्त्रीकामनायां तथेति शुकहृदयम्॥ यथा चैतत्तथा तत्रैव टीकायां निरूपितम् ॥ अस्य च सकामत्वाद्युक्तमिति पूर्वं हिशब्दार्थः ॥ "अकामः सर्वकामो वा" इतिश्लोकसंमतिर्द्वितीयेन सूच्यते ॥ प्रकरणार्थमुपसंहरति ॥ **मोक्षेति** ॥ प्रचेतसां प्रश्ने कृते हीयं कथारब्धा तन्निरूपणार्थम् ॥ तेषां च भक्तिमार्गीयमुक्तेर्वक्तव्यत्वान्मोक्षप्रकरणनिमित्तमेवेयं शुद्ध्यादिप्रक्रिया कृतेत्यर्थः ॥ तर्हि मोक्षप्रकरणत्वमेवाऽस्यापि न कुत इति चेन्न पृथुभक्तेर्ज्ञानसाधनत्वेनैवोक्तत्वात्तेन च मुक्तिनिरूपणाच्चत्र चाऽस्य सकामत्वाद्भक्तिमार्गीयतद्विलक्षत्वाच्च ॥ एतदेवाह ॥ अत इत्यनेन ॥ यतः पृथुः सर्वकामो मोक्षकामश्चाऽतस्तत्प्रकरणनिरूपणार्थमेवेयं प्रक्रिया कृतेति ज्ञायते न तु तत्प्रकरणमेवेत्यर्थः ॥ १०४ ॥

**त० दी०— साधिता कृष्णभक्तिर्हि पुत्रे वंशेऽथवा फलेत् ॥**
**नोपक्षीणा गौणफलादिति तद्वंशवर्णनम् ॥ १०५ ॥**

त० प्र०— एवं प्रकरणार्थमुपपाद्य प्रथमाध्यायार्थं विचारयति ॥ **साधितेति** ॥ ननु ध्रुववंशवर्णनं कुतः ॥ न च कस्याऽन्वयाय इति प्रश्नात्, ध्रुववंश इत्येतावतैव तत्पूर्तिसंभवात् ॥ न च पुरुषार्थलीलाया निरूप्यत्वात्कामनिरूपणार्थम् ॥ तथापि तद्वैयर्थ्यात्तस्य पृथुमात्रचरितनिरूप्यत्वादित्यत आह ॥ **साधितेति** ॥ कृष्णपदेन भक्तिमार्गीया भक्तिः सूचिता ॥ तस्या मुख्यं हि फलं पुरुषोत्तमस्वरूपमेव ॥ तद्भक्त्यनुवृत्तिश्च तेन ब्रह्मानंदांतमपि फलं तस्या गौणमेव ॥ अतो गौणं फलं साधयित्वाऽपि मुख्ये कुंठितशक्तिर्न भवतीति ज्ञापनार्थं ध्रुववंशवर्णनमित्यर्थः ॥ एतेन ध्रुवभक्त्यैव तुष्टो भगवान् प्रचेतस्सु मुख्यं पृथ्वादिषु च गौणं फलं साधितवानिति सूचितम् ॥ अन्यथा कथमकस्माचादृगुपदेशं शिवः कुर्यादिति ॥ १०५ ॥

**त० दी०— कल्पोत्कलौ तस्य पुत्रौ पूर्वपश्चाद्विभेदतः ॥**
**मुक्तौ तस्मात्तृतीयस्य राज्यमंगस्तु सप्तमः ॥ १०६ ॥**

त० प्र०— ननु ज्येष्ठयोर्वैराग्ये को हेतुस्तत्राह ॥ **कल्पेति** ॥ वरं प्राप्याऽऽगतस्य पूर्वानुतापेन विरक्तत्वाच्चदृदायामुत्पन्नः कल्पोऽपि तथैवाऽभूत् ॥ राज्यभो-

कुर्वन् पुत्रे तं धर्मं स्थापयित्वा गच्छति ॥ तेनैव च तस्य राजत्वं भवति ॥ अंगस्य च तदकरणेन तत्सहितस्यैव गमनादन्वेषणमिति संबंधः ॥ ननु युद्धनिहतपितृराज्यवदस्याऽप्यावश्यकत्वेन पुत्राय राज्यदानमेवोचितं न तदन्वेषणमित्यत आह ॥ **रक्षकाभावत इति** ॥ वेनस्याऽरक्षकत्वेन ज्ञानादिति भावः ॥ ननु ऋषीणामलौकिकज्ञानवत्वेन कुतो नांगज्ञापनमित्यत आह ॥ **उपेक्षेति** ॥ आगत्य तादृशाय राज्यदाने तत्कृतप्रजाद्रोहादिदोषेणांगस्यापि दोषसंभवेन मुक्तिर्न स्यात्स्वयं राज्यकरणेपि तथेति तदर्थं तथेत्यर्थः ॥ अध्यायार्थमुपसंहरति ॥ हेतुस्त्विति ॥ १११ ॥

**त० दी०— अन्यथा सिद्धिशंकायां वारणायोपपत्तये ॥**
**सर्वज्ञा भृगुमुख्या हि मातृमात्रार्थसंमतम् ॥**
**वेनं तु भूपतिं चक्रुर्ज्ञात्वा पूर्वाघनिष्कृतिम् ॥ ११२ ॥**

त० प्र०— द्वितीयाध्यायार्थं विचारयस्तत्र भृग्वादीनां सर्वज्ञत्वेन कृतभाव्युपद्रवाभिज्ञत्वात्तदैव तदूर्वादिमथनमेव युक्तं न तु तादृशाय राज्यदानमित्याशंक्याह ॥ **अन्यथासिद्धीति** सार्धेन ॥ तदनभिषेकेण तत्कृतप्रजानाशादर्शनेन पूर्वाध्यायोक्तसर्वकामनाहेतुभूतरक्षकाभावेऽन्यथासिद्धिशंका स्यात्तद्वारणाय वेनं भूपतिं चक्रुरिति संबंधः ॥ सामान्यं हेतुमुक्त्वा विशेषमाह ॥ **उपपत्तय इति** ॥ अयमर्थः ॥ वीरस्य तस्याऽमूर्च्छायां मथनासंभवेनाऽकृतद्रोहे तस्मिँस्तथाकर्तुमयुक्तत्वेन लोके चाऽपकीर्तिसंभवेन सर्वमयथा स्यादित्यग्रिमसर्वकार्योपपत्तये सर्वज्ञत्वेन तथैव भगवदवतारादिकं ज्ञात्वा तथा चक्रुरिति ॥ तथापि तत्कालीनधर्मनाशेऽप्यसहिष्णुत्वेन तेषामसंमतिरेवेति ज्ञापनार्थं मातृमात्रार्थसंमतमित्युक्तम् ॥ मातुरेव संमतम् ॥ तत्राऽपि न सर्वात्मनेत्यर्थः ॥ तर्हि कोऽभिप्राय ऋषीणामित्यत आह ॥ **ज्ञात्वेति** ॥ स्वकार्यकरणेनाऽघस्योपक्षयं ज्ञात्वेत्यर्थः ॥ अन्यथा तद्वंश एवाऽनुवर्ततेति भावः ॥ अस्त्यस्मिन्नंशद्वयं राजांशो दोषांशश्च ॥ तुशब्देन दोषांशो व्यवच्छिद्यते ॥ तथा च राजांशमादायाऽभिषेको युक्त इति हिशब्दार्थः ॥ ११२ ॥

**त० दी०— धर्महानिस्ततोऽप्यासीत्कामानर्थश्च सूचितः ॥**
**अधर्मस्थापनं कार्यं धर्माभावे स्वतो हि तत् ॥ ११३ ॥**

त० प्र०— तथापि दोषस्यैवोग्रत्वात्तत्कार्यमेवाऽभूदित्याह ॥ **धर्महानिरिति** ॥ ततः, अभिषिक्तराजांशादपीत्यर्थः ॥ सर्वकामस्वरूपनिरूपणे लोकोपद्रवनिरूपणेन कामस्याऽनर्थतापि सूचिता ॥ "एते पंचदशानर्थाः" इतिवाक्यात् ॥ उक्तसमुच्चया-

वंशाभावे न मुक्तिः स्यादुभयत्र प्रयोजनात् ॥
अतो न देवागमनमुभयार्थं तथा सुतः ॥ १०९ ॥

त० प्र०— तर्ह्यश्वमेधे कथं प्रवृत्तिरित्यत आह ॥ दोषाभावायेति ॥ तर्हि कुतो न देवागमनं किमर्थं वा वैष्णवयागः—अश्वमेधेनैव दोषनिर्हरणादित्यत आह ॥ कृष्णार्थ इति ॥ "सर्वं पाप्मानं तरति तरति ब्रह्महत्यां योऽश्वमेधेन यजते" इतिश्रुतौ पाप्मतरणस्योक्तत्वात्केवलस्य पाप्मादिनिवर्तकत्वं यद्यपि तथापि मर्यादायां "नाऽपुत्रस्य लोकोऽस्ति" इति श्रुतेर्वंशाभावे सा न स्यादितिभगवदर्थकरणेनैव दोषनिवृत्तिपूर्वकं वंशो मुक्तिश्च भवतीत्युभयत्र प्रयोजनसत्त्वात्कृष्णार्थः स इति पूर्वेण संबंधः ॥ यतो दोषाभावार्थमेव पूर्वं स कृतो न भगवदर्थो दोषश्च बलिष्ठोऽतो देवानागमनमित्याह ॥ अत इति ॥ ननु श्रुतेः का गतिरितिचेदुच्यते आधिदैविकपाप्मतरणं तु भगवदर्थकृतादेव तस्माच्छ्रुतिराह ॥ अन्यथा अश्वमेधेन दोषनिवृत्तिर्दोषनिवृत्तौ च देवाद्यंगसाहित्येन तत्संपत्तिरित्यन्योन्याश्रयेण श्रुत्यर्थबाधप्रसंगात् ॥ आधिभौतिकादेः केवलादपि भवतीति भावः ॥ नन्वेवं सति कथं तादृशसुतोत्पत्तिरित आह ॥ उभयार्थमिति ॥ अंगस्य निर्दोषत्वाय तद्दोषमादायोत्पन्न इति तथा दुष्टमित्यर्थः ॥ वंशार्थं सुत इत्यर्थः ॥ अन्यथोरुमथनेनैवास्मादेव तादृश एव कश्चिद्भवेत् ॥ तथा च वंशो न स्यादिति भावः ॥१०९॥

त० दी०— चरोः फलं तु पौत्रेऽभूद्दोषः पुत्रे प्रतिष्ठितः ॥
शीघ्रं मुक्तिस्तथा वंशो दोषाभावश्च सिध्यति ॥ ११० ॥

त० प्र०— ननु वैष्णवचरुभक्षणेन जातस्य सदोषत्वं कथमित्याशंक्याह ॥ चरोरिति ॥ दोषचरुफलयोर्मिथोविरोधेनैकत्राऽसंभवेनाधुना चांगदोषाभावस्यावश्यकत्वेन दोषः पुत्रे चरोः फलं पौत्रे प्रतिष्ठितमभूदित्यर्थः ॥ एवं सति को विशेष इत्यत आह ॥ शीघ्रमिति ॥ पुत्रदौष्ट्येन शीघ्रवैराग्याच्छीघ्रं मुक्तिः ॥११०॥

त० दी०— सशास्त्रगमनाल्लोके रक्षकाभावतोऽपि हि ॥
अन्वेषणमुपेक्षा तु ऋषीणामंगमुक्तये ॥
हेतुस्त्वनेन संसिद्धः सर्वेषां कामनां प्रति ॥ १११ ॥

त० प्र०— ननु पुत्रे सति तदन्वेषणं कुत इत्यत आह ॥ सशास्त्रेति ॥ शासनं शास्त्रम् ॥ प्रजानुशासनलक्षणो राजधर्म इतियावत् ॥ राजा हि त्यागं

१ त्युक्तम् उभयत्र ॥

करणं न दोषायेत्यर्थः ॥ ननु मृतदेहस्याऽमंगलस्य मथनं राजवंशार्थमयुक्तं मनीषितोत्पत्त्यसंभवाच्च ॥ न हि जलमथनेनाऽग्निसंभव इत्यत आह ॥ **मथनं ज्ञानत इति** ॥ तस्मिन् राजांशसत्त्वनिर्धारेण बहिस्तिरोहितमंतश्चैतन्यमस्तीति ऋषीणां ज्ञानाद्भाव्यर्थज्ञानाच्च तद्युक्तमित्यर्थः ॥ एतेनैकदेशात्प्रारभ्य श्लोकाष्टकावांतर-प्रकरणार्थ उक्तः ॥ पूर्वमूरुमथनेन तेषामज्ञानमाशंक्य तत्र हेतुमाह ॥ **अदोषायेति** ॥ सदोषस्य मथने पुनः स एव दोषो भगवदंशासंभवश्चेति ज्ञात्वा दोषा-भावाय ॥ "ऊर्ध्वं वै पुरुषस्य नाभ्यै मेध्यमवाचीनममेध्यम्" इतिश्रुतेर्दोषाश्रयत्वा-त्तदंगस्य तत्रैव तथा करणमित्यर्थः ॥ ११६ ॥

**त० दी०—** क्षत्रियत्वप्रसिद्ध्यर्थं कामे बाह्वोस्तु मंथनम् ॥
अप्राकृतत्वसिद्ध्यर्थमाविर्भावो हरेस्तनौ ॥ ११७ ॥

**त० प्र०—** बाहुमथने हेतुमाह ॥ **क्षत्रियत्वेति** ॥ हृदयादिमथने नारायण-वत्स्वातंत्र्येणाऽवतारे धर्मरक्षासंभवेऽप्यक्षत्रियत्वेन तद्वंशारक्षा स्यादिति तत्सि-द्ध्यर्थं क्षात्रधर्माधारबाहुमथनमित्यर्थः ॥ तुशब्देन पूर्ववत्सदोषत्वं व्यावृत्तम् ॥ ननु बाह्वोर्मथने को हेतुस्तत्राह ॥ **काम इति** ॥ कामप्रकरणे सतीत्यर्थः॥ कामस्य मिथुनसाध्यत्वादिति भावः ॥ अथवा काम इति निमित्तसप्तमी ॥ तथा च काम-निमित्तं स्वकामसिध्यर्थमित्यर्थः ॥ राज्ञां बाहुभ्यामेव कामपूरणमिति तथा ॥ तर्हि लोकरक्षायै तत्पुत्रमात्रापेक्षायां भगवत्प्रादुर्भावे को हेतुः ॥ तस्याश्च तावतैव संभवादित्यत आह ॥ **अप्राकृतत्वेति** ॥ प्राकृतराजगुणत्वेनैतैर्मत्पिता व्यापादित इति ज्ञात्वा प्रजासु द्वेषमेव कुर्यादिति नेष्टसिद्धिः स्यात् ॥ अतस्तदभावाय पृथो-स्तनौ हरेराविर्भाव इत्यर्थः ॥ एवं चाऽप्राकृतगुणवत्वेन सर्वेष्टसिद्धिरिति भावः॥११७॥

**त० दी०—** कृत्युक्तिभ्यां गुणोद्रेको वारणं च गुणाय हि ॥
कामपूरणसंबंधात्प्रसादोऽन्यत्र कीर्तितः ॥
भविष्यमुक्तं बोधाय श्लाघशेषत्वमन्ययोः ॥ ११८ ॥

**त० प्र०—** अभिषेकसंबंधिकृतिऋष्युक्त्योः प्रयोजनमाह ॥ **कृतीति** ॥ उद्रेकः सहजानामेव राज्यगुणानां तत्कृत्या वाचा चाऽऽधिक्यं जातमित्यर्थः ॥ पृथु-कृतसूतादिवारणं च तथा ॥ क्षुद्रो हि समक्षं स्तावयति ॥ महाँस्तु लज्जत इति भगवदावेशात्तथात्वं युक्तमिति हिशब्देनाऽऽह ॥ ननु स्वस्मिन्कृपया रक्षार्थमावि-र्भावमनुक्त्वा लोकेष्वेव तन्निरूपणं मुनिभिः सूतादिभिर्वा कुत इत्यत आह ॥

र्थश्च ॥ अध्यायार्थमप्यनुवदन् दोषस्याऽसाधारणं कार्यमाह ॥ अधर्मेति ॥ ननु न यष्टव्यमित्यादिना धर्मबाध एवोक्तो न त्वधर्मोपीत्यत आह ॥ धर्माभाव इति ॥ धर्मेणैव हि धर्मरक्षा तदभावे तथात्वं युक्तमेवेत्युपपत्तिं हिशब्देनाह ॥ ११३ ॥

त० दी०— उपद्रवो धर्महानिस्तस्माद्भयमभून्महत् ॥
आधिक्यदोषाभावाय स्वकृतत्वान्निवारणम् ॥ ११४ ॥

त० प्र०— तेन लौकिकालौकिकनाशो जात इत्याह ॥ उपद्रव इति ॥ तस्मादधर्मस्थापनादित्यर्थः ॥ अराजकदशातोप्यऽधिकमितिज्ञापनाय महदिति ॥ तस्याऽऽधिक्ये लोकानामंतःकरणनिष्ठोऽपि धर्मो गच्छेदिति तदभावाय निवारणवाक्यानि मुनीनामित्याह ॥ आधिक्येति ॥ ननु मुनीनां सर्वज्ञत्वेन तदाग्रहस्यापि ज्ञानात्कुतो निवारणे प्रवृत्तिरित्यत आह ॥ स्वकृतत्वादिति ॥ वेनराजस्य स्वकृतत्वात् "कर्तुः शास्तुरनुज्ञातुः" इति न्यायेन तद्दोषः स्वस्मिन्नप्याऽऽगच्छेत्तद्वारणे स दोषो गच्छतीति तथा करणमित्यर्थः ॥ ११४ ॥

त० दी०— अधर्मकरणायैव च्छलवाक्यपरिग्रहः ॥
अयमेव हि पाषंडो लेशेनाऽखिलबाधनम् ॥ ११५ ॥

त० प्र०— ननु "नराणां च नरेंद्रोहम्" ॥ "यदसौ लोकपालानां बिभर्त्योजः स्वतेजसा" इत्यादिवाक्यसंमत्या वेनोक्तो धर्म एवेत्यत आह ॥ अधर्मेति ॥ विप्रैस्तु देवाहेलनमुपदिष्टम् ॥ धर्मरक्षार्थं तस्मिँस्तत्सांनिध्यार्थं च ॥ स तु सर्वेषां मय्येव सत्त्वान्मद्यागेनैव तत्संमाननं भविष्यतीत्यधर्मशाखारूपेण छलेनाऽधर्मकरणार्थमेव तद्वाक्यं परिगृहीतवानित्यर्थः ॥ विभूतिस्थवाक्यं चेत्यादिधर्मकरणेनाऽऽविष्टैश्वर्यांशपरम् ॥ अत एवेंद्रपदम् ॥ तेन तत्संमतिरिति भावः ॥ अस्तु वाऽभिषेकमात्रेणैव देवसांनिध्यं तथापि तदुक्तस्त्वधर्म एवेति वक्तुमधर्मलक्षणमाह॥अयमिति॥ यथा "न हिंस्यात्सर्वभूतानि" इतिश्रुतिलेशेनाऽखिलश्रुतिकर्मकांडस्य बाधनं कृत्वा क्रियमाणधर्मस्याऽपि पाखंडत्वमेव बाह्यानाम् ॥ तथा देवतेजोलेशेन स्वनिष्ठेनाऽखिलतद्बाधनमित्यस्याऽपि पाषंडत्वादधर्मत्वमेवेत्यर्थः ॥ ११५ ॥

त० दी०— यथा पूर्वस्य करणान्मारणेऽपि न दूषणम् ॥
मथनं ज्ञानतो युक्तमदोषायाऽधमांगके ॥ ११६ ॥

त० प्र०— राजहननस्य दोषावहत्वमाशंक्याह ॥ यथा पूर्वस्येति ॥ "स एष जीवन् खलु संपरेतः" इति वाक्याद्धननात्पूर्वमपि तस्य जीवन्मृतत्वादृषीणां तथा

निष्कामत्वादागमनमुत्तमत्वाद्धरेः स्वकैः ॥
तस्मात्सर्वगुणोद्भेदस्तेन सर्वोत्तमो मखः ॥ १२१ ॥

त० प्र०— ननु "ततः सप्तम आकूत्यां रुचेर्यज्ञोऽभ्यजायत" इति वाक्यात्कलावतारत्वेनाऽस्येंद्रस्य विघ्नकरणमयुक्तमित्यत आह ॥ पूर्ण इति ॥ इंद्रत्वे हि द्वयं प्रयोजकं शताश्वमेधित्वं सकामत्वं च ॥ अत्र सकामत्वाभावेपि शतसंख्याके पूर्णे तस्मिन् जाते पक्षे इंद्रत्वमधुनैव भवेत्तच्च विरुद्धमिति पाक्षिकोऽपि दोषः परिहरणीय इतिन्यायाद्यज्ञनाम्नेंद्रेणाऽश्वहरणरूपं निवारणं कृतमित्यर्थः ॥ सत्येवकभगवदागमने हेतुं वदन् पक्षे सिद्धिमेव साधयति ॥ निष्कामत्वादिति ॥ उत्तमत्वाद्भक्तत्वादित्यर्थः ॥ तथा च निष्कामत्वाद्धरेरागमनमुत्तमत्वात्स्वकैः सहेति योजना ॥ सर्वेषां भगवद्गुणानामैश्वर्यादीनां सर्वेषां ब्रह्मादीनां राजसतामससात्त्विकैस्तन्मिश्रनिर्गुणानां भक्तानां च गुणानामुद्भेदः प्राकट्यं यत्रेति तथा ॥ एतेनेंद्रत्वस्य च कर्मफलत्वेन कर्मणस्तुल्यत्वेन च स्वस्य च प्राप्तफलत्वात्स्वोपमर्दकत्वशंकाकर्षमिंद्रस्येति निरस्तम् ॥ उक्तरीत्या अतुल्यकर्मत्वादिति भावः ॥ १२१ ॥

त० दी०— राज्यस्य दोषरूपत्वात्सिद्धे धर्मे महेंद्रताम् ॥
इच्छेदिति हि पापंडाः सृष्टा यैर्नाशिते मखे ॥ १२२ ॥
लोके पापप्रवृद्ध्यापि राजा स्वर्गं न गच्छति ॥
इति बुद्ध्या तथा चक्रे द्वेषेण सुतरां तथा ॥
चित्ताशुद्धिर्दृढा तस्मादतो ब्रह्मनिवारणम् ॥ १२३ ॥

त० प्र०— नन्वस्त्वेवं तथापि धर्मरक्षकत्वेन तस्य तन्नाशकपापंडप्रचारणं वेषधारणेन कुत इत्यत आह ॥ सिद्धे धर्म इति ॥ यथा कथंचिच्च ब्राह्मणवाक्यैरश्वमेधासिद्धावपि तद्धर्मे सिद्धे तथात्वमिच्छेच्चेत्तदापि स दोष इति पापंडाः सृष्टा इत्यर्थः ॥ ननूक्तं निष्कामत्वमतोऽतिशुद्धांतःकरणे कथं तदिच्छाशंकेत्यत आह ॥ राज्यस्येति ॥ एकदोषसत्त्वेन योग्यता निरूपिता तेनाऽग्रिमदोषोत्पत्तिशंकेति भावः॥ ततः किमत आह ॥ यैरिति ॥ यैः पापंडैरुत्पन्नैरेव मखनाशे सति कारणाभावादेव राजा स्वर्गं न गच्छति ॥ पश्चात्प्रचारे लोके पापवृद्धौ तत्पापस्य राज्ञि संक्रमणेनाऽपि तथेतिप्रकारिकया बुद्ध्या तथाऽकरोत् ॥ ननु मुहुः प्राचुर्यकरणे को हेतुस्तत्राह ॥ द्वेषेणेति ॥ वारद्वयकरणेऽप्यनिवृत्तौ यागस्य मत्स्थानमेव जिघृक्षतीति ज्ञानेन द्वेषे जाते तेन सुतरां पापंडप्रवृत्तिं कृतवानित्यर्थः ॥ अत एव

**कामेति** ॥ कामपूरणलक्षणः संबंधो लोकेष्वेवेति तेष्वेवाऽनुरंजनादिरूपः प्रसाद उक्त इत्यर्थः ॥ मुनीनां स्वतोऽकथनेऽप्ययमेव हेतुरिति ज्ञेयम् ॥ बोधाय आवेशो- द्बोधायेत्यर्थः ॥ दोहनादिभविष्यस्याऽऽविष्टकार्यत्वादिति भावः ॥ इदमेव हिशब्देन सूच्यते ॥ ननु सूतस्य पौराणज्ञानवत्वेन भविष्यज्ञानं युक्तं न तु मागधवंदिनो- रित्यत आह ॥ **आद्येति** ॥ आद्यः सूतः ॥ शेषत्वमुपजीवकत्वं तत्पश्चाद्भावेन कथकत्वमिति यावत् ॥ अन्ययोर्मागधवंदिनोः ॥ ११८ ॥

त० दी०— अलौकिके हि संप्रश्नो ज्ञात्वैष्यं तत्तथाऽकरोत् ॥
आविष्टकृतिरेषा हि सर्वमेतेन सिध्यति ॥ ११९ ॥

त० प्र०— ननु पृथुचरित्रस्य पूर्वमेवोपक्रांतत्वान्मैत्रेयस्याऽतूर्ष्णींभावेपि मध्ये विदुरप्रश्नोऽयुक्तइत्याशंक्योपक्रांतत्वेपि विदुरस्य वैष्णवत्वेनाऽलौकिकाविष्टभगवच्चरि- त्रस्यैव मुख्यतया श्रोतव्यत्वेन को वेद मैत्रेयः सामान्यचरित्रमेव वदेदित्याशंकया विशेषप्रश्न इत्याशंक्याह ॥ ॥ *अलौकिक इति* ॥ ननु देवत्वेन स्त्रीत्वेन सर्वो- पजीव्यत्वेन च भुवो मारणोद्योगो न युक्त इत्यत आह ॥ **ज्ञात्वेति** ॥ एवं कृते भयेन गोरूपधारणे सर्वं कार्यं भविष्यतीति सर्वमागामि ज्ञात्वा तत्कामपूरणं प्रजानां तथा शरसंधानेनाऽकरोदित्यर्थः ॥ तथा कृतिसामर्थ्ये उपपत्तिमाह ॥ **आविष्टेति** ॥ ननु ऋष्यादीनां तथा सामर्थ्यं कथं तत्रावेशाभावादित्यत आह ॥ **सर्वमिति** ॥ अनेनैवावेशेनेत्यर्थः ॥ अत एव मूले पृथुभावितामित्युक्तम् ॥ ११९ ॥

त० दी०— स्वकाम्यानां हि सर्वेषां शुद्धिराद्या तदुद्भवे ॥
अश्वमेधान्न चाऽन्यद्धि शतान्नाऽस्त्यधिका कृतिः ॥ १२० ॥

त० प्र०— एवं सर्वकामपूरणप्रकरणं निरूप्य स्वकामसाधनप्रकरणं विचारयँ- स्तत्र प्रथमतोऽश्वमेधस्य तत्रापि शतावधिकस्य करणे को हेतुरित्याशंक्य तत्र हेतुमाह ॥ **स्वकाम्यानामिति** ॥ स्वकाम्यानां सर्वेषां पदार्थानां मध्ये आद्या प्रथमतः कामविषया शुद्धिरित्यर्थः ॥ शुद्धो हि यत्करोति तत्सिध्यति ॥ अतस्त- त्सिद्ध्यर्थं किं कार्यमित्यपेक्षायां सर्वस्य वा एषा प्रायश्चित्तिः ॥ "सर्वस्य भेषजम्" इतिश्रुतेः ॥ कामसाधनशुद्ध्युद्भवे त्वश्वमेधादन्यत्साधनं कर्म न संभवतीत्यश्वमेध- करणमिति शेषः ॥ शुद्ध्यर्थमश्वमेधानां शतादधिका कृतिर्नाऽपेक्षितास्तीति ता- वत्करणमित्यर्थः ॥ १२० ॥

त० दी०— पूर्णे पाक्षिकदोषत्वाद्यत्नेन विनिवारणम् ॥

मपि ॥ अशेषोक्तौ त्वग्रिमज्ञानोपदेशवैयर्थ्यापातादधुनैव च मुक्तिसंभवादितरकार्यासिद्धिः स्यादिति मितं प्राह ॥ यावत्कर्मासक्तिनिवारणोपयोगि तावदेवेत्यर्थः ॥ कर्मणां विहितत्वेन तदासक्तिनिवारणमस्याऽहितमित्याशंकाभ्युदासाय हितपदम् ॥ तेन पुष्टिमार्गेऽस्य प्रवेशनं सूचितम् ॥ अत एव यागविघ्नोपीति भावः ॥ १२५ ॥

त० दी०—वैमनस्यनिवृत्त्यर्थं संधानं छंदनं वरे ॥
शुद्धिसीमाविबुध्यर्थं स्तोत्रं तस्यास्तु बोधकम् ॥ १२६ ॥

त० प्र०—ननु वाक्यैरेव द्वेषहेत्वपगमे पुनरिंद्रेण सह संधानं व्यर्थमित्यत आह ॥ वैमनस्येति ॥ द्वेषाभावेपि मनसोऽमेलनेन प्रीत्यभावे कालांतरे पुनरुद्गतः स्यादिति तन्निवृत्त्यर्थमुभयोः संधानमित्यर्थः ॥ ननु भगवतस्तद्धृदयज्ञत्वेऽपि "वरं च, मत्कंचन" इति वचनं कुत इत्यत आह ॥ छंदनमिति ॥ शुद्धेरंतःकरणशुद्धेर्या सीमा मर्यादा कियती शुद्धिः संपन्ना संपूर्णा न वेति यावत् ॥ तद्बोधनार्थमन्येषां लीलया स्वस्य च वरे छंदनमुक्तमित्यर्थः ॥ अत एव तस्याः शुद्धेर्बोधकं स्तोत्रमग्रे निरूपितमित्याह॥स्तोत्रमिति ॥ तुनाऽल्पशुद्धिबोधनपक्षो व्यावृत्तः॥२६॥

त० दी०—अत एव वरो दत्तो भक्तिराशंसितं तु यत् ॥
राज्यभोगादिसिध्यर्थं मर्यादापालनाय च ॥ १२७ ॥

त० प्र०—अत एवेति यतः कारणात्तद्योग्या शुद्धिर्ज्ञाताऽतो भक्तिलक्षणो वरो दत्त इत्यर्थः ॥ अन्यच्च यदाशंसितं पृथोः स्वस्य च तदपि दत्तम् ॥ शुद्धांतःकरणस्य प्राप्तभक्तेरन्यदानमनुचितमित्याशंक्य तत्र हेतुमाह ॥ राज्येति ॥ केवलभक्तिदाने राज्यभोगमेव न कुर्यात्तस्याश्च स्वतंत्रत्वान्मर्यादां च न पालयेत्तथाचाऽवतारवैयर्थ्यं स्यादिति भावः ॥ १२७ ॥

त० दी०—सत्संगे सर्वविज्ञाने त्यागसाधनसेवया ॥
अतिनिष्ठां गतस्यैव भक्तिर्भवति नाऽन्यथा ॥
अत एवाऽतिसौभाग्यवर्णनं तत्परस्य हि ॥ १२८ ॥

त० प्र०—नन्वावेशेन मर्यादापालनादिकं सेत्स्यत्यावेशवता च भक्तिरित्युभयसंभवे कुतो न तथेत्याशंक्य भक्तेर्दुर्लभत्वं वक्तुं तत्साधनान्याह ॥ सत्संग इति ॥ पूर्वं सत्संगे जाते तदुपदेशेन सर्वतत्त्वविज्ञाने च जाते त्यागसाधनानां फलाननुसंधानेन कृतयथोक्तकर्मणां ब्रह्मसात्करणदोषदर्शनपूर्वकं विषयानासक्तिप्रभृतीनां

१ बोधार्थं ।

पृथोश्चित्ताशुद्धिर्जाता ॥ तस्मिन्द्वेषरूपा मारणावधिका ॥ ब्रह्मसंधानेप्यगमनाद्दृढा ॥ अत इति ॥ यतश्चित्तशुद्धिनिमित्तं क्रियमाणे यागे पूर्वरीत्योत्तरोत्तरं चित्ताशुद्धिरेवाऽतो ब्रह्मणा यागस्य निवारणं कृतमित्यर्थः ॥ १२२ ॥ १२३ ॥

त० दी०— ब्राह्मणानां वधोद्योगो मखरक्षार्थमेव हि ॥
पश्चात्सिद्धिर्ब्रह्मवाक्यादेकन्यूनेऽपि सांगता ॥
शंकयैव न पूर्णत्वमनुज्ञातं शुचिस्ततः ॥ १२४ ॥

त० प्र०— ननु ब्राह्मणानामपि सर्वज्ञत्वाद्ब्रह्मवत्त्वत एव निवारणं युक्तम् ॥ तत्कथं वधोद्योग इत्यत आह ॥ ब्राह्मणानामिति ॥ मखनाशकामूलकपापंडमूलत्वादस्य वधे समूलकपापंडनाशेन मखरक्षा भविष्यतीति तथा ॥ एवकारेण पृथुवदेतेषामपि चित्ताशुद्ध्या द्वेषेण तथा कृतिशंका निवारिता ॥ तत्संपादकत्वात्तद्रक्षणं युक्तमिति हिशब्दार्थः ॥ ननु तदमारणात्पापंडानामुत्पत्त्या च पूर्वकृतानामपि यज्ञानां सर्वथा नाश इत्यत आह ॥ ॥ पश्चादिति ॥ क्रतुविरामानंतरं वाक्यांगीकारानंतरं वा ॥ तत्र हेतुः ॥ ब्रह्मेति ॥ "पृथुकीर्तेः पृथोर्भूयात्तर्ह्येकोनशतक्रतुः" इति वाक्याद्यज्ञानां सिद्धिरित्यर्थः ॥ एवमपि शताश्वमेधदीक्षाया अपूर्णत्वेन निरंगत्वान्न तैः फलमित्यत आह ॥ एक इति ॥ ब्रह्मवाक्यादित्युभयत्राऽनुपज्यते ॥ तथा च "माऽस्मिन्महाराज कृथाः स्म चिन्ताम्" इति ब्रह्मवाक्यादेकन्यूनेऽप्येकोनाश्वमेधशते सांगतेत्यर्थः ॥ ननु सांगतानुज्ञानवच्छतपूर्तिरेव कुतो नोक्तेत्यत आह ॥ शंकयेति ॥ स तथा सति तस्मिन्निंद्रे दोषदृष्टित्वादयं स्वयमेवेंद्रो भवेदिति शंकयेत्यर्थः ॥ अध्यायार्थमुपसंहरन् फलितमाह ॥ शुचिरिति ॥ १२४ ॥

त० दी०— तत्रैवाऽऽसक्तचित्तस्य न मनः शांतिमृच्छति ॥
इति कृष्णः स्वयं प्राह युक्तिपूर्वं हि तं मितम् ॥ १२५ ॥

त० प्र०— अग्रिमाध्यायार्थं विचारयन् भगवदुक्तौ हेतुभूतं भगवत्तात्पर्यमाह ॥ तत्रेति ॥ ब्रह्मणा कृतेपि संधाने द्वेषागमने कर्मासक्तेरेव प्रयोजकत्वात्कर्मणां च स्वतः कार्यतश्च क्षोभजनकत्वाच्छांत्यभावेऽग्रिमज्ञानानधिकारः स्यादिति तन्निवृत्त्यर्थं युक्तिपूर्वकं प्राहेत्यर्थः ॥ फलरूपेणैव साधनासक्तिर्निवारयितुं शक्येति ज्ञापनाय कृष्णपदम् ॥ अत एव यज्ञनिवारणादग्रे ज्ञानोपदेशवचान्येनैव न बोधन-

१ इत्यमेव सर्वत्रपाठ । २ नाऽग्रिमज्ञानाधिकार. ।

संमतिसिद्ध्यर्थं तेषामृषीणां प्रत्युत्तरं पृथुं प्रतीत्यर्थः ॥ तत्र हेतुः ॥ मतमिति ॥ यतः सर्वेषामृष्युत्तरं मतं संमतमित्यर्थः ॥ १३० ॥

त० दी०— कामप्रकरणाद्ज्ञाने मार्गभक्तिप्रसिद्धये ॥
अनुदंडान् ज्ञानसिद्धान् सनकादीन् ददर्श सः ॥ १३१ ॥

त० प्र०— ननु प्रचेतसामिव मोक्षसाधनत्वेन भक्त्युपदेष्टृनारदादेरेव कथमस्यापि न संग इत्यत आह ॥ कामप्रकरणादिति ॥ कामप्रकरणाद्ज्ञानसिद्धान् सनकादीन् ददर्शेति संबंधः ॥ प्रयोजनमाह ॥ ज्ञान इति ॥ ज्ञाननिमित्तमित्यर्थः॥ मार्गरूपा इष्टार्थप्रापिका साधनरूपेति यावत् ॥ तादृश्या भक्तेः प्रकर्षेण सिद्धय इत्यर्थः ॥ ज्ञानसाधनेनैव भक्तिकथने हेतुभूतं विशेषणमाह ॥ अनुदंडानिति ॥ यद्वा ॥ ननूपदेशमात्रेणैव रहूगणवदस्यापि कथं न भक्तिज्ञाने जाते इत्यत आह ॥ अनतिमंत इत्यर्थः ॥ तत्र हेतुः, ज्ञानसिद्धानिति ॥ ज्ञानेनैव सिद्धा न तु भक्त्या ॥ तथा सति तथैव स्यादित्यर्थः ॥ १३१ ॥

त० दी०— इयं रीतिर्ज्ञानमार्गे कृतिश्चैवं न चाऽन्यथा ॥
अत एव पुनस्तस्य पूर्ववत्सर्ववर्णनम् ॥ १३२ ॥

त० प्र०—नन्वात्मारामेषु पूजावत्कुशलप्रश्नोपि युक्तः स कुतो न कृत इत्यत आह॥ इयं रीतिरिति ॥ ननु सर्वनिवेदनस्य भक्तिमार्गीयस्याऽग्रे प्राणा दारा इत्यादिना कथं करणमत आह ॥ कृतिश्चेति ॥ निवेदनलक्षणा कृतिरप्येवमेव ज्ञानमार्गीयैवेत्यर्थः ॥ एतद्ज्ञापकमाह ॥ अत एवेति ॥ यदि भक्तिमार्गानुसारेण निवेदनं स्यात्पुनः स्वोपयोगो न स्यात्तदैव त्यागोपि स्यादिति भावः ॥ १३२ ॥

त० दी०— प्रसादख्यापकं ह्येतन्मार्गे हेतुपरंपरा ॥
मुमुक्षुत्वान्न परमा कार्यार्थं तस्य चोद्गमः ॥ १३३ ॥

त० प्र०— प्रकरणार्थोऽप्यत एव संगच्छत इत्यभिप्रायेण सर्वत्रर्णनस्य तात्पर्यांतरमाह ॥ प्रसादेति ॥ उपदेशानंतरं विषयभोगः—तस्य चाऽप्रतिबंधकत्वमेव तदुभयमपि भगवत्प्रसादं विना न भवतीति तद्वर्णनेन स एव ख्याप्यते ॥ अन्यथोपदेशादिनैव ज्ञानादिरूपकामसिद्धौ न भगवतैव कामसिद्धिरिति ॥ यद्वा ॥ ननु कर्मणां ब्रह्मसात्करणापेक्षया च भक्त्यर्थं तत्करणं युक्तम् ॥ आत्मस्थित्यपेक्षया भगवत्कीर्तनादिकमेव युक्तमधिकरसत्वात् ॥ अनासक्त्यपेक्षया च भगवति निवेद-

१ महतः । २ दिति भावः ।

सेवया निरंतरकरणेन वैराग्ये जातेऽपि भगवदाज्ञापरिपालनाय तदधीनतया सर्व-करणेनाऽतिशयितां निष्ठां प्राप्तस्यैव भक्तिर्भवतीत्यर्थः ॥ "राजन्मयि भक्तिरस्तु ते" इतिभगवद्वाक्येऽप्येतदेव तात्पर्यविषय इति ज्ञेयम् ॥ नचैवं वरस्याऽप्रयोजकत्वं साधनसंपत्तावपि तदनुग्रहमंतरेण भक्त्यनुत्पत्तेः ॥ न चाऽऽवश्यकत्वाल्लाघवाच्चाऽनु-ग्रह एवाऽस्तु कृतं साधनैरिति वाच्यम् ॥ तेषां स्वरूपयोग्यतासंपादकत्वात् ॥ दृश्यते हि सहकारियोग्यतायां सत्यामपि स्वरूपयोग्यताभावे कार्यानुत्पत्तिः शिलाशकलादिषु ॥ तस्यामपि सत्यां तदभावे कार्याभावः कुसूलस्थव्रीहिषु ॥ ननु नेतरसापेक्षतानुग्रह इति चेत्सत्यम् ॥ भगवानेव भक्तिदित्सायां तादृशीं स्वरूपयोग्यार्थं योग्यतां संपाद्य तादृशानुग्रहं करोति ॥ अत एव "यमूर्ध्वं निनीषति" इत्यादि-श्रुतिः ॥ किंच ॥ भगवत्यपि वरेणैव सर्वं यदि भगवदिच्छा तथा स्यादत्र च कार्यादेव न तथेच्छेति ज्ञायत इति वक्तुं कार्यमेवाह ॥ **अत एवेति** ॥ तत्परस्य भक्तिपरस्येत्यर्थः ॥ भगवद्दत्तत्वाद्युक्तमिति हिशब्दः ॥ १२८ ॥

**त० दी०— भोगाय धर्मस्त्रेधा हि यज्ञरक्षोपदेशनैः ॥**
**मध्यमः सिद्ध एवास्ति तथाऽऽद्यस्यानुवर्णनम् ॥ १२९ ॥**

त० प्र०—वर्णनप्रयोजनमाह ॥ **भोगायेति** ॥ भगवता दत्तत्वाद्भोगोऽस्य जात इति ज्ञापनायेत्यर्थः ॥ स्वधर्माध्यायं विचारयन् प्रथमतस्तदुद्देशपूर्वं भेदानाह ॥ **धर्म-इति** ॥ रक्षाया विशेषत अनिरूपणे हेतुमाह ॥ **मध्यम इति** ॥ ननु यज्ञस्याऽपि पूर्वमेव सिद्धत्वात्कथं पुनर्निरूपणमत आह ॥ **तथेति** ॥ तथाभूतस्य पूर्वसिद्ध-स्याप्याद्यस्य यज्ञस्य मध्ये पाषंडप्रचारेणाऽस्मिन् यज्ञाभावशंकाव्युदासायाऽनुवर्त-मानत्वेन वर्णनमित्यर्थः ॥ १२९ ॥

**त० दी०— पाषंडमतिनाशाय बोधनं बहुधोक्तिभिः ॥**
**सर्वसंमतिसिद्ध्यर्थं तेषां प्रत्युत्तरं मतम् ॥ १३० ॥**

त० प्र०— ननु तत्प्रजाभर्तृपिंडार्थमिति श्लोकेनैवोपदेशसिद्धेर्बहुधोक्तौ किं प्रयो-जनमत आह ॥ **पाषंडेति** ॥ **सर्वसंमतीति** ॥ येषामेव पाषंडमोहस्तेषामेव पृथु-वचने वैसंमत्यात्सर्वेषां संमतिसिद्धौ सिद्धस्तदमोह इति सर्वसंमतेः सिद्ध्यर्थं तेषां तदित्यर्थः ॥ यद्वा लोकाः साधारणा हि ऋषिवाक्यमेव प्रमाणत्वेन मन्यंते अतः पृथुवचनेपि ऋषिसंमतिं विना न विश्वासः ॥ तथा च सर्वेषां लोकानां पृथुवाक्ये

१ नैव संमत्या सर्वेषां ।

णत्वेनेति ॥ भक्तिं विना मोक्षाभावात्तत्कारणत्वेन प्रकटा जातेत्यर्थः ॥ साधन-रूपतायामपि भक्तेः फलरूपता न क्षतेति तत्समुच्चयार्थश्चः ॥ १३४ ॥

त० दी०— वैराग्यज्ञानमुत्पाद्य तदविद्यां निवार्य च ॥
योगेन भक्त्वा लिंगं च सद्वैकुंठेऽनयत्पृथुम् ॥ १३५ ॥

त० प्र०— नन्वाऽऽवश्यकत्वाल्लाघवाच्च भक्त्यैव मुक्तिरिति कुतो नोच्यते ॥ तथा च सति "तस्याऽनया" इत्यादिना ज्ञानयोगकथनं व्यर्थमित्याशंक्य भक्तेः कल्पतरुस्वभावत्वाद्ज्ञानेनैव मोक्ष इति ज्ञानतो ज्ञानमुत्पाद्य मुक्तिं ददातीतिसि-द्धांताभिप्रायं मूलमित्यभिप्रायवानाह ॥ वैराग्येति ॥ सत् ब्रह्म तदात्मके व्यापि-वैकुंठ इत्यर्थः ॥ भक्तिरिति शेषः ॥ चकाराद्विद्यामपि ॥ १३५ ॥

त० दी०— योगेनोद्घाटितस्तस्य तस्यास्तु क्रमतोऽभवत् ॥
अनभिप्रेतरूपत्वात्फलमस्योच्यते बहु ॥
असंगतिनिवृत्त्यर्थं भक्तिश्चाऽप्यस्य वै फलम् ॥ १३६ ॥

त० प्र०— एतदर्थं वैकुंठावरकमायोद्घाटने हेतुमाह ॥ योगेनेति ॥ तत्प-त्न्यास्तु पातिव्रत्यधर्मनिष्ठया पूर्वं पतिलोकं गतायास्तत्र निरंतरं तद्भावनया तस्य च वैकुंठगतत्वेन क्रमेण वैकुंठ उद्घाटितोऽभवदित्याह ॥ तस्यास्त्विति ॥ नन्वस्य शास्त्रस्य भक्तिफलकत्वादन्येषां फलत्वेन कथनं न युक्तमित्यत आह ॥ अनभि-प्रेतेति ॥ स्वतंत्रफलत्वेन भक्तेरनिरूपणेनाऽस्य प्रकरणस्याऽनभिप्रेतरूपत्वम् ॥ तथा च "मग्नश्चेत्पातालं विशेत्" इतिन्यायेन सर्वमेव फलत्वेन वक्तुं युक्तमित्य-भिप्रायेण तथोक्तिरित्यर्थः ॥ एवमस्य प्रकरणस्यैतच्छास्त्रासंगतिरित्याशंक्य तन्निवृ-त्त्यर्थं भक्तिरपि फलत्वेनोक्ता ॥ तथा चैकफलत्वेन शास्त्रसंगतिरिति भावः ॥ पू-र्वसमुच्चयार्थश्चः ॥ तथाऽपि न स्वतंत्रपुरुषार्थत्वेन कथनमिति ज्ञापनायाऽपिः ॥ "भवसिंधुपोतपादे" इतिमूलवाक्यादिति भावः ॥ फलनिरूपणेन प्रकरणसमाप्तिः सूचिता ॥ १३६ ॥

त० दी०— अन्यार्थं कामकथनान्नाऽत्र प्रश्नः पुरेव सः ॥
अष्टभिर्मोक्षकथनं स द्वेधेति पुरोदितम् ॥ १३७ ॥

त० प्र०— अतः परं मोक्षप्रकरणं विचारयति ॥ तत्र विदुरस्य पुनः प्रश्नाभावे हेतुमाह ॥ अन्यार्थमिति ॥ कामादन्यो मोक्षस्तत्कथनार्थमेव कामप्रकरणकथ-नात्तद्दुपपादितम् ॥ मोक्षप्रकरणार्थाय प्रक्रियेयमित्यत्र तत्प्रकरणप्रश्नश्च "के ते"

नस्याऽधिकत्वेन तदेव कुतो न कृतमित्यत आह ॥ इयं रीतिरिति ॥ ज्ञानमार्गीयत्वादस्य तन्मार्गरीतिरूपैवाऽऽत्मच्छित्त्यादिः कृता ॥ प्रकरणार्थोऽसंगत एव स्यादिति तत्ख्यापकं वर्णनं युक्तमिति हिशब्दार्थः ॥ भोगं कुर्वाणस्यैव "वैन्यस्तु धुर्यो महताम्" इत्यादिनोक्तज्ञानहेतुपरंपरापि प्रसादख्यापिकैवेत्याह ॥ मार्ग इति ॥ ज्ञानमार्ग इत्यर्थः ॥ ननु भगवत्प्रसादयुक्तस्य साधनपरंपरायां प्रेमभक्तिः कुतो नोक्तेत्यत आह ॥ मुमुक्षुत्वादिति ॥ ननु भगवत्कलावतारस्य कथं मुमुक्षेत्यत आह ॥ कार्यार्थमिति ॥ तस्य भगवदंशस्य भूदोहनधर्मप्रजापालनादिकार्यार्थमुद्गमः प्राकट्यमित्यर्थः ॥ तथैव लक्ष्म्यास्तत्पोषकत्वेन तत्पत्न्यामाविर्भाव इति तत्समुच्चयार्थश्चकारः ॥ एतेन कार्यस्य संपन्नत्वाद्भगवदंशतिरोधानं सूचितम् ॥ अत एव मूले "यदर्थमिह जज्ञिवान्" इत्युक्तमतः परं केवलजीवत्वाद्युक्ता सेति भावः ॥ यद्वा ॥ ननु स्तुतौ "न कामये नाथ तदप्यहम्" इति वाक्यं कथमुक्तमित्याशंक्य तदा भगवदावेशेन सान्निध्येन च तत्क्षणं भक्तिरसप्रादुर्भावात्तथोक्तम् ॥ तस्य चोक्तकार्यार्थमेवाऽऽवेशात्सपदि च कार्यस्य संपन्नत्वादावेशाभावान्मुमुक्षा युक्तेत्यभिप्रायेणाऽऽह ॥ कार्यार्थमिति ॥ यद्वा ॥ उक्तशंकायामेव भगवदावेशस्य धर्मादिपालनार्थमेव प्राकट्यं न त्वस्मिन् भक्तिमार्गं प्रचारयितुमिति हेतोर्भगवदावेशे सत्यपि युक्ता मुमुक्षा भगवदिच्छाया बलिष्ठत्वादिति भावेनाऽऽह ॥ कार्यार्थमिति ॥ यद्वा ॥ कार्यार्थं ज्ञानार्थं तस्य पृथोश्चकारात्तत्पत्न्या उद्गमो गृहान्निर्गम इत्यर्थः ॥ त्यागस्य ज्ञानांगत्वादिति भावः ॥ १३३ ॥

त० दी०— रूपं तदेव स रसो बहुकालं न सेवितः ॥
अतः स्वतंत्रा सा नाऽभूत्कारणत्वेन चोद्गता ॥ १३४ ॥

त० प्र०— ननु पुरुषोत्तमभक्तेर्ज्ञानाद्यपेक्षयाऽधिकत्वादत्र च ज्ञानाद्यपेक्षाकथनाद्रूपांतरेऽतर्याम्यादौ भजनं भविष्यतीत्याशंक्याह ॥ रूपं तदेवेति ॥ पुरुषोत्तमरूपमेवेत्यर्थः ॥ अत एव "आरिराधयिषुः कृष्णम्" इत्युक्तं मूल इति भावः ॥ तर्हि कथं ज्ञानाद्यपेक्षेत्यत आह ॥ स रस इति ॥ स प्रसिद्धः पुरुषोत्तमो बहुकालं न सेवितो यतः—अतस्तादृशभजनं विना रसानाविर्भावान्मुख्यभक्तिरसोऽपि न सेवितः ॥ अतो ज्ञानसाधनत्वेनैवाऽस्य भानात्फलरूपा ज्ञानादिनिरपेक्षतया फलदानसमर्था या भक्तिर्नाऽभूदित्यर्थः ॥ तर्हि भक्तेः किं प्रयोजनमित्यत आह ॥ कार-

त० दी०—अन्योन्यस्योपकारित्वबोधनार्थं तथा वचः ॥
साधनं च प्रसादश्च फलं चेति त्रयं परे ॥ १४० ॥

त० प्र०— ननु प्रथमाध्यायोऽपि तस्यैव भवितुमर्हति प्रचेतसां तपोनिरूपणं तु तदाज्ञानिरूपणार्थं "पित्रादिष्टाः" इतिवाक्यात् ॥ उपदेशनिरूपणं तु "यदुक्तं पथि दृष्टेन" इत्युक्ते विदुरेण प्रश्ने कृते तदुत्तरत्वेन कृतम् ॥ अन्यथा स्वयमेव विनैव प्रश्नं निरूपयेत् ॥ तेनाऽत्र तत्कथायाः प्रासंगिकत्वान्न तत्प्रकरणीयत्वमस्याध्यायस्येति षडध्याया एवाऽस्येति चेत्तत्राह ॥ अन्योन्यस्येति ॥ अयमर्थः ॥ अत्र प्राधान्येन तन्निरूपणमेव कृतम् ॥ "पित्रादिष्टाः" इति वचनं "कर्तुः शास्तुरनुज्ञातुः" इतिन्यायेन तदाज्ञया भगवदर्थं तपःकरणे तस्याप्यंतःकरणशुद्ध्युपकारो जात इति ज्ञापनार्थम् ॥ तथा चैतेषां भगवत्प्राप्तिस्तत्प्रेरणया तपःकरणे सतीत्येतदुपकारित्वं तस्य ॥ एतत्तपसा च तदंतःकरणशुद्धिरिति तदुपकारित्वमेतेषामित्यन्योन्यस्योपकारित्वम् ॥ अन्यथा "ब्रूहि मे विमलं ज्ञानम्" "गृहेषु कूटधर्मेषु" इत्यकस्मात्कथं वदेत् ॥ उपदेशस्याऽतिदुर्लभत्वज्ञापनाय प्रश्नापेक्षा ॥ तदुक्तमाद्यस्कंधप्रकरणे "सामान्यतो बुभुत्सां हि वक्ता वारयति स्वयम् ॥ उत्कंठा चेत्ततोपि स्यात्कथाप्रक्षेपणं ततः ॥ ततो विशेषप्रश्नश्चेद्वाच्या रीतिरियं सदा" इति तस्मात्सुष्ठूक्तं पंच तस्य त्विति ॥ सायुज्यप्रकरणस्याऽध्यायार्थानाह ॥ साधनमिति ॥ साधनमुपदेशः प्रथमाध्यायार्थः ॥ चकारात्साधनसाधनं पित्रादेशरुद्रदर्शनादिप्रसादफले सप्तमाष्टमयोः ॥ चकारात्स्तुतिः ॥ राज्यभोगादिगौणप्रसादश्चोच्यते ॥ द्वितीयचकारादेतच्छ्रोतुर्विदुरस्याऽपि भक्तिरूपफलप्राप्त्या निर्गम उच्यते ॥ १४० ॥

त० दी०— विद्या तु पंचपर्वेति प्रथमे पंच सन्मताः ॥
यत्र सर्वविनिर्द्धारः सर्वसंदेहवारकः ॥ १४१ ॥

त० प्र०— एवं प्रकरणार्थं निरूप्य प्राचीनबर्हिष एवाऽष्टभिरध्यायैर्मोक्षकथनमिति मतं निराकुर्वन् पंचभिस्तन्निरूपणे हेतुमाह ॥ विद्या त्विति ॥ तुशब्दः शंकाव्यावर्तकः ॥ अस्मिन् ब्रह्मभावस्यैव वाच्यत्वात्तत्र चाऽविद्यानिवृत्तिमात्रस्य प्रयोजकत्वात्तस्याश्च विद्यासाध्यत्वात्तस्याश्च पंचपर्वात्मकत्वात्सा तावद्भिरेवाऽध्यायैर्निरूप्येति प्रथमे प्रकरणे पंचाध्याया एवेत्यर्थः ॥ सन्मता इत्यनेन तन्मतस्याऽ-

१ परम् ।

प्रचेतसो नाम" इत्यादिना पुरैव कृत इति नाऽत्र पुनः प्रश्न इत्यर्थः ॥ यद्वा ॥ विदुरस्य भक्तिमात्रेच्छया प्रश्नकरणादस्य च तदतिरिक्तबहुफलोक्तेर्मेदर्थमिदं तु तत्तत्कामानामन्येषामर्थ इदं प्रकरणमुक्तमतो मत्प्रश्नस्योत्तरमनुक्तमिति स्वयमेव वक्ष्यतीति न पुनः प्रश्नः कृत इत्यर्थः ॥ प्रकरणार्थं वक्तुमध्यायसंख्यामाह ॥ **अष्टभिरिति** ॥ **पुरेति** ॥ शास्त्रार्थप्रकरणे विद्ययाऽविद्यानाशे त्वित्यारभ्य "उभयं हरिसेवया" इत्यंतेनोदितमित्यर्थः ॥ १३७ ॥

त० दी०— ब्रह्मत्वं कृष्णसायुज्यं क्रमादत्रोच्यते द्वयम् ॥
सायुज्ये तु रसाधिक्यं भेदेनाऽनुभवात्सदा ॥ १३८ ॥

त० प्र०— तदेवाह ॥ **ब्रह्मत्वं कृष्णसायुज्यमिति** ॥ तत्र यादृशब्रह्मभावसायुज्येऽभिप्रेते तादृशयोरेवाऽत्रापि निरूपणमिति ज्ञापनाय पुरोदितमित्युक्तम् ॥ तर्हि ब्रह्मत्वप्रकरणे सायुज्याधिकारिणां निरूपणं कथमित्यत आह ॥ **सायुज्ये त्विति** ॥ "ततो मां तत्त्वतो ज्ञात्वा विशते तदनंतरम्" इतिवाक्येन प्राप्तब्रह्मभावस्य भक्तिलाभेन पुरुषोत्तमज्ञाने सति तत्र प्रवेशलक्षणं सायुज्यं निरूपितमिति प्रवेशश्च भिन्नतयैव भवतीति भेद एव च रसानुभवसंभवात्सायुज्ये रसाधिक्यमित्यर्थः ॥ ब्रह्मत्वे चैक्यात्तथा रसाननुभवात्तद्व्यवच्छेदार्थस्तुशब्दः ॥ १३८ ॥

त० दी०—तस्याऽधिकारिणस्तेन संदंशकथयोक्तवान् ॥
मध्ये तु प्रथमः प्रोक्तो महत्वात्पंच तस्य तु ॥ १३९ ॥

त० प्र०— एवं च तस्य गौणत्वादस्यैव मुख्यत्वेन निरूप्यत्वाद्ब्रह्मभावलक्षणं मोक्षं मध्ये निरूपितमाद्यंतयोस्तदधिकारिणः प्रचेतस एव भक्तत्वान्निरूपिता इति ॥ एतदेवाह ॥ **संदंशकथयेति** ॥ तेन ब्रह्मभावस्याऽपि सायुज्यसाधनत्वमिति भावः सूचितो भवति ॥ अग्रे प्रचेतसां मोक्षन्निरूपयिष्यन्नपि यत्पूर्वं तद्भक्तिं निरूप्य तत्पितुर्मध्ये निरूपणं तेन भक्तेषु मुख्यं फलं ददाति भगवांस्तत्संबंधिषु भक्तिमार्गपरिनिष्ठत्वाचत्संबंधस्यैव प्रयोजकत्वाद्गौणमित्यपि सूचितम् ॥ प्रथमो ब्रह्मत्वाधिकारी ॥ अध्यायान् विभजते ॥ **पंचेति** ॥ तस्य प्रथमाधिकारिणः संबंधिनः पंचाध्याया इत्यर्थः ॥ तत्र हेतुः ॥ **महत्त्वादिति** ॥ भक्तानां त्वल्पेनैव प्रसादफले भवत इत्यध्यायत्रयेणैव तन्निरूपणम् ॥ अस्य च पूर्वं कर्मित्वान्महता प्रयासेन फलं साधनीयमित्यस्य कार्यस्य महत्त्वात्पंचभिर्निरूपणमित्यर्थः ॥ १३९ ॥

ननु पृथुपौत्रमुक्तेरनुक्तत्वाचत्कृतः प्रतिबंधो भविष्यतीत्याशंक्याह ॥ पौत्रेति ॥ अस्य मुक्तिरनुक्तसिद्धैवेति न पृथगुक्तेत्यर्थः ॥ एतेनाऽऽध्यात्मिकी शुद्धिः प्रचेतसामुक्ता ॥ एतेन "विजिताश्वः" इत्यारभ्य सप्तश्लोकानां तात्पर्यमुक्तं ज्ञेयम् ॥१४३॥

त० दी०— योगेन कर्मणा चाऽपि शुद्धिः सर्वोत्तमा मता ॥
कुलसौंदर्ययोगे तु स्त्रीशुद्धिश्चोत्तमा मता ॥ १४४ ॥

त० प्र०— हविर्धानादित्यादिपंचानां तात्पर्यमाह ॥ योगेनेति द्वाभ्याम् ॥ अत्राधिभौतिकी शुद्धिर्निरूप्यते सा च पितृमात्रोः[1] शुद्धत्वे भवति तत्र पुरुषशुद्धिस्तु योगकर्मभ्यां जाता सत्कुलजातत्वाद्यपेक्षयोत्तमा भवति ॥ स्त्रीशुद्धिस्तु सत्कुलजातत्वेन सौंदर्यातिशयेन च ॥ व्यभिचारादिदोषव्यावर्तकस्तुशब्दः ॥ १४४ ॥

त० दी०—बीजयोनिविशुद्धत्वे शुद्धिः कार्ये विनिश्चिता ॥
विवाहोऽपि ब्रह्मवाक्यादतो न विषये स्पृहा ॥ १४५ ॥

त० प्र०— तथा चोभयोस्तथात्वेन बीजयोन्योः शुद्धत्वे तत्पुत्रेष्वपि शुद्धिर्भवत्येव ॥ तत्रापि विषयरागजप्रवृत्त्या जनितानामपत्यानां बीजसंस्कारवशान्न नीरागत्वं भवेदिति शंकाव्युदासाय तद्वैराग्यकथनाय ब्रह्मवाक्यादेव विवाहोक्तिरित्यर्थः ॥ १४५ ॥

त० दी०— एतादृशात्समुत्पन्नाः पितुरादेशकारिणः ॥
तपसा साधने तस्य न बंधो भवतीति हि ॥
तत्रापि कृष्णसेवायां कृतार्थत्वं हि सर्वथा ॥ १४६ ॥

त० प्र०— फलितमाह ॥ एतादृशादिति ॥ तत्रापि न सनकादिवत्पित्रादेशोल्लंघकाः किं तु तत्कारिणस्तेन गुर्वाज्ञापालनरूपो धर्मोऽप्युक्तः ॥ तत्रापि विशेषमाह॥ तपसेति ॥ तस्य पित्रादेशस्य तपसा साधने प्रवृत्तिमार्गत्वेन स्वस्य सर्गकरणजबंधो यः स न भविष्यतीति तपसि प्रवृत्ताः ॥ तत्राऽपि न केवलं तावन्मात्रत्वं किं तु तपस्यपि पुरुषोत्तमभजनं करिष्यामस्तेन कृतार्था भविष्याम इति निश्चयवंतः ॥ १४६ ॥

त० दी०— इति तान् सर्वथा शुद्धान् विलोक्येशो हरिप्रियः ॥
प्रोवाच सर्वसंदेहवारकं सर्वबोधकम् ॥ १४७ ॥

त० प्र०— अत इत्थंभूतत्वेनाऽऽधिदैविक्यपि शुद्धिः संपन्नेति सर्वप्रकारेण शु-

[1] मातृपित्रोः ।

सत्त्वं सूचितम् ॥ ज्ञानस्यैव प्राधान्येन तत्र निरूपितत्वादिति भावः ॥ किं च आत्मना सह प्रतीतानां संघातस्थपदार्थानां स्वरूपनिर्धारे हि निःसंदिग्धा ब्रह्मात्मावगतिर्भवेत् ॥ तस्य चाऽत्र तावद्भिरेवाध्यायैर्निरूपणमिति हेतोस्तावंत एव त इत्याशयेनाऽऽह ॥ यत्रेति ॥ १४१ ॥

त० दी०— द्वितीयस्तु त्रिभिः सिद्धः सर्वेषां तत्र चोत्सवः ॥
प्रथमो नारदेनैव फलं तेनाऽपि सिध्यति ॥ १४२ ॥

त० प्र०—द्वितीय इति ॥ अध्यायाल्पतया पूर्वस्माद्धीनत्वशंका स्यात्तद्व्यावर्तकस्तुशब्दः ॥ पूर्वस्माद्विशेषमाह ॥ सर्वेषामिति ॥ पूर्वस्मिंस्तु सर्ववस्तुयाथात्म्यज्ञानेन ब्रह्मात्मावगत्यात्मन्येव सुखं भवेन्न तु सर्वेंद्रियादिषु ॥ अत्र तु सर्वेषामिंद्रियाणां चकारादात्मनश्च सर्वविस्मारक आल्हादविशेषरूप उत्सवः सिद्धो न तु साध्य इत्यर्थः ॥ तस्य गणितानंदत्वादस्य च पूर्णानंदत्वादितिभावः ॥ ननूपदेशमात्रेण भगवत्प्रसादं विना कथं प्राचीनबर्हिषो मोक्षकथनं "फलमतः" इतिन्यायविरोधात् ॥ अतः प्रचेतसामिवाऽस्यापि भगवत्प्राकट्यं वाच्यमित्याशंक्याह ॥ प्रथम इति ॥ नारं द्यति खंडयतीति व्युत्पत्त्या जीवभावच्छेदकत्वात्त्वं च भगवत एव संभवतीति तदाविष्टभगवद्रूपस्यैव तन्नाम ॥ तथा च तेनैव प्रथमो ब्रह्मभावरूपो मोक्षो जात इत्यर्थः ॥ उपपत्त्यंतरमाह ॥ फलमिति ॥ बहिः प्राकट्याभावेप्यात्मत्वेन स्फुरितब्रह्मस्वरूपेणाऽपि पूर्वोक्तं फलं सिध्यतीत्यर्थः॥ यद्वा ॥ तस्य ज्ञानोपदेशमात्रेणाऽन्यथासिद्धिमाशंक्याह ॥ फलमिति ॥ भगवत्सहितगुरुणाऽपि ज्ञानोपदेशफलं सिध्यतीत्यर्थः ॥ १४२ ॥

त० दी०— पृथोः प्रपौत्रपुत्राणां मुक्तिं वक्तुं तदंतरा ॥
अमुक्तौ प्रतिबंधः स्यादतो मुक्तिकथांतरा ॥
पौत्रमुक्तिस्तु संदंशन्यायेनैव भविष्यति ॥ १४३ ॥

त० प्र०— एवं प्रकरणार्थं निरूप्य प्रथमाध्यायं विचारयति॥ पृथोरित्यादिना ॥ तत्र प्रचेतसां साधने निरूपणीये सत्यंतर्द्धानमुक्तिनिरूपणं पूर्वं किमर्थमित्यत आह ॥ पृथोरिति ॥ प्रपौत्रो बर्हिषस्तत्पुत्राणां प्रचेतसामेव तन्मुक्तिं वक्तुमेतन्मुक्तिं कथामध्ये तन्मुक्तिकथेत्यर्थः ॥ एतत्कथनस्यावश्यकत्वायाऽऽह ॥ तदंतरेति ॥ तेषां पूर्वजानां मध्ये कस्यचिदमुक्तौ पितृदोषः पुत्रादावपि संक्रामतीत्येतन्मुक्तावपि प्रतिबंधः स्यादित्यर्थः ॥ एतेन मुक्त्यधिकार एव निरूपित इत्युक्तं भवति ॥

भजने प्रलये भूमिनाशेन तद्विघ्नो मा भूदिति विचार्यापि जले तपः कृतवंत इत्याह ॥ **प्रलयेपीति** ॥ नन्वस्मिन्नध्याये हि साधनं निरूप्यं तच्च स्तोत्रतपोरूपं तत्कथं तपोऽनुक्त्वा तन्मात्रेणाऽध्यायपूर्णं कृतमित्याशंक्य तत्तात्पर्यमाह ॥ **स्तोत्रेति** ॥ एतेषां स्तोत्रमेव मुख्यं साधनं न तप इति ज्ञापनार्थं तपोनिरूपणात्पूर्वमेवाऽध्यायपूरणं कृतमित्यर्थः ॥ तर्ह्येतत्प्रकरणे तत्तपोनिरूपणमादौ न युक्तमित्यत आह ॥ **संबंधसिद्ध्य इति** ॥ एतत्तपसः "कर्तुः शास्तुः" इतिन्यायेन बर्हिषदोऽपि चित्तशोधकत्वलक्षणः संबंधोऽस्तीति ज्ञापनाय तत्प्रकरणादावेतत्तपःकथाकथनमित्यर्थः ॥ ननु प्रचेतसां निर्गमानंतरमेव नारदस्यागतत्वात्तपसश्चोत्तरकालीनत्वात्कथं कारणत्वमित्याशंकायामाह ॥ **तपःसिद्धाविति** ॥ एतत्तपसः सिद्ध्यनंतरं परे बर्हिषदि कथाकथनं नारदेनेत्यर्थः ॥ न चाऽत्र मानाभावः, अन्यथाऽनुपपत्तेरेव सत्त्वात् ॥ तथा हि ॥ "गृहेषु कूटधर्मेषु" इत्यादिना बर्हिषदा वैराग्यस्योक्तत्वात्तस्य च चित्तशुद्धिं विनाऽनुपपन्नत्वात्तस्याश्च तत्तपो विना हेत्वंतराभावात् ॥ न च तत्कर्मैव तच्चित्तशोधकम् ॥ सकामकृतत्वात् ॥ सकामत्वं च "नानाकामो यथा भवान्" इति नारदवाक्यादवगम्यत इति भावः ॥ १५० ॥

त० दी०— सर्ववस्तुविवेकस्तु जाग्रत्स्वप्नविभेदतः ॥
विनश्यत्ता विनाशश्च सार्थकत्वादिरूपवान् ॥
सर्वसंदेहशाहित्यं सफलं पंचभिः क्रमात् ॥ १५१ ॥

त० प्र०— अथ पूर्वप्रकरणार्थविचारं प्रतिजानीते ॥ **सर्ववस्त्विति** ॥ अध्यायार्थानाह ॥ **जाग्रदिति** ॥ जाग्रदवस्थानिरूपणं प्रथमाध्यायार्थः ॥ स्वप्नावस्था द्वितीयस्य ॥ विनाशहेतुसामग्रीसांनिध्यं तृतीयस्य ॥ विनाशश्चतुर्थस्य ॥ चकारात्संसारनाशोऽपि ॥ सत्संगभक्तिज्ञानसाहित्यनिरूपणेन एतदेवाह ॥ **सार्थकत्वेति** ॥ दुष्टस्याऽपि पूर्वदेहस्य नाशस्तदा सार्थको भवेद्यद्यग्रे सत्संगः स्यादन्यथा तु तन्नाशोऽप्यनाश इवेति सार्थकत्वविशिष्टः स निरूप्यत इत्यर्थः ॥ आदिशब्देन भक्त्यादि ॥ **सर्वेति** पंचमस्य ॥ १५१ ॥

त० दी०— संसारे मुक्तिमार्गे च जीवो द्वेधा हि गच्छति ॥
तत्सामग्रीप्रकथनमुभयोरुच्यते पृथक् ॥ १५२ ॥

त० प्र०— तत्र कोटिद्वयम ॥ संसारो मुक्तिमार्गश्च ॥ एतयोः स्वरूपं

---

१ कृतवान् ।

न्द्रान् ज्ञात्वा तान् प्रति प्रोवाचेत्यर्थः ॥ ईशत्वेनांतरज्ञानम् ॥ तत्रापि हरिभक्तिज्ञानं हरिप्रियत्वेन ॥ अन्यथा कथमकस्माद्बहिरागच्छेत् ॥ तथा चैश्वर्यज्ञापनायैव "समुद्रमुपविस्तीर्णम्" इत्यारभ्य षट् श्लोका इतीशपदेन तावतां तात्पर्यमुक्तमिति ज्ञेयम् ॥ यूयमित्यादिरुद्रवचनानां चतुर्णां तात्पर्यं हरिप्रियपदेन ॥ १४७ ॥

त० दी०— हेतुपूर्वं स्तोत्रमाह शीघ्रं तुष्यति यद्धरिः ॥
अयमेवोपदेशो हि विश्वासार्थं परंपरा ॥ १४८ ॥

त० प्र०— मध्ये स्वरूपकथनस्य प्रयोजनमाह ॥ हेतुपूर्वमिति ॥ भगवत्प्रादुर्भावार्थमेव हि स्तोत्रम् ॥ स च प्रेम्णैव भवति ॥ प्रेम चाऽतिसुंदरस्वरूपस्य निरंतरचिंतनकीर्तनाभ्यामितीदृशं स्तोत्रमाहेत्यर्थः ॥ एतदेव स्पष्टयति ॥ शीघ्रमिति ॥ यद्वा ॥ उपदेशे हेतुर्ह्येतेषां भागवतत्वम् ॥ "अथ भागवता यूयम्" इतिश्लोकेन तन्निरूपणपूर्वकं यः स्तोत्रमाहाऽतो यद्यस्माद्धरिः शीघ्रं तुष्यति तादृशं तदाहेति संबंधः ॥ जप्यो मंत्रः पृथगुपदिष्टो भविष्यतीत्याशंक्याह ॥ अयमेवेति ॥ "इदं जपध्वम्" इतिवचनसंमतिर्हिशब्दार्थः ॥ इदमाहेत्यादीनां तात्पर्यमाह ॥ विश्वासार्थमिति ॥ यद्यपि रुद्रवचनेऽप्यस्त्येव सः ॥ अन्यथा परंपराकथनेऽप्यविश्वासेन सर्वनाशः स्यात् ॥ तथाप्येतेनाऽन्यस्यापि फलसिद्धिश्रवणेऽतिश्रद्धा भवतीति तथोक्तम् ॥ १४८ ॥

त० दी०— अनुद्वेगपरीक्षार्थं विलंबो हरिणा कृतः ॥
तत्पुरेव विनिश्चित्य जले तप्तुं विनिश्चयः ॥ १४९ ॥

त० प्र०— तर्ह्येतेषु कथं फले विलंबत इत्यत आह ॥ अनुद्वेगेति ॥ तपसि क्लेशादुद्वेगः कालविलंबेपि तदा न भवेद्यदि भक्तिरसेनाऽन्यविस्मृतिः स्यादिति तत्परीक्षार्थं तथेत्यर्थः ॥ ते त्वत्यंतं भक्तिरसिका इत्यत्र निदर्शनमाह ॥ तत्पुरेवेति ॥ तत्राऽन्यप्रवेशाभावादत्यगाधे च जलचराणामप्यभावेन निर्विघ्नं भजनं भविष्यतीति तथेत्यर्थः ॥ १४९ ॥

त० दी०— प्रलयेपि न भंगार्थं स्तोत्रमुख्यत्वसिद्धये ॥
अध्यायपूरणं पूर्वं कृतं संबंधसिद्धये ॥
अग्रे कथाप्रकथनं तपःसिद्धौ कथा परे ॥ १५० ॥

त० प्र०— किंच ॥ तेषां भजनं स्वतंत्रपुरुषार्थत्वेनैव प्रतिभातम् ॥ अतो भूमौ

---

१ भवति ।

तदपि तथा पुरमध्य एवेत्यर्थः ॥ यद्वा ॥ उभयोस्तयोरेव मध्यं मध्ये स्थितं संबंधो ममाहंबुद्धिरूप इति यावत् ॥ सोऽपि तथेति पूर्ववत् ॥ अत्र हि जीवस्य संसारो वाच्यः स चाऽहंताममताकृत एव ॥ तयोरेवाऽविद्याकार्यत्वात् ॥ देहादीनां प्रपंचमध्यपातित्वेन भवगत्कार्यत्वात् ॥ देहादिषु च जीवस्य संबंधांतरस्य निरूपयितुमशक्यत्वात्त एव संबंधरूपे ॥ अत एवाहंममेति बुद्धेरविद्याकार्यत्वेन देहादित उक्तवैलक्षण्यमस्तीति ज्ञापनाय बाह्यत्वनिरूपणम् ॥ अत एव ज्ञाननाश्यत्वं तयोरेव ॥ न च पुरदर्शनानंतरमस्योक्तत्वान्न तन्मध्यपातीदमिति वाच्यम् ॥ पुरमध्यपातित्वेनैवाऽभिप्रेतत्वात् ॥ अत एवैतद्व्याख्याने "नवद्वारं द्विहस्तांघ्रिम्" इत्येतावन्मात्रमुक्त्वा "तत्राऽमनुत साध्विति" इत्युक्तवान् ॥ अन्यथा साधुमाननोक्तिरनुपपन्ना स्यात् ॥ विषयभोगोपयोगित्वेन ह्यस्मिन् सन्माननं तददर्शने कथं तथा मन्येतेति ॥ यद्वा ॥ उभयोर्जीवांतर्यामिणोर्मध्यमंतरायरूपं विषयपरिनिष्ठितबुद्धिसहितं पुरमित्यर्थः ॥ "निबंधायाऽऽसुरी मता" इतिवाक्यादुक्तसामग्र्याश्च तथात्वादिति ॥ १५४ ॥

त० दी०—जन्मादि द्विविधं लोके पंचाग्निप्रक्रमेण हि ॥
एकः स नाऽत्र वक्तव्यः पूर्वं दोषस्य संभवात् ॥ १५५ ॥

त० प्र०—पुरप्रवेशस्य जन्मरूपत्वात्तस्य च द्विरूपत्वात्कीदृशमत्र जन्मोच्यत इत्याशंकाभावायोभयानुवादपूर्वं तन्निर्धारमाह ॥ जन्मादीति ॥ वेदांतविज्ञानार्थं पंचाग्निविद्यया साधितमेकम् ॥ जायस्व म्रियस्वेतितृतीयमार्गीयं द्वितीयम् ॥ तत्राऽऽद्यं त्वत्र नोच्यते ॥ तत्र हेतुः पूर्वं दोषस्येति ॥ तस्य निर्दोषत्वादिति भावः ॥ द्वितीयनिरूपणेऽप्ययमेव हेतुः, अतो द्वितीयं त्वत्र निरूप्यते दोषसाध्यत्वादस्य॥१५५॥

त० दी०—जायस्वेति द्वितीयस्तु पूर्वं जीवेच्छया तथा ॥
ईश्वरत्वादनासक्तेर्हरिस्तत्कामतः कृती ॥ १५६ ॥

त० प्र०—पूर्वोक्तं दोषमेव विवृणोति ॥ पूर्वं जीवेच्छयेति ॥ "कामान् कामयमानोऽसौ" इत्यनेन विषयभोगेच्छाया निरूपणात्तस्याश्च "आवृतं ज्ञानमेतेन" इति वाक्याद्ज्ञानप्रतिपक्षतया दोषरूपत्वाच्चादृशमेव जन्मोच्यत इत्यर्थः ॥ ननु जीवांतर्यामिणोः सहैव प्रवेशात्स्थितेश्च तत्प्रेरणं विना जीवस्याऽसमर्थत्वेनैतस्यैव सर्वकर्तृत्वाच्च जीवस्येवांतर्यामिणोपि कथं जन्मादिरूपः संसारो नोच्यत इत्यत आह ॥ ईश्वरत्वादिति ॥ सहभावेपि न हि जीव इवांतर्यामी बुद्ध्याद्यधीनः किं तु स्वतंत्रः "

निरूपणीयम् ॥ तच्चैकदापि भवति ॥ अत्र पृथङ्निरूपणं कुत इत्यत आह ॥ **संसार इति** ॥ संसारे येन प्रकारेण जीवस्य गतिस्तेनैव न मोक्षमार्ग इति गतिभेदज्ञापनाय संसारमुक्तिमार्गयोः सामग्रीकथा पृथगुच्यते ॥ चकारात्पुरुष-रूपेणापि ॥ स्त्रीरूपेणाऽपि तयोर्मार्गयोर्गतिर्जीवस्याऽतस्तद्बोधनायोभयोः पुंस्त्रियो-स्तथोच्यत इत्यर्थः ॥ एतेन स्त्रीशरीरं प्राप्तस्य मुक्तिसाधननिरूपणाच्चादृशस्यैव मुक्तिरिति शंका निरस्ता तस्य पूर्ववासनानुरूपदेहप्राप्तितात्पर्यकत्वात् ॥ तथा च सत्संगादिसाधने स्त्रिया अपि मुक्तिः सूचितेति ज्ञेयम् ॥ "मां हि पार्थ" इति भगवद्वाक्यादिति भावः ॥ १५२ ॥

त० दी०—अपरोक्षकथायां हि कौतुकाभावतः पुमान् ॥
नाऽऽद्रियेत नवा बुद्धिरध्यात्मे प्रविशेद् द्रुतम् ॥ १५३ ॥

त० प्र०— तर्हि स्फुटतयैव कुतो नोक्तं तत्राह ॥ **अपरोक्षेति** ॥ जन्मादिरू-पेण निरूपणे चमत्काराभावान्मनुष्यदेहकथामात्रमुक्तमिति बुद्ध्या तदुक्ते नादरः स्यान्न वा ज्ञानमार्गे प्रविशेद्बुद्धिः । परोक्षकथायां तूक्तवैपरीत्यमिति तथोक्त-मित्यर्थः ॥ १५३ ॥

त० दी०— प्रश्नः शुद्धिपरीक्षार्थमन्यथा कथनं वृथा ॥
गृहादिसहितो देहः पुरं मध्यं तथोभयोः ॥ १५४ ॥

त० प्र०— ननु तत्फलाभावं ज्ञात्वाऽपि तस्मिन् कुतः प्रश्नं कृतवाँस्तत्राह ॥ **प्रश्न इति** ॥ शुद्धिकथनस्याऽऽवश्यकत्वायाऽऽह अन्यथेति ॥ शुद्ध्यभाव इत्यर्थः ॥ ननु नवद्वारप्राकारादीनामितरदेहेष्वपि समानत्वात्कुतस्तेष्वनभिरुचिः कथं च नरदेह एव रुचिकथनमित्याशंक्य जीवस्याऽशेषभोगार्थित्वादन्येषां गृहादिविषया-भावेनाऽशेषभोगासंभवान्नरदेहे च तत्सत्त्वात्सर्वकामसंपत्तिसंभवाच्चस्मिन्नेव रुचि-र्नाऽन्येषु ॥ अत्र च तन्निरूपणाद्गृहवित्तादिसहित एव देहः पुरत्वेनाऽभिप्रेत इत्याह ॥ **गृहादीति** ॥ अत एव मूल उक्तं "कामान् कामयमानोऽसौ तस्य तस्योपपत्तये" इति ॥ व्याख्याने च "यदा जिघृक्षन् पुरुषः कार्त्स्न्येन प्रकृते-र्गुणान्" इति ॥ तर्हि विषयपरिनिष्ठितबुद्धिसंबंधत एव देहसंबंध इति विवक्षया "पु-र्यास्तु बाह्योपवने" इत्यादिना विषयाणां पुर्याः सकाशाद्बाह्यत्वकथनमनुपपन्नमित्यत आह ॥ **मध्यमिति** ॥ उभयोर्जीवपुरयोर्निरूपणे मध्ये यन्निरूपितं पुर्यास्त्वित्यादि

१ इतिशब्द क्वचिन ॥

मिति ॥ श्रुतिभागवताद्यनधीने हि देहादौ रमत इति ज्ञापनाय पुंप्रयोग इति भावः ॥ इतरत्स्त्रीत्वं श्रुत्याद्यधीनत्वम् ॥ अत एव तस्यामग्रे भक्त्युत्पत्तिं वक्ष्यति ॥ १५८ ॥

त० दी०—तस्याः स्त्रीत्वं तु मायात्वाद्बहिस्तद्धर्मसिद्धये ॥
वाक्योक्तिः स्वेच्छतासिद्ध्यै देवत्वाल्लोकवत्तथा ॥ १५९ ॥

त० प्र०—तस्या बुद्धेः। अस्याः स्त्रीत्वं न पूर्ववर्तिकं त्वेतदधीनो जीव इति तद्व्यवच्छेदाय तुशब्दः ॥ तत्त्वे हेतुर्मायात्वादिति ॥ देहात्मभावरूपत्वादस्या अविद्यारूपत्वेनाऽविद्यायाश्च मोहकत्वेन स्त्रीरूपतया चाऽस्या अपि स्त्रीत्वमित्यर्थः ॥ ततः किमत आह बहिरिति ॥ मोहितो हि मोहकानुवृत्तिं कुरुते तथा चास्या मायात्वेन मोहकत्वे सिद्धे चांतरत्वे नैतद्धर्माणां यथा बहिरपि सिद्धिर्भवति तदर्थं तथोक्तमित्यर्थः ॥ तदेतत् "क्वचित्पिबंत्याम्" इत्यादिना निरूपितं जीववाक्यानां तात्पर्यं वदँस्तत्प्रयोजनमाह ॥ स्वेच्छतेति ॥ यत्स्वस्य चिकीर्षितं तदेव चेत्तस्या अपि भवेत्तदा पुर्यां तया सह भोगे स्वस्य स्वाच्छंद्यं भवेत् ॥ नो चेत्सशंकतया भोगे यथेष्टा प्रवृत्तिर्न स्यादिति तत्सिद्ध्यर्थं जीववाक्योक्तिरित्यर्थः ॥ ननु ताल्वोष्ठपुटव्यापाराभावेन कथमुक्तिरित्यत आह ॥ देवत्वादिति ॥ आधिदैविकरूपे कारणरूपाणां ताल्वादीनां सत्त्वात्तथा। अत एव "चक्षुरुदगायत" इत्यादिश्रुतिः ॥ तृतीयस्कंधे च तत्त्वानां स्तुतिः ॥ तर्हि देवत्वेऽवश्यं तत्स्वरूपमपि जानात्येव ॥ तत्कथं 'का त्वम्' इत्यादिप्रश्न इत्यत आह ॥ लोकवत्तथेति ॥ यथा कामुकोऽपूर्वां कामिनीं दृष्ट्वा तत्संगेऽन्यांश्च दृष्ट्वा तामात्मसात्कर्तुं ज्ञात्वाऽपि रसार्थं पृच्छति तथेत्यर्थः ॥ १५९ ॥

त० दी०—लीलाविग्रहसंबंधे ब्रह्मादीनां मतिर्न सा ॥
अयोग्यमिच्छन् पुरुषः पतत्येव न संशयः ॥
निराकृतिरतस्तासां पार्थिवत्वमतिस्ततः ॥ १६० ॥

त० प्र०—अग्रे निषेधार्थं 'त्वं ह्रीः' इत्यादिकल्पाः कुत इत्याशंक्य तच्चात्पर्यमाह ॥ लीलेति ॥ लीलार्थं देहसंबंधेपि देहात्ममतिस्तेषां नास्तीति ज्ञापयितुं तत्संबंधिनीनां निरूपणमित्यर्थः ॥ इयं तु देहात्ममतिरूपेति तासां निराकरणम् ॥ निराकृतौ तात्पर्यांतरमप्यस्तीत्याह ॥ अयोग्यमिति ॥ गुर्वंगनादिकामनायां पतत्येवेत्यपि ज्ञापनाय "नाऽसां वरोरु" इत्यनेन तासां ह्रयादीनां निराकृतिः ॥ तत्र

जन्मादीनां च कालकर्माधीन एव भावान्नास्मिंस्तथात्वम् ॥ मायामोहाभावेन जीवत्वाभावाच्च ॥ किं च प्रयोजककर्तृत्वेपि महाराजस्येव बंधकं कर्म स्याद्यद्यासक्त्या कारयेत्स च नेदृश इति न तथा ॥ अत एव "अनश्नन्नन्यो अभिचाकशीति" इति श्रुतिः ॥ किं च जीवस्तु दुःखी अयं तु तस्यापि दुःखहर्ता ज्ञानद्वारा "सोऽकामयत बहु स्यां प्रजायेय" इत्युच्चनीचभावेन भगवत एव प्राकट्यकामनयांतर्यामिणस्तथात्वान्न संसारित्वमित्यर्थः ॥ अथवा तस्य जीवस्य कामतः कामनया परं हरिः कृती कृतिमान् प्रेरकत्वान्नाऽन्या कृतिरित्यर्थः ॥ अत्रायं भावः ॥ देहप्राप्त्यनंतरं हि कर्मकरणेन बंधः ॥ अत्र च तस्मात्पूर्वमेव जीवस्य काम उच्यते ॥ स चांतर्यामिप्रेरणं विना न संभवतीति यथा देहप्राप्तेः पूर्वमपि प्रेरकत्वेपि न तस्य संसारित्वं तथाऽत्रेपीति कामाभावे हेतुरनासक्तेति ॥ आसक्तो हि कामयते ॥ अत्रापि हेतुरीश्वरत्वादिति ॥ तथा सति कर्मणां बंधसंभवेन तदधीनत्वे अनीश्वरत्वं स्यात् ॥ १५६ ॥

त० दी०— लिंगेन सहितो जीवः स्थूलदेहे सुखी भवेत् ॥
अतो गर्भप्रवेशाद्धि पूर्वं कृष्णविनिर्मिते ॥
बुद्धिप्राणेंद्रियगणे तदध्यासोऽनुवर्ण्यते ॥ १५७ ॥

त० प्र०— देहप्राप्तेः पूर्वं बुद्ध्यादिनिरूपणस्य तात्पर्यमाह ॥ लिंगेनेति सार्धेन ॥ लिंगशरीरेणेत्यर्थः ॥ अध्यासस्याऽविद्याकार्यत्वेन बुद्ध्यादीनामपि तथात्वमिति शंकावारणाय कृष्णनिर्मित इति विशेषणम् ॥ "इति तौ दंपती तत्र समुद्य समयं मिथः" इत्यंतस्य तात्पर्यमुक्तम् ॥ १५७ ॥

त० दी०— देहात्ममतिरेषा हि तथा स्थूलेंद्रियादि च ॥
पुंस्त्वं स्वतंत्रता तस्य पारतंत्र्यं तथेतरत् ॥ १५८ ॥

त० प्र०— "तां प्रविश्य पुरीम्" इत्यादिग्रंथस्य तात्पर्यं वदंस्तत्र बुद्ध्यादीनां स्वरूपमाह ॥ देहात्मेति ॥ एतेन देहाध्यासो निरूपितः ॥ अविद्यापर्वरूपत्वादत्रायं युक्त इति हिशब्दः ॥ "सप्तोपरि"[1] इत्यादिना स्थूलेंद्रियाण्युक्तानि ॥ तान्यप्यध्यस्तान्येवेति ज्ञापनाय तथेति पदम् ॥ ननु पुंस्त्वादयो धर्मा हि देहस्य अत्र च तत्प्राप्तेः पूर्वं जीवे तथा कथनं नोपपन्नमित्याशंक्य तत्स्वरूपमाह ॥ पुंस्त्व-

---

१ संबंध- ॥

वाऽऽधिदैविक्याश्चेतनत्वं तथाप्यत्र तु भौतिक्या एव वचनानां वाच्यत्वात्कथमुक्तिरित्यत आह ॥ जीवसंनिधित इति ॥ अपिना पूर्वसमुच्चयः ॥ चकारात्प्राणेंद्रियसान्निध्यादपि ॥ १६२ ॥

त० दी०— अनेनैव मताः सर्वे विरुद्धा विनिवारिताः ॥
मूलज्ञाने स्वनाशः स्यात्स्वरूपे त्वस्ति रूपतः ॥ १६३ ॥

त० प्र०— अत्रहि "कस्यासि" इति प्रश्नस्योत्तरं "न विदाम वयम्" इत्यादिना स्वस्य परस्यापीत्यादिना जीवादेरपि कर्त्तुरज्ञानमेवोक्तं तया ॥ तया चैतेनापि भगवत्कर्तृत्वमेवायाति । बुद्ध्यादीनां न मायिकत्वमित्याह ॥ अनेनैवेति ॥ 'विरुद्धा इति ये मताः' अभिमता मायावादादयस्त इत्यर्थः ॥ न च न विदामेति पदेन भावरूपमज्ञानमेव कारणतया तयोक्तमिति वाच्यम् ॥ तस्य जीवनिष्ठत्वेनोत्तमपुरुषप्रयोगानुपपत्तेः ॥ न च बहुवचनात्स्वस्मिन्नेव जीवं मेलयित्वा वदतीति तथा प्रयोग इति वाच्यम् ॥ एवं हि तदा वदेद्यदि सा तत्त्वज्ञा स्यान्न चैवम् ॥ तथा च सति सैव न स्यात् ॥ जीव एव ज्ञानसंभवाच्चेति एतदेव मनसि कृत्वाऽऽह ॥ मूलज्ञान इति ॥ भगवज्ज्ञाने त्वविद्यानाशादेहात्ममतेः स्वरूपनाश एव स्यादित्यर्थः ॥ ननु मायास्वरूपमयीयं न जानातीति तदेवाऽनयोच्यते ॥ न च परस्यापीत्यादिना जीवादिकर्तृविषयस्याऽप्यज्ञानस्योक्तत्वात्त्वाविद्यायाः स्वस्मिन् कारणत्वासंभवाचत्र च जीवाविद्याकार्यत्वेनैव त्वदभिमतत्वान्न तथेति वाच्यम् ॥ जीवस्याऽनाद्यविद्याकल्पितत्वेन तत्स्वरूपस्याऽप्यज्ञानत्वेनैतदेव परस्यापीत्यादिनोच्यते यत इति चेत् ॥ अत्र ब्रूमः ॥ यदि जीवस्य जीवत्वमनाद्येव तदा तस्याऽविद्याकल्पितत्वे किं मानम् ॥ विद्यया तन्नाश एवेति चेन्न ॥ विद्ययाऽविद्याकार्यसंसारनाश एव न तु भगवत्कार्यप्रपंचस्येति पूर्वमेवैतन्निरासात् ॥ किं चैवं स्वरूपहानिरूपतां मोक्षे वदँस्तस्य च पुरुषार्थत्वेनोपादेयतां वदन्निरपत्रपोसि ॥ ननु जीवभावसत्त्वान्मुक्तस्यापि पुनः संसारित्वं स्यादिति चेन्न ॥ तत्कारणाविद्याया नाशात् सततं भगवत्संगतत्वात् ॥ "मामुपेत्य तु कौंतेय पुनर्जन्म न विद्यते" इत्यादिवाक्याच्चेत्यलं विस्तरेण ॥ तस्याः स्वस्वरूपविषयकं परं ज्ञानमस्ति स्वरूपं पश्यतीति तदपि न याथात्म्येनेति तद्व्यावर्त्तकस्तुशब्दः ॥ एतदुक्तमिहाद्यसंतमित्यनेन ॥ १६३ ॥

त० दी०— अविरक्तिर्विपर्यशतमदप्रवचनान्मतम् ॥
अतोऽभिनंदनं त्वन्यनिवृत्तिश्च निरूप्यते ॥ १६४ ॥

हेतुः ॥ पार्थिवत्वेन पृथिवीविकारत्वेनाऽऽत्मनि या मतिर्देहात्ममतिरिति यावत्त-द्रूपत्वम् ॥ एतदेव मूले भुविस्पृगिति पदेनोच्यते ॥ १६० ॥

त० दी०— ज्ञानयोगमयास्तेषामिच्छामात्रप्रकाशिनः ॥
मायात्वसिद्ध्यै शंका तु प्रार्थनाऽन्यस्य संभवात् ॥ १६१ ॥

त० प्र०— नन्वयं हि लिंगशरीराध्यास उच्यते तस्य स्थूलदेहप्राप्तिहेतुत्वात् । तथा च ब्रह्मादीनामपि स्थूलदेहसत्त्वात्तद्धेतुर्बुद्धिप्राणेंद्रियगणाध्यासोऽवश्यं वाच्यः । ते च निरूप्यमाणरूपा एवेति कथं ब्रह्मादीनां मतिर्न सेत्युच्यत इत्याशंक्य तदीयानां तेषां स्वरूपमाह ॥ **ज्ञानयोगमया इति** ॥ ते हि योगिनो ज्ञानपूर्णाश्च ॥ तथा च ज्ञानप्रधाना बुद्धिचक्षुरादयो ज्ञानमयाः ॥ क्रियाप्रधानाः प्राणवागादयो योगमया इत्यर्थः ॥ तयोस्तथाभावे हेतुः ॥ **इच्छामात्रेति** ॥ यदैव भगवदिच्छा भवत्येभिर्जीवैरेतानि कार्याणि करिष्य इति तेषामेव वा तदा तेषु तदुभयसत्त्वात्ताभ्यामेव देहेंद्रियादयः पूर्वमेव संपादिताः प्रकाशयुक्ता भवंतीत्यर्थः ॥ तथा च ज्ञानादिरूपत्वेनाऽहंकाराजन्यत्वादिच्छामात्राधीनत्वेन मायाधीनत्वात्तत्कार्याविद्यापर्वणामपि देहाद्यध्यासानामभाव इति भावः ॥ नन्वियमपि तादृश्येवेति चेन्नेत्याह॥ **मायात्वेति** ॥ तुशब्दस्तादृशत्वव्यवच्छेदकः ॥ 'त्वं ह्रीः' इत्यादिशंका या तस्यां सा मायात्वमेव साधयति ॥ अन्यथैकतरनिर्द्धारमेव कुर्यात्समानरूपत्वात् ॥ "नाऽऽसां वरोर्वन्यतमा" इति न वदेत् ॥ अतो मोहिकात्वात्पूर्वमयथारूपाणि स्वात्मन्युत्तमत्वेन ख्यापितवतीति सा मायारूपैवेत्यर्थः ॥ अत एवाऽन्यं कंचन मोहयित्वा मा रमयत्विति शंकया "पुरीमिमाम्" इत्यादिप्रार्थना कृतवान् ॥ १६१ ॥

त० दी०— तत्सांनिध्ये स्वतः स्थातुमशक्तस्तादृशं जगौ ॥
देवतात्वेन वाक् तस्या जीवसंनिधितोऽपि च ॥ १६२ ॥

त० प्र०— किं च यद्यपि सा न किंचिदिदानीं करोति तथापि तस्याः संनिधिमात्रेणाऽपि तां विना क्षणमपि स्थातुमशक्तः सन् "त्वयोपसृष्टो भगवान् मनोभवः" इत्याद्युक्तवान् ॥ देहात्ममतिसांनिध्ये सति देहं विना स्थातुमशक्तो वा तथोक्तवान् ॥ तथा च जीववाक्यैस्तस्या मोहकत्वेन मायात्वमेव सिध्यतीति भावः ॥ इदानीं बुद्धिवाक्यानि विचार्यैस्तद्वचने पूर्ववदेवोपपत्तिमाह ॥ देवतात्वेनेति ॥ ननु जीवस्य चेतनत्वेन देवत्वं युक्तं न तस्या जडत्वात् ॥ अस्तु

---

१ मायाशब्दात्पूर्वं क्वचित् चकारो दृश्यते ॥

त० दी०– किंचित्प्रौढे तदप्याह रूपं चाऽस्यापि वर्ण्यते ॥
वालत्वात्स्थिरता नास्तीयत एवं कथा ततः ॥ १६७ ॥

त० प्र०– अग्रिमाध्याये स्वप्नावस्थानिरूपणे हेतुमाह ॥ किंचित्प्रौढ इति ॥ किंचित्प्रौढस्य स्वप्नानुभवो भवतीति तादृशे स्वप्नमप्याह ॥ तत्कालीनस्य सपरिकरस्य जीवस्य स्वरूपं च "स एकदा महेष्वासः" इति त्रिभिर्वर्ण्यते ॥ "चचार मृगयाम्" इति सप्तभिः स्वप्नस्वरूपं च ॥ ननु गंधर्वनगरत्वेनैव स्वप्नरूपनिरूपणं तत्प्रवेशजनितसुखाभिमतिनिर्वृतत्वेन जीवस्वरूपनिरूपणं च कुतो न कृतं भवाटव्यामिव ॥ कुतश्च मृगयारूपं क्लिष्टं निरूपितमित्याशंक्य तत्र हेतुमाह ॥ वालत्वादिति ॥ अत्र हि वालस्यैव चिंचित्प्रौढस्याऽवस्थोच्यते ॥ स. चाऽस्थिर इति मृगयायां च तादृशत्वं भवतीत्येवंरूपा कथोक्तेत्यर्थः ॥ यद्वा ॥ न स्वप्न इतिवोधितमित्युक्ते तर्हि किं साऽवस्थैव नास्तीत्याशंकायां नेत्याह ॥ किंचित्प्रौढे स्वप्नमप्याहाऽग्रिमाध्याये ॥ सप्तोपरीत्यादिना पुरस्य रूपमपि वर्ण्यते ॥ चकाराच्चत्कार्यं च ॥ ननु "महिषी यद्यदीहेत तत्तदेवान्वर्तत" इत्येतावतैव सर्वोक्तेः "क्वचित्पिवंत्याम्" इत्यादेः किं प्रयोजनमत आह ॥ वालत्वादिति ॥ १६७ ॥

त० दी०– आक्रोशश्चाऽनुसंधानं चिंतनं चाऽपि वर्ण्यते ॥
प्रौढस्य तु कथा प्रोक्ता दृढासक्तेरनंतरम् ॥ १६८ ॥

त० प्र०– दशभिः स्वप्ननिरूपणानंतरं तदध्याय एवाऽग्रिमप्रकरणाद्विभजते[१] ॥ आक्रोश इति ॥ "ततः क्षुत्तृट्परिश्रांतः" इति षड्भिराक्रोशः ॥ चकाराद्रामाऽगामुत्तरं च ॥ ततस्त्रिभिरनुसंधानम् ॥ ततः षड्भिश्चिंतनम् ॥ चः समुच्चये ॥ संसारित्वेन वहिर्मुखत्वेपि चिंतनंतर्मुखत्वाद्ब्राह्मणकुलादन्यत्र मुररिपोर्दासादितरत्रेत्युक्तमित्यपिशब्दार्थः ॥ अध्यायार्थमुपसंहरति ॥ प्रौढस्येति ॥ अग्रिमाध्यायार्थं विचारयँस्तत्र विनश्यत्तायाः कथमध्यायार्थत्वं पुत्रादिसंपत्तेरपि निरूपणादितिशंकायां तत्रोपपत्तिमाह ॥ दृढासक्तेरिति ॥ विनश्यत्ता हि विनाशकारणसामग्रीसान्निध्यं जीवस्य जराद्यादिसंबंध एव हि सा ॥ सा च देहादिविषयदृढासक्त्यनंतरभाविभिर्देहात्मवुद्धिकृतैस्तादृगिंद्रियपरिणामवुद्धिवृत्तिविषयभोगैश्च संपाद्यते ॥ अन्यथा चेद्योगवान् स्यात्तदा जरादिसंबंध एव न स्यात् ॥ तथा च तन्निरूपणं विनश्यत्तानिरूपणमेवेत्यर्थः ॥ १६८ ॥

१ प्रकरणान् विभजते ॥

त॰ प्र॰— ननु प्रार्थितस्यैवाभिनंदनं युक्तं न त्वप्रार्थितस्यापि ॥ तत्र च पुरीप्रवेशमात्रस्य प्रार्थना न शतवर्षावधिकस्य तत्कृतः ॥ "शतं समाः" इति वचनमस्या इत्याशंक्य तदभिप्रायमाह ॥ अविरक्तिरिति ॥ "कामभोगान् शतं समाः" इतिवाक्येन वर्षशतमध्ये कदाचिदपि न विरक्तिरित्युच्यते ॥ ननूक्तं प्रार्थितार्थस्यैवेत्यादि तत्राह ॥ अदभ्रवचनादिति ॥ प्रार्थनायामदभ्रकर्मणेत्युक्त्वा तस्यापि वर्षशतं संमतम् ॥ तथाहि ॥ यावत्पुर्यां स्थितिस्तन्मध्ये यदि विरागः स्याद्विषयेषु तदा क्रमेण देहात्ममतेस्त्यागात्कापट्यमेव स्यादनया सह पुरप्रवेशकर्मणि ॥ मध्ये अत्यागे ह्यदभ्रत्वम् ॥ पुरे च स्थितिः शतावधिकैव॰ अतो हेतोः "दिष्ट्यागतोसि" इत्यादिनाऽभिनंदनम् ॥ अन्यशंकयैव प्रार्थनायाश्च कृतत्वात् ॥ किं तु त्वदन्यमित्यादिनाऽन्यनिवृत्तिश्च मूले निरूप्यत इत्यर्थः ॥ १६४ ॥

त॰ दी॰— क्रियापरत्वे सिद्धिः स्यादिति वाह्वोर्हि वर्णनम् ॥
रोदने गीतिरेवाऽत्र गानं निद्रा च वर्णिते ॥ १६५ ॥

त॰ प्र॰— अंतिमश्लोकस्य तात्पर्यमाह ॥ क्रियापरत्व इति ॥ ज्ञानस्य देहात्ममतिविरोधित्वेन तत्परत्वे स्वयमेव न सिध्येदिति क्रियापरत्वसिद्ध्यर्थं तत्प्रधानवाह्वोर्वर्णनमित्यर्थः ॥ उपगीयमान इत्यस्य श्लोकस्यार्थं निरूपयँस्तत्र गानस्वरूपमाह ॥ रोदन इति ॥ वाल्यसंबंधिनी जाग्रदवस्था निद्रा चोच्यते ॥ तत्र रोदनविषये अत्र परोक्षवादे गानमेवाभिप्रेतम् ॥ यद्वा ॥ अत्र लोको यदैवोत्पन्नो रोदिति तदैव सर्वेषां गीतिर्भवतीति रोदनमेव गानमिति वर्णितम् ॥ "न्हदिनीमाविशत्" इति निद्रा च वर्णितेत्यर्थः ॥ १६५ ॥

त॰ दी॰— बुद्धेः सर्वत्र मुख्यत्वात्तत्त्वेनाऽन्यस्य संकथा ॥
वाल्ये जागरणं सुप्तिर्न स्वप्न इति वोधितम् ॥ १६६ ॥

त॰ प्र॰— "महिषी यद्यदीहेत" इत्यारभ्याऽध्यायसमाप्तिपर्यंतस्य तात्पर्यं वदति ॥ बुद्धेरिति ॥ सर्वत्र सर्वकार्येषु ॥ अन्यस्य जीवस्य ॥ तत्त्वेन तदनुवर्तितत्वेन ॥ "सप्तोपरि कृता द्वारः" इत्यारभ्य "याति जायात्मजोद्भवम्" इत्यंतेन भोगसाधनस्थानानां निरूपणाद्भोगस्य च बुद्ध्यधीनत्वात्तन्निरूपणेन बुद्धिवशजीवकथैव सम्यङ्निरूपिता भवतीति सप्तोपरीत्यादिग्रंथ इति ज्ञापनाय समित्युपसर्गः ॥ अवस्थाद्वयनिरूपणेनैवाऽध्यायसमाप्तेस्तात्पर्यमाह ॥ वाल्य इति ॥ अध्यायसमाप्त्येति ज्ञेयम् ॥ वाल्ये पूर्ववासनया स्वप्नसंभवेपि निश्चये प्रमाणाभावात्तथा ॥ १६६ ॥

मनया कृतं यत्कर्म तदतिरिक्त इत्यपि ज्ञेयम् ॥ अन्यथा विधिविरोधः स्यादित्ये-तत्सर्वं सर्वनिर्णयप्रकरणे निरूपितम् ॥ एतदेवाभिसंधाय विनिश्चितामित्युक्तम् ॥ अत्र च नानाकाम इति वचनादतादृशत्वात्कर्मणो दोषजनकत्वमेवेति युक्तो दृष्टांतः ॥ अत एव "भो भोः प्रजापते राजन् पशून् पश्य त्वयाऽध्वरे" इति संज्ञ-प्तपशुदर्शनमपि संगच्छते ॥ अन्यथा तेषां सद्गतिश्रवणं विरुध्येत ॥ १७१ ॥

त० दी०— कालस्य नाशकत्वं हि सर्वथैव सदापि हि ॥
नित्यप्रलयरूपेण संततिर्न निवार्यते ॥ १७२ ॥

त० प्र०— अतः परं "आससाद स वै कालः" इत्यादि विचारयति ॥ तत्र दिवसरात्रीर्गंधर्वत्वेन निरूप्य तैः सह प्राणस्य युद्धनिरूपणाभिप्रायमाह ॥ कालस्येति ॥ कालस्तु दिनादिरूपोपि सर्व एव मरणकर्त्रैव ॥ सदापि बाल्या-दिष्वपि ॥ तथापि स तु लयो निवार्यते परं तु चतुर्विधप्रलये नित्यप्रलयरूपेण या संततिः सा न निवार्यते ॥ एतदुक्तं "परिवृत्त्या विलुंपंति सर्वकामविनिर्मिताम्" इत्यंतेन ग्रंथेन ॥ १७२ ॥

त० दी०— तत्र प्राणस्य हेतुत्वमिंद्रियाणां बलं ततः ॥
इंद्रियाशक्तितो ज्ञातः स्थूलप्राणपरिक्षयः ॥ १७३ ॥

त० प्र०— अग्रिमश्लोकार्थमाह ॥ तत्रेति ॥ सर्वथा यो नाशस्तन्निवारणे प्राण-स्यैव हेतुत्वम् ॥ प्राणस्थित्यैव देहस्थितेः ॥ इंद्रियाणामपि बलं प्राणत एव ॥ ननु चिंताहेतुप्राणक्षयज्ञानमस्य कथमत आह ॥ इंद्रियाशक्तित इति ॥ स्थूलेति ॥ महत्कार्यकरणसामर्थ्यमिंद्रियाणां यस्मात्स स्थूलप्राणः ॥ तादृशं सामर्थ्यमेव वा स्थू-लत्वं प्राणानाम् ॥ केवलं जीवनसंपादकः सूक्ष्मः ॥ अतः कार्याभावेन कारणाभा-वानुमानमित्यर्थः ॥ १७३ ॥

त० दी०— पुत्रादिविषयाः सर्वे कालेनैव द्विधा कृताः[1] ॥
नाशोपयोगराहित्यभेदेनाऽऽस परं स्वतः ॥ १७४ ॥

त० प्र०— ननु प्राणेंद्रियादीनां स्वरूपतः सत्त्वाच्चेश्च भोगसंभवाच्चिंता कुत इत्यत आह ॥ पुत्रादीति ॥ इंद्रियपरिणामबुद्धिवृत्तित्यादिविषया इत्यर्थः ॥ द्वैविध्यमे-वाह ॥ नाशेति ॥ केषांचिन्नाशः केषांचित्स्थितानामपि कार्योपयोगराहित्यम् ॥ यद्यपि

१ कालेन द्विविधाः ॥

त० दी०— देहात्मबुद्ध्या यत्सिध्येत्तद्धि तस्य प्रपंच्यते ॥
प्रौढस्य राजसत्वाद्धि महिषी साऽपि तादृशी ॥ १६९ ॥

त० प्र०— अत एव देहात्मबुद्धेरेवाऽत्र प्राधान्यमित्याद्यश्लोके तस्याः स्वातंत्र्यं निरूपितम् ॥ देहात्ममत्यभावे वक्ष्यमाणस्य कस्याऽप्यसंभवात्तत्कारणत्वेन तस्याः कथनं युक्तमिति हिशब्दार्थः ॥ तामस्या अपि देहात्मबुद्धेः "इत्थं पुरंजनम्" इत्यादिना राजसीत्वेन निरूपणे हेतुमाह ॥ प्रौढस्येति ॥ साऽपि तामस्यपिता-दृशी राजसीत्यर्थः ॥ महिषीत्वाद्राजानुगुणत्वं युक्तमिति हिशब्दार्थः ॥ विषयभोगे रजोगुणस्यैव प्रयोजकत्वात्सा तद्भोगानुकूलैव जातेत्यर्थः पर्यवस्यति ॥ १६९ ॥

त० दी०— बहिर्यावान् हि संसारो यस्यांतःकरणेपि सः ॥
अतःपुत्रादिसंपत्तिरविशेषेण वर्ण्यते ॥ १७० ॥

त० प्र०— इंद्रियपरिणामादीनां पुत्रादित्वेन निरूपणे तात्पर्यमाह ॥ बहिरिति॥ यस्य पुरुषस्य यावान् संसारो बहिरस्ति तावानंतःकरणेप्यस्ति ॥ अंतःकरणे तद-भावे बहिरपि तदसंभवादिति ज्ञापनाय बाह्यवत्पुत्रादिसंपत्तिरविशेषेणैवांतरप्युक्ते-त्यर्थः ॥ यद्वा ॥ ननु सर्वेषां जीवानां तावंत इंद्रियपरिणामास्तावत्यो बुद्धिवृत्त्या-दयश्च भवंत्येवेति न नियमः ॥ केषांचिन्मध्य एव मृतेः संभवात् ॥ न च शतव-र्षजीविन एवेदमुच्यत इति वाच्यम् ॥ साधारण्यव्याघातात्तत्कथं शतान्येकादशो-त्पादीत्युक्तमत आह ॥ बहिरिति ॥ पूर्ववद्बाह्यसंसारस्यांतःकरणपूर्वकत्वमात्रे यतस्तात्पर्यं तस्य सर्वत्राविष्टत्वादतो हेतोः सा सर्वेषां जीवानामविशेषेणैव निरूप्यत इत्यर्थः ॥ १७० ॥

त० दी०— स्वल्पेऽपि हि मनोराज्यं यथा तत्त्वत्र वर्ण्यते ॥
नित्यातिरिक्ते दोषः स्याद्वधेनेति विनिश्चितम् ॥ १७१ ॥

त० प्र०— यागे बहिः सर्वसाधारण्यासंभवात् "ईजे च क्रतुभिः" इत्यस्यार्थ-माह ॥ स्वल्पेपीति ॥ इज्यत्वेनाल्पफलदातृणामुक्तत्वादल्पेऽप्यर्थेऽस्य मनोरथ उ-च्यते ॥ सोऽपि यथा येन प्रकारेण परोपद्रवरूपेण सोऽत्रास्मिन्वाक्ये वर्ण्यत इत्यर्थः॥ तुशब्दो बहिरपि यागपक्षं व्यावर्तयति ॥ ननु प्राचीनबर्हिषो वैधहिंसाकर्तृत्वादस्य च तद्विपरीतत्वात् "यथा भवान्" इति दृष्टांतोऽयुक्त इत्यत आह ॥ नित्याति-रिक्त इति ॥ अग्निहोत्रादिपंचकातिरिक्त इत्यर्थः ॥ नित्योपयोगित्वेन पश्वादिका-

१ पुस्तकान्तरेषु तामसीतिपदं नाऽस्ति ॥

भीमसैनिक इत्यंतनिरूपितार्थरूपैवेत्यध्यायस्तावत्पर्यंत एवेत्यर्थः ॥ अग्रिमाध्यायार्थं प्रतिजानीते ॥ नाश इति ॥ १७६ ॥

त० दी०— ज्वररोगादिसंयुक्ता सर्वनाशकरी तु सा ॥
अधिकारि शरीरं च नाशयत्येव दोषतः ॥ १७७ ॥

त० प्र०— तत्र सैनिका इत्यादिश्लोकपंचकस्यार्थं वदँस्तत्र प्रज्वारादीनामपि नाशकत्वे स्वातंत्र्यभ्रमाभावायाऽऽह ॥ ज्वरेति ॥ "याहि मे पूतनायुक्ता" इति वाक्ये भयेनान्येषां सहभावमात्रस्योक्तत्वात्सैव नाशकरी ॥ एवं तेषामनुपयोगमाशंक्योक्तं सर्वेति ॥ देहशक्तिवृद्ध्यादिनाशकत्वेपि संवांशेन नाशकत्वं ज्वरादियुक्ताया एवेति तत्सहभूता सा तथेत्यर्थः ॥ हरिभक्तशरीरव्यावर्तनाय तुशब्दः ॥ ननु तदैव देहस्याऽनाशान्नाऽस्या नाशकत्वं किं तु "तदुदितः स हि यो यदनंतरः" इति न्यायात्क्षयस्यैवेति शंकां वारयन्नेव "प्रार्दयन् सकलां पुरीम्" इत्यादिना सामान्यतो निरूप्य "कन्योपगूढो नष्टश्रीः" इत्यादिना पुनर्विशेषनिरूपणस्य तात्पर्यमाह ॥ अधिकारीति ॥ कर्मादिष्वधिकारिरूपं तत्करणसमर्थं यच्छरीरं तन्नष्टश्रीत्वादिदोषकरणतो नाशयत्येवेत्यर्थः ॥ १७७ ॥

त० दी०—अंतःस्थ एव विषयः सूक्ष्मरूपेण यः स्थितः ॥
देहत्यागे सर्वनाशो देहमत्या भविष्यति ॥ १७८ ॥

त० प्र०— ननु चितासमये प्राचीनबुद्धिवृत्त्यादीनामसंभवात् "दुहितॄः पुत्रपौत्राँश्च" इत्यादि कथं संगच्छत इत्यत आह ॥ अंतस्थ इति ॥ विषयीभ्रताविषयः पुत्रादिः ॥ सूक्ष्मरूपेण वासनारूपेण सर्वस्य बुद्धिवृत्त्यादेर्नाशो भविष्यति देहात्ममतिरेव तत्र हेतुः ॥ देहस्यैवात्मत्वेन ज्ञानात्तत्त्यागे सर्वनाशं मन्वानस्तथा चिंतां कृतवानित्यर्थः ॥ १७८ ॥

त० दी०— तद्धेतुः कंठरोधादि तस्मिन् जातेऽन्वतप्यत ॥
न स्मृतिः कृष्णदेवस्य मरणेपीति तत्कथा ॥ १७९ ॥
जीवे गते तु सर्वेषां गतिस्तस्य बलाद्यमात् ॥
नित्योऽपि विधिहीनश्चेन्नरकायैव नाऽन्यथा ॥ १८० ॥

त० प्र०— पूर्वमनिरूपणेऽधुना च तन्निरूपणे हेतुमाह ॥ तद्धेतुरिति ॥ आदिपदेन तत्कार्यं लोकांतरं गतवतीत्यादिना तत्कथनस्य प्रयोजनमाह ॥ न स्मृति-

१ न ॥

कालः सर्वदा विशिष्टः ॥ न ह्यस्मिंस्तदा काचन नाशोपयोगिनी कृतिः कालेन क्रियते तदैवान्यस्येंद्रियादिवृद्धिदर्शनाच्च तथापि तावति काले गते सर्वत्र सर्वं तथा भव-तीति कालकृतमित्युच्यते ॥ परं तु स्वत एवेंद्रियादिस्तथा भवति तदाह ॥ **परं स्वत इति** ॥ स्वतः परमिंद्रियादिस्तथा आसेत्यर्थः ॥ तर्हि पूर्वमेवैवं कुतो न स्यात् ॥ न स्यात्० स्वसंबंधितावत्कालस्य निमित्तत्वात् ॥ तर्हि स्वत इति कथम् ॥ इत्थम्० एकस्यैव कालस्य कंचित्प्रति शतवर्षात्मकत्वं कंचित्षोडशवर्षात्मकत्वं च दृश्यते ॥ तत्रावऽच्छेदकेन भाव्यमवश्यम् ॥ स च तत्तत्संबंधनिरूपकः स स प-दार्थ एवेति यत्र कालसाम्येपि कस्यचिदिंद्रियादिसामर्थ्यं नापैति तत्रेश्वरेच्छा प्रारब्धं वा नियामकं ज्ञेयम् ॥ यद्वा परं स एवेत्यग्रिमश्लोकोक्तं भोगो ज्ञानं च ॥ तद्द्वयं स्वत एव प्रारब्धादेव न त्विंद्रियसामर्थ्येनेत्यर्थः ॥ १७४ ॥

त० दी०— स्वस्याप्यशक्तिकरणे कारणं तु जरैव हि ॥
अप्रतीकरणं तस्या वक्तुमाह कथां तथा ॥ १७५ ॥

त० प्र०— इंद्रियादिसामर्थ्यनाशमुक्त्वा शरीरसामर्थ्यनाशहेतुं निरूपयति ॥ **स्वस्यापीति** ॥ जरासंबंधमात्रे निरूप्ये ततो विहतेत्यादिना तत्कथानिरूपणस्य प्रयोजनमाह ॥ **अप्रतीकरणमिति** ॥ १७५ ॥

त० दी०— अनुग्रहादिकर्तृत्वाद्देवता मृत्युबोधिका ॥
विनश्यत्तैवमेवैव नाशोऽतः परमुच्यते ॥ १७६ ॥

त० प्र०— तत्र "कालस्य दुहिता" इत्यादिश्लोकचतुष्टयस्य तात्पर्यमाह ॥ **अनुग्रहादिति** ॥ अनुग्रहः पूरौ ॥ आदिशब्देन निग्रहो नारदे ॥ तेन देवता सेति ज्ञापितम् ॥ तस्याः कार्यमाह ॥ मृत्युबोधिका ॥ यदैव सा प्रविशति तदैव मृत्युरागत इति ज्ञायत इत्यर्थः ॥ अध्यायार्थमुपसंहरति ॥ **विनश्यत्तेति** ॥ कालेन कृत्वा जीवशक्तेरभिभवोऽध्यायार्थः ॥ सोऽपि "एवं कृपणया बुद्ध्या" इत्येतदंतो न तु[1] "अव्यक्तो भीमसैनिकः" इत्यंत इति मतनिराकरणायैवमेवैवेत्युक्तम् ॥ तथा हि ॥ अत्र हि जीवशक्त्यभिभवनिरूपणं न मुख्यप्रयोजनतया किंतु नाशहेतुत्वेनेति तेनापि वाच्यम् ॥ तथा च तदपेक्षयेंद्रियादिशक्तिह्रासेष्वप्यनुगतैका विनश्यत्तैवा-ध्यायार्थत्वेन वक्तुमुचिता ॥ एतदुक्तमेवमेवेत्यनेन ॥ नन्वस्त्वेवं तथाप्यध्यायस्तद-वधिरेवेति चेत्तत्राह ॥ **एवैवेति** ॥ अत्र विनश्यत्तैव निरूप्या सा चाऽव्यक्तो-

१ इव ॥ २ ज्ञापिता ॥ ३ मुख्य ॥

च विशेषतो निरूपणमेवेष्टं तदा यथांतराणां बाह्यत्वेन निरूपणं कृतं तथा बाह्याना-
मपि पदार्थानामांतरत्वेन निरूपणं कर्तुमुचितं स्यात् ॥ एवं सति स्त्रीत्वेनं जात-
स्यापि सर्वं स्पष्टमेवेति व्यर्थं निरूपणम् ॥ किंच पूर्वं ह्यांतराणां बाह्यत्वेन निरू-
पणं कृतम् ॥ प्रकृते च सत्संगादिपदार्थानां बाह्यानामेव बाह्यत्वेन निरूपणेन नाऽर्थे
परोक्षता किंतु शब्दमात्र एव भवतीत्युपक्रमविरोध इति बाह्यानामांतरत्वेनेति
सार्द्धेनाशंक्य समाधत्ते ॥ अथापीति ॥ यद्यप्येवं तथापि प्राचीनबर्हिषस्तथा वि-
वेचनसामर्थ्येन यथाकथंचित्परोक्षतामंगीकृत्येदं निरूप्यत इत्यर्थः ॥ अस्य कर्मप-
रत्वेन तथाविवेकाभावो युक्त इति हिशब्दार्थः ॥ यद्वा ॥ नन्वांतरबुद्ध्यादीनां
बाह्यस्त्रीत्वादिनिरूपणेन हि पूर्वं परोक्षतोक्ता प्रकृते तु सत्संगश्रवणादीनां बाह्या-
नामेव बाह्यत्वेन निरूपणे कथं कथायाः परोक्षतेत्यत आह ॥ बाह्यानामिति ॥ अत्र
हि भगवद्धर्मसंबंधेन मुक्तिर्वाच्या स च बाह्याभ्यंतरभेदेन द्विविधः ॥ तत्र बाह्यो-
प्यांतर एवेति मंतव्यः ॥ एतत्संगेनाऽहं कृतार्थो भूयासमिति बुद्धिपूर्वकस्यैव तस्य
तत्साधनत्वात् ॥ अन्यथा भक्तद्रोहार्थं कृतस्य सत्संगस्यापि मोचकत्वं स्यात् ॥ न
चैवं, नरकसाधनत्वात् ॥ तथा च ॥ बाह्यत्वेन प्रतीयमानानां सत्संगादीनामप्यां-
तरत्वात्तेषां च बाह्यत्वेन निरूपणे पूर्वस्मान्न कश्चिद्विशेष इत्यर्थः ॥ एतेन स्त्रीत्वेन
जातस्य मुक्तिनिरूपणमन्यशास्त्रविरोधीत्यपि निरस्तम् ॥ न ह्यत्र देहधर्मस्य स्त्री-
त्वादेर्निरूपणं किं त्वात्मधर्मस्य ॥ तौ च "पुंस्त्वं स्वतंत्रता तस्य पारतंत्र्यं तथे-
तरत्" इति पुरैवोक्तौ तदाह ॥ तदा स्त्रीत्वेनेति ॥ अस्य पूर्वत्रानुषंगः कार्यः ॥
तथा च बाह्यानां पुंस्त्वादीनामुक्तरूपाणामांतरत्वेन स्त्रीत्वेन जातस्य तदा न क-
श्चिद्विशेष इत्यर्थः ॥ तर्हि पारतंत्र्यं भिन्नतया कुतो न निरूपित मत आह ॥ यदा-
सीदिति ॥ वक्ष्यमाणरीत्या भगवतो भगवदीयस्य वाऽधीनत्वेन निरूपणाच्चदेव
निरूपितं भवतीति पृथक्त्वनिरूपणं नापेक्ष्यत इत्यर्थः ॥ एवमस्य प्रकरणस्य सर्व-
था परोक्षता साधिता ॥ यस्मिन् पक्षे बाह्यानामपि बाह्यत्वेन निरूपणं तस्मिन्पक्षे
बाह्यत्वात्सत्संगादेरर्थस्य तत्र न परोक्षता किंतूपयेमे मलयध्वज इत्यादिशब्दैर्निरूप-
णाच्छब्दमात्रे परोक्षतेत्याह ॥ तथेति ॥ १८३ ॥

त० दी०—अथाऽपि ह्यविवेकेन देवादेवालयादिषु ॥
दासेषु जन्म तस्याऽभूत्कृष्णकार्येषु संगतिः ॥ १८४ ॥

१ च।

रिति ॥ तत्कथा चिताकथा तदैव भयागमनकथा वा ॥ सर्वेषां प्राणादीनाम् ॥ तस्य जीवस्य गतिस्तु यमाधीनेत्यर्थः ॥ ब्रह्मांशत्वेनाऽयुक्तत्वेपि यमस्य स्वाधिकारत्वात्तथा ॥ ननु "तं यज्ञपशवोऽनेन" इति कथमुपपद्यते ॥ नित्यत्वेन विहितत्वात्तस्येत्यत आह नित्योपीति ॥ १७९ ॥ १८० ॥

त० दी०— कुटुंबपोषणफलमनुभूय चिरं पुनः ॥
देहात्ममतिदार्ढ्येन प्राकृतोऽभूदितीर्यते ॥ १८१ ॥

त० प्र०— अनंतपार इत्यस्यार्थमाह ॥ कुटुंबेति ॥ "तामेव मनसा" इत्यस्यार्थमाह ॥ देहात्मेति ॥ "यं यं चापि स्मरन् भावम्" इतिवाक्यानुसारेण पुनस्तथैवाऽभूदित्युच्यत इत्यर्थः ॥ १८१ ॥

त० दी०— पुरंजनकथा पूर्वसिद्धैवेति न सोच्यते ॥
वहिः कथाऽपि येनाऽयं मुच्यते स निगद्यते ॥ १८२ ॥

त० प्र०— संसारमार्गकथनमुपसंहरन् पुनर्जन्मांतरस्याप्यांतरबाह्यकथानुक्तौ हेतुमाह ॥ पुरंजनेति ॥ वहिः कथापि पूर्वसिद्धैवेति संबंधः ॥ अतः परं येन मार्गेणाऽयं मुक्तो भवति स मार्गः "अनंतरं विदर्भस्य" इत्यादिना निरूप्यत इत्याह ॥ येनायमिति ॥ १८२ ॥

त० दी०— बाह्यानामांतरत्वेन न विशेषोऽस्ति कश्चन ॥
तदा स्त्रीत्वेन जातस्य यदासीत्स्पष्टमेव तत् ॥
तथा परोक्षता नाऽर्थे शब्दमात्रे भविष्यति ॥ १८३ ॥

त० प्र०— ननु संसारमार्गान्मुक्तिमार्गे ह्यांतरकृत एव विशेषो नाऽन्यः ॥ तथा चैतत्सदृश एव सोपि मार्गः परमंतर्मुखतया क्रियमाणत्वेनांतरोयं बहिर्मुखतया क्रियमाणत्वेन बाह्यत्वं तस्येति विशेष इत्यतिदेशेनैव ज्ञातुं शक्यत्वाद्विशेषनिरूपणं व्यर्थम् ॥ तथाहि ॥ तत्र देहात्ममतिसंगेनेंद्रियाद्यध्यासेन च तद्वृत्तितत्परिणामादयः पुत्रादिसंतानत्वेनोक्ता यथा तथा भगवानात्मेति मतिसंगेन तत्र स्नेहे जाते तदुपदेष्टृसंगेन हरिसेवाख्यचिश्रवणादिरूपापत्यानि ॥ यथा भज्वारादयोंतर्बहिस्तापकास्तया तन्निवर्तकोंतर्बहिस्त्यागो यथा गंधर्वैरायुःक्षयस्तथा भगवद्भक्त्या तदक्षयः ॥ तदुक्तम् ॥ "तस्यत्वं यत्क्षणो नीतः" इति ॥ यथा जरयेंद्रियवैकल्यं तथा योगेन तज्जयो यथा प्राकृतवुद्ध्याप्राकृतत्वं तथा ब्रह्मात्मभावनया तद्भाव इति ॥ यदि

त० दी०— अहंकारप्रवृत्तस्य क्लेशः सर्वोपि वर्ण्यते ॥
ततो ज्ञाने समुत्पन्ने नष्टेहंकरणे पुनः ॥
चिंता कृष्णस्य सेवार्थमभूद्येनातिदुःखिता ॥ १८७ ॥

त० प्र०— चतुर्विधांतःकरणे चाहंकारमात्रमवशिष्यते ॥ अहं सर्वं साधयामीतिरूपः ॥ तस्य निवृत्तिप्रकारो विभज्येत्यादिना निरूप्यत इत्याह ॥ अहंकारेति ॥ भगवदधीनतयैव चेत्स्थितिः स्यात्तयैव सर्वं सिध्येत् ॥ अहं स्वसाधितसाधनैः साधयिष्यामीति प्रमाणपरतया साधनेषु प्रवृत्तस्याधिभौतिकादिक्लेशो निरूप्यत इत्यर्थः ॥ अत्राऽहंकारकार्यरूपं यत्कृष्णकार्यं तद्रूपो मलयध्वज उच्यते ॥ अत एव कुलाचलमदिरेक्षणापदे मूले कार्यकारणयोरैक्यात्स एवाहंकारत्वेनाऽप्युच्यते ॥ सुतत्यागस्याऽप्युक्तत्वान्न पूर्ववच्छ्रवणादिकं ज्ञेयम् ॥ "आरिराधयिषुः कृष्णम्" इति वचनान्न सर्वात्मना त्यागः ॥ अतः सुष्ठूक्तमहंकारप्रवृत्तस्येति ॥ ततः सात्त्विकांतःकरणे कियत्कालानंतरं क्व भगवान् ब्रह्मादिदुरापः क्वाहमतिनीच इत्येवंरूपे माहात्म्यानुभवे सति दैन्याविर्भावेनाहं साधयिष्यामीतिरूपेऽहंकारे नष्टे तादृशस्य भगवतः सेवा कथं स्यादिति चिंताऽभूत् ॥ पूर्वं तु स्वस्यैव भजनायोग्यत्वेन चिंताऽभूत् ॥ तत एवमतिदुरापत्वज्ञानेन तूष्णींभावे भजनमार्गोच्छित्तौ सर्वपुरुषार्थोच्छित्तिर्भविष्यतीति महती चिंताभूदिति पुनःपदम् ॥ अत एवाऽतिदुःखिता ॥ "इदं यदा नोपलभेतांघ्रौ" इत्यादिना निरूपितम् ॥ १८७ ॥

त० दी०— अहंकारस्य लेशेन पुनः सेवापरो ह्यभूत् ॥
ततस्तस्याप्यभावे तु मोहे साक्षाद्धरिर्विभौ ॥ १८८ ॥

त० प्र०— अहंकारनाशे सति "पतिं परमधर्मज्ञम्" इत्यादिना पुनः कृष्णकार्यकथनमनुपपन्नमित्याशंक्य तत्रोपपत्तिमाह ॥ अहंकारस्येति ॥ मद्दीनतयैव संतुष्टो भविष्यतीति तल्लेशः ॥ तेन पुनस्तत्परोऽभूत् ॥ तथापि भगवदप्राप्तौ तल्लेशोपि नष्टः ॥ तदा सर्वं भगवदधीनं भगवांश्चाऽतिदुराराध्य इति सर्वमशक्यमिति स्वरूपाज्ञानस्य सत्त्वात्स्वनाशमेव भावयमानायां सत्यां हरिरंतर्यामी स्वयमेव बभाविसर्यः ॥ पतिशरीरमात्रं तल्लेशः ॥ चिंतावादीपनं तदभावः ॥ १८८ ॥

त० दी०— आद्यं पर्व तु तेनैव नाशितं येन सोऽभवत् ॥

१ चिंतावुद्दीपनम् ।

त० प्र०— एवं प्रकरणस्य परोक्षतामुक्त्वा तज्जन्म विचारयति ॥ यद्यप्युक्त-रीत्या पुंस्त्वादौ न विशेषस्तथापि "बभूव प्रमदोत्तमा" इति प्राकृतभावमुक्त्वा मध्ये जन्मांतरमनुक्त्वैवाग्रिमवृत्तांतकथनात्तद्भावापन्नस्यैव सा कथेत्यवसीयते ॥ तच्चानुपपन्नमित्याशंक्य तज्जन्मस्वरूपमाह ॥ **अथापीति** ॥ अथेति भिन्नप्रक्रमे ॥ यद्यपि प्राकृतदशायामेवैतन्न संभवति तथाप्युच्यत इत्यपेरर्थः ॥ तत्रोपपत्तिमाह ॥ **दैवादिति** ॥ भगवदिच्छात इत्यर्थः ॥ यदि प्राकृतदशायामेव भगवत्कृपा न स्याद-प्राकृतदशायामेव च स्यात्तदा कदाचिदपि न स्यादन्योन्याश्रयात् ॥ अतः पूर्वं भगव-त्कृपा युक्तेति हिशब्दार्थः ॥ अविवेकेनेदं भगवत्कार्यमलौकिकमिति विवेकराहि-त्येन कृष्णकार्येषु संगतिरिति संबंधः ॥ अविवेकेनोपलक्षितस्यैव तस्य तेषु जन्मा-ऽभूदिति वा ॥ दक्षिणदेशोक्तिरप्यत्र साधिकेति ज्ञेयम् ॥ अन्यत्र तथापूजाप्रवाहाभा-वात् ॥ यतस्तेषु जन्माभूदतः कृष्णकार्येषु साऽभूदित्यर्थः ॥ १८४ ॥

त० दी०—कार्यासक्तस्य तस्याऽभूत्प्रेमाश्रुत्यादिसप्तकम् ॥
निरंतरं कृतानां हि सप्तानां कोटिशो भवः ॥ १८५ ॥

त० प्र०— "तस्यां संजनयांचक्रे" इत्यस्यार्थमाह ॥ **कार्यासक्तस्येति** ॥ प्रमे-यबलेनैवेति भावः ॥ एकैकेत्यस्य तात्पर्यमाह ॥ **निरंतरमिति** ॥ सकृत्कृतानां बहुधा भवनाभावात्तथा कृतानामेव तथा युक्तमिति हिशब्दार्थः ॥ तेन कोटिश आवृत्तानामेव श्रवणादीनां पुरुषार्थसाधकत्वं न सकृत्कृतानामिति भावः ॥१८५॥

त० दी०— कार्यं चिंतयतस्तस्य दृढः प्रेमा मनस्यभूत् ॥
येन वैराग्यसत्संगौ यतः प्रेम्णाभजद्धरिम् ॥ १८६ ॥

त० प्र०— अग्रिमस्याऽर्थमाह ॥ **कार्यं चिन्तयत इति** ॥ पूर्वं तु स्वाधिकार-वशादेव भगवत्कार्यमात्रं यथाकथंचित्कार्यमिति बुद्ध्या तत्करणम् ॥ अन्यतः पुत्रा-दितस्तत्संपादने तूष्णींभावोऽप्यासीत् ॥ तदनंतरं निरंतरं भगवत्कार्यचिंतनेन कृत्वा मनसि प्रेमाभूत् ॥ सोपि दृढोऽन्यथा कर्तुमशक्यः, अन्यस्मिन् सेवाकर्तरि संभव-त्यपि येन स्वयमकृत्वा स्थातुमशक्तो भगवति तादृशः प्रेमाऽभूदित्यर्थः ॥ तदा-न्येषां प्रतिबंधकत्वज्ञानेन स्वभावतोप्यन्यत्र वैराग्यं जातम् ॥ ततो भक्तेष्वेव संगः ॥ तत्र च सततं भगवत्कथाश्रवणेन माहात्म्यज्ञानपूर्वकसुदृढसर्वतोधिकस्नेहेन हरिमभजत् ॥ एतेन प्राणेन्द्रियांतःकरणाध्यासानिवृत्तिरुक्ता ॥ प्राणेभ्योपि भगवत एवाऽधिकं प्रियत्वात् इंद्रियाणां च तादर्थ्यात् ॥ १८६ ॥

क्षत्वं नास्तीतिशंकाभावायेपद्व्याख्यानस्य तात्पर्यं वक्तुं तदनुवदति ॥ प्राणेंद्रियादीति ॥ कथां परोक्षकथामित्यर्थः ॥ १९१ ॥

त० दी०— कथंचिद्बोधनं कार्यं न व्याख्यानं स्वतः फलम् ॥
अल्पं च तावता नैव ज्ञानं स्यादिति विस्तृतिः ॥ १९२ ॥

त० प्र०— अत्र तात्पर्यमाह ॥ कथंचिदिति ॥ तथा कथने हेत्वंतरमाह ॥ अल्पं चेति ॥ एतदेव विवृणोति तावतेति ॥ अयं तु नोत्तमाधिकारी कर्मजडत्वादतो नाऽल्पकथनेनाऽस्य बोध इति परोक्षकथायामुक्तादर्थादधिकोर्थः क्वचित्पुमानित्यादिपूक्त इत्यर्थः ॥ १९२ ॥

त० दी०— एकेन पूर्वमखिलं दोषो हेतुस्तथा कृतिः ॥
फलं च द्विविधं हीनसाम्यं दार्ष्टांतिकं तथा ॥ १९३ ॥

त० प्र०— स्वतंत्रोक्तौ श्लोकान् विभजते ॥ एकेनेति ॥ एवं बहुविधैरित्येकेनैव "एवं कृपणया बुद्ध्या" इत्यंतेन निरूपितं पूर्वजन्मवृत्तांतं निरूपितवान् ॥ ततः प्राणेंद्रियेत्येकेन दोषवर्णनम् ॥ ततो "यदात्मानम्" इत्येकेन प्राणादिषमौध्यासे हेतुभूतस्वरूपाज्ञानस्य निरूपणम् ॥ तत एकेन कृतिनिरूपणम् ॥ ततो द्वाभ्यां द्विविधं फलमुक्तम् ॥ ततः "क्षुत्परीतः" इत्येकेन हीनसाम्यम् ॥ तत एकेन दार्ष्टांतिकम् ॥ १९३ ॥

त० दी०— दुःखसंततिरामुक्तेरन्यथा सिद्धिसंकथा ॥
हेतुनिर्द्धारणं चैव निस्तारोपायवर्णनम् ॥ १९४ ॥

त० प्र०— तत एकेन मुक्तिपर्यंतं दुःखसंततिरेवेति निरूपणम् ॥ तत एकेनाऽन्येषां दुःखप्रतीकारोपायानामनुपायत्वकथा ॥ दृष्टांतेन बोधनमुपसर्गार्थः ॥ ततो दुःखहेतुनिर्धारणं द्वाभ्याम् ॥ तत एकेन निस्तारोपायकथनम् ॥ १९४ ॥

त० दी०— पंचभिः साधनं तस्य चतुर्भिः सर्वबाधनम् ॥
मुख्योपपत्तिः प्रकृते सिद्धत्यागोपदेशनम् ॥ १९५ ॥

त० प्र०— ततः पंचभिः श्लोकैर्निस्तारोपायरूपभक्तेः साधनं निरूपितम् ॥ ततश्चतुर्भिर्भक्त्यतिरिक्तानां सर्वेषां साधनानां बाधनम् ॥ ततो भक्तिमार्गे भगवदनुग्रहरूपा मुख्योपपत्तिरेकेन ॥ तत एकेन सिद्धस्य कर्मणस्त्यागोपदेशनम् ॥१९५॥

त० दी०— तत्र हेतुभ्रमः श्रोतुः सार्द्धाभ्यां सर्वनिर्णयः ॥
शीघ्रनिर्गमनार्थाय दृष्टांतेन तथा वचः ॥ १९६ ॥

अत एव हि संपन्नं न विविक्तं हि गोप्यतः ॥
मूढत्वमेव कार्याय न कर्मजडतेति हि ॥ १८९ ॥

त० प्र०—आविर्भूतकार्यमाह ॥ आद्यमिति ॥ स्वरूपाज्ञानमविद्याया आद्यं पर्व ॥ तेनैव हरिणैव ॥ नाशफलमाह ॥ येनेति ॥ सोभवत्तत्पदार्थरूपोऽभवदित्यर्थः ॥ एवकारेणेतरानाश्यत्वमस्योच्यते ॥ ननु पंचेंद्रियार्था इत्यादिव्याख्यानस्य किं प्रयोजनं अधिकारिणोतर्यामिसाक्षात्कारे स्वत एव तद्बोधसंभवादित्यत आह ॥ अत एवेति ॥ यतो व्याख्यानं कृतमत एव हेतोर्ज्ञानं संपन्नमित्यर्थः ॥ तत्रोपपत्तिमाह ॥ न विविक्तं हीति ॥ वाक्यार्थो यत्र गोप्यस्तादृशाद्वाक्याद्विविक्तमेकांतरूपं सूक्ष्मं यज्ज्ञानं तन्न सिध्यतीत्यर्थः ॥ तस्य सर्ववस्तुयाथात्म्यज्ञानाभावाद्युक्तं तथा कथनमिति हिशब्दः ॥ बोधनार्थमेवाविर्भावान्नाविर्भावमात्रेण सर्वसंपत्तिः ॥ प्रमेयबलं पुरुषोत्तम एव तदपि प्रकटीकृतं चेद्भवति ॥ अत एव मुचुकुंदकथा तथा ॥ अस्य चांतर्यामिरूपत्वाद्युक्तमेवमिति पूर्व हिशब्दः ॥ तर्हि यथा तद्व्याख्यानेन तस्य ज्ञानं जातं तथा बर्हिषदोपि तच्छ्रवणात्कुतो न जातमित्यत आह ॥ मूढत्वमेवेति ॥ स तु सर्वेतिकर्तव्यतामूढ इत्येतत्कथनमात्रेणेदमेव गृहीतवान् ॥ अयं तु कर्मैव कर्तव्यं नाऽन्यदिति निश्चयेन जड इव जातस्तेन विरुद्धज्ञानसत्त्वाच्चन्नाभूदित्यर्थः ॥ जडस्य ज्ञानाभावो युक्त इति हिशब्दः॥१८९

त० दी०— एवं कृष्णकृपातोऽयं जीवन्मुक्तो बभूव ह ॥
कथामात्रत्वविज्ञानविनिवृत्त्यै तथोक्तवान् ॥ १९० ॥

त० प्र०— स्वरूपाज्ञाननिवृत्त्यैव परममुक्तिरिति भ्रमाभावाय तन्मुक्तिं विवृण्वन्नुपसंहरति ॥ एवमिति ॥ यदि भगवान् महतीं कृपां कुर्यात्तदा तदैव भक्तिमपि दत्वा स्वयं प्रकटीभूय परममुक्तिमपि दद्यात्परं त्वेवंरूपैव यतः कृपाऽतस्तथैवाऽऽसेत्यर्थः ॥ ननु नारदेन “बर्हिष्मन्” एतदिति श्लोकः किमर्थमुक्तस्तत्राह ॥ कथामात्रत्वेति ॥ तथा सति तस्य बोधार्थमाकाक्षैव न स्यात् ॥ तदभावे चोक्तिः सर्वा व्यर्था स्यादिति तस्य स्वाबोधज्ञानेन बोधाकाक्षोत्पादनार्थं तथाऽऽध्यात्म्यं पारोक्ष्येण प्रदर्शितमित्युक्तवानित्यर्थः ॥ १९० ॥

त० दी०— प्राणेंद्रियादिपर्यंतं कथंचिद्विवृतिः कृता ॥
अग्रे कथां परित्यज्य सर्वमाह स्वयं स्फुटम् ॥ १९१ ॥

त० प्र०— अग्रिमाध्यायं विचारयन्नीपद्व्याख्यायाऽग्रे यत्र व्याख्यातं तत्र परो-

प्रयुक्तं दूषणं नास्तीत्यर्थः ॥ एतत्तु साङ्ख्यमतानुसारेणोक्तम् ॥ वस्तुतस्त्वात्मैव कर्ता चेतनत्वात् ॥ तस्य च जडत्वान्न कर्तृत्वं वक्तुं शक्यम् ॥ न चात्माधिष्ठितं लिंगमेव कर्तृत्वं तस्य प्रयोजकत्वमात्रमिति वाच्यम् ॥ एवं कार्वेधिष्ठितवाश्या एव कर्तृत्वं स्यान्न तु कारोः ॥ प्रयोजकत्वं चाऽन्यथासिद्धया ॥ आत्मनश्चाऽन्वयव्यतिरेकानुविधायिनो लिंगाधिष्ठानेन कर्मकरणातिरिक्तकार्याभावान्न तथात्वमित्याशयेनाऽऽह ॥ आत्मन इति ॥ असंसार्यात्मनस्तत्रापि भगवद्भावेन गुणातीतस्य शुकादेर्भगवच्छ्रवणादि कर्तृत्वमात्मन एवेति मंतव्यम् ॥ लिंगस्य गुणात्मकत्वात् ॥ किं च लिंगवादिनाऽप्यात्मसंबद्धस्यैव तस्य कर्तृत्वं वाच्यम् ॥ संबंधश्चाऽध्यास एव वाच्यः स चाऽविद्यारूपः ॥ तेषां च सा निवृत्तेति न लिंगस्य कर्तृत्वं वक्तुं शक्यम् ॥ संसारिणस्तु लिंगविशिष्टस्यैव तथानुभवाद्विशेषणत्वेन लिंगस्यापि कर्तृत्वमित्याशयेनोपसर्गद्वयमुक्तवान् ॥ एतदेव विवृणोति ॥ ज्ञानाभाव इति ॥ पूर्णज्ञानाभावे लिंगविशिष्टस्याऽऽत्मनः कर्तृत्वमित्यर्थः ॥ १९९ ॥

त० दी०— लिंगस्य कारणत्वं च तत्पूर्वं साध्यते स्फुटम् ॥
स्वप्नेन साधनं चैव फलितं चाऽऽह वै त्रिभिः ॥ २०० ॥

त० प्र०— पूर्वोक्तं लिंगकर्तृत्वं विवृणोति ॥ लिंगस्येति ॥ तत्त्वं च वाशीवत् ॥ एतत्रितयं सिद्धांते निरूप्यते ॥ तत्र लिंगस्य करणत्वं पूर्वं साध्यते त्रिभिरित्याह ॥ तत्पूर्वमिति ॥ त्रिभिराहेति संबंधः ॥ श्लोकान् विभजते ॥ साध्यत इति ॥ येनैवेत्येकेन स्फुटं करणत्वमुच्यत इत्यर्थः ॥ तत एकेन स्वप्नदृष्टांतेन तत्साधनम् ॥ तत एकेन फलितम् ॥ २०० ॥

त० दी०— कर्माभावस्तददृष्ट्या न निश्चेतुं हि शक्यते ॥
पूर्वकर्म यथेदानीं लक्ष्यतेऽस्तीति कार्यतः ॥
तथाऽग्रेपीति भावेन कर्माध्यासौ निरूपितौ ॥ २०१ ॥

त० प्र०— अतः परं कर्माभावेन फलानुपपत्तिशंकां परिहर्तुं कर्म निरूपयंस्तदाश्रयत्वेनाऽऽत्मनि कर्तृत्वं निरूपयति कर्मणः कर्त्राधारकत्वात् ॥ कर्म चाध्यासं विना न भवतीत्यध्यासश्च निरूप्यते ॥ तत्र कर्म तु न दृश्यत इति नास्तीति न वक्तुं शक्यम् ॥ अयोग्यस्यापि सतोऽदृश्यत्वात् ॥ तर्हि तत्सत्त्वे किं मानमित्याकांक्षायां विचित्रचित्तवृत्तिलक्षणकार्यलिंगकानुमानं पूर्वजन्मकर्मणि

१ क्वचित्तत्पदं न ।

त० प्र०— ततो द्वाभ्यां श्रोतुर्बर्हिपदः कर्मणि पुरुषार्थहेतुत्वज्ञानं भ्रम एवेति निरूप्यते ॥ ततस्तत्कर्मेति सार्द्धाभ्यां सर्वनिर्णयः ॥ ततः पुत्रागमनावधिस्थिति निवृत्त्यर्थं हरिणदृष्टांतकथनपूर्वकं त्यागकथनं द्वाभ्याम् ॥ १९६ ॥

त० दी०— आत्मनोऽकर्तृताज्ञानाच्छंका सूक्ष्मो ह्यशक्तिमान् ॥
स्थूल एव ततः कर्ता तदभावे कृतं न च ॥ १९७ ॥

त० प्र०— बर्हिपदः शंकाबीजमाह ॥ आत्मन इति ॥ कर्तृत्वसमानाधिकरणः कर्तृसमानकालीनो हि भोगः स चात्र जन्मांतरीयः ॥ तदर्थं कर्मकरणं तदा भवेद्यदि तत्समानकालीनात्मन एव कर्तृत्वं स्यात् ॥ न चैवम् ॥ अतस्तादृशफलार्थं कर्मकरणं कथं संगच्छत इति राज्ञः शंका जातेत्यर्थः ॥ शंकास्वरूपमेवाह ॥ सूक्ष्म इति ॥ लिंगदेह इत्यर्थः ॥ पूर्वोक्तशंकासमाधानार्थं भोगसमानकालीनस्य लिंगशरीरस्यैव कर्तृत्वं वाच्यम् ॥ तच्च न संभवति ॥ तस्य कर्मकरणेऽशक्तत्वात् अतः स्थूल एव देहः कर्ता ॥ जन्मांतरे च तत्कालीनभोगफलककर्मकर्तृभूतपूर्वशरीरस्याभावात्कस्मिन् फलं स्यात् ॥ किं च कर्तरि हि कर्मोत्पद्यते ॥ तादृशस्य देहस्याभावे कर्मापि न स्यादधिकरणाभावात् । एतदाह तदभाव इति ॥ १९७ ॥

त० दी०— कर्त्तुः फलेऽस्य संदेहो लिंगे कर्तृत्वनिश्चयः ॥
स्थूलस्य पोषकत्वं हि येन केनाऽपि तद्भवेत् ॥ १९८ ॥

त० प्र०— फलितमाह ॥ कर्तुरिति ॥ अधिकरणकरणयोरभावात्कर्मकर्तुः कथं फलमुपपद्यत इत्यस्य राज्ञः संदेह उत्पन्न इत्यर्थः ॥ एवं प्रश्नार्थमुक्त्वोत्तरार्थमाह ॥ लिंग इति ॥ स्थूले यत्कृतिसामर्थ्यदर्शनं तत्सूक्ष्मस्यैवेति मंतव्यम् ॥ अन्यथा मृतशरीरस्यापि सामर्थ्यं स्यात् ॥ अतोन्वयव्यतिरेकानुविधानात्सूक्ष्मस्यैव कर्तृत्वम् । न हि स्थूलं विनापि तेनैव भोगः संपद्यतेत्यत आह ॥ स्थूलस्येति ॥ भेरीदंडन्यायेन स्थूलस्य तत्सामर्थ्यपोषकत्वमेवेत्यर्थः ॥ ननु प्राग्भवीयदेहपोषणेन कृतकर्मणः फलभोगे कथमेतद्देहस्य पोषकत्वमत आह ॥ येन केनापीति ॥ न हि तच्छरीरत्वेनावच्छिद्यते पोषकत्वं किं तु शरीरत्वेनैव ॥ अतः केनापि शरीरेण तत्पोषकत्वं भवेदित्यर्थः ॥ १९८ ॥

त० दी०— अतो लिंगस्य कर्तृत्वात्तत्सत्त्वेन न दूषणम् ॥
आत्मनश्चापि कर्तृत्वं ज्ञाने भावे तु लिंगिनः ॥ १९९ ॥

त० प्र०— उपसंहरति ॥ अत इति ॥ तत्सत्त्वेन लिंगसत्त्वेन ॥ कर्त्रभाव-

अत एवांते तस्याविद्यारूपत्वेन तन्निवर्तकश्च भगवानेवेति तद्भजनमुक्तवान् ॥ "मामेव ये प्रपद्यंते" इत्याद्युपपत्तिर्हिशब्देनोच्यते ॥ २०३ ॥

त० दी०— मुक्ते पितरि पुत्राणां न बंधस्तत्कृतो भवेत् ॥
प्रोवाचाऽतस्तु पुत्राणामैहिकामुष्मिकं फलम् ॥ २०४ ॥

त० प्र०— ननु पुत्रमुक्तिप्रकरणे पितृमुक्तिनिरूपणं कुत्रोपयुज्यते तत्राह ॥ **मुक्त इति** ॥ अतो हेतोः प्रोवाच पितृमुक्तिमिति शेषः ॥ एवं ब्रह्मत्वलक्षणां मुक्तिमुक्त्वा कृष्णसायुज्यरूपां तत्फलरूपां तामाह ॥ तुशब्दः पितृकथासंबंधं व्यावर्तयति ॥ एतदध्यायद्वयार्थमाह ॥ **पुत्राणामिति** ॥ एकेनैहिकमपरेणाऽऽमुष्मिकं फलं प्रोवाचेत्यत्रैव संबध्यते ॥ २०४ ॥

त० दी०— परमानंदसंप्राप्तिः पौरुषं यशसा सुखम् ॥
कृष्णेनैव तु संसिद्धमधिकारे स्तुतिर्मता ॥ २०५ ॥

त० प्र०— ननु पूर्वं स्तुतिरुचिता तत्कथं भगवद्वाक्यान्येव पूर्वमुच्यंत इत्यत आह ॥ **परमानंदेति** ॥ एतेषामेतत्सर्वं भगवतैव दत्तं सिद्धम् ॥ "अनुग्रहान्मम" इति वचनात् ॥ ननु स्वतपसेति ज्ञापयितुं पूर्वं भगवद्वाक्यैस्तद्दानमेवोक्तवान् ॥ परमानंदप्राप्तिस्तु तद्दर्शनं कृष्णे सायुज्यं च ॥ तेन पितुः सकाशादाधिक्यमुक्तं तस्य दर्शनाभावादानंदमात्रप्राप्तेश्च पूर्णानंदाप्राप्तेः ॥ तरुदहनादिसामर्थ्यं पौरुषम् ॥ तर्हि स्तुतेः क्वोपयोगस्तत्राह ॥ **अधिकार इति** ॥ भगवत्स्वरूपमेव फलं यथा सिध्यति तथाऽधिकारनिमित्तं स्तुतिरित्यर्थः ॥ अथवाऽन्यत्र स्तुतिकरणेन तुष्टाद्भगवतः फलं प्राप्नोति ॥ भक्तिमार्गे तु भगवान् स्वत एव यदा भक्तेषु सर्वं संपादयति स्वीयत्वेन तदा भक्तः स्वांगीकारं सर्वात्मना ज्ञात्वा स्तुत्यादिषु स्वाधिकारं जानाति ततः स्तौति ॥ अथवा सर्वात्मना स्वांगीकारज्ञानेनांतरानंदे पूर्णे बहिरपि सर्वेंद्रियेषु प्राकट्यसमये वाचि स निर्गच्छन् स्तुतिरूपो भवतीत्यानंदस्यैवाऽधिकाररूपत्वम् ॥ अत एव पूर्वं प्रभुवाक्यैस्तस्मिन् सिद्धे जाते पश्चात्स्तुतिर्भक्तिमार्गे मतेति पश्चान्निरूपितेत्यर्थः ॥ २०५ ॥

त० दी०— शास्त्रार्थसिद्धये याच्ञावशतश्चाऽपि नारदः ॥
शोचन्मध्ये त्वभजनाद्भजनं प्राह सर्वथा ॥ २०६ ॥

त० प्र०— तर्हि नारदोपदेशो व्यर्थ इत्यत आह ॥ **शास्त्रार्थेति** ॥ "आचार्यवान् पुरुषो वेद" इति शास्त्रार्थसिद्धय इत्यर्थः ॥ यद्यपि शिवोपदेशोऽप्यस्ति

प्रमाणं नारदेनोक्तम् ॥ ननु प्रश्नत्वे तज्जन्मनि कृतकर्मणोऽदर्शनात्फलानुपपत्तिः शंकिता उत्तरे च पूर्वजन्मकर्मसाधनमित्यनुत्तरमिदमित्याशंक्य तदभिप्रायमाह ॥ पूर्वकर्मेति ॥ तेन हि कर्ममात्राभाव उक्तस्तया रीत्या अधुना चैतत्कर्म कार्यस्य कस्याचिदभावादेतज्जन्मसंबंधिकर्म न साधयितुं शक्यम् ॥ अतोऽधुनानुभूयमानकार्येण लिंगेन पूर्वकर्मणि साधिते तदृष्टांतेनाऽस्मिन्नपि जन्मनि यत्कर्म क्रियते तदप्यग्रिमदेहपर्यंतं वर्तत इति ज्ञेयमित्यभिप्रायेण कर्माध्यासौ निरूपितावित्यर्थः ॥ अध्यासनिरूपणप्रयोजनमनुपदमेव वक्ष्यति ॥ २०१ ॥

त० दी०— सप्तभिर्दशभिश्चैव चिंतानुमितियुक्तिभिः ॥
मनसाऽनुभवाच्चापि कर्माऽस्तित्वं विनिश्चितम् ॥ २०२ ॥

त० प्र०— श्लोकान् विभजते ॥ सप्तभिर्दशभिश्चेति ॥ यथाऽनुमीयत इति ॥ सप्तभिः कर्मनिरूपणं ततो दशभिरध्यासस्य ॥ कर्मप्रकरणोक्तानर्थान् स्फुटीकरोति ॥ चिंतानुमितीति ॥ लौकिककारणासंभवे सति भवंत्यो विचित्राश्चित्तवृत्तयो विचित्रकारणजन्या विचित्रकार्यत्वाच्चित्रतंतुपटवदित्यनुमानेन तादृक्कर्मसिद्धिः ॥ युक्तिश्च कदाचिदुपलब्धत्वे सत्येव मनस उपलंभयोग्याः साक्षादनुपस्थिताश्चार्था यदि पूर्वं कदाचिदुपलब्धा न स्युरधुनापि मनसा नोपलभ्येरन् ॥ तथा च पूर्वजन्मन्यनुभूतानामर्थानामुपनायकस्याऽन्यस्यासंभवेन तदुपनायकत्वेन कर्मसिद्धिः ॥ अनुमितिरेकेन ॥ युक्तिर्द्वाभ्याम् ॥ मनोनिरूपणमेकेन ॥ त्रिभिरनुभवस्य ॥ २०२ ॥

त० दी०— करणाध्यासराहित्ये सर्वमेवाऽन्यथा भवेत् ॥
तन्निवृत्तिः कृष्णसाध्या तेन सेव्यः स एव हि ॥ २०३ ॥

त० प्र०— ननु पृष्टोत्तरमेतावतैव भवतीत्यध्यासनिरूपणं व्यर्थमित्यत आह ॥ करणेति ॥ अध्यासनिरूपणं विनाऽऽत्मनः कर्तृत्वं लिंगस्य करणत्वं च न निरूपयितुं शक्यम् ॥ कारुवत्कराद्यभावेन तद्ग्रहणाद्यसंभवात् ॥ न च चेतनसंयोगमात्रेण व्यापारः संभवति जडे लोके तथानुपलब्धेः ॥ तथा च लिंगात्मनोः संबंधाभावे तत्कृतपुण्यपापैरात्मनः संबंधाभावे प्रवृत्तिमार्गो निवृत्तिमार्गश्च व्यर्थः स्यादतोऽध्यासनिरूपणेन तत्संबंधे निरूपिते सर्वं उपपद्यत इत्यध्यासनिरूपणं कृतमित्यर्थः ॥ अन्यथोच्चरितमप्यनुच्चरितमेव स्यात्कर्मण एवाभावादिति भावः ॥

# अथ तत्त्वार्थदीपनिबंधे

भागवतार्थप्रकरणे

## पंचमस्कंधविवरणं प्रारभ्यते.

॥ श्रीकृष्णाय नमः ॥

त० दी०— बुद्धिप्रेरककृष्णस्य पादपद्मं प्रसीदतु ॥
ध्यानासमर्थजीवानामस्माकं सर्वदा स्वतः ॥ १ ॥
पौरुषेण तु या लीला सा चतुर्थे निरूपिता ॥
स्थानलीला पंचमे तु षड्विंशत्या निरूप्यते ॥ २ ॥

त० प्र०— अथाऽलौकिकं स्थानं निरूपयन्ननौचित्यमाशंक्य विसर्गोप्येवमेव वर्णित इति पूर्वस्कंधार्थमनुवदति ॥ पौरुषेणेति ॥ यद्वा ॥ स्थानं निरूपयन्नु-क्तविवक्षितयोः संगतिमपि वदन् वैलक्षण्यं वक्तुं पूर्वस्कंधार्थमनुवदति ॥ पौरुषे-णेति ॥ तत्र हीतरसाधनमर्यादया साध्यानपि धर्मादीनर्थांस्तेषु तेषु साधितवा-निति निरूपितम् ॥ अत्र तु मर्यादारूपैव लीला निरूप्यत इति वैलक्षण्यमिति भावः ॥ अतः परं "स्थितिर्वैकुंठविजयः" इतिवाक्यात्तस्य च स्वाधीनीकरणरूप-त्वात्स च प्राकृतेषु चतुर्विंशतिधा जीवब्रह्मभेदेनाऽऽत्मनि द्वेधेति षड्विंशतिधेति तावद्भिरध्यायैः स्थानलीला पंचमस्कंधे निरूप्यत इत्याह ॥ स्थानेति ॥ स्थीय-तेऽस्मिन्निति स्थानं स्थितिरेव च स्थानमित्युभयार्थकं स्थानपदं मूले प्रयुक्तमिति ज्ञेयम् । अत एवोद्देशे स्थानमित्युक्त्वा लक्षणोक्तौ स्थितिरित्युक्तम् ॥ तथा च पुरुषविशेषकर्मविशेषस्थानविशेषाणामन्योन्यसंबंधनियमो भगवत्कृत एवेति सोऽत्र निरूप्यत इत्यर्थः ॥ अत एव शिष्टो जय इति भावः ॥ १ ॥ २ ॥

त० दी०— स्थानं तु त्रिविधं प्रोक्तं देशकालस्वभेदतः ॥
कालातिक्रमणे काले स्वे स्थितिर्नाऽन्यथा भवेत् ॥ ३ ॥

त० प्र०— एवं स्थितिपक्षमुक्त्वा द्वितीयपक्षेऽपि षड्विंशतिधैव तदित्याह ॥ स्थानं त्विति ॥ आद्यपक्षव्यवच्छेदाय तुशब्दः ॥ देशस्त्रिविधो लोकभेदात् ॥ "द्वादश मासाः पंचर्तवस्त्रय इमे लोका असावादित्य एकविंशः" इति श्रुतेः काल एकविंशतिविधः ॥ स्व आत्मा द्विविध इति तावद्भिरध्यायैस्तन्निरूप्यत इत्यर्थः ॥ नन्वेवं मूललक्षणमनुपपन्नं देशादेर्भगवज्जयत्वाभावादित्याशंक्य स्थीयतेऽस्मिन्निति

तथापि तस्य भगवत्प्रादुर्भावसाधनेनैवान्यथासिद्धत्वेन सृष्ट्युपयोगित्वेन च कथनान्मोक्षानुपयोगमभिसंधायैवमुक्तम् ॥ तथाप्यपरितोषेण पक्षांतरमाह ॥ यात्त्वाव-शत इति ॥ "यदादिष्टं भगवता शिवेनाधोक्षजेन च" इति वचनात्तदुक्तस्मारकत्वेनैव नारदवाक्योपयोगः ॥ विस्मरणे त्वभजनमेव हेतुरीति गृहमध्ये तदभावात्तदेवोक्तवाँस्तेनैव सर्वं भविष्यतीति ॥ २०६ ॥

त० दी०— हरिः सर्वात्मना सेव्यो ज्ञात्वा माहात्म्यमादरात् ॥
इत्यर्थः सकले स्कंधे तथाल्पेंशेपि निश्चितः ॥ २०७ ॥

त० प्र०— एवं संपूर्णं प्रकरणं निरूप्यैतच्छ्रवणानंतरमेव निर्गमने हेतुमाह ॥ हरिरिति ॥ अल्पेऽप्यंश इति ॥ अवांतरप्रकरणेष्वपीत्यर्थः ॥ २०७ ॥

त० दी०— अतोऽत्र विदुरस्तुष्टो भजनार्थं विनिर्गतः ॥
अपकार्युपकारस्य करणान्निर्मलो मतः ॥ २०८ ॥

इति श्रीविष्णुस्वामिमतवर्तिवल्लभदीक्षितविरचिते तत्त्वदीपे
भागवते चतुर्थस्कंधविवरणं समाप्तम् ॥

त० प्र०— भजनेनैव सर्वसिद्धिर्नान्यथेति सर्वशास्त्रार्थं ज्ञात्वा भजनार्थमेव निर्गतः ॥ ननु भगवच्चरणादप्युच्चैर्गुरुचरणधारणमयुक्तमित्याशंक्याह ॥ तुष्ट इति ॥ एतादृशशास्त्रार्थकथनेन तुष्टः सँस्तथा कृतवानित्यर्थः ॥ भगवद्भजने दोष एव प्रतिबंधक इति तस्य भजनं संपन्नमिति ज्ञापयितुं सर्वदोषनिवृत्तौ निदर्शनमाह ॥ अपकारीति ॥ धृतराष्ट्रस्याऽपकारिणोऽप्युपकारं कृतवानिति तथा ॥२०८॥

इति श्रीमद्वल्लभदीक्षितात्मजश्रीविठ्ठलदीक्षितविरचितायां श्रीभागवततत्त्व-
दीपटीकायां श्रीभागवतीयचतुर्थस्कंधप्रकरणं समाप्तम् ॥

---

१ तथांशेल्पेपि । २ गुरुचरणाधारणम् ।

कर्तुम् ॥ अन्यत्र कालजयाभावाद्ब्रह्मादीनां चाऽनधीनत्वात् ॥ तथा च ज्योतिश्चक्रनिरूपणेन विशिष्टो जय एव हरेर्निरूपितो भवति कर्मफलनियामकत्वं तत्तद्देशस्थितेस्तत्तत्कर्मफलरूपत्वं च कर्मणां देशानां च न सहजम् ॥ तथा सति तत्र भगवत्कर्तृत्वं भज्येत ॥ "भवंति भावा भूतानां मत्त एव पृथग्विधाः" ॥ "फलमत उपपत्तेः" इत्यादिस्मृतिन्यायविरोधाच्च न तथा वक्तुं शक्यम् ॥ एवं सति कर्मजयं विना नैवं मर्यादाकर्तृत्वं संगच्छते ॥ कर्म च भगवद्रूपमेवेति पुरस्तान्निरूपितम् ॥ अतोऽपि नाऽन्यस्य तज्जयः संभवति ॥ तथा च मर्यादानिरूपणेन विशिष्टः कर्मजय एव भगवतो निरूपितो भवति ॥ "परात्तु तच्छ्रुतेः" इति न्यायेन कर्तॄणामपि भगवदधीनत्वाच्चथा ॥ वेदमार्गस्य स्वरूपस्थितिहेतुत्वं न स्वसामर्थ्येन यत्र वेदा अवेदाः ॥ "यतो वाचो निवर्तंते" इत्यादिश्रुतेः ॥ "नाहं वेदैः" इति वाक्याच्च ॥ स्वरूपस्य ब्रह्मत्वेन वेदानियम्यत्वाच्च न तथा वक्तुं शक्यम् ॥ "असंगो ह्ययं पुरुषः" इति श्रुतेर्भगवत्यन्यस्य स्थितिरपि न संभवति ॥ तथा च वेदवैयर्थ्यं मोक्षोच्छेदश्च स्यात् ॥ "सर्वे वेदा यत्पदमामनंति" "ब्रह्मविदाप्नोति परम्" इत्यादिश्रुतिभिश्च तन्निरूप्यते ॥ एवं सति स्वाधीनजीवस्वरूपब्रह्मस्वरूपस्य वेदादिसकलप्रमाणनियामकस्यैवेदं कर्तुं शक्यं नाऽन्यस्य ॥ एवं सति स्वरूपस्थितिनिरूपणेनाऽत्र विशिष्टः स्वरूपजय एवोक्तो भवति भगवतः ॥ असंगित्वेपि मुक्तजीवाश्रयत्वकरणं भगवतः स्वजयः ॥ ४ ॥

त० दी०—त्रयं भगवता शक्यं कर्तुं वा यदि मन्यते ॥
अतो वैकुंठविजयः स्थानमत्र निरूपितम् ॥ ५ ॥

त० प्र०— अत एतत्त्रयं भगवतैव कर्तुं शक्यं नान्येन ॥ तदेवाह ॥ त्रयं भगवतेति ॥ यदि वा भगवान् मन्यते अनेन जीवेनेदं कारयिष्यामीति तदा स्वसामर्थ्यं दत्त्वा तथा कारयतीति ॥ अत एव प्रियव्रते दिवसकर्तृत्वमिति भावः॥ यद्वा ॥ नन्वेवं चेत्स्वरूपस्थस्य भरतस्य हरिणे स्थितिरनुपपन्नेत्याशंक्य तदपि विशिष्टजयनिरूपकत्वमेवेत्याह ॥ वा यदि मन्यत इति ॥ यदि भगवान्मन्यते॥ इच्छति तदा वा विकल्पेनाऽन्यथापि त्रयं कर्तुं तस्यैव शक्यमिति तन्निरूपणेनाऽपि विजय एव निरूप्यत इत्यर्थः ॥ फलितमाह ॥ अत इति ॥ यतः सर्वैः प्रकारैर्जय एव निरूपितो भवत्यतो हेतोरेव स्थानलक्षणं वैकुंठविजय इति निरूपितमित्यर्थः ॥ अत एव वैकुंठपदमपि ॥ तत्कल्पितवैकुंठलोकाद्यथा जयादेः पुनर्जन्म

व्युत्पत्त्या स्थानस्य स्थितिविशिष्टत्वेन त्रिष्वपि युगपत्स्थितिर्भगवतैव कर्तुं श-क्यते तन्निरूपणं भगवज्जयस्यैव निरूपणमित्युपपादयितुं तत्स्थितिसाधनानि मिथो विरुद्धानि निरूपयति कालातिक्रमण इति सार्धाभ्याम् ॥ अत्र कालस्ये-श्वररूपत्वादात्मस्वरूपं कालश्चेत्येका कोटिः ॥ देशोऽपरा कोटिः ॥ तेन स्वरूप-स्थितिनिरूपणेनैव कालस्थितिरपि निरूपिता भविष्यति ॥ काले जिते सति कालस्य स्वाधीनत्वं भवतीति तदैव तस्मिन् स्थितिरित्यर्थः ॥ स्वे स्वकीये स्वा-धीन इति यावत् ॥ स्वस्मिन्निति वा ॥ आत्मस्वरूपस्थितौ कालस्य प्रतिबंधक-त्वात्तज्जयस्य प्रतिबंधकाभावत्वेन कारणता ॥ वेदमार्गस्य तु स्वरूपेणैव कारण-तेति विशेषः ॥ अत एव न तस्य भिन्नं प्रकरणम् ॥ ३ ॥

त० दी०— मर्यादायां भवेद्देशस्थितिरित्येष निश्चयः ॥
स्वरूपस्थितिहेतुस्तु वेदमार्गो न चाऽपरः ॥ ४ ॥

त० प्र०— मर्यादा कर्ममर्यादा ॥ अनेन कर्मणा अत्रैव स्थितिरिति नियमल-क्षणा ॥ कर्मापि त्रिविधमिति तादृशेषु देशेष्वेव स्थितिस्तदा भवतीत्यर्थः ॥ स्व-रूपेति ॥ आत्मस्वरूपमित्यर्थः ॥ चित्तशुद्धिहेतुकर्मणा कृत्वा स्वात्मस्वरूपे स्थि-तिर्ज्ञाने सत्यात्मत्वेन भगवद्ज्ञानाद्भगवत्स्वरूपे स्थितिर्भवति ॥ तदुभयनिरूपको वेद इति स एव तथा ॥ देशस्थितिहेतुभूतकर्मणां तु वेदबोधितत्वेऽपि न वेदमार्गीयत्वं वेदतात्पर्याविषयत्वात् ॥ "सर्वे वेदा यत्पदमामनंति" इति श्रुतेः ॥ "वेदैश्च सर्वैरहमेव वेद्यः" इति स्मृतेश्च ब्रह्मण्येव तेषां तात्पर्यात् ॥ यत्तात्पर्यविषयत्वं मुख्यतया यस्य तस्य तन्मार्गीयत्वम् ॥ किं च मार्गो हीष्टदेशप्रापकः ॥ वेदमार्गश्च ब्रह्मरू-पेष्टदेशप्रापक एव ॥ तत्रैव तेषां तात्पर्यात् ॥ अतो देशप्रापककर्मणां ब्रह्माप्राप-कत्वाद्युक्तमेतन्मार्गीयत्वम् ॥ तन्निरूपणं त्वतिबहिर्मुखरागिणां यथा कथंचिद्वैदि-ककर्मणि प्रवृत्त्यर्थम् ॥ रोचनार्थेति वाक्यादिति भावः ॥ अत्राऽयं भावः ॥ ज्योतिश्चक्रे हि ग्रहादीनां तत्तत्कालविशेषस्वरूपज्ञापकत्वावच्छेदकत्वे निरूप्येते ॥ एतच्च तेषां कालासाधारणधर्मत्व एव संगच्छते ॥ तच्च कालाधिकरणकत्वे ग्रहा-दीनां चोत्पत्त्यादिश्रवणेन कालसहजधर्मत्वं न वक्तुं शक्यम् ॥ ग्रहादीनां च न स्वतः कालधर्मत्वेन तत्र स्थितौ सामर्थ्यम् ॥ अत आधिदैविककाले जिते तस्य स्वाधीनत्वे सत्याध्यात्मिकादेरपि तथात्वं भवतीति तेषां तेषां ग्रहादीनां तादृक्ता-दृग्धर्मरूपत्वप्रकारेण तत्र स्थापनं कालस्य च तदवच्छेद्यत्वं भगवतैव शक्यं

ख्यया निरूप्यत इत्याह ॥ अर्धमासेति ॥ षड्विंशतिसंख्यायां कालस्यापि प्रवेशात्तत्कलानामपि निरूपणमिति भावः ॥ ७ ॥

त० दी०— वेदमार्गेषु सर्वेषु द्वाभ्यामेव व्यवस्थितिः ॥
कृष्णेन योगमार्गेण ज्ञानेनाऽप्यथवा क्वचित् ॥ ८ ॥

त० प्र०— अत्राऽवांतरप्रकरणार्थान् वदंस्तत्रोपपत्तिमप्याह ॥ वेदमार्गेष्विति॥ वेदनिरूपितमार्गेषु कर्मादिषु मुख्यतयेति शेषः ॥ तदेवाह ॥ कृष्णेनेति ॥ कृष्णेनेति प्रथमप्रकरणार्थः । योगमार्गेणेति द्वितीयस्य । ज्ञानेनेति तृतीयस्य ॥ ८ ॥

त० दी०— षड्भिरष्टाभिरेकेन तथाऽध्यायैर्निरूपणम् ॥
स्थितिर्भगवता मुख्या तदभावे तु योगता ॥
तस्याऽप्यभावे ज्ञानेन नाऽन्यो मार्गोऽत्र संमतः ॥ ९ ॥

त० प्र०— प्रकरणार्थानुक्त्वाऽध्यायान्विभजते॥ षड्भिरिति ॥ भगवतः षड्गुणत्वाद्योगस्याष्टांगत्वाद्ज्ञानस्य चैकविधत्वात्तावद्भिस्तावद्भिस्तत्तन्निरूप्यत इत्यर्थः ॥ नन्वेकेनैव स्थितिसंभवे त्रयाणां निरूपणं व्यर्थमित्याशंक्य तत्र हेतुमाह स्थितिरिति ॥ उत्तममध्यमाधमभेदेन त्रयाणां कथनमित्यर्थः ॥ ज्ञानेन अन्योक्तज्ञानेनेत्यर्थः ॥ तद्व्याख्यानरूपं परोक्षवादस्येति ज्ञेयम् ॥ त्रितयनिरूपणस्य प्रयोजनांतरमप्यस्तीत्याह ॥ नाऽन्य इति ॥ अत्र वेदमार्गे उत्तमत्वादिप्रकारादन्यस्याऽसंभवादत्र चैतेषामेव तथात्वेन निरूपणादेतदतिरिक्तमार्गाणां षोडशपदार्थषट्पदार्थतत्त्वज्ञानादिप्रकाराणामवैदिकत्वान्न स्वरूपस्थितिहेतुत्वमिति ज्ञापनाय तेषां निरूपणमित्यर्थः ॥ ९ ॥

त० दी०— भूमौ नवविधं स्थानं गुणानां सहमेलनात् ॥
अतोऽत्र नवखंडा हि षोडशे विनिरूपिताः ॥ १० ॥

त० प्र०— अग्रिमप्रकरणार्थं वदंस्तस्यैकादशभिर्निरूपणे हेतुमाह ॥ भूमाविति ॥ गुणानां भूम्या सह मेलनाद्गुणानां चाऽन्योन्यमेलनेन नवविधत्वाद्भूमौ नव खंडाः षोडशाध्याये निरूपिताः ॥ १० ॥

त० दी०— सत्त्वेनैवोर्ध्वगमनं तमसाऽधश्च निश्चितम् ॥
अत एकादशाध्यायास्त्रिलोकस्थानवर्णने ॥ ११ ॥

त० प्र०— तेन मध्यदेशस्थितिर्नवविधापि भवति ॥ उर्ध्वाधोलोकस्थितिः सत्त्वतमोभ्यामेव भवतीति ज्ञापयितुमेकादशाध्याया देशस्थितिवर्णने कथिता इत्यर्थः ११

तथाऽत्र भरतेऽपि करिष्यतीति ज्ञापनार्थम् ॥ उभयत्रापि कर्ममार्गेण भजनं जन्मनि हेतुः । "ये निमित्तनिमित्तेन" इति वाक्यात् ॥ यद्यप्यन्यत्रापि देशस्वरूपस्थिती निरूप्येते तथापि न तयोः स्थानलीलायां प्रवेशो वक्ष्यमाणरूपत्वाभावादिति मनसि कृत्वाऽऽह ॥ अत्रेति ॥ पंचमस्कंध एवेत्यर्थः ॥ ५ ॥

त० दी०— कालेन सह तत्त्वानि षड्विंशतिविधानि हि ॥
समुदायेन तत्त्वेषु कालादिभयमीर्यते ॥ ६ ॥

त० प्र०— स्थानलीलायाः षड्विंशतिभिर्निरूपणे तात्पर्यमाह ॥ कालेनेति ॥ तन्मात्रमहाभूतेंद्रियांतःकरणपुरुषरूपाणि तत्त्वानि ॥ ततः किमत आह ॥ तत्त्वरमात्कारणात्समसंख्याध्यायसमुदायनिरूपणेनाऽत्रापि तथा ॥ अत्राऽयमर्थः ॥ तत्त्वेषु सर्वेषामासक्त्यभावायाऽऽचार्यैः कालस्तत्त्वेषु प्रविष्ट इति तद्भयं तेष्वस्तीति ज्ञापनाय हि तत्त्वेषु परस्यापि कालस्य गणना क्रियते तथा च कालभयसहिततत्त्वसमसंख्याध्यायनिरूपणेनाऽत्रापि स्थानलीलामध्यपातिष्वपि कालभयमस्तीति ज्ञाप्यते ॥ मर्यादामार्गे तेषां बलिष्ठत्वात् ॥ पुष्टिमार्गे परं तेषां बाधनं भक्त्या० अत एव भरते तद्भयं वक्ष्यते ॥ आदिपदात्कर्म ॥ यद्वा ॥ तत्त्वेषु तदीयेषु स्थानमार्गीयेषु तेषु वक्ष्यमाणेषु यथा तत्त्वेषु सर्वेष्वेव समुदायेन स्थितेषु कालभयं कस्यचित्कदाचिद्नाशेपि न तद्भयनिवृत्तिस्तत्स्वरूपस्यैव सभयत्वात्तथाऽत्रापि समुदायेनैव तदुच्यत इत्यर्थः ॥ यथैकवृक्षच्छेदेपि वनच्छेदप्रयोगस्तथाऽत्रैकस्य भरतस्यापि तद्भयनिरूपणेन तन्मार्गीयाणामेव सभयत्वं निरूपितं भवति ॥ तथा च मर्यादामार्ग एव सभय इति भावः ॥ ६ ॥

त० दी०— स्वरूपस्थितिमर्यादा पंचदश्या निरूप्यते ॥
अर्धमासाधिपस्यैताः कलाः पंचदश स्मृताः ॥ ७ ॥

त० प्र०— एवं स्कंधार्थं निरूप्य प्रकरणार्थमाह ॥ स्वरूपस्थितीति ॥ एतेनैव स्वरूपस्थितिरिति लक्षणा ॥ स्वरूपस्थितौ हि मनः साधनम् ॥ तच्च चंद्रात्मकम् ॥ स च पंचदशकलाभिः संबद्ध एव पूर्णो भवति ॥ मनोपि सर्वसाधनसंपत्त्या पूर्णमेव तथा अतस्तत्कलारूपसाधनरूपैरेवाध्यायैर्निरूप्यत इत्यर्थः ॥ देवासुरपक्षपातिनो मासात्मककालस्यार्द्धं दैवं भवति ॥ तस्यापि स्वरूपस्थितिहेतुत्वं "अग्निर्ज्योतिरहः शुक्लः" इति वाक्येन भगवता निरूपितम् ॥ अत एव स्मृता इत्युक्तम् ॥ तथा चार्धमासाधिष्ठातुर्दैवकालस्य कलारूपा एवै तेऽध्याया इति सं-

त्करणेन स्वकार्यकरणेन वियोजन एवोपयोग इति ज्ञेयम् ॥ अत एव तस्मिन्नेव तथा ज्ञापनं नाऽन्यस्मिन् ॥ १४ ॥

त० दी०— ऐश्वर्यवीर्ययोराद्ये श्रियः कीर्तेस्तथा हरेः ॥
ज्ञानवैराग्ययोश्चैव क्रमात्पंचसु रूपणम् ॥ १५ ॥

त० प्र०— अत्राऽध्यायार्थानाह ॥ ऐश्वर्येति ॥ आद्येऽध्याये ऐश्वर्यवीर्ययोर्निरूपणम् ॥ श्रियो द्वितीये ॥ कीर्तेस्तृतीये ॥ हरेर्धर्मिणश्चतुर्थे ॥ ज्ञानस्य पंचमे ॥ वैराग्यस्य षष्ठे ॥ आद्ये गुणद्वयस्य निरूपणमितरेषु पंचस्वेकैकस्येति वैलक्षण्यज्ञापनाय पंचस्वित्युक्तम् ॥ १५ ॥

त० दी०— अल्पेऽपि भगवान् स्वस्य धर्मान् संस्थापयेद्यदि ॥
सोऽपि ब्रह्मादिसंप्रार्थ्यः प्रियव्रतकथा ततः ॥ १६ ॥

त० प्र०— नन्वत्र स्वरूपस्थितिहेत्वैश्वर्यादिप्राकट्येन लीलां कुर्वतः कस्यचिद्भगवदवतारस्यैव कथा वक्तुं युक्ता तत्कथं तां विहाय प्रियव्रतकथेत्यत आह ॥ अल्पेऽपीति ॥ अत्र हि भगवतस्तद्गुणानां च माहात्म्यं वाच्यम् ॥ तत्र भगवदवतारनिरूपणे तु गुणानां धर्मिण्येव प्रवेशात्पृथक्तेषां माहात्म्यं न निरूपितं स्यात् ॥ तदा गुणमाहात्म्यंकृतं विशिष्टं माहात्म्यं भगवतोऽपि न प्रकटं स्यात् ॥ अतः केवलगुणमाहात्म्यप्रकटनार्थं प्रियव्रते तादृशत्वमस्तीति तत्कथोक्तेत्यर्थः ॥ आदिशब्दान्मनुः ॥ १६ ॥

त० दी०— तद्वंश एव सर्वेषां गुणानां स्थापनं यतः ॥
भगवद्भजनं तस्य स्वस्मिन् संस्थापकं मतम् ॥ १७ ॥

त० प्र०— तर्हि तद्वंशवर्णने को हेतुस्तत्राऽऽह ॥ तद्वंश एवेति ॥ प्रियव्रते गुणद्वयस्यैव स्थापनादन्येषामकथने षण्णामपि गुणानां निरूपणं न स्यात् ॥ तद्वंश एवेतरेषां गुणानां स्थापनात्तस्यैव कथनमित्यर्थः ॥ एतद्वंश एव गुणानां स्थापने हेतुमाह ॥ भगवद्भजनमिति ॥ तस्य प्रियव्रतस्य भगवद्भजनमेव प्रियव्रते तद्वंशे च गुणानां स्थापकमित्यर्थः ॥ अन्यत्र धर्मस्यैश्वर्यादिहेतुत्वमुच्यते यद्यपि तथापि भगवन्मार्गे भजनमेव सर्वहेतुत्वेन संमतमित्याह ॥ मतमिति ॥ यद्वा ॥ नन्वादावंतेपि भगवद्भजनस्यैव निरूपणाद्राज्यादिकरणस्यापि भगवदाज्ञापालनक्षणभजनत्वमेव संदंशन्यायेन वक्तुमुचितमिति भजनमेवाध्यायार्थो नैश्वर्यवीर्ये इति चेत्सत्यम् ॥ उपसंहारे "प्रियव्रतकृतं कर्म कोनु कुर्याद्विनेश्वरम्" इत्यादिनैश्वर्य-

त० दी०— गुणानां तुल्यभावस्तु जंबूद्वीपे विशेषतः ॥
अन्यत्र तत्तत्प्राधान्यं तेनाऽऽदौ विनिरूपितम् ॥
अतिदेशप्रकारेण यथा सर्वत्र तद्भवेत् ॥ १२ ॥

त० प्र०— ननु सत्त्वगुणस्योत्तमत्वेन तत्कार्योर्द्ध्वलोकस्थितिरेव पूर्वं वक्तुं युक्ताऽतः कथं प्रथमं मध्यदेशस्थितिवर्णनं तत्रापि जंबूद्वीपस्येत्यत आह ॥ गुणानामिति ॥ अत्र त्रयाणामपि गुणानां कथनं भविष्यत्यन्यत्रैकैकस्येत्यस्यैव पूर्वं निरूपणमित्यर्थः ॥ तत्रापि पूर्वं जंबूद्वीपस्य वर्णने हेतुमाह ॥ अतिदेशेति ॥ भूस्थानवर्णने पूर्वं जंबूद्वीपनिरूपणं तु यथाऽत्र गुणानां तुल्यभावस्तथाद्वीपांतरेपीति ज्ञापनाय कृतमित्यर्थः ॥ अन्येषां भोगस्थानत्वाद्भोगस्य च कर्मजन्यत्वात्कर्मणश्चाऽत्रैव संभवादस्योपजीव्यत्वमित्यपि पूर्वं निरूपणमिति ज्ञेयम् ॥ वस्तुतस्तु भक्तेरत्र प्राचुर्यात्पूर्वं निरूपणम् ॥ अत एव "अहो अमीषाम्" इत्यादीनि देववाक्यानि ॥ १२ ॥

त० दी०— भूतप्राधान्यमत्रेति पंचाध्याया निरूपिताः ॥
भूमावन्यत्र तु गुणास्त्रितयं त्रितयं ततः ॥ १३ ॥

त० प्र०— अत्राऽध्यायान् विभजन् भूमेः पंचभिरितरयोस्त्रिभिस्त्रिभिश्च निरूपणे हेतुमाह भूतेति ॥ भूमौ महाभूतानामेव प्राधान्यमन्यत्रोर्ध्वाधोलोकयोः सत्त्वादिगुणा एव प्रधानभूता इति तावद्भिस्तावद्भिरध्यायैस्त्रितयनिरूपणमित्यर्थः ॥१३॥

त० दी०— गुणस्थित्या त्वधः प्राप्तिस्तेनांऽते नरकाभिधा ॥
स्वस्मिन् स्थितिः कृष्णदेवादिति षड्भिर्निरूप्यते ॥ १४ ॥

त० प्र०— नन्वधोदेशमानं निरूप्य पश्चान्नरकवर्णने को हेतुस्तत्राऽऽह ॥ गुणेति ॥ "अधो गच्छंति तामसाः" इति भगवद्वाक्यात्तमोगुणे स्थितानां पर्यवसानं तत्रैवेति ज्ञापनायांते नरकोक्तिरित्यर्थः ॥ एवं प्रकरणार्थान्निरूप्याऽध्यायार्थान्वदन्नाद्यप्रकरणस्याध्यायार्था उच्यंत इति ज्ञापनाय पूर्वोक्तार्थं स्मारयितुमनुवदति ॥ स्वस्मिन्निति ॥ सेवितादेव भगवतः फलं भवतीति ज्ञापनाय देवपदम् ॥ देवो हि पूज्यो भवति ॥ अत एव पूर्वं निवृत्तिनिरतस्य संपन्नसाधनस्याऽस्य भगवति स्थितिर्न जाता ॥ किं तु भगवान् वैपरीत्येन प्रवृत्तिपरं विधाय स्वकार्यं कारयित्वा स्वस्मिन् स्थापितवान् ॥ एवं च सति तत्कृतसाधनानां भगवताऽऽत्मसा-

त० दी०— वेदानां ब्रह्ममुखतो यथा निर्गमनं मतम् ॥
तथैवेमानि वाक्यानि हरेरिति विधेर्वचः ॥ १९ ॥

त० प्र०— ननु "यदहरेव विरजेत्तदहरेव प्रव्रजेत्" इति श्रुतेर्विरक्तस्य संन्यास एवाधिकाराद्रागानिवृत्तावेव गार्हस्थ्यस्य विधानादस्य चाऽरागित्वेन गार्हस्थ्यानधिकाराच्चद्बोधकवाक्यं श्रुतिविरोधान्नांगीकर्तुमुचितमित्याशंकां परिहरन्नेव साक्षाद्भगवताऽनाज्ञापने ब्रह्मद्वारैव चाऽऽज्ञापने हेतुमाह ॥ वेदानामिति ॥ भगवन्निश्वासभूतानामपि वेदानां "ऋग्यजुः सामाथर्वाख्यान् क्रमात्पूर्वादिभिर्मुखैः" इति वाक्याद्ब्रह्ममुखत एव निर्गमनमिति सर्वसंमतं तत एव च प्रमाणत्वेनांगीकारो लोके तथैवेमान्यपि वाक्यानि वेदरूपाण्येव ब्रह्मणाऽनूद्यंते परमिति ज्ञापनार्थं विधेर्ब्रह्मणो वचो निरूपितमित्यर्थः ॥ तथा चैतेषां वाक्यानां वेदमध्यपातित्वज्ञापनमेव साक्षादनाज्ञापने तद्द्वारैव चाऽऽज्ञापने हेतुः ॥ एतेन वेदाद्दौर्बल्यं परिहृतम् ॥ तथा च वैराग्ये जातेपि येषां संन्यासमहे भगवदिच्छास्ति तद्विषयिका पूर्वोक्ता श्रुतिः ॥ येषां न तथेच्छा तद्विषयाणीमानि वाक्यानीति व्यवस्था ज्ञेया ॥ तेनाऽस्य तदंगीकार उचित इति भावः ॥ १९ ॥

त० दी०— स्थानमत्र विनिर्णीतं यथाऽयं भगवान् हरिः ॥
स्थापयेद्यत्र तत्स्थानं तस्येति हि विनिर्णयः ॥ २० ॥

त० प्र०— ननु "मुक्तोपि तावद्बिभृयात्स्वदेहमारब्धमश्नन्" इति निरूपणात्तस्य तादृक्प्रारब्धमस्तीति तद्भोगार्थमेव ब्रह्मणोक्तम् ॥ किंच ॥ ऋणत्रयापाकरणं विना त्यागस्य पातहेतुत्वश्रवणादपि तदंगीकारसंभवः ॥ तथा चोभयथापि स्वार्थमेव गार्हस्थ्यांगीकार इति भगवद्वाक्यगौरवं नायातीति शंकापरिहाराय ब्रह्मवाक्यैर्निर्णीतमर्थमाह ॥ स्थानमत्रेति ॥ अत्र ब्रह्मवाक्येषु तत्किमित्याकांक्षायामाह ॥ यथेत्यादि ॥ तत्र हेतुमाह ॥ इति हि विनिर्णय इति ॥ वेदमार्गे यत एवमेव विनिर्णयः सिद्धः ॥ तदुक्तं "वेदमार्गेषु सर्वेषु" इत्यत्र ॥ "एष उ एव साधु कारयति" इत्यादि श्रौत्युपपत्तिर्हिशब्देनोच्यते ॥ २० ॥

त० दी०— तथाऽपि कर्मणां मार्गो विवेकं नाशयेद्ध्रुवम् ॥
इति दर्शयितुं वीर्यकामानंदो हि वर्णितो ॥ २१ ॥

त० प्र०— नन्वस्याऽऽज्ञापरिपालनमात्रे प्रवृत्तस्य स्वतो विरक्तस्य प्रजाधर्मादिरदैव कर्तुमुचिता ॥ नाधिकं कर्तुमुचितम् ॥ भोगेष्यासक्तिर्नोचिता अखिल-

ऽयुक्त इत्यत आह ॥ **स्वदोपादिति** ॥ अनेन हि हरिकार्यं कर्तव्यं तच्च न भगवदावेशं विना स च न दोषाभावं विना ॥ स्वस्य मनुपुत्रत्वेनाऽधिकारप्राप्तमिति हरिकार्यस्य तत्राप्यसाधारणस्य करणे सदोपस्यैव प्रवृत्तौ तदावेशाभावात्कार्यनाश एव स्यादित्याधिदैविकदोषाभावेन कृत्वा भगवदावेशे भक्तिरेव हेतुरिति पूर्वं भक्तौ प्रवृत्तिरित्यर्थः ॥ अत एव नारदस्यापि तथात्वमिति भावः ॥ हरेर्निर्दोपत्वेन सदोपे नाऽवेशो युक्त इति हिशब्दार्थः ॥ स्वस्य हरेरित्यर्थः ॥ यद्वा ॥ स्वस्य भक्तस्येत्यर्थः ॥ अधिकारित्वेन द्वीपकरणरक्षादिकं प्रियव्रतकार्यम् ॥ तच्च स्वतोऽशक्यमिति भगवान् स्वयं यथा संपादयेत्तथा स्वस्मिन्नावेशसिध्यर्थं प्रतिबंधनिवृत्तिपूर्वकं तत्साधिका भक्तिरेवेति तत्रैव प्रवृत्तिस्तस्येति ॥ तर्ह्यावेशे सिद्धे स्वत एव कुतो न राज्ये प्रवृत्तिः पितृवाक्याच्चेति चेदुच्यते ॥ पूर्वं तथा प्रवृत्तावपि पश्चाद्भक्तिरसानुभवाद्राज्यकरणं तत्प्रतिबंधकमिति न तदंगीकारः ॥ किं च ॥ स्वतः पितृवाक्याद्वा तदंगीकारे भगवत्संबंधाभावादावेशोपि गच्छेत्तेन न किंचित्सिध्येत् ॥ भगवदाज्ञयांगीकारे तु न कोपि दोष इति तथा ॥ वस्तुतस्तूद्बुद्धस्यैवाऽऽवेशस्य कार्यकारित्वादाज्ञावचनानि तदुद्बोधनार्थान्येवाऽत एवाग्रे सर्वनिष्पत्तिरित्येतत्सर्वं हृदि कृत्वोक्तं हरेः कार्यमित्यादि ॥ २२ ॥

त० दी०— अतस्तु पुरुषः स्थाने दोपाभावार्थमादितः ॥
भक्तिमार्गे प्रवृत्तः स्याद्दृढचित्तो यथाऽचलः ॥ २३ ॥

त० प्र०— पूर्वं भक्तिनिरूपणस्य मनुवाक्याकरणस्य च तात्पर्यांतररूपमतिदेशमाह ॥ **अतस्त्विति** ॥ भवाय नाशायेति वाक्याद्यतो भगवद्विचारितकार्यार्थमेव देहधारणं जीवस्य ॥ तादृक्कार्यकरणं च न भगवत्संबंधं विना । स च न भक्तिं विना अतो हेतोरित्यग्रे स्पष्टम् ॥ भगवद्भजनमेव कार्यं नान्यदिति दृढचित्तः ॥ अत एव पितृवाक्यस्याऽप्युल्लंघनम् ॥ तथा सति दोषमाशंक्य भगवद्भजनविरुद्धतादृग्वाक्यस्याऽप्यकरणे न दोपो भगवदपेक्षयाऽन्येषां जघन्यत्वाद्भगवन्मार्गमर्यादायाश्चैतादृशत्वादेवेति ज्ञापनायोक्तं स्थान इति ॥ मर्यादामार्गे सर्वैरेवमेव कर्तव्यमित्यर्थः॥२३

त० दी०— कथाऽत्र गद्यरूपेण विशिष्टत्वाद्धि वर्ण्यते ॥
कृष्णाधीना तु मर्यादा स्वाधीना पुष्टिरुच्यते ॥ २४ ॥

त० प्र०— स्कंधस्य गद्यात्मकत्वे हेतुमाह ॥ **विशिष्टत्वादिति** ॥ भगवज्जयस्याऽखंडत्वेन सर्वस्माद्विशिष्टत्वात्तस्य चाऽत्र निरूपणादखंडगद्यरूपता स्कंधस्ये-

जगद्बंधध्वंसनेत्यादिना निर्दोषत्वनिरूपणाच्च ॥ तथा च "अव्याहताखिलपुरुषकार" इत्यादिनाऽधिकवीर्यविषयासक्त्योर्निरूपणमयुक्तमित्यत आह ॥ तथापीति ॥ यद्यपि भगवदिच्छया प्रवृत्तस्य विवेकनाशो न संभवति तथाप्याज्ञावचनानां वेदरूपत्वमुक्तमिति स च कर्मनिरूपक इत्यस्य राज्यकरणं कर्ममार्गीयम् ॥ कर्ममार्गे चाऽवश्यं विवेकनाश इति ज्ञापयितुं तौ वर्णिताविल्यर्थः ॥ अत एव मूले "अधिनिवेशितकर्माधिकारः" इत्युक्तम् ॥ २१ ॥

त० दी०— हरेः कार्यं सर्वमेव स्वदोषात्तद्धि नश्यति ॥
तदभावे हरिः स्वस्य स्वयं कार्यं हि साधयेत् ॥ २२ ॥

त० प्र०— ननु तथापि भक्तेर्बलिष्ठत्वात्तन्नाशोऽनुपपन्नः । "बाध्यमानोऽपि मद्भक्तः" इत्यादिष्वजितेंद्रियस्याऽपि भक्तस्यानभिभव उक्तः किं पुनर्जितेंद्रियेऽस्मिन् ॥ किं चैवं भक्तेरपि तिरोधानं संभाव्येत विवेकस्यैवाभावात् ॥ तथा सति भगवदुपासनेत्यादिनिरूपितभक्तितत्कार्यदिनकरणाद्यनुपपत्तिः ॥ किं च ॥ भक्तस्य रात्र्यनभिनंदने दिनकरणे च न किंचित्प्रयोजनम् ॥ तथात्वे वा सप्तकृत्व एव करणे को हेतुः, किं च भगवदैश्वर्यवीर्ययोरध्यायार्थत्वेन निरूपणादेतत्स्त्रीपुत्रादेरतद्रूपत्वात्तन्निरूपणमप्यसंगतमित्याशंक्य सर्वत्र समाधानमाह ॥ हरेरिति ॥ अस्मिन्नाविष्टस्येति शेषः ॥ "पुरुषातिदिष्टान्" इति वचनाद्भगवत्कृत एवाऽस्य भोगः ॥ तेन यावता विना भोगानुपपत्तिस्तावद्भगवत्कृतमेवेति मंतव्यम् ॥ तथा च विवेके सति भोगासंभवात्तन्नाशोपि भगवतैव कृतः ॥ न च पूर्ववाक्यविरोधः कर्ममार्गमर्यादायास्तत्रैतत्प्रवृत्तेरपि भगवत्कार्यत्वात् ॥ अत एव न भक्तितिरोधानमपीति ज्ञेयं विवेकनाशस्य भोगैकार्थत्वेनैव हरिकृतत्वात् ॥ दिनकरणमपि तथा ॥ न ह्यन्यः कालमन्यथयितुमीष्टे गुणैर्भगवता च करणात्सप्तकृत्व एव ॥ षड्गुणपूर्णो भगवान् भूमौ वर्तत इति ज्ञापनाय सप्तधा तत्कार्यस्थापनं भूमौ ॥ अत एव भगवदैश्वर्यकार्यमेवेदमिति ज्ञापनाय प्रकारांतरेण न द्वीपविभागकरणम् ॥ दिवस एव रथपरिभ्रमणेन वा ॥ किं तु रात्रिवैपरीत्यकरण आनुषंगिकफलत्वेन तदप्यन्याशक्यम् ॥ न हि द्वीपविभागोंबुधिकरणं तत्रापि विविधत्वं तेषां जीवशक्यं भवति ॥ एवं सति तत्र तत्र तादृक्सामर्थ्यवता रक्षकेण भाव्यमिति तादृक्पुत्रोत्पादनमपि भगवद्वीर्यकार्यमिति नोक्तदोषः ॥ नन्वेवं चेद्भगवत्कार्यं हित्वा मनुपुत्रत्वेन मन्वंतराधिकारिणोऽस्य भर्त्रा प्रवृत्तिर्नोचिता नारदस्य च सर्वज्ञत्वेन तादृशे भक्तिमार्गोपदेशो-

त० दी०— आदौ वाक्यैश्चित्तमासीत्कामाक्रांतं तु सर्वतः ॥
तेनाऽऽग्नीध्रस्तथा जातः पश्चाज्जातास्तु कामिनः ॥ २६ ॥

त० प्र०—न न्वेतादृशस्य पुत्रः कथं तादृक्कामीत्याशंक्य तत्र निमित्तमाह । आदाविति ॥ अत्राऽयं भावः । अस्त्यंशत्रयं प्रियव्रते । वैराग्यसहिता भगवद्भक्तिर्ब्रह्मवाक्यजः सर्वविषयकः कामो मनुपुत्रत्वं च तथा च तेन तेनांशेन तत्तत्कार्यार्थं तादृशास्तादृशाः पुत्रा उत्पन्ना इति । तत्राप्यादावुत्कटकामावस्थायां जात इत्याग्नीध्रस्तथा कामात्मक एव जातस्तत्पश्चादुत्पन्ना अपि कामिन एव जाताः । अन्यथा द्वीपाधिपत्यं नांगीकुर्युः । तुशब्दः कव्यादित्रयव्यवच्छेदाय ॥ २६ ॥

त० दी०— तत्राऽपि त्रिषु मोक्षोऽभूत्तेषां च हरिसेवया ॥
प्रियव्रतस्य संसिद्धिः कालः स्याद्बाधकोऽन्यथा ॥ २७ ॥

त० प्र०—तत्रापि पुत्रेष्वपि त्रिष्वेव मोक्षोऽभूद्भक्त्यंशोद्भवत्वात् । 'तस्मिन्नुह' इत्यादिना तद्भक्तिनिरूपणस्य प्रकृतानुपयोगमाशंक्य तमाह । तेषां चेति । तत्कृतसेवयेत्यर्थः । संसिद्धिः पूर्ववद्भगवद्भावः । एतन्मूले 'हृदि कृत' इत्यादिना निरूपितम् । तस्या आवश्यकत्वायाऽऽह । काल इति ॥ विषयावेशे तद्बाधकस्याऽऽवश्यकत्वादिति भावः । तेन वीर्यं निरूपितं भवति ॥ २७ ॥

त० दी०— गुरुसेवैव सर्वस्य मर्यादायां हि साधनम् ॥
अतो नारदमार्गेण गमनं मुक्तिरेव सा ॥ २८ ॥

त० प्र०— ननु भगवद्भावे जाते फलस्य जातत्वात्पुनर्गुरूपसत्तिः किमर्थेत्याकांक्षायामाह । गुरुसेवैवेति ॥ कर्मज्ञानयोस्तथात्वेपि भक्तौ न तथेत्याशंक्योक्तं सर्वस्येति ॥ तेन भक्तस्यापि सैव साधनमित्यर्थः । मर्यादामार्गस्यैव तथात्वादिति भावः । मर्यादायां मुक्तिरावश्यकी सा च नोक्तेत्यत आह । मुक्तिरेवेति ॥ तस्य सैव मुक्तिरित्यर्थः । नारदमुक्तावस्यापि मुक्तिरिति ज्ञेयम् ॥ २८ ॥

त० दी०— आग्नीध्रस्यापि वशगा प्रकृतिर्ब्रह्मणा कृता ॥
येन तां जडवाक्यैश्च मोहयामास तादृशैः ॥
अन्यथा ज्येष्ठपुत्रस्तु नाभिस्तादृक् कथं भवेत् ॥ २९ ॥

त० प्र०—द्वितीयाध्यायं विचारयन् भगवान् स्वधर्मान् दत्त्वा स्वस्मिन् स्थापयतीति ह्यत्र निरूप्यते ॥ आग्नीध्रे च परंपरयापि न तथेत्याशंक्य तत्र

१ तद्युक्त । २ गृहीत । ३ रम । ४ च । ५ दृश्चा ।

त्यर्थः ॥ कथाया एव विशिष्टजयनिरूपकत्वात्तन्निरूपणमेव गद्यैरिति ज्ञापनाय कथेति ॥ अत एवोपदेशेषु श्लोका एव ॥ किं च पुरुषरूपस्य भागवतस्य कटि-भागो हि स्कंधोऽयम् ॥ स च पादादिवन्न सखंडइति नाऽऽद्यस्कंधादिवच्छ्लोकैर्नि-रूपणं किं त्वखंडस्वरूपैर्गद्यैरित्यपि ज्ञेयम् ॥ नन्वस्य मर्यादास्कंधत्वाद्विरक्तस्य ब्रह्मविदः पश्चाद्भोगे प्रवृत्तस्याऽस्य कथाविरुद्धेत्यत आह ॥ कृष्णाधीनेति ॥ तादृशस्य स्वतो भोगे प्रवृत्तौ हि मर्यादाभंगः ॥ भगवदधीनतया तथा करणं मर्यादैवेति न विरोध इत्यर्थः ॥ यत्र च भक्तस्य स्वातंत्र्यं तदिच्छानुसारेण भग-वत्कृतिर्यथा दामोदरलीलायां सा पुष्टिः ॥ २४ ॥

त० दी०— आदौ ज्ञानं ततो भोगो मोक्षश्चांते स्मृतेर्बलात् ॥
अतो वैराग्यमस्योक्तमेवं सर्वं हरेः कृतिः ॥ २५ ॥

त० प्र०— अस्य च सर्वथा कृष्णाधीनत्वं वक्तुमादिमध्यांतेषु जातं भगवत्कृ-तमेवेत्युपपादयति ॥ आदौ ज्ञानमिति ॥ यागादिभिश्चित्तशुद्धौ संन्यासे सति गुरूपदेशेन हि ज्ञानोत्पत्तिरंते भवति ततश्च विदिततत्त्वेन न भोगासक्तिसंभवः । संभवे वा योगभ्रष्टत्वेन न तस्मिन्नेव जन्मनि मोक्षसंभवः ॥ अस्य च सर्वं विप-रीतम् ॥ तच्चाऽस्य न स्वतः ॥ अत एव मूले राजपुत्रपदं स्वतो विषयासक्तिरेव न वैराग्यमिति ज्ञापकम् ॥ किं च ॥ स्वतश्चेदेतत्त्रयं स्याद्धस्तुमर्यादां नाऽतिक्रामे-दितिज्ञानमेव न भवेत् ॥ भावे वा भोगासक्तिर्न स्यात्प्राकृतवत् ॥ तथा सति वा मोक्षो न स्यादित्यन्यथानुपपत्त्यापि भगवत्कृतमेवेति ज्ञायते ॥ न ह्यन्यथा धर्तुमर्यादातिक्रम इत्युक्तम् ॥ स्मृतेः पूर्वानुभूतभगवत्पदारविंदरसस्मृतेरित्यर्थः ॥ तदुक्तं "स एवमपरिमित" इत्यादिना ॥ यतो मर्यादायामेवांगीकारोऽस्याऽतो वै-राग्यमप्यंत उक्तम् "अहोसाधु" इत्यादिना ॥ ज्ञानादिषु निरूप्याऽन्यत्राप्य-तिदिशति ॥ एवमिति ॥ यथा ज्ञानादिकं हरेरेव कृतिरेवं प्रियव्रतसंबंधि सर्वमेव तथेत्यर्थः ॥ तस्मात्सुष्ठूक्तं "को नु कुर्याद्विनेश्वरम्" इति मूल इति भावः । न च प्राचीनसंस्कारवशादेव ज्ञानममून्मध्ये भोगस्तु प्रारब्धनाशार्थमेवेति वाच्यम् । पितृवागनंगीकारानुपपत्तेः । न हि स्वमोक्षप्रतिबंधनिवृत्तिः कस्यचिन्नेष्टा । तथा च ब्रह्मवाक्यानर्थक्यमपि स्यात् 'ईश्वरेच्छयाऽधिनिवेशितकर्माधिकारः', 'पुरुषा-तिदिष्टान्' इति वाक्याभ्यां विरोधाच्च ॥ २५ ॥

१. कर्माधिकारान् ।

त० दी०— कृष्णवाक्यात्समुत्पन्नः स्वरसज्ञे च शाम्यति ॥
जडरीत्यैव सरसः प्रादुर्भवति नाऽन्यथा ॥ ३२ ॥

त० प्र०—ननु तयोर्भक्तत्वेप्यस्य यथा तथात्वं तथैवामुक्तत्वमपीत्याशंक्याऽभक्तत्वे हेतुमाह ॥ कृष्णवाक्यादिति ॥ अत्राऽयं भावः॥ तादृशस्य कामस्य स्वरूपपूर्तिरावश्यकी सा च कामरसज्ञ एव भवेत् ॥ अयं चैतद्रसज्ञः ॥ अत्रापि कृष्णवाक्यजकामरूपत्वमेव हेतुः ॥ एवं सति विवाहितायां मुख्यरसाभावाल्लौकिक्याश्च निंदितत्वेन भगवद्वाक्यजकामसंबंधासंभवात्पूर्वोक्तरीत्या भगवद्दत्तायां तस्यां स कामः पूर्णो जातः ॥ तद्रसस्वामान्यादेव जडरीतिरपीत्यस्य भक्त्यवर्णनम्॥ तस्यास्तत्प्रतिबंधकत्वात्॥ अत एव मूले पूर्वं 'जडवत्' इत्युक्त्वा पश्चात् "ललनानुनयातिविशारदः" इत्युक्तम् ॥ कृष्णवाक्यजत्वादेव च मुक्तिरस्यावश्यकीति, स वात्स्यायनशास्त्रप्रसिद्धः ॥ अन्यथा तत्त्वविचार इत्यर्थः ॥ ३२ ॥

त० दी०— ततोऽप्यग्रे गतः काम आधिदैविकभावतः ॥
वेदतंत्रप्रकारेण ब्राह्मणेषु प्रवर्तितः ॥
तृतीये कृष्णतां प्राप्तः क्रोधवत्कामसंभवः ॥ ३३ ॥

त० प्र०—यशो विचारयन् कामस्य पूर्वस्मिन्नेव शांतौ नाभेः सकामत्वानुपपत्तिरित्यत आह ॥ आधिदैविक इति ॥ आधिभौतिकाध्यात्मिकयोः शांतावाधिदैविकस्यैवाऽवशिष्टत्वात्तथा ॥ तत्र प्रकारश्चतुर्भुजाद्याकारचिंतनम् ॥ तृतीये पुरुष आधिदैविकभावतः कृष्णतां प्राप्तः सर्वाधिदैविकरूपत्वाद्भगवतः ॥ ननु सर्वमिदमयुक्तम्॥ भक्तस्य भगवद्भावप्रतिबंधककामजननम्॥ तत्रापि स्वप्रजायां भगवत्तुल्यत्वं भावयतो नाभेर्भ्रांतस्यैवोपेक्षैव कर्तुमुचिता न तु प्रसादः ॥ असद्भावकत्वात् ॥ तद्भावनाया अपराधत्वेन हरिवाक्यैस्तज्जननासंभवश्च विषयविषयककामस्य भगवद्विषयकत्वं चानुपपन्नमित्यत आह ॥ क्रोधवदिति ॥ स्वचिकीर्षितकार्यार्थं बद्धमुक्तव्यवस्था च भगवदधीनैव न साधनाधीनेति ज्ञापनार्थम् ॥ यथा मुनिवाक्यैर्मुक्तयोर्भक्तयोरपि जयविजययोस्तद्विरुद्धः क्रोधो भगवति जनितस्तथाऽत्र काम इत्यर्थः ॥ यथा क्रोधेनाऽन्यथा भावना सदा तयोस्तथाऽत्र तुल्यत्वभावना ॥ यथा क्रोधस्य शत्रुविषयकत्वनियमेन हरौ शत्रुत्वज्ञाने सोपि ॥ तथा पुत्रस्यापि विषयत्वेन हरौ तद्भावनायां विषयविषयककामस्य तद्विषयत्वमपि ॥३३॥

१. तत्रापि ।

तात्पर्यमाह । आग्नीध्रस्यापीति ॥ यथा प्रियव्रते भगवदाज्ञयैव ब्रह्मणोक्तमैश्वर्याङ्गीकारार्थमेवमस्मिन्नपि श्रीसंपत्त्यर्थं भगवदिच्छां ज्ञात्वा ब्रह्मणा तथा कृतमिति ज्ञापनायाऽपिः । हरिवाक्यजकामात्मनः पुरुषस्य प्रकृतिरूपैव सा । अत एव मूले गायंतीमित्युक्तम् । गुणानां मिश्रभावेन नवविधत्वात्तावत्पुत्रजननं च । तथा च तस्यास्तद्वशत्वं ब्रह्मकृतमेवेत्यर्थः । अत्राभिज्ञापकमाह । येनेति ॥ अन्यथाऽतिमुग्धत्वज्ञानेन विरतिरेव स्यान्न तु मोह इति भावः । अत एव रसभावोत्पत्त्या रसगर्भितानि वाक्यान्यपीत्याह । तादृशैरिति ॥ रसशास्त्रे मोहकत्वेन प्रसिद्धैरित्यर्थः । विपक्षे बाधकमाह । अन्यथेति ॥ यदि हरिदत्तैषा न स्यात्तदा प्रियव्रतस्य भक्तस्याऽपि तद्वाक्यजकामवत्त्वेनैतादृशः पुत्रोऽभूदस्याप्येतादृश एव स स्यात् । न भगवत्काम इत्यर्थः । पितुः प्रचुरो धर्मो ज्येष्ठेऽनुवर्तत इत्यत उक्तं ज्येष्ठेति ॥ अथवा पूर्वोक्तप्रकृतिरूपा चेन्न स्यात्तदा स सात्त्विकः कथं स्यादित्यर्थः ॥ २९ ॥

त० दी०—स्वस्मिन् दोषस्तु कामो हि स पूर्णोऽप्सरसां गृहे ॥
अतस्ताः सर्वथा लब्धास्तासु कामं विनिक्षिपेत् ॥ ३० ॥

त० प्र०— नन्वस्य पितृलोकप्राप्तिकथनं प्रकरणार्थविरोधीत्याशंक्याह । स्वस्मिन्निति ॥ कामस्य दोषत्वेन न तत्सहितानां भगवति स्थितिर्न वा रक्षणीयः सः । तस्य च स्वप्रकृतावेव लयनियमेनाऽप्सरसां च तत्प्रकृतिरूपत्वेन तासु तल्लयप्रापणे शुद्धस्य तथात्वं भावीति तात्पर्येण तथा कथनमित्यर्थः । ननु "न जातु कामः कामानाम्" इति वाक्यादिदमसंभावितमत आह । स पूर्ण इति ॥ तत्र पूर्णो भवतीत्यर्थः । तथा च यथा कृष्णवर्त्मनो हविषाऽतिपूरणे तस्यैव शांतिरेवमस्यापीति भावः । सर्वथा स्वाधीनतयेत्यर्थः ॥ ३० ॥

त० दी०—ततो मोक्षस्तस्य भावी कर्मणोऽल्पं हि यत्फलम् ॥
आद्यंतयोः कृतार्थत्वात्सोऽपि तादृग्विधो भवेत् ॥ ३१ ॥

त० प्र०— पूर्वोत्तरभोगयोः कर्मफलत्वमाशंक्याह ॥ कर्मण इति ॥ कर्मसंबंधि यत्फलं तदल्पं भवति । एतच्च महदिति न तथेत्यर्थः । तेन भगवद्दत्तश्रीरूपमेव सर्वमिति भावः ॥ ॥ एतन्मुक्तेः स्फुटमनुक्तत्वेन तत्रोपपत्त्यन्तरमाह । आद्यंतयोरिति ॥ संदंशन्यायेनाऽप्यस्य मुक्तिरुपपन्नेत्यर्थः ॥ ३१ ॥

---

१ प्रविह्रामपदं न । २ भाव । ३ संबधे ।

त० दी०—ब्राह्मणा भगवद्भक्ता यदा कार्यं तदैव हि ॥
अतः केवलयज्ञादेः साधकत्वं निराकृतम् ॥ ३६ ॥

त० प्र०—ब्राह्मणानां भक्तिनिरूपणस्य प्रकृतानुपयोगमाशंक्य तमाह ॥ ब्राह्मणा इति ॥ कार्यं भगवदाविर्भावः ॥ फलितमाह ॥ अत इति ॥ अन्यथा भक्तिसिद्धांतविरोधः स्यादिति भावः ॥ वंशसंबंधांशे यज्ञस्योपयोगोस्तीति ज्ञापनाय केवलपदम् ॥ आदिपदेन यजमानश्रद्धादेशादि ॥ ३६ ॥

त० दी०—लौकिकोऽपि हरौ भावो मोचकस्तेन तत्कथा ॥
यथा कामनया पित्रा स्वयमुत्पादितो हरिः ॥
तथैव कृतवान् सर्वमिति राज्यादिवर्णनम् ॥ ३७ ॥

त० प्र०—धर्म्याध्याये पुनः "नाभिस्तु यथाऽभिलषितम्" इत्यादिना नाभिकथा कुत इत्यत आह ॥ लौकिक इति ॥ ननु पूर्वाध्याये निवृत्तिधर्मप्राकट्यार्थकत्वनिरूपणादवतारस्य राज्यादिकथनं तद्विरुद्धमत आह ॥ यथेति ॥ ३७ ॥

त० दी०—यज्ञस्तदेंद्रस्तेनाऽस्य स्पर्धा कार्यावतारतः ॥
परीक्षा वा कन्यकाया दानार्थमिति निश्चितम् ॥ ३८ ॥

त० प्र०—भगवदवतार इंद्रस्य स्पर्धा कथमत आह ॥ यज्ञ इति ॥ अय मन्वंतरे हरेरंशावतारो यज्ञ एवेंद्रोऽभूत्तेन तद्योग्यतेति ॥ तथा मूले भगवत्पददानादिति भावः ॥ तदैक्यात्स्पर्धासंभवोऽत आह ॥ कार्येति ॥ यज्ञस्य मन्वंतरकार्यत्वात्क्रियाशक्तेरेवाऽऽविर्भावात्तदुपयुक्ताधिकज्ञानशक्त्यनाविर्भावादिंद्रत्वांगीकारेण तद्धर्माणामप्यंगीकारात्स्पर्धेत्यर्थः ॥ यद्वा निवृत्तिमार्गप्राकट्यलक्षणकार्यार्थत्वादपभावतारस्य प्रवृत्तिपरत्वमस्ति न वेति संशयेन कन्यादाने संदिहानः प्रजानुरागतद्भावाभ्यां तन्निर्द्धारकं तु कन्यायाश्चाऽऽलौकिकवीर्योत्पन्नत्वेनाऽस्य च निवृत्तिपरत्वेन लोके स्वमलौकिकवीर्यं प्रकटयिष्यति न वेत्यलौकिकवीर्यपरीक्षार्थं च वृष्ट्यकरणमित्याह ॥ परीक्षेति ॥ पूर्णगुणत्वपरीक्षेत्यर्थः ॥ लोकप्रतीत्यभिप्रायं मूले तत्कथनमिति भावः ॥ ३८ ॥

त० दी०—दंपत्योर्भगवत्त्वे तु पुत्राणां हि कृतार्थता ॥
योगेन मेघरूपः सन् वृष्टिं चक्रेऽतिशोभनाम् ॥
स्थितिरेषेति योगस्य साधनत्वं निरूपितम् ॥ ३९ ॥

त० प्र०—परीक्षाप्रयोजनमाह ॥ दंपत्योरिति ॥ लौकिकमेघानाकृष्य ते-

त० दी०—यथा वैकुंठसंबंधो जयादेस्त्रिषु जन्मसु ॥
कृष्णवाक्योद्गतः कामस्तथा कृष्णत्वमश्नुते ॥
हरिः सर्वसमो लोके न हरेस्तु समः क्वचित् ॥ ३४ ॥

त० प्र०—यथा हरिणा तत्संमुखे मरणेपि न मुक्तिः किं तु "त्रिसत्या हि देवाः" इत्यादिश्रुतेस्त्रिषु जन्मसु संपन्नेषु पश्चाद्वैकुंठप्राप्तिस्तथाऽत्र कामो वंशात्मकत्वेन तद्रूपभगवत्त्वं प्राप्त इत्याह ॥ यथेति ॥ मुनिवाक्यजः क्रोधो यत्र तथा तत्र भगवद्वाक्यजः कामस्तथेति किं वक्तव्यमित्याशयेन विशेषणम् ॥ फलितमाह ॥ हरिरिति ॥ एतेन तुल्यत्वज्ञाने ये पूर्वपक्षास्तेऽपहताः ॥ तस्मिन् हि सति भगवानेव चेत्प्रादुर्भवति तदेदं ज्ञातं भवति ॥ एतेन यथा कथंचिदपि ॥ भजनं सफलमिति ज्ञापितम् ॥ ३४ ॥

त० दी०— आत्मप्रभृतिवंशस्य सर्वार्थस्योपपत्तये ॥
सामर्थ्यादि हरेरेव ततः स्वयमभूत्सुतः ॥ ३५ ॥

त० प्र०—नन्वप्रजस्त्वेन प्रजामात्रकामनाऽस्योचिता तत्कथं हरितुल्यतत्कामनेत्याशंक्य तत्र हेतुमाह आत्मेति वस्तुतस्तु भगवानेव पुत्रत्वेनाऽऽविरस्त्वित्यस्येच्छा॥ अन्यथा वंशस्य कामजत्वेन प्रवृत्तिकार्यमेव स्यान्न निवृत्तितत्कार्यं ॥ हरिवाक्यजत्वेन मुक्तावप्यधिदैविककामरूप एव लयः स्यान्न तु पुरुषोत्तमे ॥ अतः स्वात्मानमारभ्य सर्वस्यैव वंशस्य धर्मादिभक्त्यंतसर्वार्थसिद्ध्यर्थं तत्कामनेत्यर्थः ॥ ईश्वरे साक्षात्तथा वक्तुमशक्यमिति भवादृशीमित्युक्तमिति भावः ॥ हरिप्रादुर्भावे वंशस्य कृतार्थत्वं युक्त्याऽप्युपपन्नं भवतीत्युक्तमुपपत्तय इति ॥ ननु वरदानेनाऽपि सर्वोपपत्तावाविर्भावस्य नावश्यकत्वमित्याशंक्य वरेण हि तादृक् सामर्थ्यादिकं संपादनीयम्॥ न च वाग्रूपः ॥ तथा च कामजनकपूर्ववाग्विरोधसंभवेन तथा वचनासंभवः ॥ वचनेन च वचनबलं न निराकर्तुं शक्यम् ॥ तुल्यबलत्वादिति न सामर्थ्यादिसंभवोपि किं तु स्वरूपेणैव तथा कर्तुं शक्यमधिकबलत्वादिति स्वयमेव सुतोऽभूदित्याह ॥ सामर्थ्यादिति ॥ अत एव मूले "वातरशनानां धर्मान् दर्शयितुकामः" इत्युक्तमिति भावः ॥ तर्हि "प्रक्षालनाद्धि पंकस्य" इति न्यायेन वाचा कामजननमेव किमर्थमित्याशंका त्वत्स्नेपि भगवान् इत्यनेनैवाऽपहता ज्ञेया॥ एवमस्मिन् कीर्तिः स्थापिता ॥ भगवानस्य सुत इति ॥ ३५ ॥

१ निम्नता । २ नास्त्यित्यस्येच्छा । ३ क्वचित्तु नास्ति ।

स्तथा तस्या रीतेः क्रमप्राप्तत्वमुपपादयति॥ तृतीयत्वादिति ॥ सार्धेन॥४२॥४३॥

त० दी०— सर्वत्र लौकिकी दृष्टिः शास्त्रदृष्टिं हि बाधते ॥
शतधा कामकरणं सर्वकामविवृद्धये ॥ ४४ ॥

त० प्र०—नन्वेवं सर्वत्यागाभावात्कामसिद्ध्यर्थमाविर्भूतस्यापि भजनेन तत्प्रसादान्मुक्तिर्भवेदिति कुतो गमनम् ॥ गृहत्यागावश्यकत्वे वा वनेऽपि नास्यैव भावनं कुतोऽत आह॥ सर्वत्रेति॥ अत्र पुत्रत्वेनैव स्फूर्तिर्भवति न भगवत्त्वेनेति भजनमेव न संपद्येतेति तथेत्यर्थः ॥ मर्यादायां यथा कथंचिद्भाने मुक्तिर्नेति भावः ॥ यद्वा ॥ ननु मूले "कर्मणाऽपत्यतामगात्" इति कथनं कथं भक्तिशास्त्रविरोधादत आह॥ सर्वत्रेति ॥ न सा शुकोक्तिः किं त्वनुवादो लोकोक्तेः ॥ तेषां शास्त्रश्रवणे सत्यपि बाह्यदृष्टिरेवेति ॥ ब्राह्मणादिनिष्ठांतरभक्तेर्ज्ञानाभावात्तथेत्यर्थः ॥ पुत्रशतमात्रजनने हेतुमाह ॥ शतधेति॥ वंशस्य कामात्मकत्वात्तस्य च शतविधत्वात्तावत्पुत्रजननमित्यर्थः ॥ प्रयोजनमाह ॥ सर्वेति ॥ ४४ ॥

त० दी०— एको मोक्षे तथा भोगे भक्तौ च नवधा पुनः ॥
नवानां नवभेदा हि कर्ममार्गेष्टिकामनाः ॥ ४५ ॥

त० प्र०—कामस्य शतधात्वं विवृणोति॥ एक इति ॥ मुक्तेरेकविधत्वाद्भोगस्य साधनभक्तेश्च गुणैर्नवविधत्वात्कर्मफलस्य चैकाशीतिविधत्वात्तत्तत्कामनाया अपि तावद्विधत्वमित्यर्थः ॥ ते के भेदा इत्याकांक्षायामाह ॥ कर्ममार्गेति ॥ ४५ ॥

त० दी०— कर्मकर्तृविभेदेन गुणैर्नवविधत्वतः ॥
मोक्षः कामस्तथा भक्तिर्धर्मश्चेत्यत्र हि क्रमः ॥ ४६ ॥

त० प्र०—तत्रैकाशीतिविधत्वमुपपादयति ॥ कर्मेति ॥ नवविधे कर्मण्येकैकं कर्म नवविधोऽपि कर्ता चिकीर्षतीति तथा व्युत्क्रमेण पुरुषार्थकामसृष्टौ तात्पर्यमाह ॥ मोक्ष इति ॥ अत्र प्रियव्रतवंशे पूर्वं हि तस्य मोक्षकर्मरतिः ॥ ततः कामस्तत्पुत्रे ततो नाभेर्ब्राह्मणानां च भक्तिस्ततश्चर्षभे धर्ममर्यादास्थापनं चेति तथा क्रम इत्यर्थः ॥ ४६ ॥

त० दी०— यथार्थः सर्वसुखदः सर्वार्थस्य च साधकः ॥
तथा स्थाने भक्तिमार्ग इत्येवं क्रमसंकथा ॥ ४७ ॥

त० प्र०—अर्थाकथने हेतुमाह ॥ यथेति ॥ ४७ ॥

वृष्टिकरणे तेषामिंद्रियत्वेन नास्य तथा वीर्यसिद्धिरित्यत आह ॥ योगेनेति ॥ यस्मिन् क्षेत्रे यदा यावदपेक्षितं तत्र तदा तावदेव जलं ददातीत्युक्तमतिशोभनामिति ॥ इंद्रस्तु तद्विपरीत इति भावः॥ स्वतः समर्थस्य साधनांगीकारे हेतुमाह॥ स्थितिरिति ॥ मर्यादायां प्रसिद्धसाधनेनैव साध्यकरणाच्चथेत्यर्थः ॥ ३९ ॥

त० दी०— कामसिध्यै समुत्पन्नो भगवाँस्तेन कामकृत् ॥
न मोक्षदोऽभवत्तेन नरनारायणादृतिः ॥
मर्यादायामेवमेव मुक्तिरित्यपि सूचितम् ॥ ४० ॥

त० प्र०—भगवति गृहे सति तं विहाय वनगमनमयुक्तम् ॥ तत्रापि स्वार्थ प्रकटस्योपास्तिमपहायाऽन्यत्र सा नोचितेत्यत आह ॥ कामसिद्ध्या इति ॥ अत्र नियतेच्छत्वाद्भगवत इति भावः॥ तथेच्छायां हेतुमाह॥ मर्यादायामिति ॥ गृहत्यागादिनैवेत्यर्थः ॥ ४० ॥

त० दी०— तपसा ज्ञानमार्गेण मुक्तावेकस्तु साधनम् ॥
भगवत्सेवया चेत्सा बहूनामपि सा भवेत् ॥ ४१ ॥

त० प्र०—नरभजनोपयोगमाह ॥ तपसेति ॥ एको नरस्तपसा साधनेन ज्ञानमार्गेण मुक्तौ सूत्रात्मकत्वेन स तत्साधक इत्यर्थः ॥ तर्हि भगवद्भजनं किमर्थमत आह ॥ भगवत्सेवयेति ॥ मर्यादायां स्त्रियाः पूर्वोक्ताधिकाराभावाद्भजनं विना नाऽस्या मुक्तिरिति तथेत्यर्थः ॥ अस्या मुक्तौ किमाश्चर्यमिति कैमुतिकन्यायदर्शनार्थं बहूनामिति ॥ तमसेति पाठे स्त्रीसंगो बाधको मुक्तावत आह ॥ तमसेति ॥ चैद्यादिवत्तमसा द्वेषादिना मुक्तावेकस्यैव स्वमुक्तावेव साधनत्वं, न प्रसंगिनोपि मुक्तौ॥ तथा ज्ञानमार्गेणापि मुक्तौ अत एकस्यैव त्यागः ॥ भजने तु तत्प्रतिबंधकस्यैव त्यागो न तत्साधकस्यापीति तया सह गमनं नापि सा प्रतिबंधिकेत्यर्थः ॥ ४१ ॥

त० दी०— वनस्थरीत्या मुक्तिस्तु नाभेरत्र निरूप्यते ॥
तृतीयत्वादतो भार्यासहितस्य गतिस्तथा ॥ ४२ ॥
गुरुसेवाप्रधानत्वाद्ब्रह्मचारे प्रियव्रतः ॥
गृहस्थो मध्यमः स्पष्टो मुक्तिस्तस्य निरूपिता ॥ ४३ ॥

त० प्र०—तथापि मर्यादायां स्त्रियास्त्यागाविधानात्सोऽयुक्तः ॥ "न तथाऽस्य भवेत्क्लेशः" इति वाक्यात् ॥ तादृशतत्प्रसंगेनाऽस्यापि मुक्त्यसंभवोऽत आह ॥ वनस्थेति ॥ नेदं प्रव्रजनरूपं गमनम् ॥ परमहंसधर्माणामधुनाऽप्यप्रकटत्वादत-

त० प्र०—ननु योगमार्गे सर्वत्यागाभावादत्र तन्मार्गप्रदर्शनमनुपपन्नमत आह ॥ संन्यास इति ॥ अयं संन्यासस्तु सांख्यमार्गीय एव ॥ योगचर्या तु तयोरविशेषात् ॥ तथा चोक्तं भगवता "सांख्ययोगौ पृथग् बालाः" इत्यादिना ॥ तदाह ॥ समाख्यात इति ॥ योगसिद्धिसेवानंगीकारे हेतुमाह ॥ विषया इति ॥ ५३ ॥

त० दी०— मुखे पाषाणविक्षेपः कोप्यंतर्मा विशेदिति ॥
सर्वथा विषयत्यागः प्रथमं तेन रूपितः ॥
भोगोपि विषयाणां तु नैर्मल्यं योगलक्षणम् ॥ ५४ ॥

त० प्र०—कोपीति ॥ सायुज्यमुक्त्यधिकार्यपीत्यर्थः ॥ एतेन सिद्धानां सर्वथा संगाभावो दर्शितः ॥ किं च विषयभोगो हि पूर्वं मुक्तस्तत्र तथात्वेन सर्वथा त्यागो निरूपितो भवतीत्याह ॥ सर्वथेति ॥ त्यागस्य प्राप्तिपूर्वकत्वात्प्रथमं विषयाणां भोगोपि 'शयान एवाश्नाति' इत्यादिनाऽत एव निरूपित इत्याह ॥ प्रथममिति ॥ रागव्यावृत्त्यर्थं तुः ॥ सौरभ्यनिरूपणप्रयोजनं नैर्मल्यज्ञानं तस्यापि सिद्धलक्षणत्वेन निरूपणमित्याह ॥ योगलक्षणमिति ॥ ५४ ॥

त० दी०— अभावेव समस्तस्य गतिरित्यमिदाहनम् ॥
आनंदमयदेहस्य वह्न्यावावरणे पुनः ॥
उद्धृते तु तिरोधानमित्येवं वर्णिता कथा ॥ ५५ ॥

त० प्र०—दाहोक्तितात्पर्यमाह ॥ अभावेवेति ॥ अत्र हि योगचर्या शिक्षयन् यथा यथा तेषामवस्थानं प्रदर्शयति ॥ यथा सिद्ध्यनंगीकारे 'न कुर्यात्कर्हिचित्' इत्यादि हेतुत्वेन निरूपितम् ॥ न ह्यत्र तदंगीकारेपि तथात्वं भवितुमर्हति ॥ तथाऽत्र योगशरीरस्यांते गतिरियमेवेति ज्ञापनाय तथा कथोक्ता ॥ वस्तुस्थितिस्त्वानंदमयदेहस्य वह्निरूपावरण उद्धृते सति तिरोधानमित्याह ॥ आनंदेति ॥ अत एव मूले 'योगिनां सांपरायविधिमनुशिक्षयन्' इत्युक्तमिति भावः ॥ प्रकरणमुपसंहरति ॥ इत्येवमिति ॥ इतीति समासौ हरिणा स्वरूपस्थितिकथा वर्णितेत्यर्थः॥५५

त० दी०— भक्तेषु संप्रसन्नोयमेवं क्लेशं चकार ह ॥
मर्यादायामतः कृष्णो न भक्तिं क्वापि यच्छति ॥ ५६ ॥

त० प्र०—'राजन् पतिः' इत्यादितात्पर्यमाह ॥ भक्तेष्विति ॥ क्लेशे मर्यादैव हेतुः ॥ ५६ ॥

त० दी०— पुत्रेषु सर्वथा कामं सम्यक् स्थापितवान् यतः ॥
निष्कामास्तु ततो जाताः प्रजास्तेनैव रक्षिताः ॥ ४८ ॥

त० प्र०—प्रजानां निष्कामकत्वे हेतुमाह ॥ पुत्रेष्विति ॥ अत एव भगवतैव रक्षिताः ॥ ४८ ॥

त० दी०— सर्वथा कामराहित्यं दृष्टांतेन निरूपितम् ॥
स्नेहः स्वतंत्रा भक्तिर्हि त्रिमार्गादधिका मता ॥ ४९ ॥

त० प्र०—अविद्यमानमिवेति दृष्टांतेन फलितमाह॥ त्रयाणां मार्गाणां कर्मज्ञानभक्तीनां समाहारस्तथा॥ तथा च स्नेहरूपा भक्तिः स्वतंत्रा विध्यनियम्या मोक्षादधिका सा तु रसवदनुभवैकगम्येति तादृशानामेव पुष्टिमार्गीयाणां संमतेत्यर्थः ॥ अन्येषां तत्स्वरूपाज्ञानादतस्तथात्वमिति भावः ॥ ४९ ॥

त० दी०— कर्ममार्गप्रकारेण येषु कामो निरूपितः ॥
तेषां ज्ञानोपदेशस्तु कर्तव्यः सर्वथाऽन्यथा ॥
जडाः स्युर्येन नाशः स्यादतो गत्वा हि बोधनम् ॥ ५० ॥

त० प्र०—तज्जिज्ञासाभावेपि स्वयं तत्त्वोपदेशे हेतुमाह ॥ कर्ममार्गेति ॥५०॥

त० दी०— स्वकृतेऽर्थे हरिः सर्वं प्रतीकारं करोति हि ॥
अहंकारनिवृत्तिं हि बोधयत्यत्र साधनैः ॥ ५१ ॥

त० प्र०—एवं निर्बंधेनोपदेशे हेतुमाह ॥ स्वकृत इति ॥ एतेन कर्मासक्तेरनर्थत्वं बहूनामर्थानामुक्तत्वादुचितम् ॥ उपदेश्यनिर्धारमाह ॥ अहंकारेति ॥ 'हंसे गुरौ' इत्यादिनेत्यर्थः ॥ ५१ ॥

त० दी०— ऐहिकामुष्मिकः क्लेशस्तत्कृतो वर्ण्यते ततः ॥
मुख्यसांख्योऽयमाख्यातो योगे त्वग्रे मनःकथा ॥ ५२ ॥

त० प्र०—तत्कृतोऽहंकारकृतः॥ निवृत्तिमार्गे सांख्ययोगयोः साधनत्वात्तदुभयं दर्शितम् ॥ अहंताममतात्याग एव मुख्यो ज्ञानमार्ग इति भगवता 'जडांधमूक' इत्यादिना स एव मार्गो दर्शित इत्याह ॥ मुख्यसांख्य इति ॥ 'यर्हि वाव' इत्यादिना योगचर्या प्रदर्शिता॥ अत एवाऽग्रे अग्रिमाध्याये मनःकथोक्तेत्यर्थः ॥५२॥

त० दी०— संन्यासस्तु समाख्यातो योगसांख्याविशेषतः ॥
विषयाः सर्वथा त्याज्याः सर्वावस्थासु सर्वतः ॥
इति दर्शयितुं सिद्धो योगसिद्धीर्न मन्यते ॥ ५३ ॥

अत एव पश्चात्तापे साधनत्वेन सर्वमुक्त्वा 'समाहितं मनः' इति साध्यत्वेनोक्तवान् 'परो हि योगो मनसः समाधिः' इति वाक्यादिति भावः ॥ कर्मादिषु तथात्वेनाऽमनने हेतुमाह ॥ कर्म त्विति ॥ भगवदुपासनालक्षणस्य व्यावृत्त्यर्थं तुः॥ अत्यार्तत्वेनाऽस्य कालविलंबासहिष्णुत्वात्कर्मणश्चाऽदृष्टद्वारोपकारकत्वाददृष्टस्य च मध्ये कालादेर्नाशसंभवात्तथात्वम् एतदेवाऽऽह ॥ न तदिति ॥ ५९ ॥ ६० ॥

त० दी०— भक्तिश्च न स्वतंत्राऽऽसीत्साधनत्वेन सा पुनः ॥
ज्ञानमेव करोत्येषा वैराग्यार्थं न चाऽन्यथा ॥ ६१ ॥

त० प्र०—स्नेहरूपा भक्तिश्चेत्स्यात्तदानुषंगिकमेव पुनः स्थैर्यं स्यात् ॥ सा च साधनत्वेनैवासीदिति तृतीयेऽपि जन्मनि ज्ञानमेव कृतवती तदपि वैराग्यार्थमाह ॥ भक्तिश्चेति ॥ यथा तंडुलसाधनत्वेन चिंतामणिं मन्वानाय स न भक्तं प्रयच्छति तृप्तिं वा तथेति भावः ॥ ६१ ॥

त० दी०— पश्चाद्ददाति मोक्षं च सजातीयप्रवर्धिता ॥
योगेनैव मनःस्थैर्यं ततः शीघ्रं तदाचरन् ॥ ६२ ॥

त० प्र०—स्मरणकीर्तनादेः सजातीयत्वम् ॥ एवमितरसाधनानामन्यत्रोपक्षीणत्वमुक्त्वा प्रकृतमुपसंहरति ॥ योगेनेति ॥ ६२ ॥

त० दी०— कर्मादीनां स्थानमार्गे बलं सर्वात्मना मतम् ॥
पुष्टौ परं प्रवक्ष्यामो भक्तिमार्गेण बाधनम् ॥ ६३ ॥

त० प्र०—ननु स्मरणादिषु क्रियमाणेषु विरक्तस्य तद्रसानुभवोऽवश्यं भावी । तथा सति योगं न मन्येत नीरसत्वज्ञानादत आह ॥ कर्मादीनामिति ॥ यथा बालस्य स्त्रीस्पर्शादौ सत्यपि न शृंगाररसानुभवस्तथा मर्यादामार्गीयत्वाद्यावता ज्ञानवैराग्यसंभवस्तावांस्तद्रसानुभवोऽपि नाऽधिकः ॥ अन्यथा तथा प्रारब्धस्यैव नाशे तद्भोगासंभवेन मर्यादानाश एव स्यादतोऽस्मिन्मार्गे तेषां बलिष्ठतेत्यर्थः ॥ मतं भगवत इति शेषः ॥ तथा च भगवता स मार्ग एव तथा कृतो यत्कर्मानतिक्रमेणैव फलं भवतीत्यर्थः ॥ तर्हि भक्तिशास्त्रविरोध इत्याशंक्याह ॥ पुष्टाविति ॥ कर्मणामित्युभयत्र संबध्यते ॥ भक्तिस्वरूपं त्वेतादृशमेव सदा परं तु भगवान् यस्मिन्मर्यादां मनुते तत्रैषा चेत्स्वशक्तिं प्रकटयेन्मर्यादानाश एव स्यात् ॥ अतो भगवदिच्छयैव प्रतिबद्धा नाऽधिकं करोति ॥ न हि भस्मनाच्छन्नोऽग्निर्न

१ मित्याह ।

त० दी०— अथाध्यायैरष्टभिर्वै योगमार्गो निरूप्यते ॥
योगाभावे तु सर्वं हि निष्प्रयोजनतां व्रजेत् ॥
मनसश्चंचलत्वाद्धि तथांऽते या मतिर्गतिः ॥ ५७ ॥

त० प्र०—योगस्याऽष्टांगत्वादष्टभिरध्यायैर्योगमार्गेण स्वस्थितिर्निरूप्यत इत्याह॥ **अथेति** ॥ ननु योगनिरूपणे भरतस्यैव कथा कुत इत्याशंक्य योगस्यावश्यकत्वं हि तदितरसाधने सत्त्वेपि तदभावेन स्वस्थित्यभावे सिद्ध्यति ॥ तादृशत्वं च भरतेरस्तीति तत्कथा ॥ एतदेवाऽऽह ॥ **योगाभाव इति** ॥ आद्येऽध्याये प्रजापालनादिधर्मनिरूपणेनैतद्दूपितमित्यर्थः ॥ योगेनैव मनसः स्थैर्याचदभावे तथात्वं युक्तमेवेति ज्ञापनाय मनसश्चंचलत्वं प्रवाहपातित्वं च द्वितीयेन निरूपितमित्याह ॥ **मनस इति** ॥ ५७ ॥

त० दी०— प्रारब्धकर्मकालादेर्बाधकत्वं यतः सदा ॥
भक्तिः परं ज्ञानदात्री कर्मादीनां बलेऽपि हि ॥ ५८ ॥

त० प्र०—मुमुक्षोः साधनपरस्यापि तथात्वे हेतुमाह ॥ **प्रारब्धेति** ॥ आदिपदेन स्वभावः ॥ मर्यादायामिति शेषः ॥ भक्तेरपि कर्मवदप्रयोजकत्वमाशंक्याह ॥ **भक्तिरिति** ॥ बाधके सत्यपि कार्यसाधिका सैवेति तथा ॥ अत एव 'कृष्णार्चनप्रभवा' इत्युक्तम् ॥ तेन भक्त्यैवाऽस्य सर्वमग्रिममित्युक्तं भवति ॥ अन्यथा पूर्वज्ञानाभावेनेतरवद्विषयासक्त्या जन्मांतरेपि तत्कृतार्थत्वं स्यादिति भावः ॥ ५८ ॥

त० दी०— ज्ञानप्राधान्यतः क्लेशो भक्त्यांऽते मोक्षमेष्यति ॥
मुक्तिस्कंधे तच्च वक्ष्यत्यतोऽत्र न निरूपितम् ॥ ५९ ॥
मन्यते साधनं योगं बाधकानां निराकृतौ ॥
कर्मत्वनुपयोग्येव न तद्दृष्टोपकारकम् ॥ ६० ॥

त० प्र०—तर्हि तथाऽधुनैव मोक्षः कथं न संपादितोऽत आह ॥ **ज्ञानेति** ॥ ज्ञानसाधनत्वेन भक्तेः कृतत्वात्तथा ॥ तथाऽपि भक्तिस्वरूपं मोचकमेवेति कथं न तथेत्यत आह ॥ **भक्त्येति** ॥ अत्र सर्वांशे मर्यादैव हेतुरिति ज्ञेयम् ॥ तर्ह्यत्र तृतीयेपि जन्मनि मोक्षानिरूपणं कथं तत्राऽऽह ॥ **मुक्तीति** ॥ एकादशे स्कंधे "स भुक्तभोगां त्यक्त्वेमां निर्गतस्तपसा हरिम् ॥ उपासीनस्तत्पदवीं लेभे वै जन्मभिस्त्रिभिः" इत्यनेन॥ ५९ ॥ ननु देहस्य बहिरंगत्वान्मृगत्वेऽपि भक्तिकरणे कृतार्थत्वं स्यादेवेति विप्रत्वेपि च कुतस्तदकरणं कालप्रतीक्षा चेन्यत आह ॥ **मन्यत इति**॥

त० दी०— गुरुशिष्यप्रकारेण नतिः प्रश्नः पुरोच्यते ॥
योगानुसारि विज्ञानं मनसश्चापि निग्रहः ॥ ६७ ॥

त० प्र०—ततो दोषापगमे नतिः प्रश्नश्च तुरीयाध्यायार्थ इत्याह॥ गुरुशिष्येति॥ गुरौ यः शिष्यस्य प्रकारस्तेनेत्यर्थः ॥ अन्यथौदासीन्येन कथने तेन तस्य ज्ञानं न स्यादिति भावः ॥ अस्य पूर्वेण वा संबंधः ॥ तेनाऽप्रामाणिकं निरस्तम् ॥ नेत्यादिरध्यायार्थः ॥ अस्य संन्यासाभावेन सांख्यीयज्ञानानधिकाराद्योगानुसारि तदुपदिष्टवानिति तज्ज्ञानमग्रिमाध्यायार्थ इत्याह ॥ योगेति ॥ अत एव स्वस्मा अप्येतदेवोपदिष्टं तदेत्याशयेनोक्तं 'यज्जातं राजजन्मनि' इत्ययमपि तथेति ॥ अत एव स्वयमेवोपदिष्टवान् ॥ अन्यथा भगवति प्रश्नार्थं चलितस्य तत्रैव प्रेषण-मुचितमितीदमयुक्तमेव स्यात् ॥ तदुपदेशाधिकाराच्च तदर्थस्तावानायासोपि व्यर्थः स्यात्तदप्ययुक्तमिति भगवदिच्छयैव तथेति भावः ॥ तत्साधनत्वेन तत्रैव मनोनि-ग्रहश्चोक्तः ॥ ६७ ॥

त० दी०— ततो वैराग्यमुत्कृष्टं परोक्षकथनेपि च ॥
योगवैराग्यबाहुल्यां भक्तिरत्र निरूपिता ॥ ६८ ॥

त० प्र०—ततोऽग्रिमे परोक्षकथनेपि वैराग्यं तत्साधनत्वेनोक्तम् ॥ भगवत्येव रागजननादुत्कृष्टम् ॥ उपदेशे फलितमाह ॥ योगेति ॥ सर्वत्रोपसंहारे रहूगणे-त्यादिना 'गुरोर्हरेश्चरणोपासनास्त्रः' 'हरिं तदीहाकथनश्रुताभ्याम्' "हरिसेवया शितं ज्ञानासिम्, इति वाक्यैर्भक्तिनिरूपणात्तस्या एव प्राधान्यं तेन भगवच्छास्त्रानुसारी योग उक्तः ॥ तदुक्तं भगवता "योगिनामपि सर्वेषां मद्गतेनांतरात्मना ॥ श्रद्धा-वान् भजते यो मां स मे युक्ततमो मतः" इति ॥ तथा च भगवति मनोनिग्रह-स्तदन्यत्र वैराग्यमेतत्सहितस्तत्र स्नेहोऽत्र कर्तव्यत्वेनोक्त इत्यर्थः ॥ साधनत्वेन[1] बाहुल्यम् ॥ ६८ ॥

त० दी०— परोक्षकथनं सर्वमधिकारिपरीक्षकम् ॥
रहूगणस्याधिकारो यादृशश्च परीक्षिति ॥ ६९ ॥

त० प्र०—इह परोक्षवादप्रयोजनं वदँस्तदन्यत्राऽप्यतिदिशति ॥ परोक्षकथनं सर्वमिति ॥ अत्र परीक्षाफलितमाह ॥ रहूगणस्येति ॥ ६९ ॥

---

१ साधकत्वेन ।

दहतीत्यदाहक एवाऽतो न भक्तिशास्त्रविरोध इति भावः ॥ पुष्टौ पुष्टिनिरूपके स्कंधे षष्ठ इत्यर्थः ॥ असत्कर्मबाधनमजामिले ॥ ६३ ॥

त० दी०– कर्मणामनुपायत्वं भक्तेः साधकता पुनः ॥
योग्यदेहेपि बाधा च कालादेरुच्यते स्फुटा ॥ ६४ ॥

त० प्र०–सत्कर्मणामनुपायत्वं हर्यश्वेषु नारदेन निरूपितम् ॥ पुनरिति ॥ पूर्वं भक्तस्य शापादयोग्यशरीरप्राप्तावपि वृत्र इत्यर्थः॥एवं प्रासंगिकमुक्त्वा प्रकृते तद्वैपरीत्यमाह ॥ योग्येति ॥ यद्वा भक्तेर्ज्ञानसाधकता पुनर्विप्रत्वेऽप्युच्यत इति संबंधः ॥ मनःस्थैर्यसाक्षाद्भगवत्प्राप्तियोग्ये ब्राह्मणदेहेपि मर्यादायां तत्प्रतिबंधकोऽध्ययनवृषलहस्तमरणादिः ॥ ६४ ॥

त० दी०– तत्रापि हरिभक्तिर्हि सर्वथा मोचिका मता ॥
एवं तस्य स्वरूपे तु त्रिभिः प्रोक्ता स्थितिः परा ॥ ६५ ॥

त० प्र०–तत्राऽपि सैव मोचिकेत्यर्थः ॥ अत एव मूले तत्पादमूलमित्यादीति भावः ॥ उपसंहरति ॥ एवमिति ॥ ६५ ॥

त० दी०– ज्ञानाभावादेवमासीदिति शंकां तु वारयन् ॥
उपदेशनमाम्नातं यज्जातं राजजन्मनि ॥ ६६ ॥

त० प्र०–उपदेशनस्य स्वस्वस्थित्यहेतुत्वेनैतत्प्रकरणासंगतिमाशंक्य तामाह ॥ ज्ञानाभावादिति ॥ तर्हि न स पुनरावर्तत इति श्रुतेर्विप्रशरीरे ज्ञानं जातमित्याशंक्य नेत्याह ॥ यज्जातमिति ॥ तदा भगवता भरतोऽप्युपदिष्ट इति ज्ञेयम् ॥ 'पुत्रांश्च शिष्यांश्च' इति वाक्यात् ॥ मृगत्वे सति निर्वेदे पूर्वजन्मधर्मनिरूपण आत्मवत इति वचनात् 'आचार्यवान् पुरुषो वेद' इति श्रुतेरन्यस्माज्ज्ञानोपदेशाकथनाच्च ॥ न चानावृत्तिश्रुतिविरोधः ॥ ब्रह्मविदोऽपि प्रारब्धभोगस्येष्टत्वेन तदभावतत्त्वद्विषयत्वाच्चस्याः ॥ अत एव राजानमुपदिष्टवान् अन्यथा तु 'एवं ब्रह्मद्रमभिभाषमाणम्' इत्यादिविशेषणवत्त्वेनाऽनधिकारिणं मत्वाऽन्येष्वेव तूष्णीं तिष्ठेत् ॥ कथनं च तस्य श्रद्धारूपाधिकारवत्त्वेन तदर्थप्रयत्नवत्त्वेन ज्ञाने स्वरूपयोग्यतां मत्वा ॥ तदुक्तं 'तत्त्वजिज्ञासायाम्' इत्यादिना ॥ 'अहं च' इति वाक्येन च ॥ उपेक्षायां च कृतापराधत्वेन वृषलानामिवाऽस्य नाशः स्यात्तथात्वं चाऽस्याऽनुचितं भगवत्संमुखत्वात् ॥ रजःस्वभावकृतश्चाऽपराध इति तद्दूरीकरणार्थं पूर्ववाक्यानि ॥ ६६ ॥

त्कलापौत्रस्य बादरायण्यनुगृहीतस्योत्तमत्वेनाधिकारस्कंधे निरूपणादुक्ताशेषधर्मरहितरहूगणाधिकाराच्यूनाधिकार इति न सहामह इति चेत्सत्यम् ॥ अयं तु मर्यादामार्गीयः प्रावाहिकोऽधिकारो मुमुक्षोः स्वात्मज्ञानोपयोगी गुरुशिष्यप्रकारेणोपदेशे अत एवाविरक्ता एव ते सर्वे पूर्वे मुक्ता अपि हर्यश्वाः प्रजार्थिन एव ॥ एतेषां श्रवणमपि ज्ञानसाधनत्वेन न लीलात्वेन ॥ परीक्षित्तु लीलामृतपानरूपश्रवण उत्तमाधिकारी अत एव श्रवणात्पूर्वमेव "कृष्णांघ्रिसेवामधिमन्यमानः" इत्युक्तम् ॥ 'तक्षको वा दशत्वलं गायत विष्णुगाथाः' ॥ 'नैपातिदुःसहा' इत्यादितदुक्तिरपि ॥ तेनासौ पुरुषोत्तमस्वरूपतत्त्वजिज्ञासया तल्लीलारसे निमग्नचेता इति तत्तद्वैराग्यार्थोक्तशारीरसांसारिकवार्तीयपरोक्षवार्तानवबोधेपि न क्षतिः, किं च ॥ गार्हस्थ्याद्यवस्थायां चेदनुभूता वार्ता सा भवेत् 'यस्यामिमे' इत्यादिनोक्ता तदा तत्स्मरणे समानधर्मत्वज्ञाने सति संवादेन बोधः स्यात् ॥ अस्य त्विंद्रियादीनां भगवद्भजनौपयिकत्वेन मित्रत्वादिरूपेणैवाऽनुभूतत्वाद्युक्त एवाबबोधः स्यात् ॥ परकीयवस्तुस्थितिबोधोऽप्रयोजकोपि शुकादेर्ज्ञानमार्गीयब्रह्मज्ञानवत्त्वमप्यस्तीति सर्वज्ञत्वेन तज्ज्ञानमपि ॥ अत एव वस्तुस्थितिरेव परोक्षवादेनोक्ता या वैराग्यजनकत्वमनुभववदशायां तु तस्या एव न तथात्वमिति भगवल्लीलैवेति तज्ज्ञापनाय प्रश्नः ॥ वस्तुतस्तु यथा यथाऽन्यमार्गीयवार्तानवबोधो भक्तिमार्गीयाया एव तस्या बोधस्तथा तथा पुष्टिमार्गे त्वाधिक्यमेवेति प्रतिजानीमः ॥ एतज्ज्ञापनायैव भगवतैवाबबोधप्रश्नौ कारिताविति निगूढाशयैराचार्यैरुक्तमिति स्थितिरिति ॥ ज्ञानमार्गीयमर्यादैतादृशीत्यर्थः ॥ ७२ ॥

त० दी०— तस्य जन्मत्रयं तत्र द्वयं व्यर्थं न सर्वथा ॥
अतो जन्मद्वयोत्कर्षस्तस्यैवं विनिरूपितः ॥ ७३ ॥

त० प्र०—तद्वानोक्तिप्रयोजनमाह ॥ तस्येति ॥ अमुक्त्या तद्वैयर्थ्यशंका ततोधिकरसरूपभक्तिसाधनत्वेन तदभावः ॥ ७३ ॥

त० दी०— तस्य पुत्रस्तु पाषंडेऽप्यत्यंतं फलदायकः ॥
कृष्णावेशी गयश्चापि तद्वंशेऽवततार ह ॥ ७४ ॥

त० प्र०—आद्यंतयोरुत्तमत्वकथनेन संदंशन्यायेन सर्वेषां तथात्वमुक्तं भवतीत्याह ॥ तस्य पुत्र इति सार्द्धेन ॥ प्रकरणमुपसंहरन्निमप्रकरणसंगतिमप्याह॥७४॥

त० दी०— अतः परोक्षशब्दानां व्याख्यानं पृष्टवान्नृपः ॥
वर्णितो बोध एव स्यान्नाधिकारस्तु सिध्यति ॥
अतः स्कंधत्रये प्रोक्तं परोक्षकथनं तथा ॥ ७० ॥

त० प्र०—तद्ज्ञापकमाह ॥ अत इति ॥ ननूक्तार्थावबोधेन हि मुख्योऽधिकारः स च व्याख्यानेऽत्रापि तुल्य इत्यत आह ॥ वर्णित इति ॥ यथा कयाचिद्विरहिण्या तादृशीमेव प्रीतिमत्सपत्नीं प्रति स्वैरचारी मधुपः संप्रति दहतीत्युक्ते कयाचित्पृष्टयाऽन्यया प्रियपरतया व्याकृतेऽपि न तद्विप्रयोगरसविशेषानुभवोऽधिकाररूपप्राप्त्यभावात्तटस्थायास्तस्या न वा प्रीत्युत्पत्तिः॥तथेहापि, किं च॥न बोधकृतोऽधिकारः किं तु वैपरीत्यं बोधस्तज्ज्ञापकः परमिति भावः ॥ परीक्षार्थमेव तथोक्तिरित्यत्र प्रमाणमाह ॥ अत इति, चतुर्थादित्रये ॥ तथा तत्परीक्षकमित्यर्थः॥ अधिकारस्त्रिविधो यतोऽतस्तथा ॥ ७० ॥

त० दी०— आदावबोधो मध्ये तु सुगमत्वाद्विबुध्यते ॥
उत्तमस्त्वधिकारोऽग्रे तेन कूटनिरूपणम् ॥
रहूगणोत्तमत्वाय व्याख्यानं तेन यत्स्वतः ॥ ७१ ॥

त० प्र०—तत्रादौ प्राचीनबर्हिषः कर्मासक्त्या हीनाधिकारित्वादबोध उक्तः ॥ तत्त्वजिज्ञासासत्त्वेपि कर्मासक्त्यभावेऽप्यभिमानसत्त्वात्त्यागाभावादुपदेशार्थमपि राजसभावेन चलनाच्च रहूगणो मध्यमाधिकारी ॥ सोऽपि 'दुरत्ययेऽध्वनि' 'रजस्तमः सत्त्वे' इत्यादिना सुगमत्वेनोक्तमिति बुद्धवान् ॥ कूटवाक्यबोधे त्वस्य नाधिकारः॥ हर्यश्वानां मुक्तत्वादुत्तमाधिकारस्तेन तथा ॥ ७१ ॥

त० दी०— बुद्धं तत्रापि निःशंकं तद्वाक्यं जगृहे पुनः ॥
भरतस्योत्तमत्वं च तेनैवोक्तमिति स्थितिः ॥ ७२ ॥

त० प्र०—तर्हि व्याख्यानं व्यर्थमत आह ॥ रहूगणेति ॥ तत्परीक्षितोत्तारतम्यज्ञापनार्थमित्यर्थः ॥ तेन रहूगणेन यत्स्वतो व्याख्यानं विना बुद्धं तदत्र व्याख्यातमिति योजना॥ निःशंकं मननानपेक्षकमित्यर्थः॥ शिष्योत्तमतोक्त्यैव तत्प्रयोजकगुरोरपि तत्त्वमुक्तमेवेत्याह ॥ भरतस्येति ॥ यद्वा ॥ तेनैव रहूगणेनैवेत्यर्थः ॥ 'नमो नमः कारण' इति 'अहो नृजन्म' इत्यादिना चेति शेषः ॥ यद्वा राजजन्मन उत्तमत्वं शुकेनैव 'भरतस्तु' इत्यादिनोक्तमित्यर्थः ॥ ननु साक्षाद्भगवता संपादितदेहस्य भगवद्दर्शनवतो भक्तस्य तत्रापि भगवदंगीकृतस्य तादृग्वंशजस्य भगव-

त्वम् ॥ अन्यत्र द्वीपे स्वर्गादावपि तादृशानामपि भोगासक्तिरेव न त्वेवमिति भावः ॥ सर्वेषां सामान्यतश्चतुर्विधपुरुषार्थबोधसत्त्वेपि पुरुषोत्तमतद्धर्मबोधश्च क्वचिद्दृश्यत इति बोधांशे तस्याऽऽधिक्यमस्तीति मात्राधिक्यं बोधवाचकेऽक्षर इति ज्ञेयम् ॥ तेनाऽन्यस्मादुत्कर्ष उक्तो भवति ॥ अत एव सर्वेत्यादिबोधस्य सत्वकार्यत्वाद्देवानां च तथात्वाच्चथा ॥ तेन सत्वप्राधान्यमुक्तं भवति ॥ यद्वोत्कर्षांतरमाह॥ सर्वेति ॥ अन्यत्र तत्तद्गुणकार्यत्वमेव न तु तत्तद्गुणनियामकदेवाधिष्ठितत्वम् ॥ अत्र तु तथेति तथा ॥ तदुक्तं 'नवस्वपि वर्षेषु भगवान्नारायणः' इत्यादिना ॥७८॥

**त० दी०— एतदाख्यापकः कश्चिदतोऽत्र न निरूपितः ॥**
**भूमिरेव स्वतः शुद्धा प्रथमे विनिरूपिता ॥ ७९ ॥**

त० प्र०—**एतदिति** ॥ किं च ॥ यतोऽयं भगवदधिष्ठितत्वेनैवासाधारणोतस्तथेत्यर्थः ॥ प्रथमाध्यायार्थमुपसंहरति ॥ **भूमिरेवेति** ॥ ७९ ॥

**त० दी०— जलेनाऽप्युत्तमा सेयमिति गंगावतारणम् ॥**
**सर्वत्र तस्याः संबंध इति भेदा निरूपिताः ॥ ८० ॥**

त० प्र०—आगंतुकधर्मैरप्युत्कर्षो द्वितीयाध्यायार्थ इत्याह ॥ **जलेनेति** ॥ भेदाः शीतादयः ॥ ८० ॥

**त० दी०— ऊर्ध्वपादाद्विनिष्क्रांतं जघने पतति स्फुटम् ॥**
**चरणस्याधिदैवत्वान्न दूषणमिहाण्वपि ॥ ८१ ॥**

त० प्र०—सर्वत्र तस्याः संबंध उपपत्तिमाह ॥ **ऊर्ध्वेति** ॥ भूमेर्जघनात्मकत्वात्तथेति भावः ॥ ननु लोके पादस्य तत्रापि तन्नखस्यांभोऽशुचीति तादृशेन तेन कथमत्रोत्कर्षः ॥ किंचान्येषां तत्पावित्र्येपि स्वस्य न तथा तदिति स्वजघने पातोऽनुचितः ॥ भगवद्भजनौपयिकत्वकृतश्चोत्कर्ष एवं न घटते ॥ तदीयस्य तस्य तत्रोपयोगानर्हत्वादित्यत आह ॥ **चरणस्येति** ॥ तत्र हि सर्वं चरित्रमद्भुतं निरूपितं यथांडकटाहनाशकक्रियया तत्स्थापनं तथा चरणनखांभसोऽपि पावनत्वम् ॥ तत्रोपपत्त्यपेक्षया तस्याऽधिदेवत्वमुच्यते ॥ तथा च तत्संबंधिनोप्याधिदैविकत्वेन सजातीयत्वान्न पूर्वोक्तदोषः ॥ जघनस्य प्रवृत्त्यात्मकत्वात्तत्स्थितानां संसारनिवृत्त्यसंभवेन चरणस्यैव च भक्त्यात्मकत्वात्तन्निवर्तकत्वेन संसारिणां च साक्षात्तत्संबंधस्य दूरत्वेन तन्निवृत्त्यसंभव इति तत्साक्षात्संबंधिन्या आधिदैविकरूपगंगाया अत्राऽऽ-

१ किंचेतिकचिन्नास्ति । २ त्यपेक्षायाम् ।

त० दी०— सर्व एवोत्तमा वंशे ततोंतिमकथा तथा ॥
एवमष्टभिरध्यायैर्भूस्थानाधिपसंकथा ॥ ७५ ॥

त० प्र०—एवमिति ॥ व्याख्यानस्य पूर्वाध्यायरूपत्वाज्ज्ञानप्रकरणत्वाच्चाष्टभिरित्युक्तम् ॥ तेषां भूमीश्वरत्वादैश्वर्यस्य चाष्टविधत्वात्तत्कथा तावद्भिरध्यायैरुक्ता ७५

त० दी०— ततः पंचभिरध्यायैर्भूमिस्थानं निरूप्यते ॥
पंचात्मिका गुणैश्चापि तत्रापीयं तु मध्यतः ॥
सर्वोत्तमा जंबूद्वीपरूपा सर्वार्थदायिनी ॥ ७६ ॥

त० प्र०—भूमौ तद्भोग्याः शब्दादयः पंचापि संतीति तद्भोग्यत्वेन पंचभिरध्यायैस्तत्स्थानं निरूप्यत इत्याह ॥ तत इति ॥ तावद्भिर्निरूपणे हेत्वंतरमप्याह ॥ गुणैश्चापीति ॥ पूर्वपूर्वभूतमिश्रणात्स्वरूपतः पंचात्मिकापि भूतत्वेन तमःप्राधान्येन त्रिविधा रजःसत्त्वप्रधानतमसा च द्विविधेति गुणैरपि तथेत्यर्थः ॥ तत्र जंबूद्वीपस्य चतुर्भिर्निरूपणे हेतुमाह ॥ तत्रापीति ॥ सर्वार्थेति ॥ चतुर्विधपुरुषार्थदायिनीत्यर्थः ॥ अतस्तावद्भिरध्यायैस्तथा ॥ ७६ ॥

त० दी०— अतोऽस्य रूपणं प्रोक्तं चतुर्भिः क्रमतोऽवनेः ॥
परिमाणं स्वरूपं च प्रथमे प्राह तस्य हि ॥
कृष्णस्य कटिरूपत्वाद्ध्यानार्थं तद्धि वर्णितम् ॥ ७७ ॥

त० प्र०—अस्य द्वीपस्य अवनेः क्रमत इति च भागेन यथा यत्रास्ति तथा तत्रोक्तमित्यर्थः, भगवद्भजनौपयिकत्वेन तथात्वम् ॥ अत एवाऽग्रे देवगानोक्तिः ॥ तत्र प्रथमाध्यायार्थमाह ॥ परिमाणमिति ॥ यो वा इत्यादिपुष्करपत्रमित्यंतेन सामान्यतस्ते निरूपिते ॥ यस्मिन्नित्यादिना वर्षतन्मर्यादागिरितरुह्रदनदीनदकुरंगादिगिरिनिरूपणेन तन्माननिरूपणेन च विशेषत इत्यर्थः ॥ एवं निरूपणे प्रयोजनमाह ॥ कृष्णस्येति ॥ तदर्थमेव पृष्टवानिति भावः ॥ ७७ ॥

त० दी०— जननादेव सर्वोपि बुध्यते निखिलं यतः ॥
जंबूद्वीपस्ततः प्रोक्तः सर्वदेवसमाश्रितः ॥ ७८ ॥

त० प्र०—कटिरूपस्यैतन्नामत्वे हेतुमाह ॥ जननादिति ॥ कट्याः प्रजननात्मकत्वात् ॥ अस्मिन् द्वीप उत्पत्तिमात्रेण हेयोपादेयं बुध्यत इति तथा ॥ धातोरविकृतस्य ग्रहणेनाऽविकृतोत्पत्तिमतस्तथात्वं बोध्यते ॥ अविकृतत्वं च दैवसृष्टि-

त० दी०— गुणातीतास्तु ये भक्ताः पुष्टिमार्गेण ते स्थितौ ॥
अत्रोऽत्र गुणमार्गेण निर्णयो हरिभक्तयोः ॥ ८४ ॥

त० प्र०—गुणमार्गेणैव तयोर्निर्द्धारहेतुमाह ॥ गुणातीता इति ॥ मर्यादास्कंधत्वादस्य तन्मार्गस्य च सगुणत्वाचादृशयोरेव तयोरत्र निर्णय उक्तः ॥ भगवतः सर्वत्रैव गुणातीतत्वादधिष्ठानस्यैव सगुणत्वात्तत्रापि सगुणत्वापदेशः ॥ तेन तादृग्भक्तानां तत्र[1] रुचिरित्युक्तम् ॥ पुष्टिमार्गीयत्वाद्गुणातीतभक्तानां त्वधिष्ठानरूपांतरायराहित्येन साक्षात्प्रकटे श्रीकृष्णस्वरूप एव स्थितिरिति पुष्टिमार्गेण स्थितौ निरूपणीयायां ते निरूपणीया इति शेषः ॥अत इति ॥ यतोत्र न पुष्ट्यादिस्थितिरतो हेतोस्तथेत्यर्थः ॥ ८४ ॥

त० दी०— तत्र या तामसी मूर्तिः संकर्षण इति स्फुटा ॥
तस्या भक्तो महादेवस्तमसा तामसः स्मृतः ॥ ८५ ॥

त० प्र०—तत्र क्रमेण निर्णीतार्थमाह ॥ तत्रेति ॥ 'तामसीं मूर्ति प्रकृतिमात्मनः' इति मूल एव स्फुटमिति स्फुटेत्युक्तम् ॥ तमसा तामस इति ॥ न रजःसत्वमिश्रस्तामसः किं तु तमसैव शुद्धेन तथेत्यर्थः ॥ ८५ ॥

त० दी०— अन्यथा तद्गुणत्यागः सर्वथा न भवेत्क्वचित् ॥
हयग्रीवो राजसः स्यात्तमसा सेवकस्तथा ॥ ८६ ॥

त० प्र०—ननु तमोगुणस्यैव तद्भजनहेतुत्वे सर्पादीनामपि तत्स्यादित्याशंक्य तस्यैव न तद्रूपभजने हेतुं वदन्नावश्यकत्वमप्याह ॥ अन्यथेति ॥ संकर्षणस्यैव तमोनियामकत्वात्तन्निवृत्तिस्तेनैवेति तदर्थं तं भजत इत्यर्थः ॥ तन्मूलभूतभजनं विना साधनैस्तन्नाशो न सर्वात्मनेत्यत उक्तं सर्वथेति ॥ क्वचिदिति ॥ न केवलं शिव एवैवं किं त्वग्रेऽपि तत्तद्गुणाधिदैविकरूपभजनमृते तत्तद्गुणनाशाभावात्तदर्थं तेषां तत्र[2] भजनमित्यर्थः ॥ हयग्रीवो रजोयुक्ततमःप्रधानः, सेवको भद्रश्रवा अप्यत एव तादृश एव ॥ ८६ ॥

त० दी०— भद्रश्रवा यतः सर्वे तन्नामव्यपदेशिनः ॥
तत्र तत्र तथा स्तोत्रं मंत्रश्चापि तथा भवेत् ॥ ८७ ॥

त० प्र०—अस्य तथात्वेऽभिज्ञापकमाह ॥ यतः सर्वं इति ॥ तामसत्वेनातिमूढत्वेन स्वमुख्यनाम्नैव व्यपदिश्यंते न पृथग्यतोऽतः सोपि तथा तन्मध्यपाति-

१ तादृग् इति द्विवारं क्वचित्. २ तत्र इति द्विवारं ।

नयनम् ॥ ऊर्ध्वमुखपदसंबंधित्वमप्यूर्द्धगतिप्रदत्वज्ञापकम् ॥ यथा चैतत्तथा 'या वैलसत्, इति श्लोकविवरणे पितृचरणैर्विवृतमिति नाऽत्र निगद्यते ॥ एवं सति सेवतां भक्तिदेति परमोत्कर्षः ॥ एतद्द्वीपस्थानामेव मुक्तिसंभवान्न दूषणं किंचिदि-हेत्यर्थः ॥ ८१ ॥

त० दी०— गंगाजलेन पूजादि सर्वं कार्यमिति स्थितिः ॥
स्थानं तदेव हि सतां यत्र संपूज्यते हरिः ॥ ८२ ॥

त० प्र०—भजनानुपयोगित्वपरिहारायाऽऽह ॥ गंगेति ॥ अत्रायं भावः ॥ गंगा-यामस्त्यधिभूतादित्रितयरूपत्वम् ॥ एकं जलरूपत्वम् ॥ तेन याद्दच्छिकव्यवहार-योग्यता ॥ द्वितीयं च प्रवाहरूपतया तीर्थरूपत्वम् ॥ तेन स्नानपानादिभिर्दोषनि-वर्तकत्वं पुण्यजनकत्वं च ॥ तृतीयं पादोदकत्वं ॥ तेन भगवद्भजनयोग्यदेहसंपा-दकत्वम् ॥ इतरनदीरथ्योदकादीनामप्येतत्संबंधित्वेनैव द्वितीयरूपत्वम् ॥ एतच्च परिमितमेव ज्ञेयम् ॥ ब्रह्मकमंडलुजलस्य तथात्वात् ॥ स्वसंबंधेन पावयति परं सर्वम् ॥ तेन तादृशजलेनाऽतिपवित्रेण भगवत्पूजादिकं युक्तमिति ॥ अन्यथा भग-वन्मंत्राभिमंत्रितान्नाद्यर्पणमप्ययुक्तं स्यादिति दिक् ॥ न चैवं पादोदकसिक्तवस्त्व-र्पणप्रसंगस्तत्र साक्षात्तत्संबंधित्वात् ॥ इह तु तदाध्यात्मिकरूपदेवताधिष्ठानात्तीर्थ-रूपत्वमित्यदोषः ॥ ननु भूभुकथानंतरं हि भूकथात्रोच्यते तद्भोग्यत्वेन तथा च विषयत्वेन दोषरूपत्वमेव भूस्थानस्येति भगवत्पूजादिनिरूपणमयुक्तं तद्भोग्यत्वा-नौपयिकरूपत्वाच्चाऽत आह ॥ स्थानमिति ॥ भवेदेवं यदि ते स्वतो विषयत्वेन भोगं कुर्युर्न त्वेवं ॥ किं तु भगवदिच्छानुरोधात्तादृशानां च तादृशमेव स्थानमु-चितमिति तदुक्तमित्यर्थः ॥ ८२ ॥

त० दी०— अतोऽत्र नवखंडेषु पूजां भगवतो जगौ ॥
अत्राऽवतारनिर्धारो भक्तानां च निरूप्यते ॥ ८३ ॥

त० प्र०—तर्हि तत्तदवतारेषु तत्तद्भक्तनियमकथनं किमर्थं पूजामात्रस्यैव तत्स्था-नत्वोपयोगित्वादित्याशंक्य तत्तात्पर्यमाह ॥ अत्रेति ॥ अस्मिन्नवतार एतादृशगु-णस्यैवाधिष्ठानत्वमिदमेव च प्रयोजनमेवं सेव्यता चेत्यवतारस्य ॥ ईदृशानामत्रै-वैवमेव च भजनमिति भक्तानामित्यर्थः ॥ ८३ ॥

१ माइ. ।

त्याग्रहवाँश्च ॥ तत्र भक्तपक्षपातसंन्यासहितत्वोक्तिराग्रहे भगवदंशश्च सत्त्वस्य, निंदाग्रहो तमसः ॥ यत एवंविधोऽतस्तादृश इत्यर्थः ॥ रजसेति ॥ ८९ ॥

त० दी०– रजसा राजसी लक्ष्मीः कामभोगाभिवेशनात् ॥
प्रद्युम्नं कामदेवाख्यमाधिदैविकमाश्रिता ॥
स्त्रीकामनादिदोपेक्षां स्वोत्कर्षं चाऽऽह भक्तिकृत् ॥ ९० ॥

त० प्र०–तमःसत्त्वमिश्ररजःप्रधानेत्यर्थः ॥ तत्र हेतुः कामेति ॥ ज्ञापकमाह ॥ स्त्रीति ॥ स्त्रिया व्रतैरित्यादिनाऽन्यस्त्रीकामनादिषु दोषेक्षणं प्राहेति संबंधः ॥ भौतिकस्य तामसत्वेन तत्कामनाया अपि तथात्वाद्राजस्यास्तत्र दोषेक्षोचिता ॥ मत्प्राप्तय इत्यादिना स्वोत्कर्षे तर्हि तादृश्या भक्तत्वेन गणनाऽत्र नोचितेत्याशंकानिवृत्तिः 'सत्वं ममेति' श्लोकेनेति तस्यार्थमाह ॥ भक्तिकृदिति ॥ तेन माहात्म्यज्ञानपूर्वकस्नेहेन भजनात्पूर्वेभ्योप्युत्तमेति भावः ॥ ९० ॥

त० दी०– रजसा तामसो मत्स्यो मनुश्चापि तथाविधः ॥
स्वस्वभावानुसार्येव स्तोत्रं तस्यापि वर्णितम् ॥ ९१ ॥

त० प्र०–रजसेति ॥ आदावुद्देशाद्रजसः प्राधान्यम् ॥ एवमग्रेपि ॥ तमोमिश्ररजःप्रधान इत्यर्थः ॥ मनोस्तथात्वज्ञापकं स्तोत्रमेवेत्याह ॥ स्वेति ॥ लोकपालनिंदा तमसः ॥ शेषं शिष्टस्य ॥ ९१ ॥

त० दी०– रजसा सात्त्विकः कूर्मो ह्यर्यमा चाऽपि तादृशः ॥
यज्ञात्मको वराहस्तु सत्त्वेनैव तु तामसः ॥
भूमिर्भक्ता तथैवास्य ज्ञानं स्तोत्रे निरूपितम् ॥ ९२ ॥

त० प्र०–वराहस्तमोयुक्तसत्त्वप्रधानः[1] ॥ तथैव भूरपि ॥ भूमौ विशेषं वदन् श्लोकार्थानप्याह ॥ भूमिरिति ॥ सत्त्वप्राधान्येन ज्ञानप्राधान्येपि मूले 'अस्खलितभक्तियोगेन' इति वाक्याद्भक्तत्वाद्भक्तिमार्गानुसार्येव ज्ञानमस्याः स्तोत्रे निरूपितमित्यर्थः ॥ ९२ ॥

त० दी०– त्रिभिरत्र भजिः प्रोक्ता प्रथमे त्वेकरूपिणम् ॥
द्वितीये षट् तृतीये द्वे ते आद्ये सात्त्विके यतः ॥ ९३ ॥

त० प्र०–अत्र स्तोत्रे त्रिभिः प्रकारैरित्यर्थः ॥ भजनं कर्मज्ञानभक्तिमार्गीयत्वेन त्रिविधम् ॥ तत्राऽऽद्ये योगमाश्रितं मन एवैकं साधनं निरूपितम् ॥ दिदृक्षव

१ तमःसत्त्वप्रधाना इति क्वचित्पुस्तके ।

त्वात् ॥ राजसत्वं स्पष्टम् ॥ अवतारेषु तत्तद्गुणवत्वेभिज्ञापकमाह ॥ तत्र तत्रेति ॥ यत्र यादृग्गुणवैशिष्ट्यं तत्र तादृशो मंत्रस्तदनुरूपं च स्तोत्रमिति ताभ्यामेवाऽवतारस्वरूपज्ञानमित्यर्थः ॥ इतोऽपि सेवकस्वरूपमपि ज्ञायत इति भावः ॥ एतच्च टीकायां स्फुटीभविष्यति ॥ ८७ ॥

त० दी०— अव्यक्तकृतनाशाय न समर्थाः शिवोक्तयः ॥
वैराग्याभावतः शोको द्वितीये विनिवारितः ॥ ८८ ॥

त० प्र०—ननु समाधिगिरणोपधावनैर्हि मनोवाकायैः पूजोच्यते स्तुत्यैव तत्संपत्तौ मंत्रस्य क उपयोगोऽत आह ॥ अव्यक्तेति ॥ पूजामार्गे हि पूजानुरूपमेव फलम् ॥ एवं सति स्तुतेः प्रकटगुणख्यापकत्वेन प्रकटदोषनिवर्तकत्वमेव । मंत्रस्य गुप्तत्वेन तज्जपस्याऽव्यक्तदोषनिवर्तकत्वमिति तदर्थं मंत्रोपीति पूर्वेण संबंधः ॥ ननु पूजामात्रे निरूपणीये कर्तुः स्त्रीगणावरोधनिरूपणं व्यर्थमित्याशंक्य तत्तात्पर्यमाह ॥ अव्यक्तेति ॥ एवं सति देहलीदीपन्यायेनेदं पदमुभयत्राऽपि संबध्यते ॥ अव्यक्तपदं च श्लिष्टार्थकमिति ज्ञेयम् ॥ तथा च स्त्रीसंगित्वेन प्रकृतिकृतदोषनाशाय नोक्तयस्तथेत्यर्थः ॥ उत्तरार्द्धसमभिव्याहारात्स्त्रीसंगोक्त्यैवोक्तवैराग्याभावादेव भगवदभिव्यक्तिलक्षणशोकनिवृत्तिरपि शिवे ॥ अत एव मंत्रे 'व्यक्ताय नमः' इत्युक्तं भद्रश्रवसाम् 'अहोविचित्रम्' इत्यादिना वैराग्यनिरूपणाचद्भावतः स शोको निवारितः ॥ शिवे पूर्णतमस्त्वेन शोकस्य तद्रूपत्वेन तन्निवृत्तिः संभवति ॥ आकल्पं भजने तत्रैव लये सति तन्निवृत्तिः परम् ॥ द्वितीये रजोंशप्रवेशेन तमोंशस्तावान्निवृत्तो यः सशोक एव तज्ज्ञापको वैराग्यभावः ॥ एतस्मिन् सति तन्निवृत्तेरावश्यकत्वाच्चथा च तत्पूजितेन भगवतैव वैराग्यं दत्वा तन्निवृत्तिः कृता न तु रजोंशप्रभावेणेति ज्ञापयितुं निवारित इत्युक्तम् ॥ एतेन फलतारतम्यमुक्तं ज्ञेयम् ॥ ८८ ॥

त० दी०— सात्त्विको नरसिंहस्तु तमसा तस्य सेवकः ॥
प्रह्लादस्तादृशः प्रोक्तो ह्यभक्तान् स विनिंदति ॥
संन्यासं च हितं प्राह सदाग्रहयुतो यतः ॥ ८९ ॥

त० प्र०—सत्त्वयुक्ततमःप्रधानो नरसिंहः प्रह्लादश्च तथा ॥ तत्राभिज्ञापकमाह ॥ अभक्तानिति ॥ 'न तथेंद्रियप्रियः' 'हरावभक्तस्य' 'हित्वा महान्' इत्यादिभिर्निंदा ॥ 'मागार' इत्यादि ॥ 'तस्माद्रजः' इत्यादिभिः संन्यासं च हितमाह ॥ भगव-

त० प्र०—नन्वत्राऽसुराणामप्युत्पत्तेः कथं साधारण्येन स्तुतिर्युज्यत इत्याशंक्य पूर्वोक्ता या वर्णाश्रमवत्यः प्रजास्ता दृष्ट्वा स्वस्मिन् तथात्वमदृष्ट्वा भक्त्या तत्क्षेत्रमेव सर्वे स्तुवन्तीत्याह ॥ सर्वस्वेति ॥ अत एव 'मुकुंदसेवौपयिकम्' इत्युक्तं मूले ॥ यद्वा भोगासक्तानां देवानां कथमेवं स्तुतिस्तत्रापि सर्वेषामत आह ॥ सत्त्वेति ॥ देवनिष्ठोयं हेतुः ॥ सर्वस्य देववृंदस्येति शेषः ॥ ९७ ॥

त० दी०— प्रियव्रतः स्वयं राज्ये रुद्रकोटीश्चकार ह ॥[1]
अर्बुदं कोटिरित्याहुस्तद्वंशः सकलेंऽतरे ॥ ९८ ॥

त० प्र०—ननु मन्वंतरस्य षड्विधत्वादुक्तरीत्या मनुतत्पुत्रयोरपगमे मन्वंतरत्वं न संभवत्यस्येत्याशंक्य तयोरेव सत्त्वं नाभिप्रेतमपि तु तद्वंशतोपि तदधिकारसंपत्तौ तत्त्वं संभवत्येवेत्यत्रापि तद्वंश एव सकले स्वायंभुवमन्वंतरे तथेति सर्वं समंजसमित्याह ॥ तद्वंश इति ॥ अधिकारीति शेषः ॥ आंतं मन्वंतरराज्यं कृतवानिति शंकाभावाय वर्षसंख्योक्ता ॥ यद्यपि मूल एव सोक्ता तथाप्यर्बुदपदस्यार्थांतरकल्पनेनांतराज्यकृतिशंकाऽभूदिति तदर्थं उक्तः ॥ अर्बुदं कोटिरिति ॥ आहुरिति प्रमाणोक्तिः ॥ ९८ ॥

त० दी०— मन्वंतराधिपतयः पुत्रास्त्वन्ये तथोद्गताः ॥
तथा द्वीपांतरेशानाः कल्पांतस्थायिनो मताः ॥ ९९ ॥

त० प्र०—तद्वंशेष्याग्नीध्रपरंपरैव स्वायंभुवांतराधिकारिणी न त्वन्येषामपीति तेषु विशेषं वदँस्तेषामन्यत्र विनियोगमाह ॥ मन्वंतरेति ॥ उत्तमादयस्त्रयस्तथाऽन्ये कव्यादयस्तथा द्वीपांतरेशा इध्मजिह्वादयः ॥ उद्गता राज्यं त्यक्त्वा वनं गता अपि कल्पांतस्थायिन इति योजना, स्वस्वाधिकारं निर्वाह्य भगवद्भजनं ततः कुर्वंतीति भावः ॥ अन्य इत्यनेन वोद्गता इति संबध्यते ॥ एवं सति नैतन्मन्वंतराधिकारित्वं तेषां भवतीति भावः ॥ ९९ ॥

त० दी०— तस्मिन् कालेऽथवा ते तु तथा चक्रुरितीर्यते ॥
दशकोट्यब्दराज्यं हि यथाऽऽग्नीध्रस्तथैव ते ॥ १०० ॥

त० प्र०—ननु तत्पुत्रस्याऽविशिष्टत्वादन्यत्राऽधिकारेऽपि 'अधिकं तत्राऽनुप्रविष्टं न तु तद्धानिः' इति न्यायेनाऽत्रानधिकारित्वं न युक्तमित्यरुच्या पक्षांतरमाह ॥ तस्मिन्काल इति ॥ यावता कालेन मन्वंतरसमाप्तिर्भवेद्यावंतं कालं यथाविभागं

[1] पि ।

इति पदाद्भक्तिमार्गीयत्वम् ॥ 'योगः कर्मसु कौशलम्' इति वाक्यात्कर्मभार्गानुसारित्वं द्वितीये द्रव्यादिषट्साधनान्युक्तानि ॥ भगवति माया तत्कार्यराहित्यज्ञानं ज्ञानमार्गीयम् नतिवीप्सा भक्तिज्ञापिका ॥ तृतीये माहात्म्यज्ञानं स्वोपकारज्ञानपूर्वा प्रतिपत्तिश्चोक्ता वाक्यद्वयेन ॥ भक्तिमार्गे त्वेत एवोपादेय इत्याह ॥ ते ग्राह्य इति ॥ पूर्वयोर्नानासाधनवैयग्र्यान्न सात्त्विकत्वम् ॥ यद्वा त्रिभिस्त्रिभिर्गुणैस्तमआदिभिरित्यर्थः ॥ तामसानां हि बहिरेव दिदृक्षा ॥ मन एवैकं साधनमुक्तम् ॥ मथनोक्त्या क्लेशः सूचितोऽतस्तामसत्वम् ॥ राजसानां कर्ममार्गानुसारेण भजनमिति पट् साधनान्युक्तानि ॥ सात्त्विकानां तु पूर्वोक्तद्वयं साधनमुक्तम् ॥ मर्यादाभक्तिस्वरूपस्य तथात्वाद्ग्राह्यत्वं पूर्वयोरतथात्वाद्धेयत्वं तदाह ॥ ते ग्राह्य इति ॥ ९३ ॥

त० दी०— रजसा सात्त्विको रामो हनूमाँश्चापि तादृशः ॥
अवतारस्तु रामस्य स्थितिश्चाऽप्यत्र भारते ॥ ९४ ॥

त० प्र०—पूर्वोक्ते हेतुमाह ॥ अवतार इति ॥ वासुदेवावतारस्तेन सत्त्वप्रधानत्वम् ॥ कदाचिद्रामः पुरुषोत्तमावतार एवेति पद्मपुराणादवसीयते ॥ तद्व्यावृत्त्यर्थं तुः । तेनोक्तरूपत्वं युज्यत इति भावः ॥ अयोगोलके वह्नेरिव संक्रमणं ह्यधिष्ठानेऽवतारः ॥ अत्र चाऽधिष्ठानस्य सत्त्वप्रधानरजोरूपत्वाचथोच्यते ॥ स्थितिश्च भक्तिभूयिष्ठत्वेन कर्मक्षेत्रत्वेन च सत्त्वप्रधानराजसदेशे ॥ तत्राप्यत्रार्यावर्त्त एव ॥ ९४ ॥

त० दी०— अतो हनुमता सेव्यो भगवांस्तादृशो मतः ॥
जनापवादभीत्यादि मोहलीलाबहुलतः ॥ ९५ ॥

त० प्र०—अत एव भक्तोपि विकल्पेन नरजातीयशरीरवत्त्वेन तादृशस्तेन सेव्यं स्वरूपमुक्तरूपमित्यर्थः ॥ अन्येषां संमत्याऽस्माभिरपि तथोच्यत इति ज्ञापनाय मत इत्युक्तम् ॥ हेत्वंतरमाह ॥ जनेति ॥ पूर्वेणैव संबंधः ॥ ९५ ॥

त० दी०— नारायणो नारदश्च धर्मात्मानस्तथाऽपरे ॥
तस्यैव तपसा सर्वे कृतार्था भारतेऽभवन् ॥ ९६ ॥

त० प्र०—धर्मात्मानः शुद्धसात्त्विकधर्मरूपा इत्यर्थः ॥ भगवतस्तपःकरणे हेतुमाह ॥ तस्यैवेति ॥ ९६ ॥

त० दी०— जलं चात्र पवित्रं हि ततो नद्यश्च वर्णिताः ॥
सत्त्वासत्त्विकरूपत्वात्स्तुतिः सर्वस्य रूप्यते ॥ ९७ ॥

१ च नास्ति ।

त० दी०— मंत्रश्च भजनं चैव समं सर्वेषु वर्णिषु ॥
स्वरूपस्थितये तद्धि न तु तस्माद्गतिः परा ॥ १०५ ॥

त० प्र०—नन्वत्राप्युपासनोक्तेः कथं न कर्मभूत्वमत आह ॥ स्वरूपेति ॥१०५॥

त० दी०— भगवत्त्वाय सर्वत्र सप्त भेदा निरूपिताः ॥
पृथिवी पंचरूपेति पंचस्वेव तथोदितम् ॥ १०६ ॥

त० प्र०—भगवत्त्वायेति ॥ सर्वत्र भूमौ प्रैयव्रतेषु च भगवाँस्तद्गुणा ऐश्वर्योदयश्च संतीति ज्ञापनाय तथोक्तमित्यर्थः ॥ पंचस्वेव च तथोक्तौ हेतुमाह ॥ पृथिवीति ॥ यथैतत्तथोक्तं पुरस्तात् ॥ १०६ ॥

त० दी०— संकल्पश्च विकल्पश्च मनसो भेदकद्वयम् ॥
अत्रोऽत्र पुष्करे भेदद्वयं पर्वतहेतुतः ॥
समुद्रावधयः सर्वे तं विना पर्वता मताः ॥ १०७ ॥

त० प्र०—पुष्करद्वीपे सर्वत्र द्वित्वसंख्यायां हेतुमाह ॥ संकल्पेति ॥ जंबूद्वीपे कर्मेंद्रियप्राधान्यं कर्मभूमित्वात् ॥ इतरेषु भोगप्राधान्याज्ज्ञानेंद्रियप्राधान्यं पूर्वाण्युपसर्जनानि ॥ अत्र च प्रैयव्रतमनसो भूमेश्च भगवन्मनोधिष्ठानत्वेन तत्प्राधान्यात्तस्मिँश्च संकल्पादेरेव भेदकत्वात्सर्वत्र भेदद्वयमित्यर्थः ॥ अत एव भगवदासनमपीति भावः ॥ अत एव मानसोत्तरनामाऽचलो भेदकः ॥ तस्य चैकत्वाद्वर्षद्वयमेव भवतीत्याह ॥ पर्वतेति ॥ पर्वतलक्षणहेतुत इत्यर्थः ॥ भेदे पर्वतहेतुत्व इति भावप्रधानो वा ॥ सप्तकृत्व एव परिभ्रमणात्समुद्राः सप्तैवेत्यग्रेतनभूमौ तदभावेन पर्वता एवाऽवधित्वेन संमता इत्यग्रे त एवोक्ता इत्याह ॥ समुद्रेति॥१०७॥

त० दी०— मर्यादेपाऽत्र परमा यथा भूमिः पुरा कृता ॥
तथैव पुत्रसंपत्तिः प्रियव्रतकृतान्वये ॥
आवेशित्वात्तु सर्वस्य वार्ता हरिरिहोच्यते ॥ १०८ ॥

त० प्र०—प्रियव्रतकृतां स्थितिमुपसंहरति ॥ मर्यादेति ॥ तामेवाह ॥ यथेति॥ कृता प्रियव्रतेनेति शेषः ॥ वर्षसमसंख्यमात्रपुत्रजननं सत्यसंकल्परूपत्व एव भवति तच्चेश्वर एवेतीश्वरकृतमिदं सर्वमित्यर्थः ॥ इदमेव परमत्वम् ॥ नन्विध्मजिदमुक्त्वैवमन्येपीत्यतिदेशेनापि कथनसंभवे प्रत्येकवार्तोक्तिरनर्थिकेत्यत आह ॥ आवेशित्वादिति ॥ आविष्टचरित्रत्वेनैवोक्तिरित्यर्थः ॥ अवतारत्वव्यावर्तनाय तुः ॥

राज्यं कृत्वोत्तरकाल इध्मजिह्वादयस्त्यागं चक्रुरिति मूल उच्यत इत्यर्थः ॥ मूलेऽस्यार्थस्य स्फुटतयाऽनुक्तौ तात्पर्यमाह ॥ यथाऽऽग्नीध्र इति ॥ तदुक्त्यैव तेष्युक्तप्राया इति न भिन्नोक्तिरित्यर्थः ॥ १०० ॥

त० दी०— भूविभाजकमग्रे तु नोक्तमस्ति परं पुनः ॥
ज्योतिर्मयत्वात्स रथो यथेच्छं जायते पुनः ॥
वेगाधिक्येन वा तस्माद्द्विगुणं मानमीप्सितम् ॥ १०१ ॥

त० प्र०—अग्रिमाध्यायं विचारयँस्तत्र भूविभाजकमनुक्त्वा तेषां द्वैगुण्यहेतुमप्यनुक्त्वा तद्विभागवर्णनप्रतिज्ञानुपपन्नेत्याशंक्याह ॥ भूविभाजकमिति तुशब्दः पूर्वव्यावृत्त्यर्थः ॥ तथा च तस्य पूर्वमेव प्रियव्रतात्मन एवोक्तत्वात्पुनः पदं पुनरुक्त्यापत्तेर्नोक्तमित्यर्थः ॥ द्वैगुण्ये हेतुमाह ॥ ज्योतिर्मयत्वादिति ॥ यथेच्छमिति पदात्प्रियव्रतेच्छैव तत्र कारणमित्युक्तं भवति ॥ तथा च तदिच्छयैव रथचक्रस्य द्वैगुण्यात्समुद्राणां द्वैगुण्यमित्यर्थः ॥ एकस्यैवोत्तरोत्तरं द्विगुणभवन उपपत्तिर्ज्योतिर्मयत्वादिति, नन्विच्छयैव सर्वोपपत्तौ रथद्वैगुण्यमप्रयोजकमित्यरुच्या पक्षांतरमाह ॥ वेगेति ॥ तावतैव कालेन पूर्वस्माद्द्विगुणक्षेत्रपरिभ्रमणं वेगाधिक्यं विना न भवति ॥ तथा सति पूर्वस्माद्द्विगुणे क्षेत्रेऽभिघातविशेषजक्रियाजनितावयवविभागावश्यंभावात्तथेत्यर्थः ॥ १०१ ॥

त० दी०—जंबुद्वीपस्य सर्वोपि दोषो यातो महार्णवे ॥
अतः क्षारत्वमापन्नो दैत्यानां स्थानदायकः ॥ १०२ ॥

त० प्र०—आद्यस्यांबुधेः क्षारत्वे हेतुमाह ॥ जंबुद्वीपस्येति ॥ तदभिज्ञापकमाह ॥ दैत्यानामिति ॥ १०२ ॥

त० दी०—अत्रोऽत्र भजनं श्रेष्ठं धर्मश्चाप्युत्तमोत्तमः ॥
नामाख्यातिकरो वृक्षः प्लक्षद्वीपे निरूपितः ॥ १०३ ॥

त० प्र०—फलितमाह ॥ अत इति ॥ निर्दोषत्वात्तथेत्यर्थः । अस्मिन्द्वीपे पूर्वस्माद्वैलक्षण्यमाह ॥ नामेति ॥ पूर्वस्य स्वत एवोत्तमत्वेन प्रख्यातत्वान्न तथा ॥ तदुक्तं पूर्वं जंबूद्वीपनामनिरुक्तिपूर्वम् ॥ अत्राऽतथात्वादन्येन प्रसिद्धिरित्यर्थः ॥१०३॥

त० दी०— नाऽतः परं कर्मभूमिरतो भोगो निरूप्यते ॥
व्यवहृत्यै वर्णसंज्ञाः सर्वत्रोपासनाऽस्ति हि ॥ १०४ ॥

त० प्र०—अत्र भगवद्भजनानिरूपणे हेतुमाह ॥ नाऽत इति ॥ १०४ ॥

१ तत्र ।

भूमिं तथा केचिदाहुस्तत्र कल्पभेदो ज्ञेय इत्याशयेनाऽऽह ॥ सौवर्णीतीति ॥ अस्मिन् पक्षे यावन्मानसोत्तरेत्यादिना कथनं सर्वसत्त्वपरिहृताया भूमेः ॥ ११३ ॥

त० दी०–तस्याः प्रमाणमेकोनचत्वारिंशन्मितानि हि ॥
लक्षाणि हि तथा चाऽष्टौ कोटयः परिकीर्तिताः ॥
मध्यस्थया स्वर्णभूम्या सार्धद्वादशकोटयः ॥ ११४ ॥

त० प्र०–एवं सति मेरोः प्रतिदिशं लोकालोकांतर्गतासार्द्धद्वादशकोटिपरिमिता भूरिति पंचाशत्कोटिमिता भवतीत्याह ॥ मध्यस्थयेत्यादिना ॥ ११४ ॥

त० दी०–एकतस्तु तथा मेरोरपरत्रापि तावती ॥
तावत्येवोभयत्रापि लोकालोकेन संयुता ॥ ११५ ॥

त० दी०–कटाहेन सहेत्येके पृथिव्यावरणं तु सः ॥
पंचाशत्कोटिविस्तीर्णस्ततो दश गुणाः परे ॥ ११६ ॥

त० प्र०–केचिद्विष्णुपुराणसंमत्या लोकालोकेन सह कटाहेन च तावतीं भूमिमाहुस्तत्कल्पांतराभिप्रायम् ॥ इह लोकालोकस्य मर्यादागिरित्वाल्लोकालोकाचलस्य न भूमध्यपातित्वम् । कटाहोऽपि न तथेत्याह ॥ पृथिव्यावरणमिति ॥ स कटाहस्तु पंचाशत्कोटिमितः पृथिवीरूपमावरणमेवेति नाऽत्र तत्सहभावः संभवतीत्यर्थः ॥ ११५ ॥ ११६ ॥

त० दी०–लोकालोकस्य तूच्छ्रायः कोटियोजनसंमितः ॥
तस्योपरि गजाःपुर्यो भगवांश्चापि वर्तते ॥ ११७ ॥

त० प्र०–यद्यपि मूले स्पष्टं नोक्तं मानमचलस्य तथापि पुराणांतरसंमत्योक्तं कोटियोजनेति ॥ तथा चोक्तं विष्णुपुराणे ॥ 'लोकालोकस्ततः शैलो योजनायुतविस्तृतः ॥ उच्छ्रायेणापि तावंति सहस्राण्यचलो हि सः' इति ॥ अयुतसंख्यानि सहस्राण्युच्छ्रित इत्यर्थः ॥ तत्रैवं गणनाक्रमः ॥ मेरोरेकतो जंबूद्वीपस्य पंचाशत्सहस्राणि तैः सह आशुद्धोदान्तं सार्द्धत्रिपंचाशल्लक्षाधिकं कोटिद्वयम् ॥ ततः कांचनी भूः सार्द्धपण्णवतिलक्षाधिकनवकोटिमिता ॥ एवं सार्द्धद्वादशकोट्यो भवंति मेरोरेकतः ॥ एवं चतुर्दिक्ष्वपि पंचाशत्कोटिमिता भूर्भवति ॥ ११७ ॥

त० दी०–पुरुषस्य कटिर्मध्यं भूमेर्लक्षे विभावसुः ॥
ततः संदेहराहित्ये मध्ये सूर्यो निरूपितः ॥ ११८ ॥

---

१ स नास्ति । २ अर्थपदं न । ३ अत्रैवं ४ लक्षाणि ।

अत्र प्रमाणमाह ॥ हरिरिति ॥ इह भागवते सर्वत्राक्षरार्थत्वेनापि हरिरेवोच्यत इति तेषामतथात्वे कथनमेव स्यादिति ते तथैवेत्यर्थः ॥ १०८ ॥

त० दी०– रसाः सप्त पृथिव्यास्तु तत्र तत्र तथोद्गताः ॥
लवणो राजसः प्रोक्तः सात्त्विको मधुरो रसः ॥ १०९ ॥
मदिरा तामसी प्रोक्ता काषाया बुद्धिनाशिका ॥
घृतं तु सात्त्विकं प्रोक्तं राजसं पय उच्यते ॥ ११० ॥
दधि तामसमत्रोक्तं मंडश्च सुतरां तथा ॥
शुद्धोदकं गुणातीतमेवमत्र व्यवस्थितिः ॥ १११ ॥

त० प्र०—समुद्राणां मिथो वैलक्षण्ये हेतुमाह ॥ रसा इति ॥ रथचक्रेणातिपीडने तत्र स्थितः स स रसस्तेन प्रकारेणोद्गत इत्यर्थः ॥ ततो हृता इति पाठे तं तं रसं भूमेर्हृत्वा तेन तेन स स गर्तः पूरित इत्यर्थः ॥ १०९ ॥ ११० ॥ १११ ॥

त० दी०– जडजीवविभेदेन पृथिवी तु द्विधा यतः ॥
गुणत्रयमतो भिन्नं द्विधाऽत्र विनिरूपितम् ॥ ११२ ॥

त० प्र०—पुनस्तेषामेवोक्तिर्व्यर्थेत्याशंक्याह ॥ जडेति ॥ सगुणनिर्गुणभेदेन द्विधा सा ॥ सगुणाऽपि स्थावरजंगमभेदेन द्विधेत्यर्थः ॥ घृतादित्रयं गवादिनिष्ठो रस इति तथा ॥ भगवदासनत्वेन निर्गुणत्वं तद्भूमेः ॥ ११२ ॥

त० दी०– लोकालोकाचलादर्वाक्कांचनी भूमिरुत्तमा ॥
सार्द्धकोटिस्तथा सप्त लक्षाण्यर्धं तथैव च ॥
अन्या भूमिर्न सौवर्णी सौवर्णीत्यपरे जगुः ॥ ११३ ॥

त० प्र०—अथ 'ततः परस्तात्' इत्यादिग्रंथो विचार्यते ॥ शुद्धोदात्परतो लोकालोकादर्वाक् सार्द्धषण्णवतिलक्षाधिकनवकोटिमाना भूर्भवति ॥ तन्मध्ये सार्द्धसप्तपंचाशल्लक्षाधिककोटिमाना सौवर्णी नान्येति सिद्धांतो भागवतस्य ॥ अन्यथा यावन्मानसोत्तरमेर्वोरंतरमिति न वदेत् ॥ पुष्करद्वीपलोकालोकयोरंतरमिति वदेदतस्तावत्येव तया नाऽन्येत्येत आह ॥ अन्येति ॥ अन्यस्मिन् पक्षे लोकालोकाचलादर्वागिति पदाल्लोकालोकनिकटस्था तावती भूः कांचनीति ज्ञेयम् ॥ अत एव लोकालोकं निरूप्य कांचनी भूमिर्मूल उक्तेति भावः ॥ शैवतंत्राद्यनुरोधादन्यामपि

१ पाठे । २ अत-शब्दो न ।

अत इति त्रित्वे हेतुमाह ॥ तथाविधेति ॥ सत्वकार्यरूपेत्यर्थः ॥ तस्य च शुद्ध-मिश्रभावेन त्रिविधत्वेनाऽध्यायेष्वपि तथात्वमिति भावः ॥ अध्यायार्थानाह ॥ सूर्यस्येति ॥ आद्ये सूर्यस्य ॥ द्वितीये सोमादीनाम् ॥ शिष्टे शिष्टस्य ॥ १२० ॥

त० दी०— सूर्यस्य गमनं पूर्वं गतिस्थानं तथाऽपरम् ॥
रथस्य साधनस्यांते प्रमाणादि च रूप्यते ॥ १२१ ॥

त० प्र०—तत्राद्ये प्रकरणविभागमाह ॥ सूर्यस्येति यन्मध्यगइत्यारभ्य गमन-मुच्यते ॥ ततो गतिस्थानम् ॥ ततो रथस्य साधनस्येति ॥ हयारुणादेरित्यर्थः ॥ अंते तत्तत्प्रकरणस्यांते तस्य तस्य प्रकृष्टं मानं च एवं नव कोटय इत्यादि ॥ एवं मुहूर्तेनेत्यादि ॥ लक्षोत्तरमित्यादि ॥ १२१ ॥

त० दी०— दिवो मानप्रसंगेन सूर्यस्यात्र निरूपणम् ॥
अतः प्रसंगिनं प्राह मानतो स्यातिदेशतः ॥ १२२ ॥

त० प्र०—ननु पूर्वाध्याय एव रविनिरूपणात्तद्गत्यादिनिरूपणमपि तत्रैवोचितम्। किं च ॥ एतावानेवेत्यारभ्यात्मभासेत्यंतग्रंथस्य किं प्रयोजनमत आह ॥ दिव इति ॥ नाऽत्र प्राधान्येन तन्निरूपणं किं तु दिवः प्रकरणत्वात्तन्माने निरूपयितव्ये तन्निरूपणमेव तथाकृतमित्यर्थः ॥ एतज्ज्ञापनायैव स ग्रंथ इति भावः ॥ अत इति ॥ 'एतेन हि' इत्यनेन सामान्यतो दिवोमानमुक्तं यद्यपि तथाप्यन्यस्य वि-भाजकस्य वक्तुमशक्यत्वाद्विशेषतस्तन्निरूपणं सूर्यगतिविशेषनिरूपणं विना न भवति यतोऽतो हेतोः[२] ॥ १२२ ॥

त० दी०— अंते सुसंधितं मध्ये शून्यमेवंविधं तु तत् ॥ स्वरादिलो-कसंस्था तु पातालादेरिवेरिता ॥ १२३ ॥ राशिमध्यगता भूमिर्न्यूनाधि-क्येन वर्तते ॥ ज्योतिश्चक्रस्य तु गतिः सूर्येणेति निरूप्यते ॥ १२४ ॥ ब्रह्मकल्पे तथैवैके मानसादेस्तु संभवात् ॥ सूर्यस्य तु पृथक्ज्ञानमेवमत्र विचारितम् ॥ १२५ ॥ कालसूत्रमिहैकं हि रथयुग्मे यथोचितम् ॥ सूक्ष्म एव स्थितः सूर्यः स्थूलस्यापि प्रवर्तकः ॥ १२६ ॥ सारथिस्त्वे-

१ तस्य रूपणम्। २ एतावत्पर्यन्तमेव टीकोपलभ्यते. इतःपरं मूलकारिका एव। ३ इयन्तम-वधि यावत्पुरातनपुस्तके दृश्यमानाष्टीकानुकूलाः श्लोकाङ्का दत्ताः इतः परं टीकाभावाद्द्वात्रिंशदक्षरमि-तश्लोकसमासावेशाङ्का दीयन्ते संगृहीतपुस्तकेषु तु प्रतिपुस्तकं प्रायोविलक्षणोभिन्नएवपदक्रम इति न कोऽपि ग्रहीतुं शक्य इत्यूह्यं सुधीभिः। ४ स्त्वाद्विशेषेण ॥

त० प्र०—ननु चतुर्दशलोकात्मकब्रह्मांडस्याऽतलभूर्लोकयोर्मध्यं मध्यं भवेत् ॥ तौ च पुरुषस्य कटिजघनात्मकौ ॥ पुरुषस्य च मध्यं कटिरेव भवति ॥ किं च ॥ 'भूर्लोकः कल्पितः पद्भ्याम्' इति पक्षेऽग्रिमलोकस्य नाभिरूपत्वोक्तेर्भुव आकृटित्वं गम्यते ॥ एवं सति कटिरूपा भूर्भवति रविश्च भुवो लक्षयोजनांतर इति तस्य तन्मध्यं भवति न वेति संदेहः ॥ ऊर्ध्वाधोलोकानां मिथो मानवैषम्यादपि न मध्यनिश्चय इति संदेहहेत्वनुवादपूर्वकं तन्निरूपणप्रयोजनमाह ॥ पुरुषस्येति ॥ अर्द्धेनानुवादः । यत एवं ततो हेतोर्यः संदेहस्तद्राहित्यनिमित्तं तथा । तदेतत् 'सूर्येण हि' इत्यादिनोक्तम् ॥ ११८ ॥

त० दी०— दशसाहस्रगणना पातालादिषु सत्तया ॥
महादेवांतरः कोट्यो येन स्युः पंचविंशतिः ॥
कांचीदाममणिः सूर्यः शक्तिः कुंडलिनीति च ॥ ११९ ॥

त० प्र०—ऊर्ध्वाधोलोकमानवैषम्यधीपरिहारार्थमेव पंचविंशतिकोटिमानकथनम्॥ नन्वेवं सत्यधोलोके तावन्मानकथनमनुपपन्नमल्पत्वात्तत्राह ॥ दशसाहस्रेति ॥ तावदपि तत्र वर्तत इत्यभिप्रायेण तथोक्तिः 'अधिकं तत्राऽनुप्रविष्टं न तु तद्धानिः' इति न्यायेन न तु तावन्मात्राभिप्रायेणेत्यर्थः ॥ अत्र विनिगमकं वदँस्तेषां मानं कियज्ज्ञातव्यमित्याकांक्षामपि पूरयन्नाह ॥ महादेवांतरमिति ॥ महान् देवः संकर्षणः सूर्यो वा ॥ यावता तावद्भवति तावन्मानं ज्ञातव्यमित्यर्थः ॥ अधोलोकानां तावन्मात्रत्वे 'सूर्यांडगोलयोर्मध्ये' इति विरुद्ध्येतेति भावः ॥ तर्ह्याचार्यैरधोलोकमानं कुतो नोक्तमिति चेत् ॥ अत्राऽयंभावः ॥ 'सप्त भूमिविवराः' इतिवक्ष्यमाणत्वात् 'भूर्लोकः कल्पितः पद्भ्याम्' इत्युक्तत्वाच्च भूमध्यपातित्वं तेषामिति विशेषतो नोक्तमिति विराड्व्याने कट्युपरिस्थस्य तस्य स्वरूपमाह ॥ कांचीति॥ एतेन भूप्रकरणे दिविष्ठसूर्योक्तिर्न युक्तेति शंका निरस्ता ॥ अत एवोर्ध्वाधोविभाजकत्वमिति भावः॥ मृतंड इत्यादिव्युत्पादनतात्पर्यमाह ॥ शक्तिरिति॥ संघाते हि देहादिसंवलितो जीवो मृत इव तिष्ठति ॥ कुंडलिनीप्रबोधे हि सुषुम्णारंध्रप्रवेशो क्रमेणाऽमृतत्वमापद्यते ॥ तथा स्वत्वाद्युक्तत्वादयं विराजस्तथेत्यर्थः ॥ ११९ ॥

त० दी०— अतः परं त्रिभिः प्रोक्ता द्युमर्यादा तथाविधा ॥
सूर्यस्य च तथाऽन्येषां शिशुमारस्य च क्रमात् ॥ १२० ॥

त० प्र०—भूप्रकरणं समाप्याऽग्रिमाध्यायत्रयेण दिवः स्थानं निरूप्यत इत्याह।

नम् ॥१४७॥ मेरुमस्तकतो नीचो मानसाचल उच्यते॥ तैलयंत्रेण सदृशो मेरुरत्र निगद्यते ॥१४८॥ ओंघक्षमानं स्पष्टं हि तच्चतुर्थांशतो मेतः॥ लक्षाणां तु स एकोनचत्वारिंशत्प्रमाणकः॥१४९॥ ध्रुवोऽपि मेरुवत्तस्मात्ततोप्युत्तरतः स्थितः ॥ अतस्तैलाक्षवत्सोपि द्वितीयोतिविचारकैः ॥१५०॥ रथोपरि स्थितिः स्थानं षड्विंशल्लक्षदीर्घकम्॥ नवलैक्षकविस्तीर्णं युगं चाऽपि तथाविधम्॥१५१॥ आध्यात्मिका देवरूपा अश्वास्तत्र वहंति हि ॥ सप्तानामुपयोगाय लक्षयोजनमंतरा ॥१५२॥ प्रदेशोस्तीति बोधाय तथाऽऽकाशे गतिर्यथा ॥ छंदोमयास्ततः प्रोक्ता अरुणोऽपि तथोदितैः ॥ १५३ ॥ शब्दात्मका ह्यंतरिक्षे गच्छंतीति न विस्मितम्॥ रथस्याऽऽवश्यकत्वाय स्तोत्रनृत्यादिवर्णनम् ॥ १५४ ॥ स्थूले त्वेवैव सामग्री पश्चाच्चारुणसंस्थितिः॥ राशिचक्रे तु पुरतः सूर्यस्याऽरुण उच्यते ॥ १५५ ॥ अथ वा सर्वसामग्रीसहितोऽत्र द्विरूपतः॥ सदा तिष्ठत्युभयथा सर्वेषां कार्यसाधकः ॥ १५६ ॥ एतस्य वा द्विधा शक्तिरचिंत्यैश्वर्यरूपतः॥ पक्षद्वये प्रकारस्तु कल्पनीयो यथोचितम् ॥ १५७ ॥ मासि मासि द्वयोत्तयापि आदित्या मंडला रथाः ॥ सामग्रीसहिता भिन्नाः कल्पनीया न संशयः ॥ १५८॥ मानसोत्तरभूमिस्तु स्वमते दश कोटयः॥ चतुर्विंशतिसाहस्रं लक्षाणां चैकविंशतिः॥ १५९ ॥ त्रिंशन्मुहूर्ता दिवसे ह्यष्टशत्यधिकानि हि ॥ लक्षाणि तु चतुस्त्रिंशदेवमेव ततो मता ॥ १६० ॥ कोटित्रयं पंचदश लक्षाण्यायाम उच्यते ॥ त्रिगुणा किंचिदधिका परिधिः परिकीर्तिता ॥१६१॥ अतोऽत्र मतभेदेन संख्या बहुविधाऽभवत् ॥ लक्षमानं न पूर्वोक्तं यथायोग्यं व्यवस्थितिः ॥ १६२ ॥ माहात्म्यार्थं तदुक्तं हि न विरोधस्ततः स्मृतः ॥ एकस्यैव द्विरूपेण गमने युक्तिरुच्यते ॥ १६३ ॥ सूर्यस्य च तथाऽन्येषां तत्राऽन्येषां पुरा जगौ ॥ श्रुतस्यैव विरोधेन प्रश्नो यद्यपि संमतः ॥ १६४ ॥ इष्टोपि वक्तुमुक्तं हि तथा प्रोवाच सर्ववित्॥ सूर्ये श्रुतानुपपत्तिर्दृष्टस्याऽऽदौ निवार्यते ॥ १६५ ॥ सूर्यस्य तु परीहारो भगवत्त्वाद्विरूपता ॥ भगवत्त्वं च तद्युक्तया कालभेदा यतोऽभवन् ॥ १६६ ॥ वेदत्वेनापि तत्सिद्धिः समर्थस्तद्गतो हरिः ॥ ज्योतिश्चक्रं चालयन् स स्वांशैर्भुंक्तेऽन्यथाऽपि च ॥ १६७ ॥

१ आद्या । २ मितः । ३ लक्षं च । ४ दितम् । ५ राशिचक्रस्य । ६ निरूपितः । ७ चैन । ८ स्मृता ।

विशेषेण मूर्तिभेदेन वा तथा ॥ सूक्ष्मरूपरथा ये तु त ऊर्ध्व मंडले स्थिताः ॥ १२७ ॥ रहटे घटिका यद्वदत आरोहणादिकम् ॥ आरोहणे मंदगतिरवरोहे तु शीघ्रता ॥ १२८ ॥ स मे मध्यमभावश्च ज्योतिश्चक्रगतिः समा ॥ राश्यादिभावमापन्नाश्चक्रस्याशा निरूपिताः ॥ १२९ ॥ मेषे तुलाया च तथा अत ऊर्ध्वं व्यवस्थया ॥ ज्योतिश्चक्रस्य गमनाद्गतिः सूर्यस्य सर्वदा ॥ १३० ॥ यत्र राशौ भवेत्सूर्यः सभागेऽग्रे रथांगके ॥ तत्प्रातरुदयस्तत्र तदंशेपि गतिस्तथा ॥ १३१ ॥ समानगत्याऽपि तथा स्वांशकालायतस्तथा ॥ सांप्रतं तु न पक्षोऽयं मध्ये भूमिरियं यतः ॥ १३२ ॥ भूमिगोलं परिक्रम्य जलादायाति गच्छति ॥ मंडलानां प्रवेशेन वायोराकर्षणात्तथा ॥ १३३ ॥ वृद्धिक्षयप्रकारं हि प्राहुस्तत्रैव युज्यते ॥ मासपंचकपर्यंतमहोरात्रक्षयो भवेत् ॥ १३४ ॥ वृद्धिर्वा न त्वहोरात्रे तथाऽर्द्धस्य भवेत्क्वचित् ॥ राशिपर्यंतगमनमेकोनत्रिंशता क्वचित् ॥ १३५ ॥ तथैकत्रिंशता क्वापि गतिस्तेन समा न हि ॥ स्थूलचक्रे यतः कालं तथा तेनोच्यते परम् ॥ १३६ ॥ स्थूलचक्रे भूमिभेदा न तु सूक्ष्मे कथंचन ॥ अधुना भूप्रदेशाश्च ज्ञातव्या विनियामकाः ॥ १३७ ॥ दर्शनस्य समानेन सूत्रेणाऽदर्शनं यतः ॥ मकरादिषु वृद्धिर्हि तथा कर्कादिषु क्षयः ॥ १३८ ॥ अह्नो विवृद्धिर्मेषादौ रात्रेः स्थूलं न चान्यथा ॥ उदगयने गतेर्मांद्यं दक्षिणे शीघ्रता मता ॥ १३९ ॥ अहर्पंतिर्यतः सूर्यो मांद्यादह्नो विवृद्धता ॥ परिधिस्त्रिगुणो व्यासात्किंचिच्चापि तथाधिकः ॥ १४० ॥ लक्षाधिकं सार्धनवकोट्यो हि परिमंडले ॥ गणनामतभेदाद्धि संदेहः स्यादितीर्यते ॥ १४१ ॥ उपदेशस्ततः पूर्वं समा गतिरिहोच्यते ॥ वृद्धिह्रासनिवृत्त्यर्थं स्थूलचक्रं प्रवर्तते ॥ १४२ ॥ मेरोश्चतुर्दिशं पुर्यस्तत्र प्रोता दिशो मताः ॥ अन्यत्र प्रथमं यत्र मेषे सूर्यो हि दृश्यते ॥ १४३ ॥ प्राची सा सर्वलोकानां मेरुश्चोत्तरतस्तथा ॥ कमलाकृतिरीत्या हि मेरुरत्र तथैव भूः ॥ १४४ ॥ अतो मेरोः शिरस्तुल्यं मानसोत्तरमस्तके ॥ सूर्यचक्राक्षमध्यं हि तथाऽत्र परिकल्पना ॥ १४५ ॥ सोऽङ्गचक्रमिदं प्रोक्तं कालदेवत्वसिद्धये ॥ ततः संवत्सरसमे न प्रध्या सहितं तथा ॥ १४६ ॥ सुखार्थं देवगमने प्रधियुक्तं हि शस्यते ॥ ज्योतिश्चक्रस्य माहात्म्ये सोमादीनां विवर्ण-

१ सार ।

धःस्थानमर्यादा सकलोच्यते ॥ १८८ ॥ सूर्यान्निरूपणं यस्मादतः स्वर्भानुवर्णनम् ॥ प्रसंगाद्ग्रहणं चाऽऽह सूर्यादीनां तु गर्वनुत ॥ १८९ ॥ ग्रहणं लोकसिद्धं हि न तु वेदे कथंचन ॥ अंतरिक्षं ततोऽधस्ताद्देवान्नीचस्थितौ हितम् ॥ १९० ॥ एवमेवोत्तरं नीचा ज्ञातव्या भागशः क्रमात् ॥ दैत्या अतिबला युक्ता भक्ता वा सुरवैरिणः ॥ १९१ ॥ अधःस्थानं स्थितौ तेषां तेन बल्यादिवर्णनम् ॥ आनंदस्य प्रतिष्ठा तु तत्रैवेति निरूप्यते ॥ १९२ ॥ ज्ञानादिकं बाधकं हि दुःखं तत्र महत्तथा ॥ अज्ञानतः सुखं तत्र सात्त्विकानां न रोचते ॥ १९३ ॥ अतलादिषु सर्वत्र ततस्तादृशमीरितम् ॥ भक्तिः सर्वत्रोत्तमेति तत्राप्युत्तमतोच्यते ॥ १९४ ॥ धर्मार्थं भगवाँस्तस्य निग्रहीतेति वर्णनम् ॥ भगवानुत्तमलं च पातालादिष्वकारयत् ॥ १९५ ॥ तत्परित्यज्य दुःखेन कर्मणा वर्तते यतः॥एवं ज्ञानं तस्य वृत्तमिति तद्वाक्यवर्णनम्॥१९६॥ महादेवस्याऽपि भक्तस्तथा किं तु ततोऽधमः ॥ ततो लोकत्रयं नीचं भयं किंचित्ततो मतम् ॥ १९७ ॥ तेषामेव सुखे हेतुर्भगवाँस्तामसस्तथा ॥ लक्षमात्रमियं भूमिः प्रायेणाऽत्र नियोगतः ॥ १९८ ॥ उपयुक्ता ततः प्रोक्ता न तु पृथ्वी हि तावती ॥ तस्यामधःस्थितौ हेतुः संसारो जगतो मतः ॥१९९॥ सुखं च विषयोक्तस्य कीर्तिश्चाऽपि निरूप्यते ॥ दृष्टैव तामसत्वं हि सात्त्विको वस्तुतो मतः ॥२००॥ सुखोत्तमस्य हीनत्वे प्रश्न उत्तरमेव च ॥ दुःखं सर्वत्राऽविशिष्टमतः प्रश्नस्तु नारकः ॥२०१॥ देशा न नरकं किं तु कर्मणेति तथोत्तरम् ॥ यमश्च पितरश्चैव ततस्तत्र निरूपिताः ॥ २०२ ॥ कर्माण्येव निमित्तानि सर्वेषां तु यथा भवेत् ॥ नरकश्च तथा स्वर्ग इत्यंते स्वर्गवर्णनम् ॥ २०३ ॥ भगवद्व्यतिरिक्तस्य वर्णनं नैव युज्यते ॥ इत्याशंक्य हरे रूपवर्णने नोपसंहृतिः ॥ २०४ ॥ इतिश्रीवेदव्यासविष्णुस्वामिमतवर्तिश्रीवल्लभाचार्यविरचिते तत्त्वदीपे श्रीभागवते पंचमस्कंधविवरणम् ॥

ऋत्वादि सकलं तस्मादिति भेदा निरूपिताः ॥ एकं शतमशीतिश्च स्वार्थाः संति नभोंतरा ॥ १६८ ॥ अंशैः सर्वत्र गमने वत्सरो भवतीति च ॥ विशिष्टेन स्वरूपेण सदा ज्योतिःप्रवर्तनम् ॥ १६९ ॥ दिनमासर्त्वयनभुक् सर्वं भुंक्ते पुनः स्वयम् ॥ पंचशक्तियुतस्तेन पंचनाम्ना निरूपिताः ॥ १७० ॥ गतिभेदेन वा भेदाः प्रत्येकं मध्यमिश्रणात् ॥ चंद्रादीनां प्रशंसार्थमुचत्वं शीघ्रभोजनम् ॥ १७१ ॥ चंद्रस्य समताऽन्येषां विलंबोपि निरूप्यते ॥ अहोरात्रव्यवस्था च पितॄणां चंद्रतोऽभवत् ॥ १७२ ॥ अधःस्थितास्तु पितरश्चंद्रं पश्यंति नेतरम् ॥ कृष्णपक्षो दिनं तेषामष्टम्यादि निरूप्यते ॥ १७३ ॥ सूर्येण समता यर्हि तदा तेषां तु पूर्णता ॥ क्षयोत्सुकत्वं कर्मांगमतांतरमिति स्थितिः ॥ १७४ ॥ कलापानं तथैव स्याद्देवानां तु दिनस्थितिः ॥ उत्तरायणपक्षे हि रथानां दर्शनं भवेत् ॥ १७५ ॥ अधःस्थिनान् रथांस्ते हि न पश्यंत्युच्चदर्शिनः ॥ प्रभवादिव्यवस्थां तु सुराचार्यः करोति हि ॥१७६ ॥ बुधशुक्रौ सूर्यसमौ सूर्येणैव निरूपितौ ॥ तत्पुत्रो मंगलश्चैव क्रूरत्वान्न निरूपितौ ॥ १७७ ॥ सूर्याल्लक्षे यथा चंद्रस्ततो भानि च तावता ॥ ततोऽग्रिमग्रहाणां तु लक्षद्वितयमंतरा ॥ १७८ ॥ उशना च बुधश्चैव तथांगारक एव च ॥ वृहस्पतिः शनिश्चैव ऋषयस्तु शनेः परे ॥ १७९ ॥ लक्षैकादशतोप्युच्चैः पंचानां द्विगुणत्वतः ॥ समयोश्चाऽपि लक्षं हि ध्रुवस्तेभ्यस्त्रयोदश ॥ ॥ १८० ॥ आध्यात्मिकांश्च तान् राशीनतिक्रम्य यतः स्थितः ॥ पंचपात्रयुतस्तत्र मोदते कृष्णतत्परः ॥ १८१ ॥ भगवत्सेवकादेव सर्वं कार्यं यतो भवेत् ॥ अन्ये सर्वे तदाधाराः स स्थिरः कार्यकृद्धरेः ॥ १८२ ॥ सवनत्रयधर्मस्तु तेषां गतिनियामकः ॥ सूर्यवद्गमनं तेषामतः संपद्यते सदा ॥१८३ ॥ तेषामपतने हेतुर्वायुः कर्मेति केचन ॥ वस्तुतो भगवानेव शिशुमारस्तदाश्रयः ॥ १८४ ॥ निवेशनं ततः प्राह सर्वेषां तत्र वै हरौ ॥ चत्वारो वा तत्सचिवाः कश्यपोऽत्र प्रजापतिः ॥ १८५ ॥ अभयं धर्म इत्युक्तं तेन सर्वाविरोधिता ॥ अवतारचरित्रं हि धारणं विषमत्वतः ॥ १८६ ॥ न ह्येवमन्योऽवस्थातुं क्षणं शक्नोति कश्चन ॥ अन्यथा सकलां पृथ्वीं न द्रष्टा सुखवृत्तये ॥ १८७ ॥ एवं त्रिभिर्युमर्यादा मध्यभूता निरूपिता ॥ अतस्त्रिभिर-

१ एव। २ भवेत्। ३ अधःस्थितान्। ४ भानि। ५ शनेः परम्। ६ त्रयोदश।

नाम हि ॥ १८ ॥ प्रायश्चित्तप्रसंगेन नाममाहात्म्यमीरितम् ॥ पुष्टौ तथापि तत्प्रोक्तं तेनाऽत्रेयं व्यवस्थितिः ॥ १९ ॥ भगवत्सेवका ये तु कथंचिद्भिन्नतां गताः ॥ सर्वात्मना पापनाशस्तेषामेव भवेद्ध्रुवम् ॥ २० ॥ अन्येषां ज्ञानकर्मभ्यां सावशेषक्षयो भवेत् ॥ तत्राऽपि कर्मणा नाशः कुंजरस्नानवन्मतः॥२१॥ अधमानां लौकिकानां न विश्वासस्तु नामनि ॥ देहात्मबुद्धौ नष्टायां न पापस्फुरणं मतम् ॥ २२ ॥ ज्ञाने तिरोहितं सर्वं सहसैव भविष्यति ॥ पश्चाच्चेत्पापनाशेच्छा कर्मणो दोषदर्शनात् ॥ २३ ॥ भक्तौ प्रवेशे हि तदा तं भक्ता मोचयंति हि ॥ अतः पापक्षये नाम भक्तानां ज्ञानिनां तथा ॥ २४ ॥ नाऽन्येषां तेन भक्तानां मोचकत्वं निरूपितम् ॥ मर्यादया कृतार्थस्य यदि पापं न जायते ॥ २५ ॥ अतस्तदपवादार्थं पुष्टिर्मृग्या विशेषतः ॥ प्रायश्चित्तप्रसंगेन ततः पुष्टेरुपक्रमः ॥ २६ ॥ नामोच्चारणकर्तारस्त्रिविधा अधुना मताः ॥ प्राकृताः पापनाशस्तु तेषां फलनिरूपणम् ॥ २७ ॥ यथाकथंचिन्नाम्नापि सर्वपापक्षयः सदा ॥ अंते तु मुक्तिर्नियता नाऽन्यतोभयहोनतः ॥ २८ ॥ [illegible] द्विविधा भक्ताः साधारणास्तथा ॥ भक्तानां भक्तिरेवैषा पुष्टि[illegible]ता ॥ २९ ॥ ते ज्ञेयाः सेवका विष्णोः स्वार्थं तेन तथा कृताः ॥ [illegible]नामानि नित्यमुच्चारयंति हि ॥ ३० ॥ प्रेमयुक्तास्तु तत्रापि दा[illegible]युताः ॥ पुनर्दासा भविष्यंति भक्तिमार्गो न तेषु चेत् ॥ ३१ ॥ [illegible]रताः सेवायां वा प्रतिष्ठिताः ॥ भक्तास्तेऽत्रावगंतव्या रसिकाः [illegible]न्ताः ॥ ३२ ॥ इह वश्यो हरिर्भूत्वा सायुज्यं यच्छते बलात् ॥ म[illegible]नं ध्यानं पूजायामपि तन्मतम् ॥ ३३ ॥ प्रायश्चित्तं तु तत्रापि ना[illegible]वाऽस्य च निर्णयः ॥ अजामिलस्य चरितं पूर्ववृत्तं तु शुद्धये ॥ ३४ ॥ शुचीनां श्रीमतां गेहे जन्मवज्जन्म तस्य तु ॥ कलिशक्तिस्तु सा दासी गुणास्तस्य नवाऽऽत्मजाः ॥ ३५ ॥ पित्रादिभिरसंबंधो धनेन भजनं पुनः ॥ सर्वभावेन तस्या वै यतो मोक्षस्[illegible]त् ॥ ३६ ॥ गृहस्थितौ तु पितृवत्तस्याऽपि स्याद्धैव गतिः [illegible] दवरूपा[illegible] यत्रैव सेवा तेनैव सद्गतिः ॥ ३७ ॥ सुतरां पुष्टिमार्गे [illegible] ॥ अतो हरिः सर्व[illegible]तः ॥ शुक्के मलिनसंबंधो महानिति यमा[illegible] न हरिः स्वयं हंति कथंच[illegible] निर्णीतावीश्वरेच्छां न ते विदुः ॥

१ काम । [illegible]न्यते । न हि न मन्यते । २ नो । [illegible] ४ भवेत् । ५ भवेद्गतिः ।

# अथ तत्त्वार्थदीपनिबंधे

भागवतार्थप्रकरणे

## षष्ठस्कंधविवरणं प्रारभ्यते.

---

श्रीगोपीजनवल्लभाय नमः ॥ एवं कृष्णजेयाख्यं हि पंचमे स्थानमीरितम् ॥ एकोनविंशैरध्यायैः पुष्टिः षष्ठे निरूप्यते ॥ १ ॥ कृष्णानुग्रहरूपा हि पुष्टिः कालादिबाधिका ॥ अनुग्रहो लोकसिद्धो गूढभावो निरूपितः ॥ २ ॥ देवगुह्यत्वसिध्यर्थं नामध्यानार्चनादिकम् ॥ पुरस्कृत्य हरेर्वीर्यं नामादिषु निरूप्यते ॥ ३ ॥ मतांतरस्य भाषा तु नामप्रकरणे मता ॥ ध्याने हरिप्रवेशस्तु स्पष्टः प्रोक्तस्तथाऽर्चने ॥ ४ ॥ त्रिभिराद्यं प्रकरणं नराणां देवदैत्ययोः ॥ चतुर्दशभिरध्यायैर्द्वाभ्यां चैव निरूप्यते ॥ ५ ॥ नाम त्रिविधसंबंधादात्मगामि भवेद्यतः ॥ श्रवणात्कीर्तनात्स्मृत्या ततोऽध्यायत्रयं मतम् ॥ ६ ॥ रूपं चतुर्दशगुणं प्रत्येकं हरिभावितम् ॥ फलत्येवेति तावद्भिरध्यायैर्विनिरूपणम् ॥ ७ ॥ रूपेण मोक्षदः प्रोक्तो रसेनाऽऽनंददायकः ॥ गंधेन भक्तिदः प्रोक्तः स्पर्शेनाऽखिलतापनुत् ॥ ८ ॥ मनोहरस्तु नादेन योगेनाऽऽत्मप्रवेशदः ॥ कालमोक्षप्रदो दिष्टः स्वामी सर्वसुखप्रदः ॥ ९ ॥ हीनभावाद्दुःखदश्च केवलः सकलार्थदः ॥ मितो योगप्रदः प्रोक्तो भिन्नो मृत्युप्रदः स्मृतः ॥ १० ॥ यथास्थितो ज्ञानदश्च स्नेहाढ्श्यो भवेद्ध्रुवम् ॥ पूजाऽपि द्विविधा प्रोक्ता बाह्याभ्यंतरभेदतः ॥ ११ ॥ अतोऽध्यायद्वयं तत्र क्रिया सा त्रिविधो हरिः ॥ नामरूपे क्रिया चैव हरेः सर्वहितप्रदाः ॥ १२ ॥ एतत्त्रयं प्रसन्नश्चेद्ददाति न ततोऽन्यथा ॥ पुष्टिः स्वार्था परार्था तु भक्तिः सा नवमे मता ॥ १३ ॥ अजामिलो दासयोग्यः प्रागेव हरिणा तथा ॥ विचारितो गर्वमुक्त्यै तथात्वं प्रापितो बलात् ॥ १४ ॥ स्वभावदुष्टा जीवा हि स्वधर्मोत्कर्षभावुकाः ॥ अतस्तथाविधं कृत्वा स्वात्मसात्कुरुते हरिः ॥ १५ ॥ भक्तस्यैवंविधत्वं हि न समाधावभीप्सितम् ॥ अतो मतांतरी भाषा नामस्वातंत्र्यतोऽपि च ॥ १६ ॥ वृत्तांतश्रवणं तस्य ततः कीर्तनशंसनम् ॥ फलं तस्येति सकलं द्वितीये विनिरूपितम् ॥ १७ ॥ सिद्धांतकथनं पश्चाद्बलात्कृतिनिवारणे ॥ यमवाक्यस्मृतौ सर्वे स्मरंति हरि-

---

१ जयाख्यादि । २ गूढभावान् । ३ त्रिभिस्संबंधान् ।

गुरोः कृतौ ॥ विश्वरूपो हि हरिणा हतः कवचदानतः ॥ ६० ॥ दैत्यत्वगंधमात्रं च भगवान्नाऽत्र मन्यते ॥ विद्यमाने हि कवचे सानुभावे च तद्वधः ॥ ६१ ॥ पुष्टौ हरीच्छया जातो विश्वरूपस्त्रिरूपधृक् ॥ देवो दैत्यो मनुष्यश्च मनुष्यत्वं पुरा स्थितम् ॥ ६२ ॥ पौरोहित्ये देवभावो. बृहस्पतिसमत्वतः ॥ अन्यथा यज्ञकरणं दैत्यभावस्य लक्षणम् ॥६३॥ अतस्त्रिगुणसंयुक्तो विश्वरूपो न रक्ष्यते ॥ पुष्टिरत्र द्विरूपा हि मर्यादापुष्टिभेदतः ॥ ६४ ॥ विश्वरूपस्तु मर्यादा द्वितीयो वृत्र उच्यते ॥ भक्तोपि देवद्रोहेण वर्तते विषमो यथा॥६५॥ अतस्तु मारणीयो हि कंटकन्यायतः परम् ॥ पुष्टौ कर्मी तथा ज्ञानी भक्तोपि विनिपात्यते ॥ ६६ ॥ अतः पुष्टिं विलोक्यैव सर्वमार्गरतो भवेत् ॥ विश्वरूपो दधीचिश्च वृत्रश्चेति हता यतः ॥६७॥ इंद्रे ह्यनुग्रहः पूर्वं तद्विरोधाद्धता इमे ॥ सर्वेषां सर्वधर्मा हि हरिप्रीत्यनुगा यतः ॥ ६८ ॥ अतोऽनुग्रहसिध्यर्थं हरिमेव समाश्रयेत् ॥ विश्वरूपे षड्ध्यायास्तस्मिन् यावाननुग्रहः ॥ ६९ ॥ तमिंद्राय ददौ कृष्णः सप्तमेऽतो वधः कृतः ॥ साक्षाद्धस्तद्वये घातस्ततः पापं करद्वये ॥७०॥ आध्यात्मिकत्वात्तस्याऽपि सेवामिंद्रश्चकार ह ॥ संवत्सरेणाऽऽत्मशौचनिर्बंधश्च गते हरौ ॥७१॥ सच्चिदानंदरूपेषु भूवृक्षस्त्रीषु तन्मलम् ॥ स्थापयामास गोविंदप्रसादान्नान्यथा तु तत् ॥ ७२ ॥ एवमिंद्रे प्रसादस्तु भूमिर्भक्तास्तथा द्रुमाः ॥ लक्ष्म्यंशाश्च स्त्रियो भक्तास्तदनुग्रह ईर्यते ॥ ७३ ॥. ततो वृत्रसमुत्पत्तिस्तं मोचयितुमादरात् ॥ सोमादाहवनीयस्य जन्म चक्रे हरिः स्वयम् ॥ ७४ ॥ वेदप्रामाण्यसिध्यर्थं स्वरभंगं चकार ह ॥ विद्याधरः शापदग्धस्ततो मुक्तिमवाप्स्यति ॥ ७५ ॥ उच्छिष्टसोमहवनान्मंत्रदोषाच्च दैत्यताम् ॥ साहेत्येव तु मंत्रोऽत्र कामितस्याऽनुकीर्तनम् ॥ ७६ ॥ अग्निहोत्रप्रक्रियायां तथा निर्णय ईरितः ॥ कर्मणोत्पादितो देहो ज्ञानेनैव विनश्यति ॥ ७७ ॥ अतो दधीचेरस्त्राणि ज्ञानरूपाणि तद्वधे ॥ उत्पत्तिप्रलयौ यस्य वेदमार्गेण तद्धृदि ॥ ७८ ॥ भक्तिर्मुक्तिश्च तस्यैव सायुज्यं नाऽन्यथा भवेत् ॥ भक्तिर्मूर्तिमती तत्र देवरूपासु संस्थिता ॥ ७९ ॥ तद्वधव्यतिरेकेण न सा निर्गंतुमर्हति ॥ अतो हरिः सर्वदेवैः स्तूयते सिद्धभाषितैः ॥ ८० ॥ भक्तिलेशेपि न हरिः स्वयं हंति कथंचन ॥ देवार्थं ब्राह्मणान्नाशस्तस्य दो-

१ नहि मन्यते । न हि न मन्यते । २ नो । ३ तपः । ४ नान्यथा तु तत् । ५ तु ।

पुष्ट्यभावस्ततः सिद्धः पूर्वपक्षोयमीरितः ॥ ३९ ॥ वेदप्रामाण्यसिध्यर्थं नाममाहात्म्यमुत्तरे ॥ स्कंधार्थेन विरोधः स्यादन्यथा तन्मतांतरम् ॥ ४० ॥ नामार्थयोरभेदो हि वेदोपि हरिनाम हि ॥ नामानि कृत्वाऽभिवदन्निति वाक्यात्प्रतीयते ॥ ४१ ॥ वेदवेदार्थरूपत्वान्नामैवाऽखिलशोधकम् ॥ तदप्येतृध्यानसिद्धं प्रायश्चित्तं तु दुर्बलम् ॥ ४२ ॥ ज्ञानं स्वभावतो भिन्नं मतभेदास्ततोऽभवन् ॥ वेदार्थस्याऽपरिज्ञानाल्लौकिकं चाऽप्युपेक्षते ॥ ४३ ॥ लोकसंग्रहभेदानां नाऽन्यथा कथनं भवेत् ॥ वक्तुरेवार्थसंदेहात्प्रायश्चित्तं न तन्मतम् ॥ ४४ ॥ यमादिसाधनैर्युक्तं ज्ञानं संन्याससंयुतम् ॥ प्रायश्चित्तमशक्यत्वान्न सर्वेषा तु तद्भवेत् ॥ ४५ ॥ वस्त्रं दहति यो ह्यग्निः स न वस्त्रस्य शोधकः ॥ तथा ज्ञानं न संघातशोधकं त्याजकं परम् ॥ ४६ ॥ अशक्यं साधनं चैव मोक्षपर्यवसायि च ॥ शुध्यभावान्न तत्सिध्येद्वासनापि विशिष्यते ॥ ४७ ॥ वेदोक्तं तदपि प्रोक्तं नाम वेदात्मकं हरेः ॥ अन्यत्रापि व्यवहृतमवतारवदुत्तमम् ॥ ४८ ॥ अतः पुत्रोपचारेपि तद्भवत्तु निखिलाघनुत् ॥ धर्माधिकारी यदि तन्न मन्येत कथंचन ॥ ४९ ॥ तथा बलात्तथोक्तं स्यादिति जायेत संशयः ॥ यमवाक्येन तद्दार्ढ्यं प्रमेयबलमीरितम् ॥ ५० ॥ अगस्त्यः शिवभक्तोपि तथा तत्त्वमुवाच ह ॥ परकीयमुखात्स्तोत्रं सत्यमेवेति निश्चितम् ॥ ५१ ॥ मिथ्याप्रलोभनाच्चाऽत्र पूजया विनिवार्यते ॥ तस्यापि हरिमाहात्म्यश्रवणात्पूजने मतिः ॥ ५२ ॥ यमदूतभयात्सिद्धं प्रायश्चितमिदं दृढम् ॥ दक्षे प्रसादस्तपसा तत्पुत्रेषु तु बोधतः ॥ ५३ ॥ तत्कन्यासु जगद्भूत्यै त्रेधाऽनुग्रह ईरितः ॥ सत्त्वेन तमसा वाऽपि रजसा चेति स त्रिधा ॥ ५४ ॥ त्रिविधोऽपि हरिस्तोषो विश्वरूपार्थमीरितः ॥ तस्मिन्सर्वं सुसंपन्नमिंद्राय प्रददौ हरिः ॥ ५५ ॥ अतः स्थानस्वरूपस्य गुरोरत्र निवारणम् ॥ पुष्ट्यर्थं भगवद्ध्यानादिंद्रो मर्याद ईरितः ॥ ५६ ॥ सर्वज्ञत्वाद्गुरुश्चापि हरिप्रीत्यै तिरोदधे ॥ मर्यादास्थो यतो ब्रह्मा न शुधत्वं ।नात्सुखी ॥ ५७ ॥ सोपि ज्ञात्वा हरेः कार्यं विश्वरूपमुवाच ह ॥ उ च ॥ १६ र॰॰च्चाद्धि विशिष्टस्तदनंतरम् ॥ ५८ ॥ अतो बृहस्पतिगतौ वृप सकलं द्वितीये वि॰॰ पष्टिः स्वार्था ततः कोपि न सुखं विंदते चिरम् ॥ णे ॥ यमवाक्यस्मृतौ सर्वे ९ क्षमां चक्रे

१ दि । २ मिदे । ३ हि । गिरानधान् ।

# अथ तत्त्वार्थदीपनिबंधे

भागवतार्थप्रकरणे

## सप्तमस्कंधविवरणं प्रारभ्यते.

श्रीहरिः ॥ एवं त्रिरूपा पुष्टिर्हि षष्ठे यत्नेन रूपिता ॥ दुःखाभावः सुखं चाऽपि ह्यैहिकामुष्मिकं द्विधा ॥ १ ॥ ततः पंचदशाध्यायैरूतिः सप्तम ईर्यते ॥ पुष्टिदोषनिवृत्त्यर्थमूतिलीला निरूप्यते ॥ २ ॥ विषमत्वं हरेर्दोषः पुष्टौ कामाद्यभावतः ॥ अतो भगवता सृष्टा निरूप्यंते तु वासनाः ॥ ३ ॥ आध्यात्मिकादिभेदेन कर्म स्यात्त्रिविधं यतः ॥ पंचात्मकं ततः पंचदशधा तन्निरूप्यते ॥ ४ ॥ ताश्च कर्मभिरेवोक्ताः कर्मभ्यस्ताः पृथङ्मताः ॥ अतः पुष्ट्याऽपि भगवान् यत्करोति स्वलीलया ॥ ५ ॥ जीवानां तत्तथैवेष्टं वासनावशतः स्फुटम् ॥ जीवगा वासना सूक्ष्मा समावेशात्तु मध्यमाः ॥ ६ ॥ उभयं जीवसंबंधि मनस्यन्या तु कर्मभिः ॥ जीवगा वासना ज्ञेया देवदैत्यहितेच्छया ॥ ७ ॥ आत्मीयत्वेन विज्ञाते तेष्वावेशस्तयोर्भवेत् ॥ तदैव तादृशे शक्तिः कर्मणीति मतिर्मम ॥ ८ ॥ अतस्तान् तादृशान्मत्वा पुष्टिमार्गं करोति हि ॥ त्रीणि प्रकरणान्यत्र पंचभिः पंचभिः क्रमात् ॥ ९ ॥ दैत्यदेवांशभेदेन पितापुत्रौ निरूपितौ ॥ कर्मणैव भवेदेतदिति कर्मनिरूपणम् ॥ १० ॥ नारदस्त्रितयावेशी वक्ताऽत्र विनिरूप्यते ॥ ज्ञानी भक्तस्तथा कर्मी श्रोता चाऽपि निरूपितः ॥ ११ ॥ दैत्यानां पंचकर्माणि लौकिकालौकिकत्वतः ॥ लौकिकं द्विविधं कृत्यं भोगेनापि निरूप्यते ॥ १२ ॥ सेदतिक्रमणं कृत्यं सेवाधर्मकृतं न हि ॥ अवज्ञा त्वन्यथा न स्याद्विज्ञाप्या वा स्वयुक्तितः ॥ १३ ॥ अतो दैत्यस्वभावस्य समुद्गमनतस्तदा ॥ वैकुंठवासयोग्यत्वात्तथा शापं त्रिधा ददुः ॥ १४ ॥ वासना त्रिविधा दुष्टा स्फुटमत्यंतनिर्गता ॥ अत्यंतभोगे तु यथा तद्वत्कामः प्रशाम्यति ॥ १५ ॥ अतः कृपैव शापेन कारणं हरिणा कृतम् ॥ तृतीयस्कंधवार्ता तु मतांतरमिति स्थितिः ॥ १६ ॥ क्रोधः कामस्तथा लोभो जन्मत्रयगता यतः ॥ वासनाहेतवो लोके दैत्यत्वं जायते यतः ॥ १७ ॥ अतः सामान्यतः प्रोक्तो लोभोऽत्रैव विशेषतः ॥ क्रोधरूपो हरिस्तस्मादत्रैवा-

---

१ त । २ शापे तु ।

पस्य वर्ण्यते ॥ ८१ ॥ प्रचेतसां प्रसादश्च दक्षस्यापि तथैव च ॥ तत्स्तुतानां च निखिलो विश्वरूपे प्रतिष्ठितः ॥ ८२ ॥ भक्त्या च तपसा चैव ज्ञानेनापि स उच्यते ॥ आधिभौतिकरूपं तु त्रयमत्र निरूपितम् ॥ ८३ ॥ आध्यात्मिकानां त्रितयं विश्वरूपे प्रतिष्ठितम् ॥ बृहस्पतिसमो ज्ञाने तपस्वी च निरूपितः ॥ ८४ ॥ कवचस्योपदेशेन वैष्णवोपि निगद्यते ॥ तथा वृत्रेपि त्रितयं ज्ञानं भक्तिबलं तथा ॥ ८५ ॥ आधिदैविकमेतद्धि सायुज्यं नाऽन्यथा भवेत् ॥ विश्वरूपवधात्पापमक्षयं तत्प्रतिष्ठितम् ॥ ८६ ॥ आध्यात्मिकं ततोऽप्येषा वृत्रहत्या विशिष्यते ॥ तामसानामधिपतिस्तत्पापं हंति दुर्जयम् ॥ ८७ ॥ ध्यानं तत्र निमित्तं हि वैदिकं चाऽप्यभीष्टदम् ॥ भक्तिदोषयुता लोके न प्रसिद्धा कथंचन ॥ ८८ ॥ अतस्तदपवादाय मतांतरमिहोच्यते ॥ वैराग्यं ज्ञानभक्ती च प्रसादः शाप एव च ॥ ८९ ॥ भक्तिमार्गे तु भक्तस्य न युक्तमिति तत्तथा ॥ भाषांतरेऽपि यत्सिद्धमिंद्रे तत्प्रददौ हरिः ॥ ९० ॥ एवमिंद्रे महापुष्टिः सर्वबाधा निरूपिता ॥ सर्वबाधकरूपा हि दैत्ये पुष्टिरथोच्यते ॥ ९१ ॥ तत्रापींद्रप्रसादो हि यतो मृत्युनिवारणम् ॥ विरुद्धयोः प्रसादं तु हरिः साधयितुं क्षमः ॥ ९२ ॥ अभिरूपो यतो भर्ता कश्यपः सकलं निजम् ॥ रेत एकोनपंचाशत्प्रकारं व्यसृजद्बुधः ॥ ९३ ॥ प्रसादश्चाऽप्रसादश्च द्वयं चाऽपि विमिश्रितम् ॥ त्रिषु कृष्णः सप्तमूर्तिः सप्तधा सप्तसप्तधा ॥ ९४ ॥ प्रसन्नत्वाद्ब्रह्मपत्यं क्रोधान्नो वांछितं फलम् ॥ उभयान्मानसं किंचिन्न्यूनमेकाधिकत्वतः ॥ ९५ ॥ वधस्याऽपि निवेशस्तु सेवया प्रायशो गतः ॥ पुष्टिरूपा तु या सृष्टिः साधारण्यविशेषभाक् ॥ ९६ ॥ सा निरुक्ता ततोऽन्यत्र न सृष्टिः पुष्टिसंश्रिता ॥ व्रतिनः पूजनं मुख्यमित्यंते व्रतसंकथा ॥ ९७ ॥ सर्वलीलाः पुष्टिमध्ये प्रविशंतीति मे मतिः ॥ अतः सृष्टिस्तु निखिला कृष्णार्थेति विनिश्चयः ॥ ९८ ॥ तस्मात्सिध्यंति कार्याणि भक्त्यैव श्रयणाद्धरेः ॥ ९९ ॥

इतिश्रीविष्णुस्वामिमतवर्तिश्रीवल्लभदीक्षितविरचिते श्रीभागवततत्त्वदीपे निबंधे षष्ठस्कंधविवरणम् ॥

१ तु । २ वांछितविनिः । ३ सृता । स्थिता ।

यमीरितम् ॥ सहजे वासने तेन पुष्टियुक्ता हरेः स्फुटा ॥ ४० ॥ सद्वा चेत्सहजा सत्संगाद्वृद्धिमेष्यति ॥ तेषामेवापमानेन द्वितीया वर्धते तथा ४१ उभयं सहजं तस्य तदर्थं प्रक्रियांतरम् ॥ पंचधा कर्मकरणान्मूलभूतापि नश्यति ॥ ४२ ॥ निषिद्धकर्मकरणात्तथा सद्वासना पुनः ॥ विरुद्धवासनापोषाल्लयो वातद्विरोधतः ॥ ४३ ॥ भक्तिमार्गानुसारेण सती चेच्छ्रवणादिभिः ॥ वासना पोषिता काले फले भुक्ते पुनः पुरा ॥ ४४ ॥ प्रादुरासीदतो ह्येतौ जयश्चाऽन्यश्च तादृशौ ॥ इमं सूक्ष्मं तु यो वेद तस्योपायो निरूप्यते ॥४५॥ अतो नारदसंप्रश्नः किं भूयः श्रोतुमिच्छसि ॥ भक्तिमार्गस्तु फलदो न प्रायश्चित्तताऽस्य हि ॥ ४६ ॥ अतः शुद्धिं तावतीं तु करोति न ततोऽधिकाम् ॥ कषायपक्तिः कर्माणि यथाऽग्निर्दाहको मतः ॥ ४७ ॥ भक्तिमार्गः केवलस्तु यस्य स्याद्वासना शुभा ॥ न द्वितीया तस्य सिध्येदुभयं चेत्तु कर्मणः॥४८॥ कषायपाकशुद्धिर्हि पक्वं नश्यति तत्क्षणात् ॥ भक्त्या ज्ञानेन वा तत्स्यादतोन्ते तच्च कीर्त्यते ॥ ४९ ॥ साधारणश्च यो धर्मो यश्च वर्णाश्रमात्मकः ॥ उभयं क्रमशः कृत्वा दुष्टां वै वासनां दहेत् ॥ ५० ॥ ब्रह्मांडे तस्य संबंधो यावानस्ति यतस्ततः ॥ त्रिंशल्लक्षणधर्मेण तावत्यो वासना दहेत् ॥ ५१ ॥ विराट्छंदस्तथाचांडं त्रिंशद्वर्णात्मकं यतः ॥ प्रसादः सात्त्विको बुद्धेः सत्त्वलक्षणमीदृशम् ॥ ५२ ॥ अतः प्रसादो येनैव तत्कुर्यादुक्तसाधनैः ॥ पुरुषार्थस्य संप्राप्तौ दुष्टा वै विनिवर्त्तते ॥ ५३ ॥ दुष्टोपीष्टफलं प्राप्य निवर्तताऽपि निश्चितम् ॥ अत आश्रमभेदेन धर्माश्चत्वार ईरिताः ॥ ५४ ॥ धर्मा एते भगवतस्ते चेद्धृदयगोचराः ॥ धर्मिवासाय ते सर्वे दैत्यभावं दहंति हि ॥ ५५ ॥ ब्रह्मचारी वनस्थश्च धर्मद्वैविध्यबोधने ॥ एकाध्यायेनोभयेषां धर्ममध्यापनं ततः ॥ ५६ ॥ न्यासोंतिमप्रकरणं द्वितीये विनिरूपितम् ॥ तदेव कार्यं धर्मस्य नार्थकामावितीरयन् ॥ ५७ ॥ अर्थकामौ गृहस्थस्य वासनानाशकौ यथा ॥ तादृशौ तौ समाख्यातौ तदर्थं सर्वनिर्णयः ॥ ५८ ॥ वासना विषये दुष्टा धर्मेणैव निवर्तते ॥ धर्माधिकारस्तावद्धि ततो भक्तिस्तथा मतिः ॥५९॥ यदैव सर्वभूतेषु कृष्णे वा परमात्मनि ॥ दुष्टभावो न जायेत तदा स्याद्वासनाक्षयः ॥ ६० ॥ तदा भक्त्यधिकारः स्यादन्ये न त्वधिकारिणः ॥ अभावे

१ पुष्टा ।

ऽवततार ह ॥ १८ ॥ तद्धर्मग्रहणे तस्य क्रोधादिर्याति नाऽन्यथा ॥ वासना च ततो नाशं यास्यत्येव न संशयः ॥ १९ ॥ अविकारत्वसिध्यर्थं ज्ञानमस्य निरूप्यते ॥ भोगातिक्रमयोर्मध्ये तपश्चाऽपि निरूप्यते ॥ २० ॥ ब्रह्मस्तुतिर्वरप्राप्तिश्चतुर्भिः स्यादिहोन्नतिः ॥ तपसः परमोत्कर्षो वरस्तुत्यादिना भवेत् ॥ २१ ॥ अत्यंतभोगसंपत्तावतृप्तिर्वासनावशात् ॥ द्वेषः सहेतुको नाऽत्र भ्रातृमारणतः क्वचित् ॥ २२ ॥ पुत्रस्निग्धस्ततो यस्मादात्मत्वात्तु विशेषतः ॥ भगवानपि विश्वात्मा देवान् धारयते दृढम् ॥ २३ ॥ अतोऽत्र वासनाहेतुरहेतुः परमो मतः ॥ कृष्णाविष्टेन दैत्येन प्रह्लादजननं मतम् ॥ २४ ॥ वैकुंठे गमनं तस्य पूर्वसामर्थ्यसंभवात् ॥ सर्वत्र वासना तस्य ज्ञानरूपा विनिर्गता ॥२५ ॥ अतः स्नेहस्तथा चक्रे यो यच्छ्रद्धः स एव सः॥ इति बुध्या मतिं चक्रे पुत्रमारणतत्पराम्[1] ॥ २६ ॥ कृष्णद्वेषो महत्पर्व शापात्तत्र न तत्फलम् ॥ सद्वासनाप्रकारेण ततो मारणमुच्यते ॥ २७ ॥ शत्रुश्चेत्पुत्रतां याति तदा द्वेषो भवेत्क्वचित् ॥ तदभावाय तत्स्नेहः पंचमे[2] वै निरूपितः ॥ २८ ॥ औद्धत्यं सर्वपीडा च स्वपीडानिर्वृतिः सदा ॥ भगवद्भक्तपीडा च वासना पंचधोदिता १९ अतः सद्वासनां प्राह पंचभिः सर्वमोक्षदाम् ॥ दैत्यभावे गते सर्वे मुच्यंते नाऽत्र संशयः ॥ ३० ॥ अतो ज्ञानक्रियाभ्यां च सर्वान्मोचयते स्फुटम् ॥ सैव सद्वासना प्रोक्ता या सर्वानेव मोचयेत् ॥ ३१ ॥ दया तु प्रथमं पर्व ज्ञानदायेन सुच्यते ॥ महत्कृपा द्वितीयं तु सानुभावा विशेषतः ॥ ३२ ॥ ततोऽतिदुःखहेतूनां नाशकश्चेद्धरिर्भवेत्॥ क्रियाप्रूर्वांगभावेन तृतीयं पर्व तद्भवेत्॥३३॥ सर्वथा सन्मुखो जीवो यथा तत्तु चतुर्थकम् ॥ कायवाङ्मनसा भावः प्रसादःसहितस्तु तत् ॥ ३४ ॥ निर्दुष्टसर्वसुखभाक् पूर्णकामश्च पंचभाक् ॥ दुर्वासनाया मूलं तु त्रिपुरं परिकीर्तितम् ॥ ३५ ॥ आधिदैविकरूपं तु तथाऽन्यत्र हरिस्तथा ॥ कृष्णप्रसादः सर्वत्र बलं पानेऽथ रक्षणे ॥३६॥ मर्यादा त्वत्र मार्गे हि यावता यो हि सिध्यति॥ तावत्तस्य हि कर्तव्यं तेन वा तास्तु बोधतः ३७ स्थूला दैत्येश्वरश्चैव देहनाशेन मोचितः॥ प्रह्लादोऽप्याग्रहीचैव ब्रह्मा वाऽप्युपदेशतः ॥ ३८ ॥ महादेवो मनोद्वाद्भक्तः शैवोऽपि दोषभाक् ॥ अतो मयस्तथा चक्रे तस्मादीशोपि मोचितः ॥ ३९ ॥ पितापुत्रौ पुरस्कृत्य वासनाढ्-

१ तत्पर. । २ प्रकरणे ।

क्रमेण ते धर्माश्चतुर्धा व्यस्य बुद्धितः ॥ ८३ ॥ एकैकानंतरं कुर्याद्वा वासनाक्षये ॥ तदा क्रमेण भगवाँस्तदा यत्तो भवेद्ध्रुवम् ॥ ८४ ॥ अनष्टायां च दुष्टायां तदा मुक्तो भवेद्ध्रुवम् ॥ विलंबश्चेद्धरीच्छातस्तदा सद्धर्ममाचरेत् ॥ ८५ ॥ अवश्यं तु तदा भाव्या भक्तिर्या नवमे मता ॥ महद्व्यतिक्रमे मध्ये दुष्टा वृद्धिं प्रयाति हि ॥ ८६ ॥ तत्प्रसादाददुष्टा हि कृष्णादुभयथा गतिः ॥ इयं लीला भगवतः सततं मोचयेद्धरिः ॥ ८७ ॥ इति श्रीविष्णुस्वामिमतवर्तिश्रीवल्लभदीक्षितविरचिते तत्त्वदीपे सप्तमस्कंधविवरणं नवमं प्रकरणं समाप्तम् ॥ ९ ॥




स्वधिकारस्य यदि कृष्णं भजेत्स्वतः ॥ ६१ ॥ सद्वासनातः संगाद्वा धर्मत्यागस्तदा यदि ॥ तदा द्वेषो भवेत्कृष्णे दुर्बुद्धिर्वा विशेषतः ॥ ६२ ॥ तदाऽपराधो भविता भक्तिर्दुष्टा च जायते ॥ तदोपेक्षा भगवतः कालादीनामुपद्रवे ॥ ६३ ॥ दुर्वासनाऽतो ह्यत्यंतं भक्तोऽप्यत्र विशेषतः ॥ भीष्माक्रूरार्जुनादिर्वै दुःखमाप्नोति यद्वशात् ॥ ६४ ॥ युधिष्ठिरे कृष्णभक्ते नारदः प्राह कर्म तत् ॥ विधर्मादिपरित्यागाद्यथोक्तकरणेन हि ॥ ६५॥ दुर्वासनाया नाशः स्यान्नान्यथा तु कथंचन ॥ जीवस्य ब्रह्मभावे तु नाश्यते जीववासना ॥ ६६ ॥ गुरूपदेशादिबलाज्ज्ञानेनैव तथा भवेत् ॥ पक्वा एवं हि नाश्यंते ज्ञानेन भजनेन वा ॥ ६७ ॥ अंतःकरणपाकस्तु तत्र हेतुः स्वकर्मभिः ॥ पक्वं योगेन भक्त्या वा ज्ञानेनापि स नाश्यते ॥ ६८ ॥ तपसैव तु पच्यंते प्राणानां वासना दृढाः ॥ योगेनैवेंद्रियगताः कर्मणैव शरीरगाः ॥ ६९ ॥ तस्मात्पंचविधं कर्म यथोक्तं सर्ववर्णिभिः ॥ योगेन तपसा भक्त्या ज्ञानेनापि क्रमात्तथा ॥ ७० ॥ शुद्धाधिकारफलता भक्तेर्नाऽन्यत्र कुत्रचित् ॥ सद्धर्मैश्चेत्सुसंसिद्धस्ततः प्रोक्तस्तथा क्रमः ॥ ७१ ॥ स्वाध्यायश्च तपश्चैव ममतानाश एव च ॥ देशकालादिसंपत्तौ कर्म चाऽप्युत्तमोत्तमम् ॥ ७२ ॥ देहादिवासनानाशे चतुष्टयमुदाहृतम् ॥ अंतःकरणधर्माणां संक्षयश्च यदा भवेत् ॥ ७३ ॥ तदैव वासना क्षीणा अतः साधनवर्णनम् ॥ सर्वस्य मूलं विप्रा हि गुरवस्ते प्रकीर्तिताः ७४ तत्कृपातो भवेत्सर्वमेकमेतद्धि साधनम् ॥ तत्सेवातस्सर्वकर्माणि तथा नश्यंति वासनाः ॥ ७५ ॥ इति दर्शयितुं शापः प्रसादश्च प्रकीर्तितः ॥ ते वश्याः कृष्णभक्तस्यैव युधिष्ठिरगृहे यतः ॥ ७६ ॥ समायांति ततः कृष्णसेवा चेत्सर्वदा भवेत् ॥ क्रमेण वासनाः सर्वा नाशं यांति न संशयः ॥ ७७ ॥ अतो ब्राह्मणवाक्येन सेवां कुर्यादहर्निशम् ॥ कर्माशक्तौ ब्राह्मणास्तु चक्रुस्ताः कर्मभिः सह ॥ ७८ ॥ स्कंधे निर्धारितो ह्यर्थः स्पष्टोऽत्र विनिरूप्यते ॥ वासना द्विविधा यस्य स कुर्याद्गुरुसेवनम् ॥७९॥ सर्वभावेन तद्वाक्याद्भगवद्भजनं ततः ॥ उभयोर्यदि दुष्टा स्याद्वासनाऽत्र कथंचन ॥ ८० ॥ तदा कर्माणि कुर्वीत यथोक्तानि स्वधर्मतः ॥ साधारणेषु धर्मेषु यदि निष्ठाभवेत्कचित् ॥ ८१ ॥ वासना चेत्तदा नष्टा भक्तिमेव तदाऽभ्यसेत् ॥ अन्यथा ब्रह्मचर्यादि जन्म प्राप्य समाचरेत् ॥ ८२ ॥ जातिस्मरत्वं संस्कारप्रबोधो वा भवेद्ध्रुवम् ॥ तदा

निष्ठा भोगयुक्ताश्चतुर्दश उदाहृताः ॥ १८ ॥ मन्वंतरविभेदेन परिकीर्तिताः ॥ तत्तद्देशविभेदेन देशधर्मास्तथा पुनः ॥ १९ ॥ महांतोऽत्र त्रयो धर्मा आपत्सु हरिसंस्मृतिः ॥ संपत्सु सर्वदानानि निर्वाह्यवचनं तथा ॥ २० ॥ हरिसंस्मरणे तत्र चत्वारः परिकीर्तिताः ॥ पुरुषार्थप्रसिध्यर्थम-ध्याया इति निश्चयः ॥ २१ ॥ मन्वादीनां यथा धर्मः कृष्णस्मृत्यैव सिध्यति ॥ तत्रापि धर्मबाधायां क्लेशः स्यादिति निश्चयः ॥ २२ ॥ भगवद्धर्मरूपस्तु यदि धर्मेण बाध्यते ॥ तदा फलत्वतो हीना ह्यर्थकामौ तु साधयेत् ॥ २३ ॥ अनुवृत्तस्तु तत्रापि मोक्षं साधयते चिरात् ॥ अतो गजेंद्रकथनं चतुर्भिर्वि-निरूपितम् ॥ २४ ॥ अगस्त्यो ब्राह्मणः शैवः स एव ब्राह्मणः स्मृतः ॥ तस्याऽविरोधी यो धर्मः स शीघ्रं फलदो मतः ॥ २५ ॥ भक्तस्यैव हरिस्तुष्टः कालादीनत्र वारयेत् ॥ धर्मयुक्ताँस्तथा चाऽन्यात्रान्यथा तु कथंचन ॥ २६ ॥ गजेंद्रस्यार्थसिध्यर्थं वृक्षादीनां च वर्णनम् ॥ काममुक्त्वा तस्य चार्ति क्लेशः कामस्तथा यतः ॥ २७ ॥ स्तोत्रं प्रवृत्तिजनकं स कामो मुख्य ईरितः ॥ मोक्षस्तु कृष्ण एवाऽत्र प्रीतः सर्वात्मना मतः ॥ २८ ॥ तदा भक्ताश्च ये पूर्वे प्राकृता अपि वै श्रुताः ॥ ते मोक्षदाः समस्तानां जाता वै हरिवाक्यतः ॥ २९ ॥ इत्यापत्सु हरेः स्मृत्या यत्फलं परिकीर्तितम् ॥ ततस्तु दशभिः प्रोक्तं सर्वेभ्यो दानमीप्सितम् ॥ ३० ॥ गुणास्तु नवधा प्रोक्ता निर्गुणो द-शमः स्मृतः ॥ दानं तु त्रिविधं प्रोक्तं हेतुरूपफलैः पृथक् ॥ ३१ ॥ हेतवश्च त्रयः प्रोक्ता भगवान् सात्विकः पुरा ॥ ततो देवासुराश्चैव राजसाः परिकी-र्तिताः ॥ ३२ ॥ शिवश्च तामसः प्रोक्तस्त्रिभिर्दोषे निवारिते ॥ दानं सिध्य-ति सर्वेभ्यस्ततो हेतुं पुरोक्तवान् ॥ ३३ ॥ कृष्णेन प्रेरिता देवाः प्रेरयंति यदा मनः ॥ लोभं च नाशयेत्त्रयस्तदा दाता स जायते ॥ ३४ ॥ अमृता-दधिकं लोके न देयमिह विद्यते ॥ मृत्युना व्याप्तलोके हि मरणं तन्निवा-रयेत् ॥ ३५ ॥ तत्स्वरूपपरिज्ञानं जिज्ञासायां च जायते ॥ सा च क्लेशो-दये सम्यक् तदर्थं क्लेशसंकथा ॥ ३६ ॥ ज्ञापको हरिरेवात्र स चेद्वैकुंठवत्क्व-चित् ॥ स्थानं कृत्वा यदा तिष्ठेत्तद्देवार्थः प्रसिध्यति ॥ ३७ ॥ इति वैकुंठ-निर्माणकथनार्थं तु पंचमः ॥ मन्वंतरो ज्ञानरूपः प्रथमं स निरूपितः ॥३८॥

---

१ भगवान् ॥ २ प्रवृत्ति ॥ ३ तत्कर ॥ ४ त्रिभि. ॥

वैराग्यरूपः षष्ठस्तु स क्लेशात्मा पुरा भवेत् ॥ तत्रैव गुरुसंबंधो ब्रह्मस्थानगतिस्ततः ॥ ३९ ॥ तदर्थं वेद चेद्ब्रह्मा भगवान् किं करिष्यति ॥ अतो भगवतो जग्मुः स्थानं सर्वे दिवौकसः ॥ ४० ॥ क्रिययैव स दृश्यो हि तेन स्तोत्रमुदीरितम् ॥ स्तुत्वा प्रसादपर्यंतं हरिः सात्विक ईरितः ॥ ४१ ॥ राजसा देवदैत्याश्च मेलनं कपटेन हि ॥ राजसं कर्म तच्चापि क्लेशात्मकमुदीरितम् ॥ ४२ ॥ हेतुः स मध्यमः प्रोक्तो नितरां क्लेशदः परः ॥ तामसः स तु विज्ञेयः क्रियादौ तामसी मता ॥ ४३ ॥ कालकूटं शुद्धतमः पानं तस्य तु सात्विकम् ॥ एवं त्रेधा विभागस्तु सर्वत्र ज्ञायतां स्वतः ॥ ४४ ॥ एवं त्रिभिर्हेतुकथा दानार्थमिह रूपिता ॥ साधकः साधकानीत्थं प्रतिबंधनिवारकः ॥ ४५ ॥ सद्धर्मकार्ये सर्वत्र हरिर्वै साधको मतः ॥ देवाः साधनवर्गस्तु बाधकाभाव ईश्वरः ॥ ४६ ॥ विष्णुर्ब्रह्मा महेशश्च सर्वत्रैवं हि कारणम् ॥ एकमेकतराभावे न कार्यं जनयेत्कचित् ॥ ४७ ॥ बाधकं द्विविधं प्रोक्तं साधकासाधनक्षमा ॥ मध्ये बाधकसंबंधस्तत्राऽऽद्ये हरिरीश्वरः ॥ ४८ ॥ साधकत्वं यतस्तस्य द्वितीये तु महेश्वरः ॥ उभयोस्तोत्रमत्रोक्तं मतांतरविभेदतः ॥ ४९ ॥ मूलासुरस्वभावत्वात्कालकूटं हरेः पुरा ॥ अक्तत्वेव तु कार्यं हि प्रजासु समुपागतम् ॥ ५० ॥ उत्पत्तिः प्रथमं तस्य दोषाभावाय केवलम् ॥ महादेवोदरे सर्वे मुक्ता एव वसंति हि ॥ ५१ ॥ अतोऽयं सर्वदोषात्मा कालकूटाभिधासुरः ॥ मुच्यतामिति यत्नेन महादेवेन भक्षितः ॥ ५२ ॥ अग्रेर्मुखादपगतो दोषयुक्तो महान् यतः ॥ आसनेन निरुद्धस्तु कण्ठ एव व्यवस्थितः ॥ ५३ ॥ स दोषख्यापनार्थाय कंठो नीलो बभूव ह ॥ महाप्रलयसिध्यर्थं तत्रैव स्थापितो महान् ॥ ५४ ॥ अत एव हरिः प्रीतो भवानी चान्वमोदत ॥ ततस्त्रिभिरिहाध्यायैर्दानरूपं निरूप्यते ॥ ५५ ॥ देयोत्पत्तिर्दानकर्म जीर्णनां तं च तत्फलम् ॥ क्रमेणैतत्त्रयं प्रोक्तमध्यायत्रितयेन हि ॥ ५६ ॥ सच्चिदानंदरूपं हि ब्रह्म पूर्वोक्तमुत्तमम् ॥ सदंशानां सर्वसिध्ये धेन्वादीनामिहोद्गमः ॥ ५७ ॥ सदानंदस्तादृशो हि मुख्यानंदो रमा स्मृता ॥ अमृतं तु चिदानंदः स जीवार्थं हि युज्यते ॥ ५८ ॥ सर्वं यद्भवेल्लोके विभागं नैव गच्छति ॥ तत्स्वेच्छयैव यद्गामी स भुंक्ते ना-

१ इत्यत्र ॥ २ जीर्णयात्तम् ॥ ३ प्र याति ॥

ऽपरः कश्चित् ॥ ५९ ॥ स्वयंवरस्ततः प्रोक्तो लक्ष्म्यास्तस्यास्तथा ब्रह्मानंदस्वरूपा हि महद्ब्रह्मेति शब्दिता ॥ ६० ॥ भोक्ता तस्य हरेर्न दोषयोगान्न चाऽन्यथा ॥ आधिदैविकमेषा हि मध्यमं त्वमृतं मतम् ॥६ समुद्रात्रितयं जातं तेन दाता स रूप्यते ॥ हरणांतामृतोत्पत्तिः स्व निरूपिता ॥ ६२ ॥ अन्यथा न भवेद्दानं गृहभोजकपाकवत् ॥ पितृतो यथोत्पत्तिस्तथा ज्ञापयितुं पुनः ॥ ६३ ॥ धन्वंतरिस्वरूपेण घटहस्तो ह ॥ मातृतस्तु यथोत्पत्तिस्तथा ज्ञापयितुं पुनः ॥ ६४ ॥ मायारूपेण वान् घटहस्तः पुनर्बभौ ॥ एवं रूपद्वयेनेशोऽमृतमुत्पाद्य दुर्लभम् ॥ ६५ सत्पात्ररूपानखिलान् पाययामास गोपतिः ॥ सर्वेणापि कृतं दानं कृतं भवेत् ॥ ६६ ॥ इति दर्शयितुं कृष्णः स्वयं दाता बभूव ह ॥ समुद्रो हि जामाता तु हरिः पुनः ॥ ६७ ॥ अतः श्वशुरकृत्यं हि चक्रे तथाविधः॥ दैत्येभ्यो वारुणी दत्ता सा वृक्षाद्वेद्विनिर्गता ॥ ६८ ॥ अमृतस्येव धाराऽभूद्यथापात्रं हि दीयते ॥ स्वर्भानुरेकस्तत्रत्यो ज्ञापनार्थं तु पायितः ॥ ६९ ॥ मारितोऽन्यानिवेशाय सूर्यचंद्रौ हिं कालगौ ॥ सूचयामासतुर्यस्मादतो ग्रहणभागिनौ ॥ ७० ॥ मुख्यत्वज्ञापनार्थाय ग्रहणं तेन रूप्यते ॥ सुखरूपं फलं कृष्णात्सतामिति निरूपितम् ॥ ७१ ॥ अक्षयं त्वमृतं यस्मादतः पीतं पुनर्मुखात् ॥ उद्धृत्य स्वस्य भोगार्थं कर्तव्यमिति निश्चयात् ॥ ७२ ॥ मथने तु यथा यत्ता आहवेपि तथा सुराः ॥ अमृतं तु कृतमत्वशंकया नोपकारकृत् ॥ ७३ ॥ ततः स्वयं हरिर्गत्वा जघानाऽसुरपुंगवान् ॥ ततः कृतमताशंकानिवृत्तेत्यमृतं पुनः ॥ ७४ ॥ स्वकार्यं कृतवचेन स्वयं युयुधिरेऽमराः ॥ दानस्य फलमेतद्धि सर्वं स्वर्गादिकं यतः ॥ ७५ ॥ बलिस्तु हत एवासीन्निवृत्ताश्च तथापराः ॥ वस्तुतः फलमेतावच्छंकाभावाय रूप्यते ॥ ७६ ॥ महादेवस्य संमोहो ह्यन्यथा तं समाश्रिताः ॥ पुनर्दुःखमकर्तारो दैत्याः स्युः सर्वथाऽचिरात् ॥ ७७ ॥ तस्मिन्मन्वंतरे जाते यदि दैत्याः पुनः सुरान् ॥ बाधेरन्नामृतस्याऽस्य पानं स्याद्व्यर्थमेव हि ॥ ७८ ॥ मन्वंतराणि सर्वाणि ततः प्रोक्तान्यनुक्रमात् ॥ आवेशिनस्तु ते सर्वे देवा मन्वंतरेषु हि ॥ ७९ ॥ षड्भिः संपद्यते धर्म इति सर्वकृतं पृथक् ॥ निरूप्य

१ प्रतारकौ । २ तत्र स्वयम् । ३ स्वय ॥

हरिणा सर्वं सिध्यतीति निरूप्यते ॥ ८० ॥ एवं दशभिरध्यायैः सर्वदानं निरूपितम् ॥ स्वोक्तनिर्वाहधर्मं तु नवभिः प्रोच्यते गुणैः ॥ ८१ ॥ कथंचित्संपदि प्रोक्तं नाऽन्यथा कार्यमापदि ॥ अशक्यं सर्वथा नास्ति यदि चित्तं तथा भवेत् ॥ ८२ ॥ बलिरत्र तथा धर्मप्रवर्तक उदीर्यते ॥ दातुरेकेन दानस्य सामर्थ्यमिह रूप्यते ॥ ८३ ॥ याचनार्थं भगवतः प्रसंगस्त्रिभिरुच्यते ॥ ततो याचनमेकेन दानं चान्येन रूप्यते ॥ ८४ ॥ अन्यथाकरणाद्बंध एकेन प्रतिपादितः ॥ यथार्थकरणान्मुक्तो वरान् लेभे सुदुर्लभान् ॥ ८५ ॥ अभीप्सितार्थसिध्यर्थं स्थापनं चाऽपरेण हि ॥ एवं नवभिरध्यायैः फलसाधनसंयुतम् ॥ ८६ ॥ सत्यवाक्यं हि सद्धर्मरूपमत्र निरूपितम् ॥ राजसो राजसैर्युक्तः कर्ता राजस उच्यते ॥ ८७ ॥ व्रतं तु तामसं प्रोक्तं सत्त्वयुक्तं द्वितीयके ॥ प्रसादः सात्विकः प्रोक्तो रजोयुक्तस्तृतीयके ॥ ८८ ॥ अवतारस्तथा प्रोक्तस्तमसाच्छलभावतः ॥ याचनं राजसं प्रोक्तं वचनं तामसं मतम् ॥ ८९ ॥ सत्वेन रजसा युक्तं षडध्याया इमे मताः ॥ दानं तु सात्विकं प्रोक्तं प्रतिबंधस्तु तामसः ॥ ९० ॥ कीर्तिसाहससंयुक्तं सराजसमिहोच्यते ॥ अन्यथाकरणाद् दुःखं यथार्थकरणात्सुखम् ॥ ९१ ॥ पूर्वार्धस्यापि संसिद्धिरुपपत्तिफले त्रिधा ॥ विप्रकर्म हरीणां हि प्रसादः कारणं त्रिधा ॥ ९२ ॥ अज्ञानज्ञानदाने हि बंधनं फलमेतयोः ॥ त्रिभिर्दानमिह प्रोक्तं मुख्यं दानं फले मतम् ॥ ९३ ॥ हेतुर्दानं फलं चेति त्रिभिस्त्रिभिरिहोच्यते ॥ विभज्य दानं पूर्वोक्तमसर्वस्वं च तत्पुनः ॥ ९४ ॥ एकस्मै सर्वदानं च ततः [3]श्रेष्ठं तृतीयके ॥ अयमेव हि सद्धर्मो यथाऽयं बलिना कृतः ॥ ९५ ॥ निर्वाहस्तस्य हरिणा तेन भक्तेः पुरोदितः ॥ लक्ष्मीदानं यथा तत्तु मध्यमं परिकीर्तितम् ॥ ९६ ॥ शरणागतिरापत्सु ततोऽपि प्रथमं मतम् ॥ एवं सद्धर्मनिर्धारो हरये यदि सर्वदा ॥ ९७ ॥ सर्वथा शरणं गत्वा श्रेष्ठं तस्मै निवेद्य च ॥ तदीयेभ्यो यथाकामं दत्वा तस्येच्छया पुनः ॥ ९८ ॥ कृष्णस्यैव तु कृष्णाय दद्यात्स्वं स्वात्मना सह ॥ तृतीयस्यायमर्थस्तु यस्मै कस्मै यदा हरिः ॥ ९९ ॥ आत्मानं वा स्वकीयं वा विभजेत्तत्तथाऽस्त्विति ॥ अभिमानं परित्यज्य तत्तथेत्यनुमोदयेत् ॥ १०० ॥ शत्रुभ्यः स्वस्य यद्दानं तदा सद्यं

१ तरगा ॥ २ यथार्थकरणात्सुखम् ॥ ३ श्रेय ॥

हि सर्वथा ॥ एतत्त्रयं हरिर्मत्स्यः स्वयं वेद न चाऽपरः ॥ १०१ ॥
मनोरर्थे यतोऽयं स्वयमागतः ॥ अस्मिन्मन्वंतरे येन सद्धर्मोद्वासनां दहे
॥ १०२ ॥ नान्यथेति प्रसिध्यर्थमत्र मत्स्यनिरूपणम् ॥ मत्स्यादन्यो
न वेदेति विनिश्चयः ॥ १०३ ॥ वेदोद्धारो यतस्तेन कृतो नान्येन केनचित्
एवं गुरूक्तमार्गेण सद्धर्मं यः समाचरेत् ॥ १०४ ॥ दुर्वासनाः समस्ता
दहेदिति विनिश्चयः ॥ १०५ ॥ इतिश्रीविष्णुस्वामिमतवर्तिवल्लभदीक्षित-
विरचिते श्रीभागवततत्वदीपनिबंधे अष्टमस्कंधविवरणे दशमं प्रकरणम् ॥





# अथ तत्त्वार्थदीपनिबंधे

भागवतार्थप्रकरणे

## नवमस्कंधविवरणं प्रारभ्यते.

श्रीकृष्णाय नमः ॥ चतुर्विंशतिभिः प्रोक्तः सद्धर्मो वासनाक्षये ॥ तथा चेत्क्रियमाणस्य कृष्णे चेद्वासना शुभा ॥ १ ॥ जीवस्वभावतो जाता तदा भक्तिर्न चेतरत् ॥ चतुर्विंशतिभिः प्रोक्ता नवमे भक्तिरुत्तमा ॥ २ ॥ ईशस्याऽनुकथारूपा यया स्यात्पुरुषो हरेः ॥ सर्वप्रकृतिभावेन यदि कृष्णं स सेवते ॥ ३ ॥ लौकिकेन समस्तेन तल्लीलामनुसृत्य हि ॥ तदा लौकिकभावेषु कृष्णस्याऽनुप्रवेशतः ॥ ४ ॥ न निर्बंधो मानसः स्यादितीशानुकथाधिका ॥ चतुर्विंशतिभिः प्रोक्ता सद्धर्माच्च विशिष्यते ॥ ५ ॥ ईशानुसारिणी यस्माज्जन्मावध्यखिलाक्रिया ॥ हरिः स्वयं तानादाय स्वकीयान् कर्तुमत्र हि ॥ ६ ॥ ज्ञानाज्ञानविभेदेन तज्ज्ञापयितुमत्र हि ॥ अवतीर्णः सूर्यसोमवंशयोरुभयोस्तथा ॥ ७ ॥ द्वादशात्मा पूर्णगुणः पुराणः पुरुषो यतः ॥ अंतो द्वादशभिः प्रोक्तो वंशः पूर्वस्तथापरः ॥ ८ ॥ चंद्रवंशकथां प्राह जघन्यत्वनिवृत्तये ॥ जीवरूपेण सूर्यस्य ततो वंशनिरूपणम् ॥ ९ ॥ अतोऽध्यायाः समाः प्रोक्ता उभयोर्द्वादशैव हि ॥ भक्तिर्नानाविधा त्वत्र कृष्णलीलानुसारतः ॥ १० ॥ सर्वेषां तु फलं मोक्षो जीवतां हरिणा सह ॥ लीलया परमं सौख्यं ततो भक्तिरिहोच्यते ॥ ११ ॥ यदा तु भगवान् साक्षादवतीर्णो रमापतिः ॥ प्रमेयबलमासाद्य तदा मुक्ता भवंति हि ॥ १२ ॥ अग्रे तत्कीर्तिसंकीर्त्यां ततः पूर्वं तु ये नृपाः ॥ मर्यादापुष्टिभेदेन वंशजाः सूर्यसोमयोः ॥ १३ ॥ तत्र सूर्यप्रसूता हि गुणैर्नवविधा मताः ॥ यथा यथा शुद्धभक्तास्तथा दोषवियोगतः ॥ १४ ॥ महानुभावा जायंते इति तेषां कथोच्यते ॥ मोक्षे तुल्येपि सर्वेषामनुभावोऽधिकः स्मृतः ॥ १५ ॥ वैराग्यज्ञानसहिता आद्याः शास्त्रोत्तमा मताः ॥ द्वितीया वेदनिष्ठेभ्योऽप्यधिका लोकतोऽपि च ॥ १६ ॥ लोकोद्धारप्रयत्नास्तु तृतीयाः सर्वमोचकाः ॥ सुद्युम्नकविशर्यातिप्रमुखाः प्रथमा मताः ॥ १७ ॥ नाभागश्चांबरीषश्च शशादाद्याश्च मध्यमाः ॥ हरिश्चंद्रश्च सगरो भगीरथमुखाः परे ॥ १८ ॥

स्त्रीपुंभावं गतस्त्वाद्यः सर्वकामनिवृत्तये ॥ ब्रह्मणा स्त्रीत्वमापन्नो विष्णुना पुरुषोऽभवत् ॥ १९ ॥ उभयं तु महादेवाद्विरक्तोऽभूत्रिभिस्तथा ॥ वंशद्वयस्य जनको मूलभूतस्तनुर्हरेः ॥ २० ॥ नानाभावत्वमापन्नस्तेनाऽऽद्यः स उदीर्यते ॥ पृषध्रश्च कविश्चैव करूषो धृष्ट एव च ॥ २१ ॥ नृगश्चैव नरिष्यंतो दिष्टाद्याश्च ततः परे ॥ मरुत्तः सप्तमः प्रोक्तो भगवान् सप्तरूपधृक् ॥ २२ ॥ कर्मणा शापतो हीनो ज्ञानात्मा मुक्तिमेयिवान् ॥ कविर्वैराग्यरूपस्तु करूषः कीर्तिरूपधृक् ॥ २३ ॥ धृष्टो वीर्यस्वरूपस्तु ब्राह्मणा अभवन् यतः ॥ नृगःश्रीः स्त्रीकथा चान्ते नरिष्यंतस्तथेश्वरः ॥ २४ ॥ मरुत्तस्तु हरिर्धर्मोत्तस्मादेते तु राजसाः ॥ शर्यातिः सात्विकः प्रोक्तः स्वतो धर्मप्रवर्तकः ॥२५॥ यज्ञप्रवर्तकानां च सर्वकामप्रपूरकः ॥ ब्रह्माद्यनुग्रहयुतो भगवद्भावसंयुतः २६ वेदवद्यज्ञकर्ता च त्रिविधाः प्रथमा मताः ॥ भक्तिश्चेत्स्वानुभावं हि न प्रकाशयते यदा ॥ २७ ॥ तदा धर्मत्वमापन्ना न भक्तित्वं प्रपद्यते ॥ देवप्रसादयुक्तत्वं देवत्वं देवपोषणम् ॥ २८ ॥ उत्तरोत्तरमुत्कृष्टं तस्मादेवं निरूपितम् ॥ मंत्रद्रष्टा शंभुसमस्तस्यापि परितोषकृत् ॥ २९ ॥ मध्यमे प्रथमः प्रोक्तो द्वितीयो भगवत्समः ॥ अक्षरादुत्तमः कृष्णः स एवाक्षरवीर्यनुत् ३० स एव ब्रह्मशापस्य निराकर्ता न चापरः ॥ कालात्मा सेवितस्तेन व्रतेन न ततः परः ॥ ३१ ॥ अतो व्रतेन सेवार्थं तथा चक्रे हरिः परः ॥ अशनाभाव एवैको विष्णुव्रतमुदीर्यते ॥ ३२ ॥ एकादशी ततः पुण्या व्रतानामुत्तमोत्तमा ॥ उभयात्मकमब्भक्षस्तेनासौ मध्यमो मतः ॥ ३३ ॥ ब्रह्मशापः कायिकस्तु तस्मात्प्रतिहतोऽभवत् ॥ तेषां वाचनिको मुख्यो यो न प्रतिहतः क्वचित् ॥ ३४ ॥ ईश्वराज्ञावशात्ते तु वाचिकं हि प्रयुञ्जते ॥ सर्पेण मारणं लोके न तथा व्यथते क्वचित्॥३५॥ यथा दंशस्तथा विप्रा एकोपि यदि संमतम्॥ न समर्थस्तथा वाचि ब्राह्मणोऽन्यः कथंचन ॥३६॥ मानसो दोषभावस्तु ब्राह्मणे न भवेत्कचित् ॥ ब्राह्मणत्वं तदा न स्याज्जगन्मित्रं यतः स्मृतः ॥३७॥ वागेका सर्वविप्राणां काय एव विभिद्यते ॥ बहूनां संमतिर्मुख्या तत्रापीति विनिश्चयः ॥ ३८ ॥ शिवस्य त्रीणि रूपाणि दुर्वासास्त्वाधिभौतिकः ॥ चक्रमाध्यात्मिकं प्रोक्तमधिदैवस्तु तद्वशे ॥ ३९ ॥ ब्राह्मणोक्तस्य करणान्न

१ यज्ञ । २ स्वतः ।

ब्रह्माऽमोचयन्मुनिम् ॥ ब्रह्मण्योऽपि हरिस्तस्य व्रतार्थं न व्यमोचयत् ॥४०॥ सेवायास्तु प्रशंसा तु मुनेर्गर्वापनुत्तये ॥ अन्यथा मोचने तस्य भक्तानां का क्षतिर्भवेत् ॥ ४१ ॥ वैषम्यं चेद्भगवति न शुद्धाः स्युस्तदा तथा ॥ परीक्षार्थं च भक्तानां गर्वे न स्यात्तथा भजिः ॥ ४२ ॥ त्रिलोक्यां ब्राह्मणाः श्रेष्ठा भक्तानां न प्रयोजकाः ॥ ब्रह्मभावात्तु भक्तिर्हि विशिष्टेत्यत्र निर्णयः ॥ ४३ ॥ सुदर्शनपुरस्कारः काल एव तथा भवेत् ॥ भक्तौ न भगवान् मृग्यः सेवकश्च भवेद्ध्रुवम् ॥ ४४ ॥ सुदर्शनेन तु कृतः सेवाधर्मो न चान्यथा ॥ स्तोत्रं गर्वप्रणाशाय भक्तौ तद्बाधकं यतः ॥ ४५ ॥ मतांतरकथा त्वत्र वाक्शाप इति केचन ॥ तदा निरोधलीलायां प्रवेश इति निश्चयः ॥ ४६ ॥ वरदानं वाचनिकं भगवत्कार्यमेव तत् ॥ शशादस्य कथा त्वत्र निरपेक्षत्वबोधने ॥ ४७ ॥ हरेर्निवेदनं चात्र तेन राज्ये व्यवस्थितिः ॥ भक्तिश्च कर्मतः श्रेष्ठा यथा ब्राह्मणभावतः ॥ ४८ ॥ तस्य सर्वोत्तमत्वाय ककुत्स्थः सुत ईरितः ॥ धुंधुमारादिवंशस्य कर्ता विप्रे प्रतिष्ठितः ॥ ४९ ॥ एवं त्रयो मध्यमा हि भक्तिमार्गे निरूपिताः ॥ धैर्ययुक्तो हरिश्चंद्र उत्तमे प्रथमो मतः ॥ ५० ॥ तस्य भक्तिप्रशंसार्थं पितुश्चंडालतोच्यते ॥ नैरपेक्ष्यं च तस्यापि दोषः प्राक्तन एव सः ॥ ५१ ॥ भक्त्यैव तादृशो जातः पुत्रद्वारा विमोचितः ॥ सत्यव्रत इति ख्यातस्त्रिशंकुरिति विश्रुतः ॥ ५२ ॥ विश्वामित्रः पुष्टिकर्ता नान्यथा तं भजेत्कचित् ॥ अतिसाहसकर्ताऽत्र हरिश्चंद्रो निरूप्यते ॥ ५३ ॥ लोकापवादशांत्यर्थं पुत्रार्थं तस्य चोद्यमः ॥ ऋणत्रयनिवृत्तिर्हि ततः कार्यं न चापरम् ॥ ५४ ॥ इति दर्शयितुं तेन यंज इत्याह नान्यथा ॥ ततः सिद्धस्य दानं हि तस्मै युक्तं हि सर्वथा ॥ ५५ ॥ अनेन सर्वे विषया हरिदत्ता हरौ परे ॥ निवेशनीया भक्तानामित्यर्थो विनिरूप्यते ॥ ५६ ॥ वरुणो दैत्यराजो हि क्रूरं कर्म तथाविधम् ॥ तथापि भक्तपुत्रत्वान्न मारणमुपागतः ॥ ५७ ॥ तेनापि यो गृहीतोऽत्र सोपि कृष्णेन मोचितः ॥ अभक्तहृदयं क्रूरमिति ज्ञापयितुं तथा ॥५८॥ अजीगर्तकथा प्रोक्ता विश्वामित्रस्तु पुष्टिगः ॥ यजनं दोषनिर्हृत्यै विसर्गे स विचारितः ॥ ५९ ॥ ऋत्विजस्तु ततः पुष्टाः सर्व एव निरूपिताः ॥ सगरस्तु ततः श्रेष्ठः सागरो

१ धैर्य। २ दास। ३ यज्ञ।

यत्सुतैः कृतः ॥ ६० ॥ स्थिरकार्यस्य कर्ता यः स श्रेष्ठोऽत्र निरूप्यते। पुत्रापराधो गरता योगभ्रष्टजनेस्तथा ॥ ६१ ॥ असमंजस इत्युक्तो [1] पितुः सुखे ॥ कर्मज्ञानादिकं तत्र प्रक्रियाया विरोधतः ॥ ६२ ॥ न मुख्यं भवितुं युक्तं महत्त्वख्यापकं परम् ॥ अंशुमाँश्च दिलीपश्च बीजशुध्द्ये निरूपितौ ॥ ६३ ॥ भगीरथस्त्वत्र मुख्यो भागीरथ्याः प्रवर्तकः ॥ भागीरथ्याः स्वरूपं तु प्रथमे टीकयोदितम् ॥ ६४ ॥ तादृशार्थप्रवृत्तिर्हि भक्तेः कार्यमिहोत्तमम् ॥ मर्यादाभक्तिमार्गस्य काष्ठा गंगा परा मता ॥ ६५ ॥ ग्राहिका शक्तिरस्यां हि तेन पापस्य संग्रहः ॥ भक्तेभ्य एव तद्दानं तेन पूर्वं निवारितम् ॥ ६६ ॥ पश्चाज्ज्ञात्वा हरेराज्ञां सतामिच्छा प्रवर्तिता ॥ मूलभूतो जीवराशेस्ततः सर्वार्थमेव हि ॥ ६७ ॥ धारयामास तां गंगां येन सर्वे विमोचिताः ॥ अन्यथा देहसंबंधेनाऽऽत्मगामि भवेज्जलम् ॥ ६८ ॥ अविद्यां जीवसंबद्धां कथमेव विमोचयेत् ॥ विद्यया चेतिवाक्येन गंगाऽविद्याविमोचिका ॥ ६९ ॥ देहभावे दृढे तु स्याद्भक्तानां कृष्णदासता ॥ सायुज्यमन्यथा तस्मिन् गंगातीरे न संशयः ॥ ७० ॥ दैत्यानामूर्ध्वगमनं विचित्रं कार्यमुच्यते ॥ अतः सर्वगतिः प्रोक्ता नैतावदिह कारणम् ॥ ७१ ॥ सौदासस्य कथा त्वत्र भक्तिमुख्यत्वसिद्धये ॥ स्त्रीप्राधान्यं भक्तियोगो ज्ञानयुक्तत्वसिद्धये ॥ ७२ ॥ ब्रह्मबीजाद्वंशकथा खट्वांगे हि द्वयं स्थितम् ॥ क्षणात्कृष्णस्मृतौ तस्य मुक्तिरुक्ताऽनपायिनी ॥ ७३ ॥ परमा भक्तिमार्गस्य काष्ठेयमिति निश्चयः ॥ ईशानुरूपभक्तानां कथेयं विनिरूपिता ॥ ७४ ॥ ईशस्य चेत्कथा न स्यात्तदनुत्वं न वै भवेत् ॥ तत ईशकथां प्राह द्वाभ्यां ज्ञानेन संयुताम् ॥ ७५ ॥ क्रियाशक्तिर्भक्तिनिष्ठा ज्ञानं चेति त्रिभिः क्रमात् ॥ जनकाज्ञानरूपा हि भक्तिरूपा तयोन्नतिः ॥ ७६ ॥ क्रियारूपं चरित्रं हि तदादौ सुनिरूपितम् ॥ मध्यंदिने हरेर्जन्म सूर्यवंशे तदा रविः ॥ ७७ ॥ अत्यंतं तपतीत्यस्य स्वस्मिन् तेज उपाददे ॥ यावंतो धर्मसचिवास्ततो नाशमुपागताः ॥ ७८ ॥ नवम्यां भगवज्जन्म नवग्रहबलाय हि ॥ पुष्ये पङ्गणसंयुक्तश्चतुर्मूर्तिर्हरिर्विभौ [2] ॥ ७९ ॥ योगिनां ध्यानविषयः सोऽवतारो न नाऽपरः ॥ इति दर्शयितुं पूर्वं नत्वा चरितमुक्तवान् ॥ ८० ॥ योगिनां

१ शुद्धौ । २ भागे ।

रक्षकं रूपं तदैवेति तथा वचः ॥ मोहकं बहुलं तत्र तेन वीर्यप्रकाशकम् ॥८१॥ भक्त्यर्थं संहितायां हि तदेव विनिरूपितम् ॥ ताडकाया वधो नोक्तः स्त्रीत्वान्नास्त्यत्र पौरुषम् ॥ ८२ ॥ मारीचरूपस्तत्रैव विश्वामित्राध्वरे हतः ॥ रूपान्तरेण पश्चात्तु कारणार्थं तथाऽऽकृतिः ॥ ८३ ॥ धनुःसज्जीकृतौ तुल्यो हरेण न ततोऽधिकः ॥ अतो बभंज सीतायै जितः कन्यां हरो ददौ ॥८४॥ विवाहादिसुखं लोके क्षत्रियाणां विशेषतः ॥ अतः क्षत्रियभावाय सीतार्थं भार्गवैर्मृधः ॥ ८५ ॥ अवतारेण युद्धं हि मोहनार्थं विनिश्चयः ॥ लोके प्राकृतभावश्चेत्तच्छौर्यं स्नेहबोधकम् ॥ ८६ ॥ देवगुह्यत्वसिध्यर्थमुभयोः कलहः परः ॥ अथवा रघुनाथो हि पुरुषोत्तम उच्यते ॥ ८७ ॥ गुणावतारसंमत्यै विश्वामित्रात्तथा शिवात् ॥ भार्गवादपि यत्तेजः स्वस्मिन्नेव निरूपितम् ॥ ८८ ॥ वनवासादिलीला तु कार्यार्थं मोहनाय हि[1] ॥ सीताया हरणं नास्ति नैर्यण्ये[2] सांतिकं कृता ॥ ८९ ॥ तेनैव निर्मिता माया तामग्नौ विनिवेश्य तु ॥ हत्वा रावणमत्युग्रं स्वां गृहीत्वा पुरं ययौ ॥ ९० ॥ सेतुबंधनमत्रैकं चरितं परमं मतम् ॥ दोषाभावाय नारीणां लंकास्थानान्निरूप्यते ॥ ९१ ॥ भाषा तु लौकिकी त्वन्या तयापि स्यात्कृतार्थता ॥ इति दर्शयितुं रामचरितं तादृशं जगौ ॥ ९२ ॥ वैदिकं चापि सुमहदश्वमेधादिकं तथा ॥ सहस्रं च शतं चैवमश्वमेधाँश्चकार ह ॥ ९३ ॥ लौकिकं भावमापन्नो लौकिकानां विमोक्षणे ॥ सर्ववेदः स यज्ञेन राम एवेष्टवान् भुवि ॥ ९४ ॥ ज्ञानाधिकारिविप्रेभ्यो ज्ञानं चैवाऽतुलं ददौ ॥ ऊतिन्यायेन भगवान् सीतां निःसारयन् क्वचित् ॥ ९५ ॥ लौकिकीं स्थापयन् भाषां लोकवार्तामथाऽशृणोत् ॥ भक्तिमार्गप्रभुर्यर्हि लौकिकं चेत्प्रकाशयेत् ॥ ९६ ॥ तदेव लौकिकैर्भक्तिः कर्तुं शक्या न चान्यथा ॥ इति निश्चित्य रामो हि स्थानभक्तौ निरूपितः ॥ ९७ ॥ चतुर्मूर्तेश्चरित्रं हि वंशेश्चापि निरूप्यते ॥ वंशेपि चरितं तस्य तेनाध्यायत्रयं मतम् ॥ ९८ ॥ भक्तिमार्गे स्वामिधर्मः सुकृतज्ञत्वलक्षणः ॥ रघुनाथे स नाऽन्यत्र तेनेशोऽत्र निरूपितः ॥ ९९ ॥ लौकिकोऽत्र गुणः शुद्धो गृहीतो न तु दोषयुक् ॥ अतो भ्रातृकथाप्रश्नो भ्रातृसौख्यत्वमुत्तरम् ॥ १०० ॥ गृहे स्थितस्य राज्ञो हि सन्मानं न तु लौकिके ॥ अतो

१ च । २ गार्हपत्येन नगणादित्तोनर्थः । ३ मंगला ।

लोकस्य सन्मानमंते प्राह विशेषतः ॥ १०१ ॥
व्यास्तदन्वये ॥ एकाधिका देवगणास्ततो जाता इतीरितम् ॥ १०२ ॥
तत्रोक्ता योगनिष्ठा हि बोधनात्करणादपि ॥ ज्ञानशक्तिस्तु सीता हि जनकान्वयसंभवा ॥ १०३ ॥ ज्ञानशक्तिर्हरेर्वक्तुं जनकान्वय उच्यते ॥ ज्ञानमिश्रा तु या भक्तिः सा मुख्येति निरूप्यते ॥ १०४ ॥ निमेः कथा ततः प्रोक्ता ज्ञानवैराग्यसंयुता ॥ गुरुवाक्यातिरेकेण यज्ञः सिध्यति नैव हि ॥ १०५ ॥ अतः शापप्रसंगो हि ज्ञानित्वात्तस्य चोच्यते ॥ भक्तेः प्रकरणार्थत्वाद्वसिष्ठोपि विमुच्यते ॥१०६॥ तथा निमिर्ददौ शापं भक्तौ सर्वमबाधकम् ॥अतो गतिर्निमेः श्रेष्ठा न वशिष्ठस्य कर्हिचित् ॥ १०७ ॥ भक्तिमार्गस्य मुख्यत्वाद्वैरेयापुत्रो न दुष्यति ॥ भगवद्दर्शने दोषो निमेश्चापि भविष्यति॥१०८॥ ज्ञानस्य च व्यवच्छेदस्तस्माद्ब्राह्मण उत्तमः ॥ लौकिकाः कर्मनिष्ठाश्च पश्चादीशानुगाः स्मृताः ॥ १०९ ॥ ज्ञाननिष्ठास्त्वग्रतो हि तस्मादेवं निरूपिताः ॥ पुष्टिमार्गस्थितान् भक्तान् वक्तुं सोमान्वयो मतः॥ ११० ॥ जन्मना कर्मणा शुद्धा यदि भक्ता भवंति हि ॥ सानुभावास्तदा पुष्टाः सेवका मुरवैरिणः ॥ १११ ॥ सोमो ज्ञानांशसंभूतो ह्यत्रिनेत्रसमुद्भवः ॥ पुष्टिमार्गस्थितो यस्मात्प्रथमं विषमोऽभवत् ॥ ११२ ॥ कलंकभावस्तेनासीद्वस्तुतो यज्ञरूपधृक्॥ तस्माद्बुधादयो भक्ताः सानुभावाः प्रकीर्तिताः ॥ ११३ ॥ अत्रापि नवधा भक्ता द्वाभ्यां भार्गव उच्यते ॥ दोषं बलात्तु भक्तानां यो नाशयति सर्वथा ॥ ११४ ॥ सोमवंशोद्भवायाश्च पुत्रो रामस्तु भार्गवः ॥ मंत्रैरपि क्षत्रियाणां मंत्रिताच्च चरोरभूत् ॥ ११५ ॥ विपरीता गतिः पुष्टौ तत एकः पुरोच्यते ॥ अष्टौ चाग्रे तु वक्तव्या मध्ये द्वाभ्यां हरेः कथा ॥ ११६ ॥ अत्राऽऽविष्टो हरिश्चक्रे वंशं सरसमुत्तमम् ॥ लक्ष्मीनारायणोत्पन्नो बुधोऽत्र विनिरूपितः ॥११७॥ अन्यथा सर्वदेवानां संमतिर्न भवेदिह ॥ शुकाचार्यस्य च तथा शिवस्यापि विशेषतः ॥ ११८ ॥ स्वकीयायां रसो नैव नापि तस्याः स्वभर्तरि ॥ अतो रसमयं द्वंद्वं ताराचंद्रमसोः कृतम् ॥ ११९ ॥ सर्वेषां संमतिं ज्ञात्वा गुरुर्वेले स्पृहायुतः ॥ अतः पूर्वोक्तिभिः साकं विरोधो न भवेद् ध्रुवम् ॥१२०॥ भक्तिर्न ब्राह्मणे पुष्टा तेन राजसुतो बुधः ॥ बुध्या चात्यंतसंपन्नो निर्व्य-

१ दिग्गुणिनि । २ देत्तो पुत्रः । ३ तथाऽपि । ४ कृतौ ।

लोकस्ततो मतः ॥१२१॥ मातरं च तथा प्राह तस्माज्जातः पुरूरवाः॥तस्य वेदोद्गमत्वाय ब्रह्मावेशो निरूपितः ॥ १२२॥ विष्णुर्बुधस्ततो जातो ब्रह्मात्मा हि पुरूरवाः ॥ नारायणाद्भक्तिशक्तिरुर्वशी विनिरूपिता ॥ १२३ ॥ मित्रश्च वरुणश्चैव भोगस्थानाधिदैविकौ ॥ तयोरासक्तहृदया भक्तिर्भोगपरा भवेत् ॥ १२४ ॥ देवानां परमा भक्तिः परं भोगविवर्धिनी ॥ अतो वै सा प्रशस्ता हि मानुषेषु ततः परा ॥ १२५ ॥ अतो यत्र भवेद्भोगो भक्त्या सा न परा मता ॥ शुद्धां वक्तुं तयोः शापो जात इत्यभिधीयते ॥ १२६ ॥ सकृत्प्रवृत्ता देवत्वरक्षार्थं नाऽन्यथा क्वचित् ॥ रसाधिक्यात्पुनस्ताभ्यां प्रार्थिता नाऽभ्यनंदत ॥ १२७ ॥ अतः शप्ता नरत्वाय ताभ्यां भोगनिवृत्तये ॥ ऐश्वर्यादिगुणान् प्राप्तुं गर्भषट्कमधारयत् ॥ १२८ ॥ भोगार्थं न प्रवृत्ता सा ततो निष्ठुरभाषिणी ॥ गर्भमात्रं त्वभिप्रेतं तेन द्वयमुवाच ह ॥ १२९ ॥ भोगाभावाय नैष्ठुर्यं गर्भाय ज्ञानसंस्थितिम् ॥ तस्यामासक्तहृदयो मुक्तिमेष्यत्यसंशयम् ॥ १३० ॥ अतो मुक्तिप्रक्रियायां तन्मुक्तिर्विनिरूप्यते ॥ भक्तिसामर्थ्यसिध्यर्थं वेदोद्गम इहोच्यते ॥ १३१ ॥ एवं पुरूरवा भक्तः प्रथमं सुनिरूपितः ॥ गाधिपर्यंतमेतस्य वंशो रामप्रसिद्धये ॥ १३२ ॥ तद्वंशोत्पत्तिकथया भक्तत्वं सिद्धमेव हि ॥ पुष्टिमार्गे यदोर्वंशो ब्राह्मणानां च यातकः ॥ १३३ ॥ भक्तिमार्गे तथा पुष्टिर्न युक्तेति हरेर्मतम् ॥ दैत्येषु तादृशी पुष्टिर्न देवेष्विति निर्णयः ॥ १३४ ॥ देवांशास्तत्र वक्तव्या दोषनाशार्थमीश्वरः ॥ अर्जुनं तस्य पुत्रांश्च तत्संगादितरानपि ॥ १३५ ॥ मुख्यगौणप्रभेदेन द्वयं हंति महाबलः ॥ भक्तानां गर्वनाशाय दैत्यानां निधनाय च ॥१३६॥ गुणरूपावतरणपर्यंतं हंति बाहुजान् ॥ विप्रे मंत्रा हविर्धेनो यज्ञात्मा भार्गवो हरिः ॥ १३७ ॥ हविर्नाशे पुरा हंता मंत्रनाशे ततः परम् ॥ क्षत्रियत्वाय युक्तोपि प्रार्थनाद्ब्राह्मणोऽभवत् ॥ १३८ ॥ उभयात्मा न युक्तो हि तेन वध्योऽभवद्रिपोः ॥ रेणुका चापि भार्याऽस्य भक्तिरूपाऽऽधिदैविकी ॥ १३९ ॥ उभयात्मकेन संतुष्टः पद्ममाली हरेः प्रियः ॥ गंधर्वो नैव दोषाय द्वितीयः स पतिर्यतः ॥ १४० ॥ भक्त्यर्थं पूर्वभावं सा कृष्णावेशं विबुध्य हि ॥ कर्मासक्तिं परित्यज्य कृष्णासक्ता बभूव ह ॥ १४१ ॥ दुष्टा चेद्भगवान् रामः कथं तस्यां भविष्यति॥ द्विरूपत्वान्मुनेश्चापि क्षांतिः क्रोधोऽ-

पि जायते ॥ १४२ ॥ क्षांत्या पुत्रोपदेशस्तु क्रोधो दारेषु संस्थितः ॥ क्षत्रियभावो हि तद्रूपो राम उच्यते ॥ १४३ ॥ अतो हता सपुत्रा हि ताऽपि पितृवाक्यतः ॥ ततः क्रोधपरित्यागं वव्रे राम इति क्वचित् ॥१४४॥ वधार्थो दोषजननं मुख्यार्थो मम संमतः ॥ सोमवंशेऽवतीर्णस्य तथा न स्यात्पराक्रमः ॥ १४५ ॥ इति शंकां निराकर्तुं रावणस्य पराजयः ॥ अर्जुनं तादृशं योगैः सिद्धं रावणमोचकम् ॥ १४६ ॥ यो जिग्ये लीलयैवैकः क्षत्रियाणां विनाशकः ॥ तत्तुल्यः कोऽपरो लोक इति वक्तुं तथोच्यते ॥१४७॥ षड्गुणैर्द्धर्मिणा चैव तामसाः प्रथमं हताः ॥ तथैव राजसाः पश्चात्सात्त्विकाश्च तथैव हि ॥ १४८ ॥ सगुणेषु विनष्टेषु सर्वभावेषु सर्वशः ॥ निर्गुणा भक्तिरुत्कृष्टा लोके ख्यातिं गमिष्यति ॥ १४९ ॥ तत उर्वरिता भक्ता इति ख्यापयितुं ध्रुवम् ॥ शूरसेनो महाभक्तो मथुरायां निरूप्यते ॥ १५० ॥ तादृशाः सर्व एवाग्रे क्षत्रिया इति बोधितम् ॥ पूर्ववद्यज्ञसंपत्ती रामस्याऽत्रापि वर्ण्यते ॥ १५१ ॥ सर्वदानं भक्तिमार्गे बोधयन् पृथिवीं ददौ ॥ भारात्मकाः क्षत्रिया हि तन्नाश उपसंहृतिः ॥१५२॥ विश्वामित्रः परावृत्तौ रामस्येत्युच्यते कथा ॥ पुत्राणां च परित्यागः शुनःशेफस्य संग्रहः ॥ १५३ ॥ ब्राह्मणस्य प्रतिष्ठार्थं विश्वामित्रे निरूपितम् ॥ गोत्राणां बहुधावृत्तिरतोऽस्माद्धि निरूपिता ॥१५४॥ भक्ता अत्रापि द्विविधा वैदिका भोगतत्पराः ॥ पुरूरवा अलर्कश्च रजिश्च प्रथमा मताः ॥ १५५ ॥ धन्वंतरेरत्र जन्म दोषाभावाय पूर्ववत् ॥ नहुषश्च ययातिश्च पुरुश्चाऽप्यत्र मध्यमाः ॥ १५६ ॥ वीर्याधिक्याच्च नहुषः पूर्वस्माद्धि विशिष्यते ॥ पुष्टिभक्तपदे स्थित्वा दोषयोगाच्च मध्यमः ॥१५७॥ ययातेर्मानसं शुद्धं प्रमाणं सर्ववस्तुषु ॥ ब्राह्मणानां च जामाता वयोव्यत्यासतस्तथा ॥ १५८ ॥ मध्यमानां मध्यमस्य बंधमोक्षौ निरूपितौ ॥ तेन सर्वत्र ये भक्तास्तादृशा इति बुध्यताम् ॥ १५९ ॥ शुक्राचार्यः पुष्टिकर्ता मर्यादायां समंततः ॥ ययातिर्द्विविधः प्रोक्तस्तद्वाक्यं तत्र मन्यते ॥ १६० ॥ कामो वा कामधर्मो वा हेतुर्नाऽत्र कथंचन ॥ कृष्णेच्छा दिष्टमत्रेति पौरवान्वयशुद्धये ॥ १६१ ॥ बाह्याभ्यंतरभेदेन द्विविधो भक्तिमार्गगो ॥ मर्यादायां तु त्रिविधो तेषु पूरुर्महात्मनः ॥ १६२ ॥ राज्यस्यार्पणाद्वाक्यं पितुराग्रहसंयुतम् ॥ तथापि मातृसंबंधे वयोदानात्तु मध्यमः ॥ १६३ ॥ बोध-

नीयः परं युत्तया ब्राह्मणः प्राथ्यंते परम् ॥ भक्तसंगात्तु नहुपो मोक्षं प्राप्स्यति निश्चितम् ॥ १६४ ॥ ययातिर्वासनाशांत्यै कामसंपूरणाय च ॥ अन्यतारुण्यमादाय भोगान् भुंक्तेऽविचार्य हि ॥ १६५ ॥ भोगा दोषात्मका नित्यमिति वक्तुमजाकथा ॥ भार्यायाः कामशांत्यर्थं प्रतिबंधनिवृत्तये ॥ १६६ ॥ वैराग्यं जनयन् प्राह वस्तुतत्त्वं च बोधयन् ॥ यत्पृथिव्यां व्रीहियवमित्यादि वचनं हृदि॥१६७॥ स्वार्थं प्राह स्वविज्ञानदार्ढ्यं सम्यक् प्रबोधयन् ॥ बाधाभावाय भत्रैव बोधितोऽपि व्यमुच्यत ॥ १६८ ॥ ययातेः कार्यसंसिद्धिर्बोधनाय निरूपिता ॥ पूरोर्मुक्तिस्तु सिद्धैव वंशशुध्या निरूप्यते ॥ १६९ ॥ वैष्णवा ब्राह्मणाश्चैव जायंते यत्र सर्वदा ॥ भरतो रंतिदेवश्च यदुश्चाऽप्युत्तमास्त्रयः ॥१७०॥ सामर्थ्यधैर्यभक्तीनां येषु काष्ठा पुरा स्थिता ॥ उत्तरावधिराजानः पूर्वधर्मसमा इह ॥ १७१ ॥ तेन सर्वे नवस्येव प्रविशंति नरोत्तमाः ॥ भक्त्यंते भगवान् साक्षादाविरासीदितीर्यते ॥ १७२ ॥ भक्तिवद्रूपसंपत्त्या सर्वान् मोचयितुं क्षमः ॥ उपाख्यानानि सर्वाणि तत्तद्भक्तेषु राजसु ॥ १७३ ॥ दोषनिर्हरणार्थानि वैदर्भोदीनुवाच ह ॥ रूपे चरित्रसंबंधस्तथा तच्छ्रवणादिकम् ॥ १७४ ॥ नोपयुक्तं विनिश्चित्य संक्षेपेणाऽऽह तं बुधः ॥ अग्रे विस्तारकथनं निरोधार्थं भविष्यति ॥ १७५ ॥ वस्तुतः सकला भक्तिः पुष्टावेवोपयुज्यते ॥ पुष्टौ रूपं परा काष्ठा तेनांते रूपवर्णनम् ॥ १७६ ॥ क्रियाशक्तिर्ज्ञानशक्तिर्लौकिकं वैदिकं तथा ॥ मनःसंगप्रसिध्यर्थं संक्षेपेण द्वयं जगौ ॥ १७७ ॥ इतिश्रीवल्लभदीक्षितविरचितं श्रीभागवततत्त्वदीपे निबंधे नवमस्कंधविवरणम्॥

१ परः। २ चरित्रसंदर्भः। चरित्रं संदर्भः।



# अथ तत्त्वार्थदीपनिबंधे

### भागवतार्थप्रकरणे

## दशमस्कंधविवरणं प्रारभ्यते.



श्रीकृष्णाय नमः ॥ चतुर्विंशतिधा भिन्ना भक्तिरुक्ताऽतिदुर्लभा ॥ स
शीतिरथाध्याया निरोधे दशमे मताः ॥ १ ॥ नवत्यध्यायसंदर्भो जातः
मभावतः ॥ केषांचिदत्र संदेहः स्कंधार्थे प्रकटो महान् ॥ २ ॥ तन्निवृत्त्यर्थ
मधुना सर्वनिर्णयपूर्वकम् ॥ दशमार्थः प्रकरणाध्यायार्थश्च विचार्यते ॥ ३ ॥
नवलक्षणलक्ष्यो हि कृष्णस्तस्य निरूपणात् ॥ आश्रयः क्रम [illegible]
वेति संशयः ॥ ४ ॥ लीलानिर्धारको ह्यर्थः क्रममात्रं तु दुर्लभम् ॥ [illegible]
चिच्छ्रवणं सफलत्वाय कल्पते ॥ ५ ॥ निरोधः प्रलयो लोके प्रसिद्धः प्रकृते
न सः ॥ प्रतीतो द्वादशे चैव महत्वाच्छुद्धलीलया ॥ ६ ॥ सहितो ह्याश्रयः
स्कंधे प्रतिपाद्य इतीति चेत् ॥ न हि सापेक्षरूपस्य प्रथमं सुनिरूपणम् ॥ ७ ॥
नवलक्षणसापेक्षो ह्याश्रयो रूप्यते कथम् ॥ अग्रे लीलाद्यकथा फलसिद्धौ
मृषा भवेत् ॥ ८ ॥ पूर्वोत्तरस्कंधयोश्च नश्येत्कारणकार्यता ॥ अर्थस्त्वेकाद-
शेऽप्यस्ति क्रमश्च स्वीकृतो भवेत् ॥ ९ ॥ चरित्रं दशमे मुख्यं रूपं पूर्वत्र
वर्णितम् ॥ निरोधार्थं तथा भक्तिसिध्यर्थं च हरिर्विभौ ॥ १० ॥ आश्रयो
यादृशो ह्यत्र तदर्थं न बभूव ह ॥ आश्रयो यादृशो ह्यत्र स वाच्यो द्वा-
दशे स्फुटः ॥ ११ ॥ भूभारस्य निरोधो वा तत्कर्तुर्वा न सन्मतः ॥ आद्यं
तयोरिहाभावान्मुक्तावप्यनुवृत्तितः ॥ १२ ॥ लक्षणश्चाऽप्रवेशश्च लीलाधिक्यं
तथा भवेत् ॥ तदर्थं जन्मकथनं पृथास्तोत्रविरोधि हि ॥ १३ ॥ पूर्वोत्तर-
स्कंधयोश्च नश्येत्कारणकार्यता ॥ निरोधोस्यानुशयनं प्रपंचे क्रीडनं हरेः
॥ १४ ॥ शक्तिभिर्दुर्विभाव्याभिः कृष्णस्येति हि लक्षणम् ॥ निरोधो यौगिकश्चा-
त्र रोधनात्मा सतां मतः ॥ १५ ॥ भक्ताः पूर्वत्र निर्दिष्टास्ते रोद्धव्या विमु-
क्तये ॥ कृष्णे निरुद्धकरणाद्भक्ता मुक्ता भवंति हि ॥ १६ ॥ भक्तेश्च शुध्य-
तासिध्यै प्रपंचाद्विनिवारणम् ॥ आसक्तेरात्मनि तथा निरोधार्थं न संशयः
॥ १७ ॥ प्रपंचविस्मृतिस्तस्मात् कृष्णासक्तिश्च वर्ण्यते ॥ शय्यासनाटनाला-

१ तथा । ततः ॥ २ अयमर्द्धश्लोक आदर्शपुस्तकेषु न दृश्यते ॥

पश्लोके फलिनमीरितम् ॥ १८ ॥ रूपांतरं तु नटवत्स्वीकृत्य त्रिविधान्त्रिजान् ॥ प्रपंचाभावकरणादुज्जहारेति निश्चयः ॥ १९ ॥ समुदायो जन्मवाची क्रीडायुक्तस्य वै हरेः ॥ प्रपंचविस्मृतिः शक्तिर्भक्तानां चापि योगतः ॥ २० ॥ प्रक्रियापंचकं ह्यत्र जन्मार्थं प्रथमा मता ॥ तामसानां तु भक्तानामुद्धृत्ये तु ततः परा ॥ २१ ॥ राजसानां तृतीया तु चतुर्थी सात्त्विकी मता ॥ अंतर्याम्यधिदैवादिन्यायेनात्रोऽपि वै हरेः ॥ २२ ॥ भगस्य व्यपदेशः स्यादतस्तस्य निवृत्तये ॥ भगस्य सहजत्वाय पंचमी प्रक्रिया मता ॥ २३ ॥ चतुर्भिश्च तथा तस्त्रैस्त्रैर्विंशतिभिस्तथा ॥ एकाधिकैस्तथा षड्भिरध्यायैः क्रमशो मताः ॥ २४ ॥ चतुर्मूर्तिर्हरिर्जातस्तेनाऽध्यायचतुष्टयम् ॥ प्रथमे वासुदेवोऽभूद्वसुदेवहृदि स्थितः ॥ २५ ॥ मृत्युवारणसामर्थ्यमन्यथा न भवेत्क्वचित् ॥ संकर्षणो द्वितीये तु स्फुटो दैत्यवधाय हि ॥ २६ ॥ तथा तृतीये प्रद्युम्नश्चतुर्थे तुर्य उच्यते ॥ न निबद्धो यतः कैश्चिदतः सर्वे विमोचिताः ॥२७॥ धर्मरक्षार्थहेतुत्त्ये धर्मबाधश्च वर्ण्यते ॥ वसुदेवादेवकीतो मथुरातश्च गोकुलात्॥२८॥ प्रादुर्भूतश्चतुर्मूर्तिर्भगवान्नाऽत्र संशयः ॥ रूपांतरस्वीकरणमध्यायत्रितयेन हि ॥ २९ ॥ नटभावश्चतुर्थेन हेतुराद्ये निरूपितः ॥ त्रिविधानां त्रिधा दुःखं हेतुर्जन्मनि वै हरेः ॥३०॥ भूमिर्माता तथा चान्ये दुःखभाजो हरेः प्रियाः ॥ कंसादेः कालतो ज्ञानात्त्रिधा दुःखं तु तद्गतम् ॥ ३१ ॥ कालजं प्रभुसंबंधात्कंसजं हेतुवारणात् ॥ वाक्यैरज्ञानसंभूतं शक्यं तत्त्रितयं हरेः ॥ ३२ ॥ प्रश्नेन सहिताः पूर्वं चतस्रः प्रक्रिया मताः ॥ उद्यमश्च तथा प्रोक्तः सामग्रीबल उच्यते ॥ ३३ ॥ मायाशक्तिः स्वविहारे रूपं स्वस्य तृतीयकम् ॥ संमतिः सर्वदेवानां चतुर्थ्यपि निरूपिता ॥ ३४ ॥ रूपसामर्थ्यबोधाय कंसज्ञानादिरुच्यते ॥ चतुर्धा स्वीकृतिश्चापि काले मूलस्वरूपतः ॥ ३५ ॥ वसुदेवस्य संमत्या द्वितीयाऽपि निरूपिता ॥ देवक्याश्च तृतीयापि चतुर्थी वाक्यनिर्गमैः ॥ ३६ ॥ चतुर्धा नटभावोपि देवक्या मायया तथा ॥ पुनः कंसभयेनापि वसुदेवेन च स्थितिः ॥ ३७ ॥ कर्मणो हेतुसिध्यर्थं शेषोत्र विनिरूप्यते ॥ अन्यथा नटलीलेव कंसाद्दुःखं निवारयेत् ॥ ३८ ॥ तावदेवात्र नाट्यं हि यावल्लीलां न बाधते ॥ अतो नाट्यस्य संकोचो नाट्याध्याये निरूपितः ॥ ३९ ॥

१ योगाग्व्दस्य वै हरे । २ नाप्यत्र । ३ ईर्यते । ४ तथा । ५ इदमर्धं समाप्ति सर्वदेवानामित्यस्य पूर्वमेकस्मिन् पुस्तके दृश्यते । ६ बाधयेत् ।

एवं चतुर्भिरध्यायैर्नटवत्प्राकृतोऽभवत् ॥ अतस्तामसभक्तानामष्टाविंशतिभिः क्रमात् ॥ ४० ॥ मानमेयैः साधनैश्च फलैश्चापि पृथक् पृथक् ॥ भगवान्स-प्तधा लीलां कुर्वन्नुद्धारकः परः ॥ ४१ ॥ पुरुषोत्तमरूपेण यच्चकार तदुच्यते॥ तत्र प्रमाणभावेन सप्ताध्यायी निरूप्यते ॥ ४२ ॥ भगवच्चरिते यस्मात्प्रमा-णमिह मृग्यते ॥ अज्ञानमन्यथाज्ञानं प्रमाणं भक्तिहेतुकम् ॥ ४३ ॥ पुरुषा-णामत्र निष्ठा स्त्रीणां मेये ततः परे ॥ साधनं सकलानां च फलं स्त्रीषु प्रतिष्ठितम् ॥ ४४ ॥ अन्यत्रापि गतः कृष्ण उत्सवान् कुरुतेऽखिलान् ॥ अत ऐश्वर्यभावोऽत्र प्रथमे विनिरूपितः ॥ ४५ ॥ पूतनामारणं वीर्यं यशस्तु शकटादिवत् ॥ शकटं तामसं प्रोक्तं तृणावर्तस्तु राजसः ॥ ४६ ॥ लालनं पुत्रभावेन सात्त्विकं मोहनं तथा ॥ श्रीस्तु लीला नामयुक्ता ज्ञानं बंधनबो-धनम् ॥ ४७ ॥ यमलार्जुनयोर्मुक्तिर्वैराग्यं भगवान् परः ॥ सप्ताध्यायास्तु यत्रैव तत्रैवं बुध्यतां क्रमः ॥ ४८ ॥ अमेये मेयबुद्धिर्हि प्रमाणमिति के-चन ॥ अष्टावत्र प्रमाणानि द्वयमेकत्र रूपितम् ॥ ४९ ॥ प्रथमो वसुदेवो हि द्वितीयो नंद उच्यते ॥ बालास्त्रियस्तृतीया हि चतुर्थो गर्ग उच्यते ॥ ५० ॥ यशोदा पंचमी प्रोक्ता षष्ठरूपाविहार्ज्जुनौ ॥ उपनंदस्तु निर्दिष्टः सप्तमो धर्मबोधकः ॥ ५१ ॥ देशदोषभ्रमं कृष्णो वारयामास चित्रधा[1] ॥ आद्येन भगवान्मार्गे बाधकानि बहूनि हि ॥ ५२ ॥ द्वितीये तदभावो हि कृष्णेनैव भवेदिति ॥ साधकः सकलार्थानां तृतीये विनिरूपितः ॥ ५३ ॥ भक्तिप्रदश्चतुर्थे हि भक्तिवश्यस्ततः परः ॥ सर्वोद्धारप्रयत्नस्तु सर्वेषां सर्वदो-पद्रुत् ॥ ५४ ॥ ततोऽपि परमानंददायी सप्तम ईर्यते ॥ प्रपंचविस्मृतिः सर्वा तदासक्तिः स्फुटैव हि ॥ ५५ ॥ प्रमाणबलमासाद्य सर्वेषां गोकुले ह्यभूत् ॥ प्रमेये बालरूपेऽपि प्रमाणादखिलं स्थितम् ॥ ५६ ॥ उत्सवेन भयेनाऽपि कौतुकेन विशेषतः ॥ गर्गवाक्यैर्मुग्धभावैरत्याश्चर्यनिरूपणैः ॥ ५७ ॥ यम-लार्जुनभंगेन वकघातादिभिस्तथा ॥ सर्वव्यसननिर्मुक्तया कृष्णासक्तमभू-न्मनः ॥ ५८ ॥ अतः प्रमेयसंपत्त्या कृष्णासक्तिर्हि वर्ण्यते ॥ सर्वतस्त्वधिकः स्नेहः पूर्वत्र विनिरूपितः ॥ ५९ ॥ आसक्तिस्तु द्वितीये तु तृतीये व्यसनं मतम् ॥ फलप्राप्तिश्चतुर्थे हि सिद्धो रोधश्चतुर्विधः ॥ ६० ॥ आसक्तिः स-

१ भिद्यते। २ विज्ञेयः। ३ त्रिधा। ४ हि।

सधा त्वत्र रूपसौंदर्यभावतः ॥ क्रिययाऽभीष्टदानेन स्त्रीगोबाला वशीकृताः ॥ ६१ ॥ क्षणं चाऽदर्शने तस्य मृतिः पर्व द्वितीयकम् ॥ माहात्म्यज्ञानसिध्यर्थं मरणान्मोचनं ततः ॥ ६२ ॥ एवं त्रिभिर्दृढासक्तिरध्यायैर्विनिरूपिता ॥ साधारण्येन सर्वेषां विशेषेण विभागशः ॥ ६३ ॥ बालानां च गवां चैव सर्वेषामेव गोकुले ॥ भोग्यस्त्रीणां क्रमेणैव दृढासक्तिर्निरूपिता ॥ ६४ ॥ रूपस्यानुभवः स्त्रीषु तेनाऽऽदौ गोपिका मनः ॥ वचनं चांतिमे प्रोक्तं कायिकं तु ततः परम् ॥ ६५ ॥ बलभद्रस्य बोधाय भगवद्वचनानि हि ॥ स्वधर्माः सकला एव बलभद्रे निरूपिताः ॥ ६६ ॥ लोकानां च प्रतीत्यर्थं तेन धेनुकमारणम् ॥ आसक्तेस्तु परीक्षा हि कालीयदमने मता ॥ ६७ ॥ स्नेहमात्रा न चैतावत्किं तु जीवनदानतः ॥ युक्तासक्तिरिति प्रोक्तं दावाग्नेमोचनं महत् ॥ ६८ ॥ ततः कृष्णप्रसादेन कालदुःखनिवारणम् ॥ बालकानां समस्तानां क्रीडया बाधनाद्रिपोः ॥ ६९ ॥ गवां दावाग्निमोक्षेण सर्वेषां कालजैर्गुणैः ॥ गोपीनां वेणुनादेन दृढासक्तिः स्थिराऽभवत् ॥ ७० ॥ अतः परं कायिकेन कृष्णे व्यसनमीर्यते ॥ दैहिकान् सकलान् भावान् निजां व्रीडां च दैहिकीम् ॥ ७१ ॥ परित्यज्य हरिप्रात्यै यदेव स्यात्तदेव हि ॥ वैदिकं लौकिकं चापि तत्कर्ता व्यसनी मतः ॥ ७२ ॥ अतः कुमारिकाः पूर्वं व्रतं चक्रुरितीर्यते ॥ ततो लौकिकभावं हि परित्यज्य तदाज्ञया ॥ ७३ ॥ यथोक्तमखिलं चक्रुस्तत ईशोन्वतुष्यत ॥ संबंधिनां मत्सरादिदोषाभावाय बोधनम् ॥ ७४ ॥ प्रशंसा सर्ववृक्षाणां ततः सिद्धास्तु बालकाः ॥ सर्वदोषान् परित्यज्य क्षुज्जये शक्तिवर्जिताः ॥ ७५ ॥ हरिं विज्ञापयामासुर्न्यसनात्राऽन्यगामिनः ॥ भोगद्वयं हरेरेव स्त्रीबालानां निरूपितम् ॥ ७६ ॥ लौकिकास्तु समाख्यातास्तत्रैव न हरेस्तथा ॥ वैदिकेपीति विप्राणां तद्भार्याणां निरूप्यते ॥ ७७ ॥ तामसाः सर्व एवाऽत्र गोकुलस्था न केवलम् ॥ इति दर्शयितुं विप्राः सत्रिणोऽपि निरूपिताः ॥ ७८ ॥ एकप्रकार एते हि तेनैकात्र विमोचिता ॥ साधनप्रक्रिया त्वेषा तेन ताः स्वगृहं गताः ॥ ७९ ॥ तद्भर्तारोऽपि नाऽऽयाताः संबंधेनैव बोधिताः ॥ गोपिकानां प्रसंगेन[1] यतस्ता विनिरूपिताः ॥ ८० ॥ अतस्तासां फले चेताः फलं प्रा-

[1] गत ।

प्स्यंति निश्चितम् ॥ निर्दुष्टैर्भोजनं कार्यं निर्दुष्टान्नस्य नाऽन्यथा ॥ ८१ ॥ भक्त्यादृतानां भक्तानां वृक्षाणां चेति निश्चयः ॥ व्रतं वृत्तिपरिज्ञानं दानं माहात्म्यबोधनम् ॥ ८२ ॥ द्वाभ्यां चतुष्टयं प्रोक्तं तदीयान्यविभेदतः ॥ द्विविधं कर्म लोके हि वैदिकं हेतुसंभवम् ॥ ८३ ॥ आद्ये श्रद्धापरित्यागः पूर्वेण विनिरूपितः ॥ अन्वयव्यतिरेकाभ्यां हेतुकः सफलो मतः ॥ ८४ ॥ तन्निराकरणं कार्यं तेनाऽध्यायचतुष्टयम् ॥ हेतुनाऽऽदौ निराकृत्य यत्सत्त्वद्धि ह्यकारयत् ॥ ८५ ॥ देवता तत्र नियता तेन साऽपि निवारिता ॥ गोवर्धनस्य धृत्यैव निस्तंभा साऽभवद्यतः ॥ ८६ ॥ शंकादोषोऽपि गोपानां निराकार्यस्तु कर्मणे ॥ हविर्मंत्रेऽन्यरूपाणां संमत्यर्थं तुरीयकम् ॥ ८७ ॥ एवं पूर्वं परित्यज्य हर्युक्तं कार्यमीरितम् ॥ अवैष्णवानां पूर्वेषां व्रतानां त्याजनं न हि ॥ ८८ ॥ वैष्णवान्यपि कार्याणि त्यक्तव्यानीति बोधने ॥ नंदस्यैकादशी प्रोक्ता साधनं पंचधा स्थितम् ॥ ८९ ॥ एतावदेव कर्तव्यं तेन यद्वांछते हृदि ॥ हेतुवाद इवाऽत्रापि फलं कृष्णः प्रयच्छति ॥ ९० ॥ इति वैकुंठनयनं स्थापितं वांछितं न हि ॥ अवांतरं फलमिदं विश्वासार्थं निरूपितम् ॥ ९१ ॥ कृष्णवाक्यं सदा कार्यं मायामोहं निवार्य हि ॥ वृक्षवत्तु स्थितिः कार्या शुद्धान्नेन च वर्तयेत् ॥ ९२ ॥ इच्छां विज्ञाय दातव्यं माहात्म्यज्ञानपूर्वकम् ॥ यागादयोपि त्यक्तव्या तदिच्छा चेद्व्रतानि च ॥९३॥ मध्ये स्नेहस्य पूर्त्यैव तदिच्छामवगत्य च ॥ तत्परत्वेन सततं स्थेयं साधनसंग्रहः ॥ ९४ ॥ अतः परं सप्तभिर्वै फलं कृष्णो निरूप्यते ॥ षड्गुणैः संहितः पूर्वमैश्वर्यं त्रिविधं मतम् ॥ ९५ ॥ ध्वनिनाऽऽहूय वाक्येन प्रेर्पयत्येष निश्चितम् ॥ फलेन वाक्यं कर्तव्यं दोषश्चेद्वारयिष्यति ॥ ९६ ॥ इति तासामगमनं गर्वेऽन्तर्भाव ईर्यते ॥ अयमेव हरेर्मार्गः सर्वोत्कृष्टो हि बुध्यताम् ॥ ९७ ॥ संबंधमात्रे संजाते बहिर्वांतरथापि वा ॥ कायेन मनसा वाऽपि वचसा वाऽपि सर्वथा ॥ ९८ ॥ रमयत्येव हि निजान् सर्वथा नैव मुंचति ॥ अंतर्धानकथा प्रोक्ता वाक्यं चाऽपि निरूपितम् ॥ ९९ ॥ अध्यायद्वितयेनैव सकृद्रोगं निवारयन् ॥ आविर्भावं करोत्येष तथा वाक्यानि तुष्टये ॥ १०० ॥ रमते च रमातोऽपि विशेषेण रतिप्रदः ॥ परोक्षेऽपि रतिं चक्रे तेन वीर्यमुदी-

१ ज्ञाना। २ सहिताः। ३ प्राप। प्रेर। ४ बुध्यति। ५ परोक्षेऽपि।

रितम् ॥ १०१ ॥ यशस्तु वचनैः स्पष्टं श्रीश्चाऽऽविर्भावतः स्फुटा ॥ चतुष्टयं निरूप्याऽग्रे धर्मी कृष्णो निरूपितः ॥ १०२ ॥ भोगे मध्ये महत्सौख्यं तस्मादेवं निरूपितम् ॥ स्वरूपेण रतिः-प्रोक्ता न धर्मैरसरूपतः ॥ १०३ ॥ ततो वैराग्यभावेन फलदाता निरूप्यते ॥ कौतुकेनाऽपि पूर्वेषां करणं न सुखाय हि ॥ १०४ ॥ अतः कौतुकरीत्याऽपि गताः सर्वे हरांतिके ॥ कालेनाऽऽग्रस्तमूर्धानः कृष्णेनैव विमोचिताः ॥ १०५ ॥ अतस्तत्कर्म हरिसात्कृत्वा व्रजमुपाययुः ॥ तमसि त्रितयं प्रोक्तं हरिस्तत्राऽऽधिदैविकः ॥ १०६ ॥ सतु तूर्णीं भवत्यत्र कालस्त्वाध्यात्मिको मतः ॥ हरभृत्यास्तु भूतानि स्त्रीणां हर्ता ततो निशि ॥ १०७ ॥ शंखचूड इति प्रोक्तस्तं च हत्वा विमोचिताः ॥ सुदर्शनो यथा जीवस्तथा सत्वरो मणिः ॥ १०८ ॥ कर्म स्वस्मिन् प्रतिष्ठाप्य रामे रत्नं न्यरूपयत् ॥ एवं कालादिसंबंधात्तामसात्स्वाऽप्यवारयत् ॥ १०९ ॥ पूर्वसिद्धपरित्यागो वैराग्यं कालदोषतः ॥ ज्ञानं तु गुणगानं हि परोक्षे तत्प्रतिष्ठितम् ॥ ११० ॥ प्रत्यक्षे भजनं श्रेष्ठमेवं चेद्बोधनं स्थिरम् ॥ पुरुषाणां तथा स्त्रीणां रात्रौ च दिवसे तथा ॥ १११ ॥ ज्ञानं भक्तिश्च सततं चक्रवत्परिवर्तते ॥ अतः परं राजसानां प्रक्रिया पूर्वसंख्यया ॥ ११२ ॥ अष्टाविंशतिभिः प्रोक्तास्तथाऽध्यायैश्चतुर्विधैः ॥ यादवा राजसाः प्रोक्तास्तेषां पूर्वस्थितस्य हि ॥ ११३ ॥ त्याजनं सर्वथा कार्यं देशादेः षड्विधस्य च ॥ तत्राऽऽदौ दुःखकर्तारो मारणीया गुणैरिह ॥ ११४ ॥ ततः कालविमुक्तिर्हि देशद्रव्यैस्ततोऽपि हि ॥ ख्यात्या पूर्वाणि नामानि कर्माण्यपि पुरा यथा ॥ ११५ ॥ त्याजितानि समस्तानां तथा ख्यातिं ददौ हरिः ॥ प्रमाणं नारदः प्रोक्तस्तथाऽक्रूरो द्वितीयकः ॥ ११६ ॥ नंदस्तृतीयः क्षत्ता तु चतुर्थो गोपिकास्तथा ॥ हर्याविष्टो हरिश्चैव कुब्जा चाऽत्र मताः पुरा ॥ ११७ ॥ एते प्रमाणभूता हि राजसे सगुणो हरिः ॥ एतैः सिद्धो राजसानां स्नेहः सर्वोत्तमः स्थितः ॥ ११८ ॥ नारदो देवगुह्यस्य कर्ता भयविवर्धनः ॥ येन स्नेहः समुत्पन्नस्तथाऽक्रूरस्तु पोषकः ॥ ११९ ॥ संदेहजननाच्चित्तं कृष्णार्थं तरलं यतः ॥ स्नेहे द्वितीयमेतद्धि पर्व लोकेऽपि बुध्यताम् ॥ १२० ॥ नंदस्तु पूर्वभावस्य निंदां चक्रे विनिश्चिताम् ॥ तेन मिथ्यपरित्यागान्निर्दोषस्य

१ गोपीः[illegible] पश्चिन् । २ विभेदेन । ३ मर्थ ।

भविष्यति ॥ १२१ ॥ उत्कंठा परमा तत्रा गोपिकाभिश्च जायते ॥ पुरुषाणां तथा स्त्रीणामाविष्टेनामयं महत् ॥ १२२ ॥ ततः संदेहगमनात्स्थिरः स्नेहो भविष्यति ॥ कृष्णेन पुरुषैर्योगः स्नेहवृद्धिप्रदायकः ॥ १२३ ॥ तथैव कुब्जया स्त्रीणामेवं स्नेहो निरूपितः ॥ प्रमाणबलमासाद्य तथाऽऽसक्तिः प्रमेयके ॥ १२४ ॥ अरिष्टो राजसानां हि गोकुले निधनं गतः ॥ वासनालेशमात्रेण तत्र स्थास्यति सर्वदा ॥ १२५ ॥ इतोऽपि चेद्धरिर्गच्छेन्नीत्वा सर्वस्य तामसम् ॥ राजसास्ते भविष्यंति गोकुलस्था न संशयः ॥ १२६ ॥ उभये च ततस्तत्र सात्विका निर्गुणास्ततः ॥ त्रयोऽपि संभविष्यंति मुक्तौ तेषां निरूपणम् ॥ १२७ ॥ देवगुह्यस्य कर्ता हि नारदो देवसंमतः ॥ भगवत्संमतिस्तत्र नास्तीत्येवेति मे मतिः ॥ १२८ ॥ यतः प्रबोधयत्येनं प्रद्युम्नस्तान्न कुप्यति ॥ पूर्वभावस्तु न ज्ञातः स्वाधिकारस्तु मध्यमः ॥ १२९ ॥ पूर्वंकुद्धा देववाणी पुत्रत्वाय यतो हरिः ॥ प्रार्थितो वसुदेवाभ्यां ततो गमनयाच्ञया ॥१३०॥ अध्यात्मा नारदः क्रुद्ध उभाभ्यां बंधनं तयोः ॥ मायया प्रथमे मुक्तिः कृष्णेनाऽग्रे भविष्यति ॥ १३१ ॥ मायावशात्तदा याच्ञा कृष्णार्थं गमनं मतम् ॥ अधिकारान्नाऽपराधो नारदस्य भविष्यति ॥१३२॥ तथाऽपि प्रीयते नैव हरिरित्येव मे मतिः ॥ कंसादयो राजसा हि बुध्वा कार्यस्य साधकाः ॥ १३३ ॥ तामसं केशिनं तेन प्रेषयामास राजसः ॥ मथुरायां तामसस्य वधो युक्तो न च कचित् ॥ १३४ ॥ अतो गोकुलमासाद्य सोऽपि नष्टो विमुक्तये ॥ ज्ञाने तु बाधकः केशी तेनाऽक्रूरादयस्तथा ॥ १३५ ॥ तथा भक्तावरिष्टोऽपि तावुभौ गोकुले हतौ ॥ अन्यथा गोकुलस्थानां जीवनं न भवेत्क्षणम् ॥ १३६ ॥ ज्ञानभक्तिप्रसिद्ध्यर्थमक्रूरागमनं पुनः ॥ गोकुले बाधको व्योमो लीलायां कर्मणि स्थितः ॥ १३७ ॥ परोक्षेऽपि हरेः सिद्धे लीलायाः सोऽपि वै हतः ॥ द्वाभ्यां त्रयोऽत्र निहताः परोक्षेण त्रयोऽत्र हि ॥ १३८ ॥ मार्गाः पुष्टा भविष्यंति तेन राजसता स्थिता ॥ सात्विकोऽप्युभयेर्दोषैरक्रूरः कंससंगतः ॥ १३९ ॥ उभयोस्तु ततो नाशे भक्त्या कृष्णांतिकं गतः ॥ सिद्धांतस्य परिज्ञानादासुराणां तथाऽभवत् ॥ १४० ॥ भगवच्छास्त्रविज्ञानात्संदिग्धं स उवाच ह ॥ यथाकथंचिद्दुष्टस्य परित्यागे तु सात्विकः ॥ १४१ ॥ भक्तः सन् भगवत्पार्श्वं याति कृष्णश्च तुष्यति ॥ मा-

गत्रये ततः प्रोक्ता तस्य निष्ठा विशेषतः ॥ १४२ ॥ कृष्णमाहात्म्यविज्ञानं भक्तिमार्गोपयोगि हि ॥ स्वरूपबोधो ज्ञानार्थः कामना कर्मणि स्थिता ॥ १४३ ॥ त्रिभिस्त्रयोऽपि संतुष्टा नंदरामौ तथा हरिः ॥ हरेर्निर्गमनं तस्मान्न युक्तमिति वै शुकः ॥ १४४ ॥ गोपिकावाक्यरीत्यैव भगवद्गमनं जगौ ॥ प्रतिबंधादरिष्टादेर्न गोपीकायिकोद्यमः ॥ १४५ ॥ वाक्येनैव च संतुष्टा वाचितास्तु प्रतिष्ठिताः ॥ अक्रूरे त्रितयं जातं वैकुंठे स्थापनाय हि ॥ १४६ ॥ ब्रह्महदे निमग्नस्य तथा दर्शनमीर्यते ॥ अन्यथा भगवत्संगं न त्यजेच्च कथंचन ॥ १४७ ॥ माहात्म्यं ज्ञापितं त्वर्थात्तेन स्तोत्रमुदीरितम् ॥ संस्कारमात्रतस्त्वस्मिन् स्नेहभक्तिः प्रतिष्ठिता ॥ १४८ ॥ व्यवहारो महद्भिः स्याद्यथा कृष्णे तथाऽभवत् ॥ कुब्जानिःशंकवचनैः स्वेच्छां पूरयते हरिः ॥ १४९ ॥ उभयोरंतरा दंडप्रसादौ सुनिरूपितौ ॥ श्रुतमाहात्म्ययुक्तानां संदेहविनिवारकौ ॥ १५० ॥ रजको दंडनीयो हि पूर्वधार्ष्ट्यादिहाऽपि हि ॥ सीताया विप्रियं वक्ता रंगशोभार्थमुद्यतः ॥ १५१ ॥ अंत्यजा दैत्यपक्षीया रजकस्तेषु चाऽऽदिमः ॥ कर्ममार्गे फलं सर्वैः प्राप्यते तत्तथोक्तवान् ॥१५२॥ वस्त्रदातुः फलं ते स्यादन्यथा तु वधः स्मृतः ॥ मालाकारः प्रियो लोके भक्तानां सुतरां प्रियः ॥ १५३ ॥ उभौ परीक्षितौ सम्यक् ततो दंडादिकं कृतम् ॥ तयोर्मध्ये वेषकर्ता नटानां सुतरां प्रियः ॥ १५४ ॥ प्रसादस्त्रिषु वक्तव्यस्ततस्तस्मिन् पुरोदितः ॥ धनुषो भंजनं चैव रक्षकाणां वधस्तथा ॥ ॥ १५५ ॥ निग्रहोऽपि द्विधा जातस्तैः सर्वं प्रकटीकृतम् ॥ प्रमेयबलमासाद्य ततः सप्तभिरुच्यते ॥ १५६ ॥ आसक्तिर्यादवानां च दुष्टानां च वधस्तथा ॥ प्रमेये सप्त भक्ता हि तावंतश्चाऽपि विद्विषः ॥ १५७ ॥ देवकी वसुदेवश्च सर्व एव च यादवाः ॥ आध्यात्मिकप्रकारेण द्वावेतौ परिकीर्तितौ ॥ १५८ ॥ अधिदेवो गुरुः प्रोक्तः पुत्रदानात्स मोचितः ॥ नंदः पत्नीयुतश्चैव गोपिकाः कुब्जया युताः ॥ १५९ ॥ अक्रूरः पांडवाश्चैव सप्तैते निःप्रपंचिताः ॥ गजः पंच तथा मल्लाः सप्तमः कंस उच्यते ॥ १६० ॥ भ्रातरस्तत्प्रसंगेन हता अष्टौ[1] न दोषतः ॥ एतावानेव रूपे हि स्नेहद्वेषविनिर्णयः ॥ १६१ ॥ जीवंतो मुक्तिमायांति भक्ता द्विष्टा हताः पुनः ॥ रूपं सर्वविमोक्षाय स्नेहासक्तिनिवारकम्

१ मृतैव इति पाठः पाठः ।

।। १६२ ।। भयं यस्मात्तस्य वधः कारणं तत्पुरोदितम् ।। अध्यायद्वितयेनैव वहिरंतर्व्यवस्थया ।। १६३ ।। ततः कालस्य सर्वेषां भयहेतोर्निवारणम् ।। तेनैव सिद्धं माहात्म्यमासक्तः स्याद्भयादपि ।। १६४ ।। एवं त्रिभिरिहाऽध्यायैरासक्तौ साधनं जगौ ।। स्निग्धानां सांत्वनाभावे प्रतिबंधो भवेदिह ।। १६५ ।। अतश्चतुर्भिर्भूतानां त्रिविधानां च सांत्वनम् ।। कालजं सांत्वने व्यर्थमतः सद्भिर्निवारितम् ।। १६६ ।। अज्ञाने सांत्वनं युक्तं तेन द्वाभ्यां व्रजे जगौ ।। यशोदा वाऽथ नंदो वा गोपिका वा यदा यदा ।। १६७ ।। कृष्णासक्तैकहृदयास्तदाऽऽविर्भावमेति हि ।। वहिर्मुखदशायां तु न पश्यंतीति दुःखिताः ।। १६८ ।। अतः प्रबोध एवाऽत्र कर्तव्यो न ततोऽधिकः ।। लोकवत्तु व्यवस्थानं लोकधर्मविनाशनः ।। १६९ ।। नंदादीनां न कर्तव्यः पिष्टपेषो न युज्यते ।। प्रपंचपातने सक्तास्ते कृष्णस्य न सर्वथा ।। १७० ।। अंतर्मुखे त्वाविरासीत्ततो बोधनमुत्तमम् ।। चौर्यादिकं यथापूर्वं प्रपंचस्मृतिशांतये ।। १७१ ।। तथा वहिर्मुखत्वेपि दुःखं यच्छत्यबोधतः ।। मथुरास्था नाऽधुनापि निःप्रपंचा न सर्वथा ।। १७२ ।। अतः प्रपंचधर्माणां संग्रहस्तं विचार्य हि ।। जीवाः स्वभावतो दुष्टा दोषाभावं नयंति हि ।।१७३।। सर्वमेव स्वसंबंधात्तथा कृष्णेऽपि संगताः ।। प्रपंचविस्मृतिः पूर्वं दोषाभावाय कारिता ।। १७४ ।। कृष्णविस्मरणं तत्र न युक्तमिति बोधनम् ।। प्रबोधे दोषहानिः स्यादात्मत्वे सुतरामपि ।। १७५ ।। तदुद्धवेन गुरुणा बोधयामास केशवः ।। य एव स्यादुपायोऽत्र स कर्तव्यो न चेतरः ।। १७६ ।। अतो बोधनमत्रोक्तं न तु साक्षात्स्वयं गतः ।। आगतः सर्वदेवाऽऽस्ते तदा चाऽऽयाति सत्यवाक् ।। १७७ ।। इदं च बोधनात्सिद्धे दोषोऽपि विनिवर्तते ।। दोषश्चतुर्धा टीकायां विस्तरेण प्रपंचितः ।। १७८ ।। तत्क्षांतिश्चाऽपि बोधेन तेन नात्रोच्यते स्फुटः ।। कुब्जा तु राजसी नारी तथाऽक्रूरश्च यादवः ।। १७९ ।। उपलक्षणभावेन द्वावेतौ विनिरूपितौ ।। कुंती च पांडवाश्चैव सात्विकौ पूर्ववन्मतौ ।। १८० ।। धृतराष्ट्रकृते दुःखे तस्यापि स्यात्तु बोधनम् ।। स तु सात्विकवर्यो हि पुत्रस्नेहात्तथाऽकरोत् ।। १८१ ।। अतः प्रबोध उचितस्तस्याऽपि स्यान्न संशयः ।। एवं चतुर्भिरध्यायैः सांत्वनं विनिरूपितम् ।। १८२ ।। प्रमाणेऽपि

१ तस्मात् । २ कालाद्धि । कालात्तु क ख ग । ३ व्यवस्थायाम् । ४ लि । ५ सदा । ६ गेहं ।

प्रमेयेऽपि भगवान् सप्तरूपधृक् ॥ क्रमेणैवाऽत्र संयोज्यस्तेन नोक्तो विशेषतः ॥ १८३ ॥ अलौकिकेन भावेन यावद्धि भगवत्कृतः ॥ स पूर्वार्धो हरेः स्वस्य धर्मस्तादृश उच्यते ॥ १८४ ॥ लोकधर्मं पुरस्कृत्य यच्चकार यदूद्वहः ॥ अस्वभावादुत्तरार्द्धं कार्यं तत्तु प्रकीर्तितम् ॥ १८५ ॥ प्रमेयं च तथा चोर्द्ध्वं राजसप्रक्रियार्द्धतः ॥ एवं प्रमेयबलतः कृष्णासक्ताऽभवन्मुदा ॥१८६॥ ततो व्यसनसिद्ध्यर्थं साधनान्याह सप्तभिः ॥ लौकिके व्यसने प्राप्ते तस्मिंश्च विनिराकृते ॥ १८७ ॥ व्यसनासक्तहृदयाः कृष्णव्यसनिनोऽभवन् ॥ जरासंधश्च यवनः पुनर्ब्राह्मणसंयुतः ॥ १८८ ॥ शिवप्रसादपुष्टश्च जरासंधो विशिष्यते ॥ राजसस्तामसश्चैव सात्त्विकश्च प्रकीर्तितः ॥ १८९ ॥ केवलः पौरुषायोद्यः स सप्तदशधोदितः ॥ प्रजापतिप्रसूतत्वात्तावद्वारं समागतः ॥१९०॥ अष्टादशे द्वंद्वभावमापन्नः सहजो महान् ॥ ततो व्यसनकर्ता हि तदैश्वर्येण वै हरिः ॥ १९१ ॥ विश्वकर्माणमाहूय मथुरासमभावतः ॥ द्वारकां निर्ममे तत्र योगवीर्यं चकार ह ॥ १९२ ॥ ततो व्यसननिर्मुक्ताः कृष्णव्यसनमागमन् ॥ एवमेकेन भूतानां व्यसनं विनिवर्तितम् ॥ १९३ ॥ आध्यात्मिकानां च तथा तदर्थं यवनो हतः ॥ अद्याऽपि मथुरायां हि तिष्ठंत्याध्यात्मिकाः सदा ॥ १९४ ॥ दैविकाश्चापि तिष्ठंति त्रिभिस्तान् मोचयत्यसौ ॥ रुक्मिणीव्यसनं तत्र नियामकमिति स्थितिः ॥ १९५ ॥ त्रिभिस्तस्य निवृत्तिर्हि वाक् शरीरं मनस्तथा ॥ मानसं वाचिकं वाऽपि कायिकं वा निराकृतम् ॥ १९६ ॥ आध्यात्मिकेऽधिकं किंचिद्दैविकाभेदसिद्धये ॥ व्यसनी मुचुकुंदोऽपि निद्रया तन्निवारितम् ॥ १९७ ॥ फलप्रकरणं नैतत्तेन स्तुत्यापि नोऽभवत् ॥ साधनं परमुद्दिष्टं वीर्याध्यायो यतो मतः ॥ १९८ ॥ बलेन मोचितः स्वास्थ्यं न प्राप्स्यति कथंचन ॥ अतः साधनमुद्दिष्टं प्रवृत्त्यै मृगयाकथा ॥ १९९ ॥ प्रारब्धकर्म तद्वृत्तं तेन वा तन्न नाशितम् ॥ तत्तद्धर्मप्रधानत्वाल्लीलायास्तत्र तत्र हि ॥ २०० ॥ तेन वीर्यगुणाद्युद्धः सामर्थ्यं प्राप साधने ॥ तेनाऽर्थान् मुक्तिरेवास्मै दत्ता भवति सर्वथा ॥ २०१ ॥ यवनोऽपि प्रविष्टस्तं ततः सिद्धिमवाप्स्यति ॥ यवनैर्दूषिते स्थाने न नित्या मथुरास्थिता ॥ २०२ ॥ व्यसनं च ततस्तेषां वारितं यवनार्दनात् ॥ जरासंध-

१ भागम् । २ त्रा । ३ भेदिता । ४ भि । ५ मेतत् । ६ जातं । ७ स्थिता ।

जयार्थाय यवनानां धनं हृतम् ॥ २०३ ॥ दुष्टद्रव्यात्तु तस्याऽपि बुद्धिनाशो भविष्यति ॥ प्रवर्षणगिरिस्थानां जीवानां च विनाशनात् ॥ २०४ ॥ अग्नेः संप्रार्थनात्कृष्णः प्रवर्षणमथारुहत् ॥ वलात्मा बलभद्रोऽयमतः सोऽपि निरूप्यते ॥ २०५ ॥ अतो विवाहस्तस्याऽपि लोकरीतिश्च संमता ॥ बलभार्या निरोधस्था नेति भक्तौ निरूपिता ॥ २०६ ॥ अतस्तस्याः कथामन्यामतिदेशान्न चोक्तवान् ॥ विवाहो द्विविधो लोके धर्मार्थो भोगसाधकः ॥२०७॥ आद्यो धर्म्यस्तु कर्तव्यः पश्चाद्भोगार्थमुद्यतः ॥ गांधर्वो राजसश्चैव धर्म्यौ क्षत्रस्य तौ स्मृतौ ॥ २०८ ॥ विधिश्च वैदिकश्चैव सह सर्वैः स्वबांधवैः ॥ रुक्मिण्यां प्रथमायां तु विवाहत्रयमुक्तवान् ॥ २०९ ॥ गांधर्वो ब्राह्मणद्वारा स्तोत्रं भावाविशुद्धये ॥ प्रसह्य कन्याहरणं द्वितीये स्पष्टमेव हि ॥ २१० ॥ तत्सिध्यर्थं तथा चक्रे कालः सत्सेवको यतः ॥ उत्तरोत्तरभावस्य वृध्यर्थं रुक्मिणीवचः ॥ २११ ॥ विवाहकालात्पूर्वेद्युर्हरणं सर्वसंमतम् ॥ समुद्रस्तु पिता तस्याः कालकूटोऽग्रजः स्मृतः ॥ २१२ ॥ स दैत्यानां हिताकांक्षी हराविष्टो बलोऽहनत् ॥ जिघांसंतं जिघांसीयात्तथाऽपि न हरिः स्वयम् ॥२१३॥ जघान रुक्मिणं मूढं दैत्यानां बुद्धिनाशकम् ॥ वधानुकल्पः स्वद्रोहे भक्तद्रोहे वधः स्मृतः ॥ २१४ ॥ वधानुकल्परूपं हि मुंडनं तच्चकार ह ॥ सर्वात्मा भगवान् कृष्णो यो यच्छ्रद्धः स एव सः ॥ २१५ ॥ यो यथा यं प्रपद्येत सोऽपि तन्मन्यते तथा ॥ रुक्मिण्यर्थं समागत्य तथा रुक्मी चकार ह ॥ २१६ ॥ अतः कृष्णं प्रार्थयित्वा रुक्मिणी तं व्यमोचयत् ॥ भगवद्व्यतिरिक्तानामन्यधर्मैः प्रवर्तते ॥ २१७ ॥ नटवत्कपटाद्वाऽपि ततः प्राह बलस्तथा ॥ द्वारकायां तु नेतव्यः सुखं बध्वाऽल्पबंधनैः ॥ २१८ ॥ ततो मया प्रबोध्यश्च नाऽन्यथेत्यंतरं श्रियः ॥ तदभावाद्वैमनस्यं तद्रामेण निवारितम् ॥ २१९ ॥ तथा चेत्कुरुते कृष्णस्तदा लोको विरुध्यते ॥ अस्मान् वंचयितुं रुक्मी कृष्णपक्षोऽप्युपाह्वयत ॥ २२० ॥ यावज्जीवं तदा दुःखी दैत्यो दैत्यविसंमतः ॥ ज्ञानाध्याये तथा युक्तं दैत्यानां मुंडनं परम् ॥ २२१ ॥ अत एव पुनः स्थानं कुंडिनं न विवेश ह ॥ रुक्मिणीसहितः कृष्णः सर्वेषां सुखदोऽभवत् ॥ २२२ ॥ एवं त्रिविधजीवानामुद्धर्ता व्यसनार्णवात् ॥ ततः

१ वधा। २ दहत्। ३ मायकः। ४ सबांधवैः।

कृष्णव्यसनिनो जाताः साधनमीरितम् ॥ २२३ ॥ कामेन व्यसनं लोके स स्वयं व्यसनं गतः ॥ देहनाशात्सर्वनाशाद्भार्याहरणतोऽपि हि ॥ २२४ ॥ व्यसनं तद्देवदेहाज्जातं चेन्नैव नश्यति ॥ यदा मुक्तिप्रदानार्थं वासुदेवः समुद्गतः ॥ २२५ ॥ तदा माया च कामश्च तस्मात्तदर्थमुद्गतौ ॥ मायया मोहितो जीवः कामैर्नानाविधोऽभवत् ॥ २२६ ॥ कामोत्पत्तिर्यदा कृष्णात्तदा तद्व्यसनं हृतम् ॥ स्वस्थः स्मृत्या विरक्तश्च सर्वानेव प्रबाधते ॥ २२७॥ कृष्णसंबंधिदेहेन रुद्धो वा न तथाविधः ॥ एवं षड्भिः समस्तानां व्यसनाभाव ईरितः ॥ २२८ ॥ दुष्टव्यसनभावत्वात्ते कृष्णेऽपि तथा जगुः ॥ तेषां वा व्यसनं कृष्ण आधिदैविकमात्मनि ॥ २२९ ॥ पश्चात्तं नाशयामास धर्म्यध्यायेन सिद्धता ॥ फलसाधनयोरैक्यं वक्तुमेका कथोच्यते ॥ २३० ॥ मणिश्च व्यसनं हंति लोके ख्यातस्ततोऽपि चेत् ॥ व्यसनानि विनश्येरंस्तदा नैकांतिको हरिः ॥ २३१ ॥ इति तस्य निराकृत्यै ततो व्यसनमुच्यते ॥ तत्राऽपि चेत्कृष्णवाक्यात्साध्यते सर्वभावनः ॥ २३२ ॥ तदा व्यसननाशाय कल्पते नाऽन्यथा तु तत् ॥ इति निश्चित्य भगवान् सत्राजितमुवाच ह ॥ २३३ ॥ मणेर्यावद्धनं प्राप्यं तद्राजा दास्यतीति हि ॥ अविश्वासं कृष्णवाक्ये कृत्वा तं नैव दत्तवान् ॥ २३४ ॥ ततः सर्वक्षयो जात इति वक्तुं कथोच्यते ॥ सूर्यभक्तस्तु सत्राजित्ततो लक्ष्मीं सरस्वतीम् ॥ २३५ ॥ मणिरूपां कन्यकां च द्वयं भोग्यं हरेः परम् ॥ तयोरन्यत्र सत्राजिद्विनियोगं हि वांछति ॥ २३६ ॥ अक्लिष्टकर्मा भगवान् कन्यार्थं तत्तथाऽकरोत् ॥ यादवोऽप्यन्यभक्तत्वान्न निरुद्धः प्रसेनकः ॥ २३७ ॥ मणेरतिक्रमाच्चैव मायाभूतेन मारितः ॥ सोऽपिचक्रेण संस्पर्शाद्रामभक्तेन मारितः ॥ २३८ ॥ भक्तबालकसौख्याय मणिश्रीस्तत्र तिष्ठति ॥ ततः सा कन्यकां प्राप्ता केवलोऽभून्मणिस्तदा ॥ २३९ ॥ तदुच्छिष्टं न शुद्धं हि कृपया तदुपानयत् ॥ कन्यार्थमेव गमनं कालीयह्रदवत्पुनः ॥ २४० ॥ राजसानां परीक्षार्थं बहुकालं न चाऽऽगतः ॥ जांबवद्बोधसिध्यर्थमात्मतत्त्वं विहाय हि ॥ २४१ ॥ सप्तविंशतितत्त्वानि मुष्टिभिर्निहतानि वै ॥ ततः स्वरूपनिष्ठस्तु भगवद्ज्ञानमेयिवान् ॥२४२॥ लक्ष्मीं च कन्यकां बुध्वा लीलार्थं चाऽऽगतिं तथा ॥ सत्त्वं संपाद्य

१ देह। २ तर्थं। ३ महत्। ४ तेजो।

पूर्वं हि मणिं कन्यां ददौ ततः ॥ २४३ ॥ उच्छिष्टत्वान्मणिं कृष्णः सत्राजिद्दत्तमप्युत ॥ न गृह्णादात्मजां वाणीं युक्तां स्वां जगृहे मुदा ॥ २४४ ॥ सर्वात्मनान्यहृदयं न गृह्णाति हरिः स्वयम् ॥ सर्वात्मना प्रपन्नं च नाशयैव कलिं यथा ॥ २४५ ॥ उच्छिष्टं भक्तभोग्यं हि फलं भक्ताय दास्यति ॥ एवं सप्तभिरध्यायैर्व्यसनं सुनिरूपितम् ॥ २४६ ॥ अतः फलं सप्तभिर्वै राजसानां निरूप्यते ॥ अक्रूरो यादवानां हि मुख्यस्तस्य फलं पुरा ॥ २४७ ॥ ततः पंच विवाहाश्च विद्यापर्वस्वरूपकाः ॥ नायिकाः फलरूपा हि कृष्णसंबंधतो मताः ॥ २४८ ॥ तासां फलं हरिः कृष्णस्तत्संबंधात्तथेतरे ॥ कृष्णं फलमुपासाद्य दुःखग्रामाद्विनिर्गताः ॥ २४९ ॥ ततोऽग्रे षोडशकलावृत्तिरूपाः सहस्रशः ॥ संबंधेन हरिं प्राप्तास्तत्संबंधात्तथेतरे ॥ २५० ॥ फलं चतुर्विधं तत्र कृष्णप्राप्तिः पुरा फलम् ॥ स्वप्राप्तिः कृष्णदेवस्य द्वितीयं फलमुच्यते ॥ २५१ ॥ अन्योन्याध्यासवच्चैतत्फलद्वयमुदाहृतम् ॥ ततो भगवदंशस्य पुत्रभावेन कार्यवत् ॥ २५२ ॥ लोकवेदप्रकारेण पुत्रपौत्रादिकं फलम् ॥ तेषां च सर्वभावेन देवगुह्यादिना तथा ॥ २५३ ॥ कार्यसाधनमर्थं चतुर्थं फलमुच्यते ॥ यथा लोके सर्वभावो लौकिकेषु प्रजायते ॥२५४॥ तथा कृष्णे सर्वभावस्तेषां जात इतीर्यते ॥ कृष्णोऽपि चेत्तथा कर्ता तदा स्वप्नो मनोरथः ॥ २५५ ॥ प्रपंचाद्वैतवत्तत्र कृष्णाद्वैतफलं मतम् ॥ अर्थधर्मौ धर्मकामौ काममोक्षौ निरूपितौ ॥ २५६ ॥ केवलाश्चान्यसंयुक्ताः पुरुषार्थाः फलं हरेः ॥ अक्रूरस्य फलं सिद्धमर्थो धर्मेण संयुतः ॥ २५७ ॥ तदर्थं तादृशीं लीलां लोकाद्भिन्नां करोति हि ॥ स्वतस्तेषां कृतश्चेत्स्यात्कृष्णलोपं कथं व्रजेत् ॥ २५८ ॥ दुर्योधनादिहंतारो यथा वै पांडवाः प्रियाः ॥ सत्राजिद्घातकास्तद्वच्छतधन्वादयो मताः ॥ २५९ ॥ युद्धेन मारणं मुख्यं वने वा गुप्तभावतः ॥ न तु सुप्तस्य सर्वासां समक्षं मारणं मतम् ॥ २६० ॥ शतधन्वा ततो वध्यो मुक्त्यर्थं मारितः स्वतः ॥ गुप्तलीला फले चान्या तेनाऽज्ञानप्रकाशनम् ॥ २६१ ॥ विद्यया बोधनं चापि विलंबश्च पलायने ॥ अक्रूरवत्सोऽपि तिष्ठेल्लीनो वा तत्र वै भवेत् ॥ २६२ ॥ तदा वध्यो न चैव स्यात्परं पापेन दूषितः ॥ युद्धार्थं कृष्णदेवेन मित्रयोः प्रार्थनां तथा॥२६३॥

१ भक्तभोग्यं भक्तयोग्यम् । २ विवाहैश्च । ३ यावरे । ४ कृत् । ५ युद्धा ।

-प्रकरणं राजसेषु निरूपितम् ॥ ३०४ ॥ अतः परं सात्त्विकाना प्रक्रिया वि-
निरूप्यते ॥ नृगमोक्षादियज्ञांता वसुदेवस्य धीमतः ॥ ३०५ ॥ प्रमाणानां
बलं त्वत्र सात्त्विकानां न मृग्यते ॥ प्रक्रियात्रितयं त्वत्र प्रमेयादि निरूप्यते
॥ ३०६ ॥ स्नेहस्तेषां पूर्वसिद्ध आसक्तिश्चापि वै दृढा ॥ व्यसनेनाऽभवन्
शुद्धा राजसाः किंतु दोषतः ॥ ३०७ ॥ संस्कारमात्रात्पुष्ट्या च संपत्त्या
चोद्धृताः सदा ॥ अतो दोषनिवृत्तिर्हि सर्वेषामत्र वर्ण्यते ॥ ३०८ ॥ नृगः
पूर्वतनो भक्तः सात्त्विको धार्मिकस्तथा ॥ अतिदानेन दुःखं स प्राप्य कृ-
ष्णेन मोचितः ॥ ३०९ ॥ आज्ञेच्छाभावतो दोषमभिमानात्तु केचन ॥ अ-
त्यंतमाग्रहो धर्मे विचारादेरभावतः ॥ ३१० ॥ दुःखभोगाय भवति कृष्णा-
दन्यत्र सर्वथा ॥ भक्तियोगे तु भगवांस्तादृशं चापि मोचयेत् ॥ ३११ ॥
तथा यथा न कुरुते तदर्थं तादृशं हरिः ॥ कृकलासं सर्ववध्यं सर्वक्षोभाच-
कार ह ॥ ३१२ ॥ यथैको ब्राह्मणः क्रुद्धस्तथैवैकत्र कर्मणि ॥ यावंतो यो-
गमापन्नास्तावतां क्लेशदं तु तत् ॥ ३१३ ॥ अतोऽन्यत्र व्यसनिनो धर्मादिषु
यथायथम् ॥ दुःखभाजो भवंत्येव तस्मात्कृष्णे तदाऽऽचरेत् ॥ ३१४ ॥ असं-
ख्यातत्वकथने दृष्टांतत्रयमीरितम् ॥ तामसादिविभेदेन गुणाश्चाऽपि त्रिधा
मताः ॥ ३१५ ॥ अतस्तामसधर्मेषु भ्रमस्तस्य फलिष्यति ॥ अतोऽत्र धर्म-
निर्धारे दोषाभावो गुणः स्मृतः ॥ ३१६ ॥ गुणस्तु दोष एव स्यादिति दानं
तथोदितम् ॥ धर्ममार्गे ब्राह्मणानां क्षोभं नैव समाचरेत् ॥ ३१७ ॥ मुख्ये
तु सर्वभूतानां न किंचित्तस्य नश्यति ॥ तथाऽर्थे बांधवानां च कामे स्वा-
त्मनि तत्तथा ॥ ३१८ ॥ मोक्षे त्वीशस्य सततं चतुर्भिस्तन्निरूप्यते ॥ यथा
नृगस्य धर्मेण यमुनायास्तथा निजः ॥ ३१९ ॥ स्वार्थः सिद्धस्तथा कामः
पौंड्रकस्य तथा गतिः ॥ द्विविदस्याऽपि नो सिद्धस्तत्तन्मूलविरोधतः॥३२०॥
अनिरुद्धे द्वयोः कार्यं तेन कृष्णो बलस्तथा ॥ अंतरांतरभावेन भिन्नार्थवि-
निवारकौ ॥ ३२१ ॥ यमुनाकर्षणं कार्यं पश्चाज्जाताश्च गोपिकाः ॥ श्रुत-
पूर्वाबलं दृष्ट्वा रेमिरे लौकिकास्तु ताः ॥ ३२२ ॥ सात्त्विकास्तु परं संगादोष-
स्तासां च नाश्यते ॥ गोपीनां कृष्णदेवस्य शिष्टानां सात्त्विकत्वतः ॥ ३२३ ॥
सत्संगात्सुखमुत्पन्नं नित्यं कृष्णकथा यतः ॥ देवादीनां तु संमत्ये दैत्यानां
देवरूपिणाम् ॥ ३२४ ॥ मधुधारादिकं प्रोक्तं वस्त्रदानादिकं तथा ॥ कामो

लोके हि सन्मानं कृष्णत्वे. तद्भवेद्ध्रुवम् ॥ ३२५ ॥ पौंड्रकस्तु ततो जातो मात्सर्यात्कृष्णरूपधृक् ॥ मूले कृत्वा विरोधं हि लोके नष्टस्तथाऽनुगः ॥ ३२६ ॥ प्रमेयबलमासाद्य मुक्तः पूर्वो न चाऽपरः ॥ वाक्येनैव तु कर्तव्यमविरोधेन वा क्वचित् ॥ ३२७ ॥ न त्वन्यथा तीर्थदेवक्षेत्रैर्भक्त्यापि कुत्रचित् ॥ अतः काश्यपि निर्दग्धा महादेवोऽपि वारितः ॥ ३२८ ॥ तथा[1]न्यान्यपि रूपाणि प्रकटे मुरवैरिणि ॥ दोषोत्पत्त्यैव ते त्याज्यास्तेन नाऽत्रो-क्तदूषणम् ॥ ३२९ ॥ पांडवादिसमस्तानां दोषोऽप्यत्र निवार्यते ॥ तथा वैष्णवमुख्यस्य नारदस्य विरक्तये ॥ ३३० ॥ धर्मस्य करणात्स्त्रीणां नीत्या यादवभूभुजाम् ॥ एवं प्रमेयरूपो हि हरिर्दोषं न्यवारयत् ॥ ३३१ ॥ साधनप्रक्रियां वक्तुं साधनांतरमुक्तये ॥ राज्याद्भ्रंशस्तथा दुःखं राज्ञामत्र निरूप्यते ॥ ३३२ ॥ साधने नारदो मुख्यस्तस्यापि प्रार्थनोच्यते ॥ सामर्थ्ये विद्यमानेऽपि स्वयं ज्ञात्वाऽपि सर्वथा ॥ ३३३ ॥ कृष्णाज्ञां वा सहायं वा लब्ध्वैवेष्टपरो भवेत् ॥ तदा तु हरिरागत्य हितं वक्ति करोति च ॥ ३३४ ॥ साधने सर्वथा नीतिः कर्तव्येति प्रबोधयन् ॥ उद्धवं मुग्धभावेन पृच्छति स करोति च ॥ ३३५ ॥ यावत्कर्तुं हि जीवानां शक्यं तावद्ददत्ययम् ॥ साहाय्यं वाऽत्र कुरुते तावद्येन भवेत्क्रिया ॥ ३३६ ॥ इति बोधयितुं कृष्णः संभूत्वा सर्वथा गतः ॥ सर्वभावेन पूजार्थं श्रद्धादीनां च वृद्धये ॥ ३३७ ॥ शत्रूणां दृष्टिदुःखाय भक्तमाहात्म्यसिद्धये ॥ कश्चिदेकोऽपि वेषेण दृष्टादृष्ट-प्रकारतः ॥ ३३८ ॥ यथा भीमस्य सामर्थ्यं दत्वा मृत्युश्च बोधितः ॥ प्रथमे तु मनःप्रीतिर्द्वितीये शत्रुमारणम् ॥ ३३९ ॥ तेनैव यज्ञदेहानां बंधनं विनिवारितम् ॥ ततो बोधनमेकेषां लौकिकं चाऽपि कारयन् ॥ ३४० ॥ साधनं कारयामास तथाऽन्यत्रागतस्तथा ॥ ततस्तु यज्ञसं-सिद्धिस्तत्र दैत्यस्य सन्निधौ ॥ ३४१ ॥ न निःशंकं देवचर्यास्तत्रोपायो हरेर्भजिः ॥ तदेव प्रकटा दैत्याः स्वात्मानं दर्शयंति हि ॥ ३४२ ॥ अतः कृष्णस्य पूजायां शिशुपालो हतोऽसुरः ॥ मानभंगस्तथाऽन्येषां दुर्यो-धनहितैषिणाम् ॥ ३४३ ॥ पूर्वं तु बलभद्रोऽत्र न यागार्थं समागतः ॥ प्रद्युम्नप्रमुखास्तत्र समायाता महारथाः ॥ ३४४ ॥ मुख्ये यागे निवृत्ते तु

१ अथा। २ विमुक्तये। ३ सामर्थ्ये। ४ देवैन। ५ निःशंका।

तान् प्रस्थाप्य कुशस्थलीम् ॥ पांडवानां प्रार्थनया कियत्कालं तथाऽवसत् ॥ ३४५ ॥ दुर्योधनादिमानस्य भंगे तत्र समागतः ॥ मिलितः कृष्णदेवेन रामो नोवाच किंचन ॥ ३४६ ॥ अन्यथा पांडवान् सर्वान् हन्यादेवाऽविचारयन् ॥ एतदर्थं स्थितः कृष्णः प्रार्थनां जनयन् हृदि ॥ ३४७ ॥ महादेवाधिदैवस्तु कालस्तत्र सहायवान् ॥ द्वारकायां यथा पूर्वं ददौ क्लेशं सुदुःसहम् ॥ ३४८ ॥ यावत्तत्त्वानि पुरुषव्यतिरिक्तान्यहानि हि ॥ अत आज्ञां विना किंचिन्न कर्तव्यं कथंचन ॥ ३४९ ॥ यतो रामे समायाते द्वारकाऽत्यंतपीडिता ॥ कालादेरनुरोधेन भगवांश्चाऽपि मन्यते ॥ ३५० ॥ आत्मानमन्यथाऽन्यत्र का शंका कार्यसाधने ॥ एवं सप्तभिरुद्दिष्टं साधनं यद्धरिर्वदेत् ॥ ३५१ ॥ अन्यथा सेवनं तस्य कर्तव्यमिति निश्चयः ॥ अतः परं सात्विकानां फलं सप्तभिरुच्यते ॥ ३५२ ॥ उभयोरैक्यसिद्ध्यर्थं कथाश्लेषो विधीयते ॥ प्रद्युम्नस्य जयस्मृत्या भगवत्स्मरणादपि ॥ ३५३ ॥ शाल्वे प्रविष्टे रुद्रो हि तेन प्रद्युम्नमारणम् ॥ कामजेता यतः प्रोक्तस्तेनाऽत्राऽप्यभवज्जयः ॥३५४॥ प्रद्युम्नेऽभूत्तदावेशः प्रद्युम्नस्याऽपकर्षणे ॥ अनेन तस्मिन् समये सर्वेषामेव रुद्रतः ॥ ३५५ ॥ पांडवानां यादवानां सर्वेषामेव कालतः ॥ फलं तदेव भगवान् प्रयच्छति यदाऽखिलाः ॥ ३५६ ॥ अत्यंतं तापमायांति नोचेत्स्वाद्व फलं न हि ॥ इति केचिद्विचार्यात्र कृष्णेऽपि परमात्मनि ॥ ३५७ ॥ साक्षादुद्भूतरूपेऽपि प्राकृतत्वप्रतीतितः ॥ अवतारांतरे यद्वत्तथा वक्तुं विचारणाम् ॥ ३५८ ॥ कुर्वंति लोकमोहाय तदर्थं तन्मतं क्वचित् ॥ फलात्पूर्वं पूर्वपक्षरीत्योक्त्वा दूषयत्यतः ॥ ३५९ ॥ शुकः परमतत्त्वज्ञः केचित्प्रक्षेपमूचिरे ॥ पूर्वपक्षकथायां तु मोहलीलेति निश्चयः ॥ ३६० ॥ महादेवस्य तोषार्थं क्वचित्कल्पे तथाऽभवत् ॥ तत्स्मृतियोगधर्मेण तत आहुर्मुनीश्वराः ॥ ३६१ ॥ तत्राऽपि न शुको मेने भक्तियुक्ताच्च योगतः ॥ हृदिस्थदृष्टभावेन सहितं स्मरणं तथा ॥ ३६२ ॥ न तु शुद्धेन योगेन तथा दृष्टमतो न हि ॥ एतस्य कथनादेवं ज्ञापितं सर्वथा यदा ॥ ३६३ ॥ कार्यावेशं वितनुते तदा मोहो भवेदिति ॥ तेन केनापि लीलापि न कर्तव्या कथंचन ॥ ३६४ ॥ तदाऽधिकारिणो देवा मन्यंते

१ प्रद्युम्ने । २ प्रद्युम्न । ३ प्राकृतत्व । ४ विचारणात् ।

दुष्टभावनाम् ॥ सत्वावतारपक्षे हि भवेदेतन्न चाऽन्यथा ॥ ३६५ ॥ निर्गुणस्तु हरिः कृष्णः स्वयमाविर्बभूव ह ॥ संदेहे तस्य भक्तैस्तु निर्णयो ज्ञायतां यथा ॥ ३६६ ॥ तं शस्त्रपूगैरित्यादि शुद्धं नान्यत्ततोऽधिकम् ॥ आदौ त्रिविधदुष्टानां वधोऽत्र विनिरूप्यते ॥ ३६७ ॥ शाल्वस्य हरभक्तस्य दंतवक्रस्य चात्मनः ॥ तद्भ्रातुश्च द्वितीयस्य राजसस्य वधः स्मृतः ॥३६८॥ एवं दोषप्रणाशो हि फले पूर्वमुदीरितः ॥ तेनैव यादवानां हि सर्वव्यसननाशतः ॥३६९॥ कृष्णात्मकं फलं सिद्धं यत एवं करोति हि ॥ ततः सर्वसुखार्थाय बलदेवविनिर्गमः ॥ ३७० ॥ तीर्थे स्वधर्मनाशाय दोषे याते सुखं स्वतः ॥ स्वयं तु पांडवानां हि दुःखनाशं चकार ह ॥ ३७१ ॥ एवं त्रिभिरिहाध्यायैर्दुःखनाशो निरूप्यते ॥ स्पष्टास्पष्टविभेदेन त्रिविधानां विशेषतः ॥३७२॥ कालदोषात्तु ऋषयो वक्तारं मेनिरेऽधमम् ॥ अतो ज्ञात्वैव रामेण सूतो धर्मार्थमाहतः ॥३७३॥ संतोषार्थमृषीणां च स्वावतारं विधाय हि ॥ तत्र तं स्थापयामास कार्यं भागवते स्थितम् ॥ ३७४ ॥ शुकोक्तमन्यथा वाक्यं हृदयं न विशेत्कचित् ॥ बल्वलस्य वधो मुख्यो दोषस्तेषां च नाशितः ॥ ३७५ ॥ बल्वलो दोषसूतौ च त्रयोऽत्र विनिवारिताः ॥ ज्ञानोपदेशो लीलार्थौ यथा तीर्थाटनं तथा ॥ ३७६ ॥ शुद्धिस्तीर्थैस्तथा यज्ञैर्ज्ञानेनाऽपि भवेद्ध्रुवम् ॥ ऋषीणां त्रितयं शुद्धमग्रे मोहनिवृत्तये ॥ ३७७ ॥ ज्ञानोपदेशोऽनन्यार्थो दोषा एवं विनाशिताः ॥ द्वाभ्यां पंचभिरग्रे तु गुणैर्दोषनिवारणम् ॥३७८॥ दारिद्र्यनाशः संपत्त्या द्वाभ्यां तत्र निरूप्यते॥ त्रिभिश्च त्रिविधानां च पूर्वोक्तानां च सर्वशः ॥ ३७९ ॥ सुदामा ब्राह्मणः कश्चिदर्धं च ऋषिसंमतः ॥ भार्या तु ब्राह्मणी तस्य नैर्पी दारिद्र्यदर्शनात् ॥३८०॥ विरुद्धमुभयं कालात्तत्रैकस्य निवारणम् ॥ तत्र कृष्णः पुष्टिमार्गे स्त्रीणां चैव हिते रतः ॥३८१॥ अतोऽर्धजरतीयं तं भक्तं चक्रे स्वसंगिनम्॥ यथा हि भगवानत्र पूर्णकामोऽपि तिष्ठति ॥ ३८२ ॥ तत्संगिभिस्तथैवाऽत्र स्थेयमित्येव निश्चितम् ॥ नाशो न कोऽपि भविता ऋषीणां चाऽपि मोचकः ॥ ३८३ ॥ अलौकिकं च प्रददौ न दूषणमिहाण्वपि ॥ स्वतुल्यत्वाय तु कथा पूर्वजाता निरूपिता ॥ ३८४ ॥ समक्षं भगवाँस्तंत ऋषिमेवाऽकरोत्स्वतः ॥ अतो न किंचित्प्रददौ भार्यायै

१ सिद्ध । २ तर्पा । ३ नाशनात् । ४ संगिकम् । संगितम् ।

तत्र दत्तवान् ॥ ३८५ ॥ अनभिप्रेतपक्षे हि दानाभावो विशिष्यते ॥ अतो दाने तस्य तोषो गच्छतो वर्ण्यते पथि ॥ ३८६ ॥ सांसर्गिकस्य दोषस्य निवृत्त्यै भगवत्परः ॥ भक्तिमार्गानुसारेण विषयान् बुभुजे वशः ॥ ३८७ ॥ एवं ऋषित्वं भक्तत्वं धनं दारिद्र्यमेव चे ॥ विरुद्धं स्थापयामास स्वकीयत्वप्रसिद्धये ॥ ३८८ ॥ त्रिभिरग्रे तु भगवान् पूर्णं फलमुदीर्यते ॥ द्वाभ्यां द्वाभ्यां त्रिभिश्चैव फलत्रयमुदीरितम् ॥ ३८९ ॥ दुःखाभावसुखोत्कर्षौ कृष्णश्च त्रिविधस्तथा ॥ सर्वेषां वांछिताकारः स्त्रीणामत्यंतवल्लभः ॥ ३९० ॥ ऋषिदेवपितॄणां च लौकिकालौकिकत्वतः ॥ फलदाता सर्वभावैः सर्वतोऽत्र निरूप्यते ॥३९१॥ तत्कालस्थाः सर्व एव वर्णा एके च मानुषाः ॥ सर्वतस्ते समागत्य कृष्णसान्निध्यदर्शनैः ॥ ३९२ ॥ शुद्धसात्त्विकभावं ते प्राप्ता रोधनमागताः ॥ देहादिकं जगत्सर्वं विस्मृत्य भगवत्पराः ॥ ३९३ ॥ जाता इति फलं तेषां हरिरेव न संशयः॥अंते च गोपिकाः प्रोक्ताः शुद्धसत्त्वप्रसिद्धये ॥ ३९४ ॥ निरोधश्चापि तासां हि सर्वभावेन रूपितः ॥ तदंताः सर्व एवैते तत्फला इति निश्चितम् ॥ ३९५ ॥ संसारो भगवांश्चैव विरुद्धं द्वितयं फलम् ॥ उभयैर्यत्सुखं तद्धि तासां पुष्ट्याऽभवत्तदा ॥ ३९६ ॥ तथैव प्रार्थितं ताभिः संमतं चाऽपि वै हरेः ॥ न ज्ञानं न च वैराग्यं यतः प्राह हरिः स्वयम् ॥ ३९७ ॥ अव्यक्ता हि गतिर्दुःखं यतः सर्वाणि चोक्तवान् ॥ जीवतश्च स्थितिर्मृग्या तथा वृत्त्यादि सर्वथा ॥ ३९८ ॥ स्वाभाविकं न दुःखाय परत्रेह च निश्चितम् ॥ लोकद्वयेऽपीदं तुल्यं हरेर्नाऽन्यत्परं सुखम् ॥ ३९९ ॥ विरोध्यन्योन्यमंत्रोक्तं योचितं तेन तद्विधम् ॥ अतिदेशार्थमन्येषां निकटे कथनं मतम् ॥ ४०० ॥ स्त्रीणां स्वस्वपतौ स्नेहः सहजस्तन्निवृत्तये ॥ कृष्णस्त्रीणां विवाहानां कथा त्वत्र निरूप्यते ॥ ४०१ ॥ लोकाद्वयं गोपिकाभिः पूर्वमेव निवारितम् ॥ पुरुषोत्तमभावेन वैदिकं च निवारितम् ॥ ४०२ ॥ उत्कर्षे तु श्रुते स्त्रीणां पूर्वभावो विनश्यति ॥ पश्चात्तापश्च जायेत विवाहस्थापनं ततः ॥ ४०३ ॥ कृष्णे कामाद्यभावाय दास्यं सर्वत्र वर्ण्यते ॥ सर्वभावेन सर्वासां विवाहकरणे क्षमः ॥ ४०४ ॥ सुतरां भक्तियुक्तानां लक्ष्म-

१ षो । २ या । ३ चतुर्दा । ४ काक्षि । ५ एते । ६ येन । ये नु । ७ अहं । ८ मन्यत्र । ९ या । १० अतिदोषा । ११ सुषाषा ।

णायाः कथा तता ॥ द्रौपदी पुष्टिमार्गस्था ततः पृच्छति यत्नतः ॥ ४०५ ॥ तदुत्कंठापराः सर्वा रुक्मिण्यादिर्वेदेवताः ॥ जाता इति पुरा प्रोक्तात्फलादेतद्विशिष्यते ॥ ४०६ ॥ विस्मयाविष्टचित्तानां भविष्यति तथा हरिः ॥ पूर्वोक्तानामपि तथा क्रमवृध्या क्षणे क्षणे ॥४०७॥ महिषीणां यथा भावस्तथा साधु भविष्यति ॥ लौकिकानखिलानेवं समुद्धृत्य मनीषया ॥ ४०८ ॥ वैदिकानृषिदेवांश्च पूर्वभावस्य सिद्धये ॥ ततः प्रभृति पूज्यंत इति न्यायेन वै हरिः ॥ ४०९ ॥ स्तोत्रं तेषां चकाराऽऽद्ये निरोधार्थं तु तैः पुनः ॥ विपरीतं सर्वमाहुः शास्त्रार्थोऽयं हि पुष्टितः ॥ ४१० ॥ सांनिध्यादेव सर्वेषां ह्येवं समुपागतम् ॥ अनेनैवोपदेशोऽभूत्फलं चाऽपि स्वसंमतम् ॥ ४११ ॥ प्रमेयबलमासाद्य यादवानां फलं पुनः ॥ कृतं संदेहजननात्प्रमाणेनोच्यते पुनः ॥ ४१२ ॥ वसुदेवस्य संप्रश्नस्ततो यागार्थमुच्यते ॥ ईशलीलां बुद्बुबोधां मत्वा ते संशयं गताः ॥ ४१३ ॥ नारदः पूर्ववत्प्राह सर्वसंदेहवारकः ॥ सात्विकप्रक्रियायां हि प्रमाणं न हि दर्शितम् ॥ ४१४ ॥ ततः कृष्णकृतं सर्वं लौकिकं मेनिरेऽखिलाः ॥ अतो यागोत्सवो जातो लौकिकं वैदिकं तथा ॥ ४१५ ॥ एकीभूयाऽभवद्भक्तौ तेन सर्वेऽभवन्त्समाः ॥ सर्वेषां सर्वभावो हि फलादपि हरिः फलम् ॥ ४१६ ॥ सात्विकप्रक्रियायां हि सर्व एव निरूपिताः ॥ निर्गुणत्वं समापन्ना निरोधोऽत्रैव रूपितः ॥ ४१७ ॥ हरिणा केवलेनैव धर्मेणैवाखिलं कृतम् ॥ इति संशयनाशाय गुणानां प्रक्रियोच्यते ॥ ४१८ ॥ निर्धर्मको वा भिन्नो वा निरोधं कुरुते यदि ॥ तदा व्यर्थं समस्तं स्यादिति षड्गुणवर्णनम् ॥ ४१९ ॥ येनैतावत्कृतं सर्वं स कृष्णो भगवान् परः ॥ इति दर्शयितुं षड्भिरध्यायैः षड्गुणान् जगौ ॥ ४२० ॥ ऐश्वर्येण समग्रेण प्रथमं ज्ञानदो हरिः ॥ पश्चात्पुत्रप्रदश्चाऽपि बाह्याभ्यंतरभेदतः ॥ ४२१ ॥ ज्ञानेनांतर आनंदः पुत्रादिभ्यस्तथा बहिः ॥ पितृमातृविभेदेन वैदिकं लौकिकं तथा ॥ ४२२ ॥ ऐश्वर्यभक्तिसिद्ध्यर्थं प्रकटीकृतवान् हरिः ॥ गुरुत्वं देवतात्वं वा न स्वीकृत्य सुतत्वतः ॥ ४२३ ॥ तदुक्तमेव निखिलं सर्वं ब्रह्मेति बोधितम् ॥ कचित्तु ब्रह्मभावो हि खंडज्ञानमिहोच्यते ॥ ४२४ ॥ लोकेऽधुना तदेवास्ते जीवेश्वरविभेदतः ॥ मायाविनस्तु मन्यंते जीवमात्मा-

१ ततः । तदा । २ चाश्च । ३ भतो । ४ सम मतम् । ५ व्यस्तं ।

नमीदृशम् ॥ ४२५ ॥ वसुदेवोक्तमखिलं वैष्णवाः पुरुषोत्तमम् ॥ वस्तुतो यादृशं सर्वं तत्कृष्णेन निरूप्यते ॥ ४२६ ॥ अतिदेशप्रकारेण स्थापितं चाऽपि वैष्णवम् ॥ दृष्टांतार्थं यतः साधु जीवोऽप्येतेन सिध्यति ॥ ४२७ ॥ एतेन सर्ववेदानामर्थो ज्ञानाधिकारतः ॥ अच्युतानामीश्वरत्वबलादेव निरूपितः ॥ ४२८ ॥ गुरुपुत्र इवाऽत्रापि कालग्रस्ता विमोचिताः ॥ षडेते षड्गुणत्वाय देवकीसुतदेहिनः ॥ ४२९ ॥ समानत्वनिवृत्त्यर्थं स्नेहस्तस्यास्तु वर्ण्यते ॥ नंदादिवदिदानीं हि देवक्यपि पुरा स्थिता ॥ ४३० ॥ अतः स्नेहदशायां हि स्तन्यं नित्यं हरिः पपौ ॥ पीतशेषमतः प्रोक्तं वैष्णवत्वाय मुक्तये ॥ ४३१ ॥ प्राकृतत्वदशायां वा सद्यः पीतं विनिर्गमे ॥ उच्छिष्टभोजिनो मायां तरंत्येव न संशयः ॥ ४३२ ॥ एवमैश्वर्यचरितमेकेन विनिरूपितम् ॥ ततो वीर्यकथां प्राह तथैवैकेन सा त्रिधा ॥ ४३३ ॥ एतेषां संगतिः षण्णां न परस्परमुच्यते ॥ गुणत्वाय कथापक्षः पूर्वमेव निवारितः ॥ ४३४ ॥ बुद्धिवीर्यं क्रियावीर्य क्रिया च द्विविधा मता ॥ सिद्धमात्मानमेकं हि द्विरूपं कुरुते यतः ॥ ४३५ ॥ अतर्क्यभावमापन्नस्तथाऽन्येषां च तान् प्रति ॥ मायाविवाहे भगवान् बुद्धिवीर्यं चकार ह ॥ ४३६ ॥ माया तु त्रिविधा प्रोक्ता शक्तिर्वै वासुदेवगा ॥ अधिभूता समस्तानां मोहिकैव स्थिता भुवि ॥ ४३७ ॥ मायावती तु कामस्य द्वितीया विनिरूपिता ॥ दैविकी त्वियमाख्याता पतिस्तस्याः स्वयं हरिः ॥ ४३८ ॥ ईश्वरत्वात्तु दासी सा कन्यैव भवितुं क्षमा ॥ सा पुनर्देवकीमोहात्तस्यां जाता निजेच्छया ॥ ४३९ ॥ तस्या भोक्ता न वै जीवो भगवान् पुरुषोत्तमः ॥ संबंधान्नैव भोक्ता स्याल्लोकदोषान्न कन्यका ॥ ४४० ॥ सर्वदा स्थातुमुचिता वेदस्तस्या न युज्यते ॥ अतो विवाहः कठिनो लोकोऽप्यत्र न दुष्यति ॥ ४४१ ॥ अत आवेशिनं कृष्णं नरं प्रव्राजिनं तथा ॥ वेषात्पाखंडिनं कृत्वा चौर्येणैतां ददौ हरिः ॥ ४४२ ॥ बलस्तु मूलवार्तां हि गृहे ग्रस्तांशसंयुतः ॥ न जानाति ततः क्रुद्धः कृष्णेन च निवारितः ॥ ४४३ ॥ एतद्बुद्धिबलं प्रोक्तं येन लोकेऽपि संमतिः ॥ जनकः श्रुतदेवश्च भगवद्वीर्यबोधकौ ॥ ४४४ ॥ प्रार्थनां चक्रतुस्तौ द्विरूपोऽभूत्तदिच्छया ॥ मुनीनां च द्विरूपत्वं तेषां स्मृत्वा च संमतम्

१ दि । २ द्वितीये ।

॥ ४४५ ॥ न च ते द्विविधा जाता नाऽपि कृष्णस्तथाऽभवत् ॥ किं तु कृष्णेच्छया जातास्तेषां चाऽप्यत्र विस्मयः ॥ ४४६ ॥ अतः क्रियाबलं प्रोक्तं यथा स्वप्ने तथाऽभवत् ॥ एकत्राऽवस्थितः कालमन्यत्रैकं दिनं तथा ॥४४७॥ अग्रे कालद्वयं तुल्यं तेन सर्वस्य विस्मयः ॥ एतदर्थं तु मुनयः सह नीताः सपौरुषम् ॥ ४४८ ॥ प्रदर्शिता यतः सर्वे तद्वाक्याद्वीर्यवेदिनः ॥ श्रुति-गीता यशः प्राह सर्वसंदेहवारिका ॥ ४४९ ॥ लौकिकं चेद्युक्तिसिद्धं कर्तृत्वादि भवेद्धरेः ॥ अलौकिकस्य करणाद्यशो जातमलौकिकम् ॥४५०॥ अष्टाविंशतित-त्त्वानि यथारूपे हरीच्छया ॥ तथैव नाम्नि यशसि तावत्यः श्रुतयो मताः ॥४५१॥ तस्मात्संदेहनिर्धारो मनसश्च निवेशनम् ॥ निर्गुणे भगवद्रूपे वेदैरेवेति निश्चयः ॥ ४५२ ॥ श्रीशक्तेरग्रिमाध्यायस्तत्रैवं निर्णयः कृतः ॥ हरिरेव स्वयं भुंक्ते श्रियं नाऽन्यस्तु कश्चन ॥ ४५३ ॥ यस्तु मोहात्कचिद्भुंक्ते तं दुःखे पातय-त्यजः ॥ भक्तस्य तन्न युक्तं हि तस्मात्तां विनिवारयेत् ॥ ४५४ ॥ अन्ये देवाः श्रियं दत्वा तथाऽन्यानपि वै वरान् ॥ स्वयं संकटमायांति तस्माच्छ्री-र्नैव युज्यते ॥ ४५५ ॥ शाकुनेयकथा प्रोक्ता तदर्थं हरसंकटे ॥ ततः परं तु ज्ञानस्य निर्णयो हरिमेधसः ॥ ४५६ ॥ क्षमा तस्योत्तमं लिंगं कृष्ण एव प्रतिष्ठिता ॥ तस्या निर्णयसिद्ध्यर्थं भृगूपाख्यानमुच्यते ॥ ४५७ ॥ तथा ब्राह्मणवार्ताऽपि सर्वयादवसंनिधौ ॥ क्षमा कृष्णे परा प्रोक्ता समर्थे ज्ञानसं-भवे ॥ ४५८ ॥ उपदेशेऽपि नाऽन्यस्य ज्ञानमस्तीति बोधितम् ॥ अर्जुनस्य कथा प्रोक्ता सर्वगीतार्थवेदिनः ॥ ४५९ ॥ अतः परं तु वैराग्यं कथाऽध्याये निरूप्यते ॥ तेनैव पूर्णतां याति निरोधः सकलोऽपि हि ॥ ४६० ॥ कृष्णे विरक्तः किं वाच्यं तत्संबंधात्त्रियोऽपि हि ॥ कामैकरसपूर्णाश्च विरक्ताः सर्वथा मताः ॥ ४६१ ॥ एतावदर्थनिर्धारे कथा यावत्य ईरिताः ॥ तासां चाऽत्रोपसंहारः क्रीडया विनिरूप्यते ॥ ४६२ ॥ एवं सर्वान् समुद्धृत्य क्रीड-त्यस्माकमीश्वरः ॥ क्रीडायां प्राप्तसंसारः स्त्रीणामपि निवार्यते ॥ ४६३ ॥ कुर्यादिदशार्थास्तु निर्गुणेन युता गुणाः ॥ महिषीहृदयापन्नाः संदेहं वारयंति हि ॥४६४॥ मनसा तु तिरोधानाद्विह्वलास्ता निरूपिताः ॥ तेन कृष्णार्थता प्रोक्ता तासां सर्वक्रियासु हि ॥ ४६५॥ स्कंधार्थस्तु निरोधो हि ततस्तेनोप-

१ क्रियावतां ।

संहतिः ॥ अग्रेऽपि ये भविष्यंति कीर्तनात्तेऽपि तादृशाः ॥ ४६६ ॥ प्रकरणमिह पूर्यतेऽनवद्यं त्रयमपि विश्वजयाय मादृशानाम् ॥ निजपदसमवाप्तये च नित्यं निजगुरुणा हरिणैव लोकवन्द्यम् ॥ ४६७ ॥ ॥ इति श्रीवल्लभदीक्षितविरचिते तत्वदीपनिबंधे श्रीभागवतार्थप्रकरणे दशमस्कंधविवरणं संपूर्णम् ॥



# अथ तत्त्वार्थदीपनिबंधे

भागवतार्थप्रकरणे

## एकादशस्कंधविवरणं प्रारभ्यते.

सप्ताशीत्या तथाऽध्यायैर्निरोधो दशमे त्रिधा ॥ तामसादिविभेदेन भौतिकादिविभेदतः ॥ १ ॥ अथैकत्रिंशताऽध्यायैर्मुक्तिरेकादशे स्फुटा ॥ जीवेशयोर्द्विधाभेदाच्चतुर्धाऽपि निरूप्यते ॥ २ ॥ जीवमुक्तिर्द्विधा प्रोक्ता सायुज्याद्ब्रह्मभावतः ॥ ब्रह्मणोऽपि द्विधा ज्ञेया नाव्यत्यागात्स्वकात्स्वतः ॥ ३ ॥ आद्या पंचभिरध्यायैर्द्वितीया तत्त्वसंमितैः ॥ एकैकेन तथा शिष्टाव-भिनयौ परं यतः ॥ ४ ॥ विद्यया प्रथमा मुक्तिः प्रकृतेस्त्यागतः परा ॥ ज्ञानेन पूर्वा भक्त्याऽन्या प्रथमे दश बोधकाः ॥५॥ गुणनिर्गुणभेदेन द्वितीये भगवान् परः ॥ ब्राह्मणश्च तथा हंसो भीष्मो भिक्षुः पुरूरवाः ॥ ६ ॥ पंचाऽन्ये भगवाँश्चापि द्विरूपः सप्त बोधकाः ॥ ऐश्वर्यादियुतः कृष्णः पूर्णो बोधक ईर्यते ॥ ७ ॥ नारदो निर्गुणस्तत्र कविप्रभृतयः परे ॥ वैराग्यं भगव-द्धर्माः सर्वनिर्णय एव च ॥ ८ ॥ नित्यं कथायाः श्रवणं पूजा चेत्यंगपंच-कम् ॥ अभिप्रायात्तु वैराग्यं पूर्वत्रांगं निरूपितम् ॥ ९ ॥ प्रक्रिया बोधिका ज्ञेया शेषयोर्बीजभावतः ॥ द्वितीयस्य तु मुख्यांगं यत्र सर्वं प्रतिष्ठितम् ॥ १० ॥ चतुर्मूर्तिर्हरिः प्रोक्तस्त्रयाणां पूर्वमीरितम् ॥ संकर्षणस्य चरितमत्र स्पष्टं निरू-प्यते ॥ ११ ॥ ज्ञानशक्तिस्तस्य मुख्या वासुदेवस्तु मोक्षदः ॥ अर्थकामौ द्वितीयस्तु धर्मं यच्छति मध्यमः ॥ १२ ॥ उपदेष्टा क्रियायां च निर्दो-षत्वाय युक्तितः ॥ अक्लिष्टकर्मा कालादेस्तथोपायं करोति हि ॥ १३ ॥ तदर्थं मौसलं प्रोक्तं संक्षेपेण पुरोदितम् ॥ अंते चतुर्णां चरितं सर्वमेवोपसंहृतम् ॥ १४ ॥ द्वयं निर्गलितं ह्यत्र भगवच्चरितेन हि ॥ तदा स्थितास्तु निर्द्वंद्वाः सुखं प्राप्य परं गताः ॥ १५ ॥ नामारूढचरित्रस्य कीर्तनाच्चाऽपरे तथा ॥ लोकदृष्ट्या चरित्रस्य ग्रहणं बाधितं भवेत् ॥ १६ ॥ अतो विशेषं विज्ञातुं पुनः पृच्छति तत्वतः ॥ भगवानेव सर्वस्य कर्तेत्यत्र निरूपितम् ॥ १७ ॥ उपक्रमेण निर्दुष्टः कथया चाऽपि बोधितः ॥ ज्ञानं पुरा भगवता

१ तत्परा । २ स्य । ३ न्याय । ४ निरूपित. । ५ निर्दिष्ट. ।

वसुदेवाय बोधितम् ॥ १८ ॥ गुरुत्वभावनाभावाद्विस्मृतस्तत्पुनर्हरिः ॥ नारदं स्थापयित्वाऽऽह मन्यते तं यतः पिता ॥ १९ ॥ गोपिकावद्वहिर्दृष्टौ व्यसनत्वं हि भासते ॥ संसारे निखिले तस्य त्यागेच्छा च प्रजायते ॥ २० ॥ अतः सम्यक्प्रबोधाय नारदोऽत्र निरूपितः ॥ पुष्टिमार्गेस्थितं मत्वा कदाचिन्नैव मन्यते ॥ २१ ॥ अतो मर्यादया सिद्धान्नव योगीश्वरान् जगौ ॥ त्रैगुणातिक्रमे जाते नारदोक्तं हि भासते ॥ २२ ॥ नवानां भूमिका प्रोक्ता चतस्रो ह्यधिकारतः ॥ अतोऽध्यायैश्चतुर्भिर्हि तदुक्तं विनिरूप्यते ॥ २३ ॥ तत्र सर्वोत्तमो यस्तु तस्य कार्यद्वयं मतम् ॥ भगवद्धर्मकरणं ततो भागवतो भवेत् ॥ २४ ॥ अथवा भगवद्भक्तैस्तद्धर्मास्तु समाचरेत् ॥ उत्तमस्य तु चत्वारि कर्तव्यानीति रूप्यते ॥ २५ ॥ आद्ये मायापरिज्ञानाद्वैराग्यं सुदृढं मतम् ॥ ततस्तत्तरणोपायं गुरुसेवादिकं चरेत् ॥ २६ ॥ ततो ब्रह्म परं ज्ञात्वा यज्ञान् कुर्यादहर्निशम् ॥ वैदिकांस्तांत्रिकान् वाऽपि तदर्थं वेदनिर्णयः॥२७॥ तत्राऽशक्तस्य सततं कथाश्रवणमीर्यते ॥ सर्वावतारैर्यज्जातं तस्मिँश्चित्तः सुखी भवेत् ॥ २८ ॥ ततोऽपि प्रथमो यस्तु प्राकृतः स निगद्यते ॥ तस्याभजननिंदायां सन्निवेशः पुराभवेत् ॥ २९ ॥ ततो युगानुरूपेण भजेत्स्वस्याऽधिकारतः ॥ भक्तिं चाऽग्रे स्वयं प्राह कृतार्थत्वं च पुष्टितः ॥ ३० ॥ ज्ञानस्य पूर्वसिद्धत्वात्कार्यमत्र निरूपितम् ॥ मोहाभावस्तु तेनैव सिद्धमेवाऽखिलं यतः ॥ ३१ ॥ चतुर्विंशतिभिः प्रोक्ता द्वितीया प्रक्रिया यतः ॥ अतः प्रकृतिनाशाय षष्ठाध्यायो निरूप्यते ॥ ३२ ॥ आद्यो मूलेन हरिणा स्वीकृतं त्याज्यतेऽमरैः ॥ त्यागस्वीकरणे जाते तदुच्छिष्टोपजीविनाम् ॥ ३३ ॥ भक्तानां तज्जिहासेच्छा तत्र ज्ञानं क्रियाऽथवा ॥ बोधनीयो हि हरिणा तत उद्धवसंकथा ॥ ३४ ॥ त्रयोविंशतिभिः प्रोक्ता प्राकृतो हि तथा गणः ॥ प्रश्नस्तु कृष्णवाक्यार्थस्तेनाऽऽदावेव रूपिताः ॥ ३५ ॥ प्राकृतांकुरवत्पूर्वं हरिः संक्षेपतो जगौ ॥ सर्वत्र सुलभत्वाय भक्त्ये ज्ञानं निरूपितम् ॥ ३६ ॥ तदिच्छां तु पुरस्कृत्य न तु तस्याऽधिकारतः ॥ तथाऽपि सेवको मुख्यः स्वाधिकारं न दृष्टवान् ॥ ३७ ॥ अयोग्यमिच्छन् पुरुषः पतत्येव न संशयः ॥ इति निश्चित्याऽधिकारे यदुक्तं तद्धि पृच्छति ॥ ३८ ॥ ततस्तु भगवान्

१ आद्यो। २ देव। ३ श्वेत'। ४ नौ.। ५ रूपितः। ६ दृष्टवान्।

प्राह स्वतः सर्वं विचिंत्य ताम् ॥ अन्वयव्यतिरेकाभ्यां तदा प्रोक्तं फलिष्यति ॥ ३९ ॥ अन्वयादिदिदृक्षायामशक्तिश्चेत्तदोच्यते ॥ गुरुशिष्यौ सदा तुल्यौ तदा ज्ञानं फलिष्यति ॥ ४० ॥ इदानीं यद्वतुल्योऽयं गुरुस्तेन जडो मतः ॥ पंचविंशतितत्वानामध्यासविनिवृत्तये ॥ ४१ ॥ तावंतो गुरवः प्रोक्ता येनाऽवस्था दृढा भवेत् ॥ वैराग्यं समता चैव सर्वैरेव फलिष्यति ॥ ४२ ॥ त्रिभिर्जडकथा प्रोक्ता कायवाङ्मनसां यथा ॥ दोषा नष्टा भविष्यंति तथाऽवस्थात्रयस्य च ॥ ४३ ॥ उभयत्र ततो युक्तिं वक्ष्यति स्नेहभावतः ॥ ततोऽपि भगवान् प्रीतः पुष्टिं वक्ष्यति युक्तितः ॥ ४४ ॥ एवं षड्भिरिहाध्यायैरेकं ज्ञानं निरूप्यते ॥ मर्यादापुष्टिभेदेन नाऽधिकारस्तदा यदि ॥ ४५ ॥ तदा तत्सिद्धये चैव प्रक्रियांतरसंकथा ॥ एवं सर्वत्र विज्ञेयं ब्रह्मा हंसो द्वितीयके ॥ ४६ ॥ कपोतांताः शरीरस्य प्रकृत्यष्टनिवृत्तये ॥ मनसश्चंद्रमाः प्रोक्तो बुद्धेश्चापि तथा रविः ॥ ४७ ॥ अहंकारनिवृत्त्यर्थं कपोतो विनिरूपितः ॥ गुणत्रयनिवृत्त्यर्थं द्वितीये नवधोच्यते ॥ ४८ ॥ कामस्येंद्रियवर्गस्य तथाऽऽशाया निवृत्तये ॥ कर्ममार्गे यथा कर्मभावात्कर्म विशिष्यते ॥ ४९ ॥ ज्ञानमार्गे तथा कर्म क्रियातोऽपि विशिष्यते ॥ गीतया न विरोधोऽत्र साध्यावस्था तु सामता ॥ ५० ॥ सिद्धावस्था त्विह प्रोक्ता परीक्षार्थं तु भोजने ॥ सोऽपि चेत्तुल्यभावः स्यादंतरेण ततो गुणः ॥ ५१ ॥ अतः समुद्रं प्रोवाच तस्य चंद्रेण वर्धनम् ॥ दृष्ट्वा तद्विनिवृत्त्यर्थं स्त्रियं प्रोवाच तादृशीम् ॥ ५२ ॥ ततो निवृत्तोऽप्यशनाद्भ्रशमायाति दुर्मतिः ॥ ततस्तद्विनिवृत्त्यर्थं मधुकारादिरूपणम् ॥ ५३ ॥ ततो भिक्षार्थगमने स्त्रियं बाधकमाह हि ॥ तया साऽपि परित्याज्या सर्वनाशोऽन्यथा भवेत् ॥ ५४ ॥ पौनरुक्त्यं ततो नास्ति प्रसंगादपि वारिता ॥ सर्वस्य मूलं जिह्वेति ततः सा विनिरूपिता ॥ ५५ ॥ ततोऽप्याऽऽशा तु महती राजसोऽयं तु मध्यमः ॥ सात्त्विकस्याऽपि सद्बुद्धेर्विद्यादेः संग्रहो यदि ॥ ५६ ॥ तदाऽपि सर्वनाशः स्यात्कुररस्तन्निरूपितः ॥ तत्सिद्धये गुरुर्बालस्तथाऽपीष्टं न सिध्यति ॥ ५६ ॥ ततस्त्वटनमेकस्य मनः कृष्णे निवेश्य च ॥ अपेक्षितानां सर्वेषामन्यथा सिद्धिरुच्यते ॥ ५७ ॥ सर्वाभावे हरिः सर्वं सर्वकर्ता प्रदास्यति ॥ वस्त्वंतरत्वे जीवस्य

१ यच्छति । २ शापनिवृत्तये । ३ चेन्द्रेण ।

ब्रह्मभावोऽपि साध्यते ॥ ५८ ॥ विवेकसहितो देहः सर्वत्रैव च साधकः ॥ युक्तिस्तु द्विविधा प्रोक्ता बाह्याभ्यंतरभेदतः ॥ ५९ ॥ बाह्याः सर्वेऽत्र लोका हि जीव आंतर उच्यते ॥ बाह्ये प्राह कचिद्ब्राह्यान्नाऽन्यथा शक्यताभवेत् ॥ ६० ॥ अतः साधुरिहोद्दिष्टः स्वयं संग्यथवा भवेत् ॥ कदाचित्ते भक्तिमार्गं वदेयुरिति तां जगौ ॥६१॥ मार्गद्वयस्य श्रवणात्संदेहो जायते ध्रुवम् ॥ संदेहविनिवृत्तिर्हि वचनान्नैव जायते ॥ ६२ ॥ अतो यथा न जायेत तत्र युक्तिर्निरूपिता ॥ मूलमध्यावसानैश्च तत्स्वरूपनिरूपणम् ॥ ६३ ॥ तत्स्वरूपपरिज्ञाने सत्वादिविनिरूपणम् ॥ अंतःकरणधर्मादेरेवं दोषा निवारिताः ॥ ६४ ॥ तदात्मकत्वादोषो हि न पूर्वैर्विनिवार्यते ॥ अतो गुरुरिहान्यो हि वक्तव्यः पूर्वतो महान् ॥ ६५ ॥ तदर्थं प्रश्नकर्तारस्तादृशाः सनकादयः ॥ हंसो हि सहजं नीरं त्यक्त्वा गृह्णाति तत्पयः ॥ ६६ ॥ निर्णयस्तत्र हंसेन कृतः सर्वत्र संमतः ॥ उभयस्य परित्यागः स तु कृष्णो यदा भवेत् ॥ ६७ ॥ परमश्रद्धया भक्त्या तदावेशात्प्रवेशतः ॥ चतुर्धा तद्धि भवति सर्वदोषनिवृत्तितः ॥ ६८ ॥ निश्चयार्थोऽयमेवेति वक्तुं श्रेयोनिरूपणम् ॥ अन्यच्चेच्छ्रेय एतादृगुपायो वा भवेत्तदा ॥ ६९ ॥ न कृष्णत्वं फलं पूर्णं नाऽपि त्यागस्तथोभयोः ॥ अतो निर्णयसिध्यर्थं प्रमाणस्योच्यते गतिः ॥ ७० ॥ प्रमेयबलमासाद्य युक्तिश्चाप्यत्र रूप्यते ॥ सेवकत्वे हीनभावदोषोऽपि विनिवार्यते॥७१॥ श्रद्धा त्वेतावता सिद्धा ततो भक्तिर्निरूप्यते ॥ स्वरूपतः साधनतः फलतश्चाऽपि रूपिताः ॥ ७२ ॥ तस्याश्च साधनं ध्यानं ततस्तदपि रूपितम् ॥ तत्र बाधकहानाय ध्यानभेदा निरूपिताः ॥ ७३ ॥ आवेशार्थं प्रवेशार्थं कृष्णात्सर्वं भवेदिति ॥ एतावता द्वितीयस्तु खंडः पूर्णो निरूपितः ॥ ७४ ॥ ज्ञानेनाऽपि प्रवेशे हि भजेदिति पुनर्हरिम् ॥ यावानित्यादि विज्ञातुं विभूतिं पृच्छते पुनः ॥ ७५ ॥ ततः स्वात्मानमेवाऽऽह गुरुमर्जुनसारथिम् ॥ विभूतिः सकला प्रोक्ता भक्त्यैवाऽहं भवेदिति ॥ ७६ ॥ तदर्थं धर्मसंप्रश्नः शुद्धो भक्तो भवेदिति ॥ वर्णाश्रमवतां धर्मस्तदर्थं विनिरूपितः ॥ ७७ ॥ तथाऽपि ज्ञानमार्गस्य परिज्ञानमिहेच्छति ॥ तदा भीष्मो गुरुः प्रोक्तो धर्मराजश्च पृच्छति ॥ ७८ ॥ तत्र सर्वपदार्थानां निर्णयः सर्वकर्मणाम् ॥ सत्वादीनां तथा रूपं

१ मर्त्र । २ ना । ३ स्वदोषो । ४ युक्ति । ५ तादृङ्नि ।

ज्ञानार्थं विनिरूपितम् ॥ ७९ ॥ मार्गत्रयविरोधस्य परिहारस्तथोच्यते ॥ अधिकारिविभेदेन मार्गभेदो निरूप्यते ॥ ८० ॥ सर्वाशक्तौ का कथेति शंकां वारयितुं पुनः ॥ शुद्धिप्रकरणं प्रोक्तं तथा शास्त्रविनिर्णयः ॥ ८१ ॥ अंतःकरणवज्जीवप्रकृत्योरपि संशयः ॥ उभयं हरिरेवेति तत्र वै निर्णयः कृतः ॥ ८२ ॥ मायया त्रिविधं भानं न प्रवृत्तिधियां भवेत् ॥ तदाऽपराधसंबंधादन्यदाऽपि न मुच्यते ॥ ८३ ॥ एतच्छंकापरित्यागो मनोदोषान्न च स्वतः॥ तस्मान्मानसदंडे हि नाऽपराधः कदाचन ॥ ८४ ॥ दंडस्य च परिज्ञानं यद्यतिक्रमणं सहेत् ॥ तस्य साधनविज्ञाने गुरुर्भिक्षुर्निरूप्यते ॥ ८५ ॥ तथा चेद्भावयत्येष तदा स्याद्दंडितं मनः ॥ मनसस्तु परित्यागे न किंचिन्मृग्यतेऽपरम् ॥ ८६ ॥ यदा पुनः साधकत्वं तस्य वांछति कर्हिचित् ॥ तदा सांख्यप्रकारेण सर्वं ज्ञात्वा न मुह्यति ॥ ८७ ॥ गुणैश्चेन्मोहमायाति तदा तेषां जयो यथा ॥ तैच तेषां स्वरूपं च तावन्मात्रनिवारणे ॥ ८८ ॥ निर्गुणानां पदार्थानां स्वरूपं विनिरूपितम् ॥ एवं जातोऽपि संगेन पुनश्चेन्नाशमेति हि ॥ ८९ ॥ तथा पुरूरवाः प्रोक्तः स्वात्मानं स्वयमुक्तवान् ॥ संगान्नष्टः पुनः संगं विमुच्य लभते गतिम् ॥ ९० ॥ जन्मांतरे स्मृत्यभावे संगान्नष्टो यदा भवेत् ॥ तदा का गतिरित्यत्र हरिपूजा निरूपिता ॥ ९१ ॥ तेन जातिस्मरो भावी तस्य ज्ञानं हरिः स्वयम् ॥ जातिस्मरस्य वदति सर्वसाधनपूर्वकम् ॥ ९२ ॥ तत्रोपपत्तिर्निखिला वर्णितोद्धवबुद्धये ॥ तदा रोगाद्यभावाय साधनानि हरिर्जगौ ॥ ९३ ॥ तत्राऽशक्तं तदानीं हि फलप्रेप्सुं विचार्य हि ॥ उद्धवं सुगमं प्राह प्रकारं सर्वमिश्रितम् ॥ ९४ ॥ तत्राप्यशक्तं तं ज्ञात्वा बदर्यां प्रेपयत्स्वजः ॥ साधनान्याऽऽह तत्राऽपि यत उक्तं हृदि स्पृशेत् ॥ ९५ ॥ एवं चतुर्विंशतिभिर्जीवमुक्तिर्निरूपिता ॥ ब्रह्ममुक्तिस्ततो द्वाभ्यां ममाहंभावभेदतः ॥ ९६ ॥ ब्रह्म कृष्णस्तन्मयत्वं यादवादिषु संस्थितम् ॥ तेषामभावकथनादभिनीतो मम क्षयः ॥ ९७ ॥ देवप्रार्थनयाऽहं च नरत्वद्वेपमन्यथा॥ स्वजतीतीश्वरस्याऽपि तत्र हेतुः सुरार्थना॥९८॥ पूर्वत्र त्रितयं हेतुर्हरीच्छा पृथिवीभरः ॥ उद्धृतत्वाद्देवभावः स्वपदप्रापणं ततः ॥ ९९ ॥ यथा कृतं वदत्येप तेन जातः परीक्षितः ॥ भ्रमः स्वतुल्यता

१ कथंचन । २ तत्र । ३ तथा ।

चैव तेन पृष्टं तथाविधम् ॥ १०० ॥ तिरोधानेच्छया जाताः शकुनाभाव-भूमयः ॥ कालः सेवकरूपाद्धि विभ्रष्टः स्वां गतिं गतः ॥ १०१ ॥ अधिकारप्रदानेन निमित्तानि ततोऽभवन् ॥ भगवांस्तत्पूर्वमेव कृतवानिति सत्यवान् ॥ १०२ ॥ न प्रतीकार इत्याह देशो गौणोऽत्र संमतः ॥ काले समागते तत्स्यात्स्त्रीबालानां विनाशनम् ॥१०३॥ अधर्मश्च तदा भूयाद्दारकाऽपि विनश्यति ॥ मुक्तिश्च तेषां जायेत स्वामिकार्यं च तैः कृतम् ॥ १०४ ॥ अतः स्वपदमेवैते प्रापणीया न संशयः ॥ शापदोषनिवृत्त्यर्थं मुक्तं कारितमेव च ॥ १०५ ॥ रामस्य सत्वदेहस्तु पूर्वमेव निरूपितः ॥ जराभिमानी यो देवः स लोके कार्यतः श्रुतः ॥ १०६॥ विस्मृत्य स्वात्मरूपं हि वने चरति लुब्धकः ॥ पशुपक्षिमृगासक्तः शापरूपं तु यद्गृहत् ॥ १०७ ॥ तत्पदे योजयामास पूर्णे ब्रह्मणि सुस्थिरम् ॥ अधिभूतप्रकारेण हरिणत्वमुपागतः ॥ १०८ ॥ ब्रह्म कृष्णाजिनमिति श्रुत्वा तादृक्त्वमागतः ॥ एवं बहिःस्थितं सर्वं स्वात्मन्येव निवेशयेत् ॥ १०९ ॥ तत आवरणाग्निं हि प्रकटीकृत्य तत्र वै ॥ तिरोभूय स्वयं भूयस्तं च विद्युन्निभं तथा ॥ ११० ॥ तिरोधानं कारयितुं व्यवस्थाय स्थितः क्षणम् ॥ तदा देवा भ्रमं याता वैकुंठेऽद्य प्रयास्यति ॥ १११ ॥ विष्णुः सगुण एवाऽयं विमानेन तदा वयम् ॥ सहोत्सवेन महता नेष्यामः स्वस्वमंदिरम् ॥११२॥ भ्रमात्तत्तु यथा नाऽभूत्तेन तेऽप्यत्र विस्मिताः ॥ दारुको विष्णुलोकाद्धि समायातो जयादिवत् ॥ ११३ ॥ तत्रैव सरथो यातः स तु मुक्तो बभूव ह ॥ बलवत् रुक्मिणीमुख्या नाख्यं सर्वमिहोदितम् ॥ ११४ ॥ अथ चैकादशे स्कंधे मुक्तिरेका विधीयते ॥ अहंताममतानाशरूपा साधनसंयुता ॥ ११५ ॥ साधनद्वितयं पूर्वं प्रक्रियाद्वितयेन हि ॥ भक्तिज्ञानक्रिये चैव ततो बालकबोधने ॥ ११६ ॥ अभिनीय तमेवार्थं दर्शयामास केशवः ॥ एतद्भगवतो गूढं चरित्रमिह वर्णितम् ॥११७॥ अत्र निष्णातहृदयो भगवत्पार्श्वमेति हि ॥ ११८ ॥ ॥ इति श्रीवल्लभदीक्षितविरचिते श्रीभागवततत्त्वदीपनिबंधे एकादशस्कंधविवरणं संपूर्णम् ॥

---

# अथ तत्त्वार्थदीपनिबंधे

भागवतार्थप्रकरणे

## द्वादशस्कंधविवरणं प्रारभ्यते.

---

इत्येकत्रिंशताऽध्यायैर्मुक्तिरुक्ता ससाधना ॥ लीलाश्च नव संपूर्णास्ताभिः शुद्धो ह्यपाश्रयः ॥ १ ॥ त्रयोदशभिरध्यायैर्द्वादशे स निरूप्यते ॥ स पंचधाऽत्र निर्णीतो द्वितीये स त्रिधोदितः ॥ २ ॥ नवभिर्बोधितवपुस्तथा सृष्टिलयादिकृत् ॥ आधिभौतिकभेदानां द्रष्टा सर्वांतरः परः ॥ ३ ॥ एवं रूढिं पुरस्कृत्य लक्षणान्युक्तवान् शुकः ॥ लोकप्रसिद्धं स्वीकृत्य द्वयं चाऽपि निरूपितम् ॥ ४ ॥ वेदो वा भगवान् वाऽपि शब्दार्थसरूपधृक् ॥ वेदमेव समाश्रित्य सर्वे तिष्ठंति मानवाः ॥ ५ ॥ केचनैव हरिं चाऽपि केवलं केचनैव हि ॥ तत्राऽऽश्रयस्य स्वरूपं हि स्पष्टमत्र निरूप्यते ॥ ६ ॥ यस्य लीला नव प्रोक्ताः स शुद्धः पुरुषोत्तमः ॥ आश्रयः सर्वभूतानामधिको द्वादशात्मकः ॥ ७ ॥ त्रयोदशस्ततः प्रोक्तः स्कंधार्थोऽयं विबुध्यताम् ॥ अध्यायत्रितयेनाऽपि स एवाऽर्थोऽनुवर्णितः ॥ ८ ॥ वचोविभूतिरित्युक्त्वा भिन्नाश्रयविनाशकः ॥ आश्रयो लौकिकानां तु लोको धर्मोऽथवा पुनः ॥ ९ ॥ उभयं नष्टमधुना द्वाभ्यां तत्तु निरूपितम् ॥ शूद्रपर्यवसानेन लोकनाशो निरूपितः ॥ १० ॥ अधर्मस्य च संपूर्त्या धर्मनाशोऽपि बुध्यताम् ॥ एवं पूर्वाश्रये नष्टे कृष्ण एवाऽऽश्रयो मतः ॥ ११ ॥ पूजादिनाऽनुरूपेण नाम्नां श्रवणकीर्तनैः ॥ त्रिष्वर्धे दोषराहित्यं गुणाश्चापि तथाऽपरे ॥ १२ ॥ आश्रयो भगवान् कालं तावंतं चेत्प्रतीक्षते ॥ कल्किर्भविष्यति तदा सर्वसाधारणो मतः ॥ १३ ॥ उपलक्षणमेतद्धि नामपूजादिना हरिः ॥ यदा तुष्टः प्रसन्नः स्यादात्मानं च प्रदर्शयेत् ॥ १४ ॥ तदाऽऽश्रयः पूर्णरूपो भविष्यति न संशयः ॥ विलंबे कारणं गर्वस्तदर्थं दोषवर्णनम् ॥ १५ ॥ तन्निवृत्तिश्च भवतीत्यग्रे कीर्तनमीरितम् ॥ एवं त्रिभिर्मुख्यरूपो नवानां शुद्धिलक्षणः ॥१६॥ हरिराश्रय इत्युक्तो मुक्तानामिति वर्णितम् ॥ अतः परं द्वितीयस्तु जगदाश्रय उच्यते ॥ १७ ॥ यतः सर्वं समुत्पन्नं यस्मिंश्चैव प्रलीयते ॥ पृथिवीर्वै

---

१ हि शुद्धयते । २ हि । ३ कलिः । ४ च ।

घटाद्यादेः स बहिर्ज्ञायते न हि ॥ १८ ॥ अंतश्चाऽपि स विज्ञेयस्तदैव सफलो भवेत् ॥ इति प्रलयकथनं चतुर्धा सृष्टिरत्र हि ॥ १९ ॥ पूर्वोक्तैवाऽतिदिष्टा हि क्रियाशक्तिर्निरूपिता ॥ ज्ञानशक्तिर्द्वितीयेन वैदिकस्त्वयमाश्रयः ॥ २० ॥ पूर्वोक्तस्तांत्रिकश्चैव बाह्याभ्यंतरभेदतः ॥ द्वाभ्यां प्रतिष्ठितो राजा वाक् पूर्वत्र नियोजिता ॥ २१ ॥ आत्मानमभये चैव स्थापयित्वाऽभवत्फली ॥ आश्रयस्य द्विरूपत्वं साधनेन फलेन च ॥ २२ ॥ साधनं द्विविधं चेति त्रयमर्थादिहोदितम् ॥ आश्रयस्त्रितयं चाऽग्रे सार्धसप्तभिरुच्यते ॥२३॥ त्रितयं तत्र यो वेद स साधनपरो भवेत् ॥ अंतर्ज्ञानप्रकारस्तु पूर्वमेव निरूपितः ॥ २४ ॥ वेदैरेवाऽखिलं ज्ञानं तत्सार्धेन निरूपितम् ॥ त्रयी शिष्टविभेदेन फलयुक्तां त्रयीं जगौ ॥ २५ ॥ देहलीन्यायसिध्यर्थं शिष्टमेकेन रूपितम् ॥ एवं सप्तभिरध्यायैरुक्तस्त्रिविध आश्रयः ॥ २६ ॥ अतः परं तु द्विविधस्त्रिभिस्त्रिभिरिहोच्यते ॥ भक्तिमार्गो भागवतं त्रिविधं त्रिविधं यतः ॥२७॥ आध्यात्मिकादिभेदेन मार्कंडेये प्रतिष्ठिता ॥ त्रिविधाऽपि हरेर्भक्तिः कर्ममार्गानुसारिणी ॥२८॥ अत्यंतनिष्ठामापन्ना स्ववाक्यकरणाद्धरिः ॥ स्वयं तुष्टः स्वमायातस्तादृशस्य वरः परः ॥२९॥ अचिंत्यानंतशक्तिर्हि यस्मिन् द्रष्टा हरिस्तथा ॥ भक्त्या न सिद्ध इति स तत्रैवांतरधीयत ॥ ३० ॥ क्लेशेन भगवन्मार्गो द्वितीय इति निश्चयः ॥ योऽधिकारी भक्तिमार्गे तत्प्रसादमवाप्य हि ॥ ३१ ॥ भक्तश्चेत्सर्ववित्सुस्थस्तृतीयः स उदाहृतः ॥ भक्तियुक्तो महादेवस्तां दातुं शक्नुयात्तथा ॥३२॥ भक्तस्य यावान् संक्लेशः स मायेत्यपि रूपितम् ॥ भक्तिमार्गानुसारेण भक्तिनिष्ठेयमीरिता ॥३३॥ चतुर्थस्त्वाश्रयोऽयं वै श्रीमद्भागवतं मतम् ॥ पुरुषाराधनं तत्र सूर्यात्कालमपेक्ष्य हि ॥ ३४ ॥ श्रीभागवतवाक्येन कथां तत्र च योजयेत् ॥ आधिदैविकमाख्यातमेतद्भागवतं मतम् ॥ ३५ ॥ कथाः सर्वा इहोदिष्टा आधिभौतिकमुच्यते ॥ यथा लोकाः प्रवर्तंते कथयंति परस्परम् ॥ ३६ ॥ श्रीभागवतमेवाऽत्र केवलं चेत्समाश्रितम् ॥ गंगावद्धरिवच्चैव शंभुवच्च फलिष्यति ॥ ३७ ॥ शुध्या फलप्रदानेन भक्तिदानेन च स्वयम् ॥ अत्र प्रतिष्ठितं सर्वं तेनाऽयं विकृतः क्वचित्॥३८॥ श्रीमद्भागवतं समस्तनिगमन्यायैकतत्त्वात्मकं नानाभ्रांतितमःकपाटपिहितं

१ भागवते। २ श्रीभागवतमन्तिमम्। श्रीभागवतमुत्तमम्।

संतुष्ट्यै सर्वथा ॥ नाऽश्लूदित्यवगत्य निश्चितपदैरुद्दीप्तदीपाकृतिं श्रीमद्भागवतप्रदीपमधुना चक्रे मुदा वल्लभः ॥ ३९ ॥ यथा भागवतस्याऽर्थो हृदिस्थाच्युतनोदनात् ॥ तथा निरूपितः सद्भिः क्षमा कार्या ममोपरि ॥ ४० ॥ युक्तं वा यदि वायुक्तं मया यद्यन्निरूपितम् ॥ तत्सर्वं कृष्णचरणे वाक्पुष्पं विनिवेदितम् ॥ ४१ ॥ इति श्रीमद्वेदव्यासविष्णुस्वामिमतवर्त्ति–श्रीवल्लभदीक्षितविरचिते तत्त्वार्थदीपनिबंधे श्रीभागवतार्थप्रकरणे द्वादशस्कंधविवरणं संपूर्णम् ॥



१ इतःपरं श्रीभागवततत्त्वानां प्रदीपोयं निरूपितः ॥ श्रीकृष्णचरणद्वंद्वे सदा तिष्ठतु दीपवत् ॥ इति केषुचिदभिनवपुस्तकेषु विद्यते तदग्रे च लेखकनामाङ्कितं श्लोकत्रयमन्यदपि वर्त्तते परमेतच्चतुष्टयमपि एकोनसप्तत्यधिकषोडशशतकादि प्राचीनपुस्तकेषु नास्तीत्यत्र नाऽलेखीति भव्यमस्तु ॥

# अथ तत्त्वार्थदीपः प्रारभ्यते ।

श्रीकृष्णाय नमः ॥

नमो भगवते तस्मै कृष्णायाद्भुतकर्मणे ।
रूपनामविभेदेन जगत्क्रीडति यो यतः ॥ १ ॥

श्रीकृष्णाय नमः ॥

## अथ तत्त्वार्थदीपप्रकाशः प्रारभ्यते.

सर्वोद्धारप्रयत्नात्मा कृष्णः प्रादुर्बभूव ह । तथात्वं येन संसिध्येत्तदर्थं व्यास उक्तवान् ॥ १ ॥

श्रीभागवतमत्यन्तं सर्वेषां सुखदायकम् ।
तस्यापि तत्त्वं येनैव सिध्येदिति विचार्य हि ॥ २ ॥
अग्निश्चकार तत्त्वार्थदीपं भागवते महत् ।
तत्रापि येन संसिध्येद्व्याख्यानं तन्निरूप्यते ॥ ३ ॥

एवं साक्षाद्भगवत्त्वे हेतुमुक्त्वा तस्य लीलामाह ॥ रूपेति ॥ रूपनामविभेदेन यः क्रीडति ॥ रूपनामविभेदेन यो जगत् ॥ रूपनामविभेदेन यतो जगदिति ॥ अनेन क्रीडायां स्वातन्त्र्यमुक्तम् ॥ निर्लेपत्वायाह ॥ एतादृशं जगद्यत इति ॥ एवं ज्ञानेन मुच्यन्त इति संक्षेपः ॥ १ ॥

श्रीभागवततत्वार्थं प्रकटीकरिष्यन् प्रथमं शास्त्रार्थोपनिबन्धलक्षणं मङ्गलमाचरति ॥ नम इति ॥ भगवति जीवैर्नमनमेव कर्तव्यम् । नाधिकं शक्यमिति सिद्धान्तः ॥ "किमासनं ते गरुडासनाय किंभूषणं कौस्तुभभूषणाय । लक्ष्मीकलत्राय किमस्ति देयं वागीश किं ते वचनीयमस्ति" इत्यादिवाक्यैः ॥ परमकाष्ठापन्नं वस्तु नमस्यत्वेन निर्दिशति ॥ भगवत इति ॥ पुरुषोत्तमायेत्यर्थः ॥ तत्सिद्धये लोकवेदप्रसिद्धिमाह ॥ तस्मा इति ॥ मतभेदेन तस्यान्यथाकल्पनव्यावृत्त्यर्थमाह ॥ कृष्णायेति ॥ स एव परमकाष्ठापन्नः कदाचिज्जगदुद्धारार्थमखण्डः पूर्ण एव प्रादुर्भूतः कृष्ण इत्युच्यते ॥ ननु पूर्वं साधनानि सिद्धान्येव सर्वत्र तत्रानधिकारेण साधनाभावे भगवानप्यवतीर्य किं करिष्यतीत्याशङ्कायामाह ॥ अद्भुतकर्मण इति ॥ भगवतोऽद्भुतकर्मत्वमग्रे व्युत्पाद्यम् ॥ असाधनं साधनं करोतीत्यादि ॥

अथ श्रीकल्याणरायविरचिता निबन्धटिप्पणी प्रारभ्यते ।

यः स्वीयभावेन विलज्जितानां मोदं दधानो विविधैर्विलासैः ।
दुग्धादिचौर्यैरपि सर्वसिध्यै श्रीगोकुलेशोऽस्तु स मे प्रसन्नः ॥ १ ॥
वन्दे श्रीवल्लभाचार्यचरणाब्जद्वयं लसत् ।
यतो विन्दे व्रजाधीशपादाम्बुजमयोऽहम् ॥ २ ॥

---

१. यतो यस्मात् यतः कृतप्रयत्नादिति वा. २. विन्देरेति पाठान्तरम्. ३. पदाम्बुजमिति रा-पुस्तके. ४. अयः शुभावहो विधिरित्यमरः.

क० रा० टि० रूपनामविभेदेनेति ॥ व्यवहारतो भिन्नै रूपैर्नामभिरित्यर्थः ॥ यद्वा विभेदो वैलक्षण्यम् । विलक्षणैस्तैर्जगति क्रीडतीत्यर्थः ॥ जगदिति । अकर्मकधातुयोगे सप्तम्यर्थे द्वितीया ॥ निर्लेपत्वायेति ॥ प्रपञ्चस्येति शेषः ॥ निर्लेपत्वममायिकत्वम् ॥ १ ॥

---

## अथ श्रीभारतमार्तण्ड–वेदान्तभट्टाचार्यपञ्चनदी गट्टूलालनिर्मितम् सत्स्नेहभाजनम् ॥

॥ श्रीहरये नमः ॥

लीलागोवर्द्धनोद्धारपालितस्वव्रजप्रियम् । बालं मुकुन्दं स्वाचार्यान्प्रभूत्सर्वगुरून्भजे ॥ १ ॥
सुखात्सर्वार्थलाभार्थं टिप्पणं सरलं लघु । कुर्वे स्वाचार्यकृपया प्राचां वाचां विचारणैः ॥ २ ॥
तथा विभज्यते मूलं सतां स्नेहो यथा भवेत् । वादिक्षोदस्त्वावरणभङ्गादेरेव सिध्यति ॥ ३ ॥
द्रष्टुं दीपप्रकाशे चेद्वाञ्छथार्थास्तमोनुदि । सत्स्नेहभाजनं तर्हि पुरः कुरुत पण्डिताः ॥ ४ ॥

अथ श्रीमदाचार्यपादा दैवोद्धारं वेदादिसारभूतश्रीभागवतमार्गेण कर्तुं तत्प्रकाशं तत्त्वार्थदीपं प्रकाशयिष्यन्तो भगवत्प्रादुर्भावश्रीभागवतयोः स्वग्रन्थस्य च प्रयोजनं वदन्तो व्याख्यानं प्रतिजानते । सर्वोद्धारेति त्रिभिः । सात्त्विकादिभेदेन त्रिविधानपि जीवानुद्धर्तुं भगवत्प्रादुर्भाव इति तृतीयप्रकरणे सेत्स्यति । अतः सर्वोद्धाराय प्रयत्नो यस्येति सर्वोद्धारप्रयत्नः । इदं पुष्टिस्थार्थम् । सर्वेषामुद्धारो यस्मात्तादृशप्रयत्नो यस्येति वा । इदं राजसार्थम् । अतति व्याप्नोतीत्यात्मा पूर्वोक्तश्चासावात्मेति कर्मधारयः तादृशः प्रयत्न आत्मनि यस्येति गडुकण्ठादिवत्समासो वा । इदं सात्त्विकार्थम् । एवं सर्वजीवोद्धर्त्ता तु कृष्णः " कृषिर्भूवाचकः शब्दो णश्च निर्वृतिवाचकः ॥ तयोरैक्यं परं ब्रह्म कृष्ण इत्यभिधीयते" इति तापनीयश्रुत्या सदानन्दरूपः पुरुषोत्तम एवास्ति नापरः सर्वं वाक्यं सावधारणमिति न्यायात् ॥ सर्वोद्धारप्रयत्नात्मा कृष्ण इति भिन्नं वाक्यं (अ. १ पा. ३ सू. ४६) प्रातिपदिकलिङ्गेत्यत्र अस्तिर्भवन्तीपरः प्रथमपुरुषोप्यप्रयुज्यमानोप्यस्तीति । 'वृक्षः । वृक्षः अस्तीति गम्यते' इति महाभाष्यानुरोधादस्तीति शेषेण योज्यमित्यावरणभङ्गाशयः ॥ श्रीलालूभट्टास्तु पूर्वार्द्धमेकं वाक्यं मन्यन्ते ॥ तस्य तथात्वे गमकमाहुः । प्रादुर्बभूवहेति भगवान् सृष्टिकालोत्पादितया गुणमय्या मायया महता शैवलेन जलमिवाच्छन्नो न दृश्यते "नाहं प्रकाशः सर्वस्य योगमायासमावृतः" इति गीतावाक्यात् । श्रीभागवतेपि (स्कं० १ अ० ८ श्लोक १९)। मायाजवनिकाच्छन्नमिति कथनाच्च । यथा च यावतो भागाच्छैवलमपसार्येत तावानेव जलभागोवलोक्येत । तथा यावती मायामपसारयति तावतैव परमसुन्दरेण रूपेणाभिव्यज्यते ॥ एवमेकदेशितया व्यापकदृष्ट्या तत्रांशत्वव्यवहारोपि । इदं च "तत्रांशेनावतीर्णस्य विष्णोः" इत्यादिस्थले सुबोधिन्यां स्फुटम् । तस्य स्वतन्त्रस्यापि स्वेच्छया लोकव्यवहार्यता (अ० २ पा० २ सू० १९) "प्रकाशवच्चावैयर्थ्यात्" इत्यत्र निर्णीता । अयं पूर्णप्रादुर्भावः ॥ अंशावतारास्तु (स्कं० १० अ० ८९ श्लो० १८) सत्त्वं यस्य प्रिया मूर्तिरित्यादिप्रमाणसिद्धं सत्त्वाख्यं स्वधर्ममधिष्ठाय तत्रांशादिभेदेन भगवता क्रियन्त इति भाष्ये गुणोपसंहारपादे समर्थितम् ॥ अतः प्रादुर्भावस्यावतारस्यैव गमकः । अन्यथा स्वतन्त्र आप्तकामः किमिति लोकव्यवहार्यो भवेत् । धर्मरक्षासाधुपरित्राणादिकस्य स्वेच्छयापि संभवात् ॥ इयांस्तु विशेषो यदा पूर्णप्रादुर्भावस्तदा तावधर्मरक्षाद्यवतारकार्यमपि स एव तत्तद्रूपविशिष्टः करोति उद्धारं तु स्वरूपेणैवेति ॥ तस्य तस्य भक्तस्य हृदये प्रादुर्भावस्तु तस्य तस्यैव हिताय न तु सर्वोद्धारायेति तद्व्यावर्तनाय [illegible] पदम् । इ[illegible]

सर्वेषां दर्शनादियोग्यः प्रादुर्बभूवेत्यर्थः ॥ निर्गुणपरब्रह्मणो व्यापकस्यैकदेशे तावन्मात्रमायादूरीकरणेन प्रादुर्भावबोधनायात्रात्मपदम् ॥ आत्मशब्दश्च तादृशार्थकतया ( अ० १ पा० १ सू० ५ ) "गौणश्चेन्नात्मशब्दात्" इत्यत्र सिद्धः । एतदेव प्रादुर्भावप्रयोजनं प्रथमस्कन्धे कुन्तीस्तुतौ (अ० ८ श्लोक २०) "तथा परमहंसानां मुनीनाममलात्मनाम् ॥ भक्तियोगवितानार्थमिमम्" इत्युक्तम् अग्रेपि ( श्लो० ३२ ) केचिदाहुरजं जातमित्यादिना मतान्तराण्युक्त्वा ( श्लो० ३५ ) "भवेस्मिन्क्लिश्यमानानामविद्याकामकर्मभिः ॥ श्रवणस्मरणार्हाणि करिष्यन्निति केचन ॥" इति भवक्लिष्टानामुद्धरणं सर्वान्त उक्तं तदेव ( श्लो० ३६ ) "शृण्वन्ति गायन्ति" इत्यादिना सिद्धान्तितम् ॥ तृतीयस्कन्धेप्युद्धवेन ( अ० २ श्लो० १५ ) "स्वशान्तरूपेष्वितरैः स्वरूपैरभ्यर्द्यमानेष्वनुकम्पितात्मा ॥ परावरेशो महदंशयुक्तो ह्यजोपि जातो भगवान्यथाग्निः" इति । अत्राप्युपमानात्प्रादुर्भावोनुकम्पायास्तत्र हेतुत्वं चोक्तम् ॥ एवं ( स्कन्ध० १० अ० २९ श्लो० १४ ) "नृणां निःश्रेयसार्थाय व्यक्तिर्भगवतो नृप ॥ अव्ययस्याप्रमेयस्य निर्गुणस्य गुणात्मनः" इत्याद्यनुसंधेयम् ॥ केनोपनिषत्तृतीयखण्डेप्येवमेव देवानुग्रहार्थं प्रादुर्भावः श्रावितः "तेभ्यो ह प्रादुर्बभूव" इत्यादिना ॥ इमामेव श्रुतिमनुसंधायेह प्रादुर्बभूव हेत्युक्तम् ॥ ननूद्धारार्थमेवाविर्भाव उद्धरणीयजीवानामद्यापि सत्त्वान्न तिरोभवेदतो न तथेतिशङ्कां वारयितुमाहुः । तथात्वमिति तथात्वं सर्वोद्धारमयत्नात्मत्वं येन प्रादुर्भावेण सम्यक्फलतः साधनतश्च सिध्येत्तदर्थम् अद्यापि प्रादुर्भावार्थम् । इदं क्रियाविशेषणं स सर्वोद्धारार्थः प्रयोजनं यस्येति श्रीभागवतविशेषणं वा ॥ पूर्वोक्तः कृष्ण एव व्यासः सन्सर्वेषामत्यन्तं सुखदायकं श्रीभागवतमुक्तवान् ॥ भक्तविशेषादिद्वारोद्धारे सर्वोद्धाररूपं फलं साक्षाद्भगवत्प्रयत्नरूपं साधनं च न निष्पद्यत इतीह सम् ॥ पूर्वत्रात्मपदं च ॥ "कस्मै येन विभासितः" इतिपद्ये व्यासरूपेण विभासनस्य कथनाद्व्यासः सन्निति ॥ उक्तवान्प्रकाशितवान्न तु काव्यं कृतवान् भागवतस्य नित्यत्वात् ॥ तृतीयस्कन्धे (अ० ४ श्लो० १३) "यत्सूरयो भागवतं वदन्ति" इत्युक्तेः । तत्रैवाष्टमाध्याये परंपरान्तरकथनाच्च ॥ तेन "लोकस्याजानतो विद्वांश्चक्रे सात्वतसंहिताम्" इत्यादौ करोतिरुच्चारणार्थः "यजतिषु ये यजामहं करोति नानुयाजेषु" इत्यादौ तथा दर्शनात् ॥ भगवत इदं स्वरूपं भगवता प्रोक्तं चेति भागवतम् । श्रीर्दशरससंपत्तिः शब्दरचनार्थशोभा च तद्युक्तं भागवतं श्रीभागवतम् । शाकपार्थिवादिवत्समासः "श्रीमद्भागवते महामुनिकृते" इत्यत्र सुबोधिन्यां स्पष्टमिदम् ॥ "श्रीर्वेषरचना शोभाभारतीसरलद्रुमे । लक्ष्म्यां त्रिवर्गसंपत्तिविधोपकरणेषु च । विभूतौ च मतौ च स्त्री" इति मेदिनी । यद्यपि वेदोपि भगवद्रूपस्तदुक्तस्तत्सुखदश्च तथापि संस्कृतत्रैवर्णिकानामेव । इदं तु सर्वेषां मुक्तमुमुक्षुविषयिणां चतुर्णां वर्णानां च केवलार्थद्वारा तु ततो जघन्यानामपि सुखदमित्याविर्भावावश्यकता ॥ अन्तः कालतो देशतश्च परिच्छेदः तमतिक्रान्तमत्यन्तम् । नित्यनिरतिशयसुखदमित्यर्थः । गीता त्वतिसंक्षिप्ता स्वविस्तरभागवतद्वारैव सुखदा ॥ एतेन "दृष्टे सापार्था चेन्नैकान्तात्यन्ततोऽभावात्" इति सांख्यार्योक्तन्यायादितरैरमवार्थता । इत्थं चावतारसमये रूपेणोद्धृत्यानवतारसमये नाम्नोद्धर्तुमेतेन रूपेणाविरास्ते रूपप्रादुर्भावोप्येतदुक्तमार्गेण भवत्येवेति न प्रागुक्तस्य बाधः ॥ अत एव पाद्मे श्रीभागवतमाहात्म्ये ( अ० ६ श्लो० ३० ) श्रीभागवतरूपस्त्वं प्रत्यक्षः कृष्णः एव हि ॥ गृहीतोऽसि मया नाथ मुक्त्यर्थं भवसागरे इत्युक्तम् ॥ स्कान्देऽपि तन्माहात्म्ये भगवत्परिग्रहादीनां पुरः श्रीमदुद्धवश्रावितश्रीभागवतद्वारा रूपप्रादुर्भाव उक्तः ॥ श्रीभागवतेऽपि कृष्णद्युमणिनिम्लोचोत्तरमेतेन रूपेण निस्तारः (स्कं० १ अ० ३ श्लो० ४३) कृष्णे स्वधामोपगते धर्मज्ञानादिभिः सह । कलौ नष्टदृशामेष पुराणार्कोऽधुनोदित इत्यादौ दर्शितः ॥

नन्वेवमपि भगवत्प्रयत्नः किमर्थं इत्याकाङ्क्षायां कलिबलादुत्तरोत्तरं मत्यादिमान्द्ये व्यासप्रयत्नसाफल्यार्थः स इत्याशयेनाहुः। तस्येति। इतिशब्दो हेतौ यतः श्रीभागवतं तथाऽतस्तत् हि निश्चयेन विचार्य॥ मूलेऽपि विचारं वक्ष्यन्ति विचार्य च पुनः पुनरिति॥ एतेन विचारपूर्वकक्कृतत्वं ग्रन्थस्य प्रामाण्ये तत्त्वार्थदीपेत्यन्वर्थनामकत्वे च बीजं दर्शितम्॥ तस्य श्रीभागवतस्य अपिशब्दाद्वेदादेश्च। तत्त्वं तस्य भावः श्रीभागवतत्वं प्रादुर्भावार्थत्वं सर्वोद्धारसुखदत्वं च येनैव सिध्येदेव तादृशम्। भागवते विषये। महत् सर्ववेदान्तसारस्य सारग्राहकत्वात्पूज्यम्। अल्पत्वामात्राद्दोषवात्स्ययानपलोप्यं तत्त्वार्थदीपम् एतन्नामकं निर्गलितवास्तवाभिधेयप्रयोजनयोः प्रकाशकं ग्रन्थम् अग्निः श्रीकृष्णवदनरूपः चकार॥ ज्ञानस्य स्वार्थत्वेपि निर्माणस्य लोकज्ञापनार्थत्वात्परस्मैपदम्॥ अवस्थादिपारोक्ष्याभिप्रायो लिट् "एतं करोति जयदेवकविः प्रबन्धम्॥ नागेशः कुरुते सुधीः" इत्यादौ प्रथमपुरुष इव मृच्छकटिकादिषु 'चकार सर्व किल शूद्रको नृपः' इत्यादि प्रयोगा अप्येवमेव संगच्छन्ते। दीपशब्दस्य पुन्नपुंसकत्वान्महदिति क्लीबम्। अथवेदमुत्तरश्लोके व्याख्यानविशेषणतयान्वेति। हिशब्दादभेदीपोत्पत्तियुक्तत्यपि द्योत्यते। अर्कोपि गुहामहागृहादिषु सतमस्केषु पदार्थानप्रकाशयन्नग्निप्रविष्टस्वप्रभोत्पन्नदीपद्वारैव तान्दर्शयति॥ श्रीभागवतं हि तत्त्वतो ज्ञातमेव फलं दास्यतीति तथा ज्ञातुमशक्तानां हृदयेषु तत्त्वप्रकाशकस्यास्य न वैयर्थ्यम्। इह केचिदाधुनिकाः सिद्ध्येदित्यन्तो विचाराकार इतिशब्दक्रमानुरोधाद्भ्राम्यन्ति तन्न तथासत्यनेनेत्येवोक्तं स्यात्। यच्छब्दोपादाने तु समानाधिकरणतच्छब्दस्यापि विचाराकार एव प्रवेश आवश्यकः। अन्यथा वाक्यार्थापर्यवसायात्॥ तदेति तत्त्वार्थदीपं चाद्विषयभूतं भागवतं वेदादिकं च येन सम्यगनायासतः सिद्ध्येत् ज्ञायेत अथवा तत्त्वार्थदीपत्वमपि येन सम्यगर्थसंगत्या सिद्ध्येत् तद्व्याख्यानं नैरन्तर्येण रूप्यते॥ धारणसौकर्याय कारिकाबद्धग्रन्थनिर्माणोत्तरमर्थसौलभ्यतः सम्यक्सिद्धये व्याख्यायत इति भावः। अत्रावरणभङ्गे अत्राग्निपदेन वाक्पतिरूपतया सामर्थ्यं प्रथमसुबोधिनीस्थप्रतिज्ञावाक्योक्तं स्वावतारप्रयोजनं च सूचितम् इति श्रीपुरुषोत्तमचरणाः॥ युक्तं "चैतत् वाचां वह्निर्मुखं क्षेत्रम्" इत्यादिवचनेभ्यः। नामान्तराणि हित्वा अग्निरित्यावित्यतो निम्नस्याग्निशब्दस्योपादानाच्च॥ तस्माद्व्यासवद्यतरणम्। अत्र योजनायां "श्रीकृष्णश्रीभागवतयोराविर्भावोवतारानवतारदशाभेदेन भक्तोद्धारार्थं श्रीभागवतार्थबोधनाय तत्त्वार्थदीपाविर्भावस्तत्त्वार्थदीपार्थबोधाय व्याख्याग्रन्थ इति सर्वेषामाविर्भावप्रयोजनम्" इति श्रीलालूभट्टाः॥ तथाच परंपरया जीवोद्धारोस्य फलं यथा भगवता श्रीव्यासपादा आज्ञापितास्तथाहमपीत्याज्ञारूपा च संगतिः। श्रीकृष्णस्मरणरूपं वस्तुनिर्देशाख्यं मङ्गलम्। एतावता प्रेक्षावत्प्रवृत्तिः समर्थिता भवति॥ ३॥

एवं प्रतिज्ञाय व्याचक्षाणाः व्याचिख्यासितग्रन्थे शिष्यशिक्षार्थं श्रोतृवक्तृप्रभृतीनां प्रसङ्गतो मङ्गलसिद्ध्यर्थं च निबद्धे मङ्गले वेदादिनिर्णायकश्रीभागवतारम्भे तन्मूलभूतगायत्र्यर्थस्येव निर्णिनीषितवेदार्थस्य संग्रहं बोधयन्तस्तदवतारयन्ति श्रीभागवतेति तत्त्वार्थम्। निर्गलिताभिधेयं सप्रयोजनं प्रथममप्रकटं परार्थं प्रकटं करिष्यन्। शास्त्रार्थेति। शास्तीति शास्त्रं वेद इति द्वितीयाधिकरणे शास्त्रयोनित्वनिरूपणे सिद्धम्। गीता च शास्त्रमिति श्रीजगन्नाथवाक्ये स्फुटिष्यति। षड्दर्शनशिरोमणौ चतुर्लक्षण्यां शास्त्रत्वं तु प्रसिद्धमेव। श्रीभागवतमपि शास्त्रम्। अतएव वक्ष्यन्ति शास्त्रे स्कन्धे प्रकरण इत्यादि। श्रीभागवततत्त्वार्थप्रकटने वेदादिनिर्णयः स्यादेवेति प्रथमं भागवतेत्युक्त्वा शास्त्रार्थस्योपन्यसनं संक्षिप्य कथनं दर्शितम्। स्वापकर्षरूपत्वादमङ्गलतया संभाव्यस्य नमनस्य मङ्गलमादितो निर्देश

बीजमाहुः भगवतीत्यादिवाक्यैरित्यन्तम् ॥ नमनं च प्रह्वीभावः । स च मत्तस्त्वमुत्कृष्टस्त्वत्तोऽहमपकृष्ट इति बुद्धिपूर्वकोऽष्टाङ्गव्यापारः । अष्टाङ्गानि तु "उरसा शिरसा दृष्ट्या मनसा वचसा तथा । पद्भ्यां कराभ्यां जानुभ्यां प्रणामोऽष्टाङ्ग उच्यते" इत्युक्तानि । एतदन्यतमस्य योग्यव्यापारोपि नमनमेव ॥ किमासनमितिवाक्यं मानसपूजास्यम् । भगवतीत्यादेरयं भावः "भक्त्या लभ्यस्त्वनन्यया" । "भक्त्या त्वनन्यया शक्य" इत्यादिस्मृत्या "भज इत्येष वै धातुः सेवायां परिकीर्तितः । तस्मात्सेवा बुधैः प्रोक्ता भक्तिः साधनभूयसी" ति गारुडादिभ्यश्च भगवत्प्राप्तिदर्शनादेः सेवैव मुख्यं साधनमिति सिध्यति । सा चासनभूषणनैवेद्याद्युपचारसाध्या । उपचाराश्चास्माकं सर्वे लौकिकाः स्वाभाविकभगवदुपचारेभ्योत्यधमाश्च । यथास्माभिः शक्यमासनं काष्ठादिमयम् । अन्ततो गत्वा मणिसुवर्णमयमपि दीयमानं छन्दोमयाद्धिरण्मयाद्गरुडादतिन्यूनमेव । अत्युत्तममपि नैवेद्यं श्रीलक्ष्मीकृतपाकात्तथा । अतो नैतैर्भगवत्तोषः संभाव्यते । नहि महाराजो जीर्णातिकठोरकम्बलं परिधापितः कोद्रवादिना भोजितश्च तुष्यति ॥ किं च स भगवान्षड्गुणसंपन्नः । सेवका जीवास्तु षड्गुणतिरोभावशालितया ( अ० ३ पा० २ सू० ५ ) पराभिध्यानसूत्रे सिद्धाः । अतोपि न योग्यता ॥ वस्तूनां सेवायोग्यत्वार्थमात्मनिवेदनेन प्रसन्नतासंपादनेप्यभिमानत्यागाद्दैन्यं त्वावश्यकमेव । अदीनेन निवेदितमपि स्वतः सर्वेश्वर आप्तकामो नाङ्गीकुर्यात् । अतः संप्रदाये शरणागत्यनन्तरमेवात्मनिवेदनं क्रियते । निवेदनोत्तरमुपचाराणां स्वरूपयोग्यत्वेपि प्रत्यहसेवायां दैन्यसहकारोऽपेक्षित एव । सर्वोत्तमभक्तेष्वपि मानादिना तिरोधानस्य दैन्यादाविर्भावस्य च कथनात्का कथाधुनिकानामज्ञानादात्मनिवेदनमात्रवताम् ॥ अत एव गोपालतापनीये "मुमुक्षुर्वै शरणमनुव्रजेत्" श्वेताश्वतरे "मुमुक्षुर्वै शरणमहं प्रपद्ये" एवमादिषु शरणागतेरेव मोक्षहेतुता श्रूयते । सा च प्रह्वीभावरूपैवेति स एव प्राथमिकं मुख्यं च साधनम् ॥ तत्पूर्वका एव सेवोपचारा भगवन्तं प्रसादयन्ति अत एव गीतायां "नमस्यन्तश्च मां भक्त्या नित्ययुक्ता उपासते" इति तत्पूर्वकता सेवनस्योच्यते । "नमोस्तु ते देववर प्रसीद" इति प्रसादहेतुता च तस्य बोध्यते । तैत्तिरीये चतुर्थकाण्डे अश्वमेधप्रकरणे ( प्र० ६ अ० १ ) पठितयोरग्न्यधिरोहणमन्त्रयोर्मध्ये द्वितीयस्य 'नमस्ते हरसे' इति मन्त्रस्य ब्राह्मणं पञ्चमकाण्डे पठ्यते ( प्र० ४ अ० ४ ) 'नमस्ते हरसे शोचिष' इत्याह । "नमस्कृत्य हि वसीयांसमुपचरन्ति" इति ॥ अत्र भाष्ये माधवः "लोके हि योतिशयेन वसुमान्भवति तं भृत्या आदौ नमस्कृत्य पश्चादुपचरन्ति अतोग्नेरप्यत्र नमस्कारो युक्तः" इति व्याचष्टे । एवं च भगवदुपचारेषु नमस्कारपूर्वकत्वं सुतरामेव लभ्यते । अतः प्राथमिकत्वावबोधनायारम्भ एव नमनं प्रयुक्तं प्रसादहेतुतया "किमलभ्यं भगवति प्रसन्ने श्रीनिकेतने" इति श्रीभागवतवाक्यात्सर्वलाभहेतुः परममङ्गलम् ॥ श्रीमदाचार्या हि न केवलमत्रैवेदमादितः प्रयुञ्जते अपि तु "नमामि यमुनामहं" । "नत्वा हरिं सदानन्दम्" । "नत्वा हरिं प्रवक्ष्यामि" । "नमस्कृत्य हरिं वक्ष्ये" । "वन्दे श्रीकृष्णदेवम्" । "नमामि हृदये शेषे ।" एवमादिषु ग्रन्थान्तरेष्वपि प्रायेणादितः प्रयुञ्जते ॥ आदौ प्रयोगाशयस्त्विद्मस्मदुद्घाटितः ॥ कर्तव्यमिति अवश्यं कार्यम् । आवश्यकार्यस्त्वयः । ननु किमन्यन्नैव कार्यमित्यत आहुः नाधिकमिति तत्र हेतुः किमासनमिति । देयमिति सर्वत्रान्वेति । वागीशत्वाच्चप्रेरितैव वाक्सर्वोदेतीति किं वचनीयं स्तोतव्यम् । केनोपनिषदि "केनेषितां वाचमिमां वदन्ति" इति प्रश्ने "यद्वाचोद्य वाचम्" इति श्रावणात् ॥ आदिपदं प्राणुक्तादिवाक्यसंग्रहार्थम् । तृतीयान्तस्य पूर्वत्र हेतुतयान्वयः सिद्धान्तः शास्त्रतो निश्चितोर्थः ॥ एतेन साधननिष्कर्ष उपनिबद्धः । प्रदीनाभिमानोत्कर्षापकर्षयोर्बालत्वं बोधयन्तो निगृढं फलमाहुः परमेत्यादि अयं इत्यन्तम् ॥ अयं भावः

(स्कं० ५ अ० १२ श्लो० ११) "ज्ञानं विशुद्धं परमार्थमेकमनन्तरं त्वबहिर्ब्रह्मसत्यम् ॥ प्रत्यक्प्रशान्तं भगवच्छब्दसंज्ञं यद्वासुदेवं कवयो वदन्तीति" वाक्यात् निरस्तसाम्यातिशयं परवस्त्वेव वस्तुतो भगवच्छब्दवाच्यम्। यद्यपि "ब्रह्मेति परमात्मेति भगवानिति शब्द्यत" इति वाक्यात्परब्रह्मादिशब्दवाच्यं तदेव तथापि भागवतार्थो दिदर्शयिषित इति तन्नामनिर्वर्त्तकभगवच्छब्देनैव तदभिधेयं वस्तु निर्दिष्टम्। आद्यप्रकरणस्य गीतार्थत्वाच्च तत्प्रसिद्धपुरुषोत्तमपदेन विवृतम् ॥ तदेव परमकाष्ठापन्नं "महतः परमव्यक्तमव्यक्तात्पुरुषः परः। पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिः"॥"न तत्समश्चाभ्यधिकश्च दृश्यते" इति। कठश्वेताश्वतरादिषु श्रावणात्। यद्यपि नमः स्वस्तिस्वाहेत्यादिना जाता भगवत इति चतुर्थी उपपदविभक्तिः तथापि "उपपदविभक्तेः कारकविभक्तिर्बलीयसी"तिन्यायात्तादर्थ्यमत्राद्रियते अग्नय इदमित्यादि त्यागवाक्य इव। तेन भगवानेव चरमं फलं परमकाष्ठापन्नत्वादिति फलति ॥ प्रमाणमाहुः तत्सिद्ध्ये इति परमकाष्ठापन्नत्वसिद्ध्ये प्रसिद्धार्थकतच्छब्देनासंकुचितां प्रसिद्धिं बोधयता लोकवेदप्रसिद्धिं प्रमाणतया हेत्वर्थ.। तथा च गीतावाक्यं "यस्मात्क्षरमतीतोहमक्षरादपि चोत्तमः॥ अतोस्मि लोके वेदे च प्रथितः पुरुषोत्तम" इति ॥ यस्मात्क्षरं सर्वभूतसमूहमहगतिक्रम्य स्थितस्तस्मिन्यामकोऽतो लोके जगति पातञ्जलाद्येकैकदेशिदर्शनेषु च तथा प्रथितः। एवमक्षराज्जगत्कूटस्थात् अपिना क्षरत उत्तमोऽतो वेदे तथा प्रथित'। "द्वाविमौ पुरुषौ लोके" इति प्रागुक्ताभ्यां पुरुषाभ्यामुत्तमत्वात्पुरुषोत्तमोऽस्मीत्यर्थः॥एवमव्याख्यानेऽर्थो न संगच्छेत। प्रपञ्चातीतः परमेश्वर इति तु विश्वजनीनम्। न तथा कूटस्थादप्युत्तमत्वं लोके प्रसिद्धिमतो यथासंख्यमेव प्रसिद्धिर्व्याख्येया॥ इयमेव प्रसिद्धिर्गायत्र्यारम्भे तच्छब्देनोच्यते। सैव च तदर्थानुवादके श्रीभागवतारम्भश्लोके सत्यं परमिति पदाभ्यां व्यवारि। सात्र शास्त्रार्थसंक्षेपे गायत्रीस्थतच्छब्दमेवार्थानुकूलविभक्तिविपरिणामेनानूद्य समग्रा हि समग्राहि "अक्षरात्परत्वं तु वेद एव 'दिव्यो ह्यमूर्तः पुरुषः स बाह्याभ्यन्तरो ह्यजः" 'अप्राणो ह्यमनाः शुभ्रो ह्यक्षरात्परतः पर.' एवमादिवाक्यैर्मुण्डकादिषु प्रसाधितम् ॥ क्षरात्परतोऽक्षरात्पर इत्यर्थः। अत्र तत्त्वविस्तरो मम वेदान्तचिन्तामणौ त्रयोदशप्रकरणे ज्ञेयः। अतो वेदस्तदनुरूपतया योजितं शास्त्रं च प्रमाणमिति निगर्वः। भगवच्छब्दतच्छब्दयोः साधारणत्वात् "भगवांस्त्वेव मे ब्रवीत्वि"त्यादाविव गौणता "समन्तभद्रो भगवान्" इत्यादि मतभेदेन एकैकांशस्याप्यश्वहस्तिन्यायेन परमत्वकल्पनां च व्यावर्त्तयितुमाहुः। मतेति तस्य भगवच्छब्दोक्तपरमकाष्ठापन्नस्य। अन्यथाकल्पनं मुख्ये गौणत्वकल्पनं गौण एकदेशे मुख्यत्वकल्पनं च व्यावर्त्तयितुमाहेत्यर्थः॥ कृष्ण इति स्पष्टनिर्देशे तु "कृषिर्भूवाचकः" इति श्रुत्या कृष्णस्तु भगवान्स्वयमिति स्मृत्या च सदानन्दाकारत्वान्न गौणत्वं नामनिर्देशाच्च नान्यपरतया नयनं शक्यमिति भावः॥

नन्ववतारविशेष एव प्रसिद्धमिदमतः कथं परत्वमित्यत आहुः। स एवेति। लोकवेदप्रसिद्धो मूलरूप एव परमकाष्ठापन्नत्वमत्यजन् गीतायाम् "अतोस्मीति" हेतुपूर्वक कथनात् "मत्तः परतरं नान्यदस्ती" ति कथनाच्च कदाचित् रूपद्वारोद्धारकाले सर्वोद्धारार्थम्। एतेन हृदयादौ प्रादुर्भावो व्यावर्तितः। अखण्डः खण्डीभवन्निमः सत्त्वानधिष्ठितनैमल्यसदानन्दाकार इत्यर्थः। पूर्णः आप्तकामत्वाल्लौकिकोपभोगाकाङ्क्षारहितः। प्रथम एवकारोन्ययोगं व्यवच्छिनत्ति द्वितीयस्त्वयोगम्। प्रादुर्भूतः एकदेशे मायामपश्यामास्यादिरूपमाकारविषयीभूतः। श्रुतिभागवतादिषु कृष्ण इत्युच्यते। कर्षति भयोग्यानपि स्वसामर्थ्यादुद्धरतीति यौगिकार्थोप्येतेन दर्शितः 'कृषेर्वर्णे' बाहुलकादवर्णेपि नक्। तथावर्णप्रतीतेर्व्याघ्रत्वमपरा न स्पष्टतरमित्यत्र पश्यन्ति एवमर्थे कृष्णशब्दनिर्देशे पूर्णावताराश्वतारोभयव्यावृत्तिरिष्टं

परवस्तु निर्दिष्टं भवतीति युक्तो निर्देश इति भावः । अंशावतारेप्यघटमानं पूर्णत्वज्ञापकं धर्मं वक्तुमवतारयन्ति ॥ नन्विति ॥ सर्वत्रेत्युभयत्र मध्यमणिवदन्वेति । अपिशब्दो मुख्यतयोत्तरान्वयी । तथा च भगवदवतारात्पूर्वमपि सर्वत्र धर्मादिषु सर्वेषु पुरुषार्थेषु विषये तानि तानि साधनानि देशकालद्रव्यकृत्यादीनि द्वितीयप्रकरणे सूचयिष्यमाणानि सिद्धान्येव न तु साधनीयानि सन्ति । सर्वत्र तत्र सर्वेषु तेषु साधनेषु कालकृतशक्त्यादिह्रासादनधिकारे सुदुर्लभमोक्षसाधनेषु सुतरामनधिकारेण श्रवणादीनामन्तरङ्गाणां त्यागादीनां बहिरङ्गाणां च साधनानामभावे षड्गुणसंपन्नोप्यवतीर्यापि किं परहितं करिष्यतीत्यर्थः ॥ साधनाभावेऽवतारोपि वैयर्थ्यादशक्यवचनः किमुत प्रादुर्भाव इति भावः अग्र इति ॥ तृतीयप्रकरणे असाधनमित्यादि सप्तमस्कन्धे (अ० १ श्लो० २९) "कामाद्द्वेषाद्भयात्स्नेहाद्यथा भक्त्येश्वरे मनः । आवेश्य तदघं हित्वा बहवस्तद्गतिं गताः" इति नारदवाक्यात्तत्रैव टीकायां संगृहीतात् "गोप्यः कामाद्भयात्कंसो द्वेषाच्चैद्यादयो नृपाः । संबन्धाद्वृष्णयः स्नेहाद्यूयं भक्त्या वयं विभो" रिति वचनात् । दशमे (अ० २९ श्लो० १५) "कामं क्रोधं भयं स्नेहमैक्यं सौहृदमेव च । नित्यं हरौ विदधतो यान्ति तन्मयतां हि ते" एवमादिवाक्येभ्यश्च कामक्रोधादिकमसाधनमपि स्वसंबन्धेन साधनं कृतवान् । करोति च नहीदमवतारे घटते अधर्माभ्युत्थानापातात् ॥ तस्मादनधिकारिणोपि यथाकथंचित्संबन्धमात्रेणोद्धरन्पूर्ण एव ॥

एवं साक्षाद्भगवत्त्वे हेतुमुक्त्वा तस्य लीलामाह ॥ रूपेति ॥ रूपनामविभेदेन यः क्रीडति॥ रूपनामविभेदे यो जगत् ॥ रूपनामविभेदेन यतो जगदिति ॥ अनेन क्रीडायां स्वातन्त्र्यमुक्तम् ॥ निर्लेपत्वायाह ॥ एतादृशं जगद्यत इति ॥ एवं ज्ञानेन मुच्यन्त इति संक्षेपः ॥ १ ॥

---

## अथ श्रीकल्याणरायविरचिता निबन्धटिप्पणी प्रारभ्यते ।

यः स्वीयभावेन विलज्जितानां मोदं दधानो विविधैर्विलासैः ।
दुग्धादिचौर्यैरपि सर्वसिध्यै श्रीगोकुलेशोस्तु स मे प्रसन्नः ॥ १ ॥
वन्दे श्रीवल्लभाचार्यचरणाब्जद्वयं लसत् । यतो विन्दे[1] व्रजाधीशपादाम्बुजमयॉवहम्[2] ॥ २ ॥

क० रा० टि० रूपनामविभेदेनेति ॥ व्यवहारतो भिन्नै रूपैर्नामभिरित्यर्थः ॥ यद्वा विभेदो वैलक्षण्यम् । विलक्षणैस्तैर्जगति क्रीडतीत्यर्थः ॥ जगदिति । अकर्मकधातुयोगे सप्तम्यर्थे द्वितीया ॥ निर्लेपत्वायेति ॥ प्रपञ्चस्येति शेषः ॥ निर्लेपत्वममायिकत्वम् ॥ १ ॥

एवमित्यादि साक्षात् अनारोपिते भगवत्त्वे अद्भुतकर्मत्वरूपं हेतुमुक्त्वा "जन्माद्यस्य यत" इति सूत्रकारोक्तलक्षणसंगमनेन भगवत्त्वं दृढयितुं सृष्ट्यादिरूपां लीलामथमसाध्यं कर्मोहेत्यर्थः ॥ रूपेत्यादि इतीत्यन्तम् ॥ इति लीलामाहेति पूर्वेणान्वयः ॥ अत्र टिप्पण्यां "रूपनामविभेदेनेति ॥ व्यवहारतो भिन्नै रूपैर्नामभिरित्यर्थः ॥ यद्वा विभेदो वैलक्षण्यं विलक्षणैस्तैर्जगति क्रीडतीत्यर्थः ॥ जगदिति अकर्मकधातुयोगे सप्तम्यर्थे द्वितीया" इति श्रीकल्याणरायाः ॥ यः क्रीडतीति प्रथमवाक्यार्थेपि जगत्पदस्यायोजने सति कारिकायां जगत्क्रीडतीति वाक्यान्तरघटकजगत्पदस्य प्रागुपादानमरोचिष्णु स्यादतः क्रीडतेरकर्मकतया जगद्रूपदेशस्य "अकर्मकधातुभिर्योगे देशः कालो भावो गन्तव्योऽध्वा च

---

[1] यतो यस्मात् यतः कृतप्रयत्नादिति वा. [2] विन्देदिति पाठान्तरम्. [3] पदाम्बुजमिति ख-पुस्तके. [4] उमाद्यो विधिरित्यमरः.

कर्मसंज्ञक" इति कर्मतया पूर्ववाक्येप्यन्वयस्तैर्व्याख्यातः वस्तुतो नामरूपयोरपि भगवद्रूपत्वाद्व्यवहारतो भेदः परस्परवैलक्षण्यं च व्याख्यायि ॥ अग्रे सृष्टिभेदेषु ( कारि. ४२ ) "कदाचित्सर्वमात्मैव भवतीह जनार्दन" इति नित्यलीलासर्गोपि वक्ष्यते । सोत्र यः क्रीडतीत्यनेन संगृहीतः॥ इतरे सृष्टिभेदा यो जगदित्यनेन । अन्तरासर्गश्च मुख्यतया तृतीयपक्षेण ॥ आद्यपक्षे रूपनाम्नोर्यो विशिष्टो भेदस्तेन । अस्मिन्पक्षे नामरूपयोरेव नानात्वं न तु स्वरूपे चिदानन्दादितिरोभावकृतं तारतम्यम् ॥ अस्यापि प्रपञ्चविशेषत्वाट्टिप्पणोक्तरीत्या जगत्पदान्वयादरेपि न क्षतिः ॥ द्वितीयपक्षे रूपेषु नाम्नां विभेदः । गजाश्वादिलक्षणे तत्तद्रूपे तत्तन्नामनियमनं ताभ्यां कृतः स्वस्माद्विभेदश्च । तृतीयपक्षे ताभ्यामेव कृतं वैलक्षण्यम् । न तु स्वरूपस्य तत्रान्वयः ॥ मायावादिनस्तु नामरूपयोर्मिथ्यात्वं मायिकत्वं च मन्यन्ते यथाहुः "अस्ति भाति प्रियं रूपं नाम चेत्यंशपञ्चकम् ॥ आद्यं त्रयं ब्रह्मरूपं मायारूपं ततः परम्" इति ॥ सिद्धान्ते तु ते अपि सत्ये ब्रह्मरूपे च बृहदारण्यकतृतीयप्रपाठकान्ते "त्रयं वा एतन्नामरूपं कर्म" इत्युपक्रम्य "नामरूपे सत्य" मिति श्रावणात् । श्वेतकेतुविद्यायां "सेयं देवतैक्षत हंताहमिमास्तिस्रो देवताः । अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणीति" इति व्याकरणेच्छा तया तद्व्याकरणं च श्राव्यते। मायिकत्वे त्वभ्रान्तं ब्रह्म जीवभ्रमकल्पिते तेनैव पश्येदिति सर्वमसंगतं स्यात् ॥ अधिकं तु मारुतशक्तौ द्रष्टव्यम् ॥ तैत्तिरीयब्राह्मणे द्वितीयकाण्डे ( प्रपा० २ अनु० ७ ) "प्रजापतिः प्रजा असृजत ताः सृष्टाः समश्लिष्यन् ता रूपेणानुप्राविशत् । तस्मादाहुः रूपं वै प्रजापतिरिति । ता नाम्नानुप्राविशत । तस्मादाहुः नाम वै प्रजापतिरिति इति तयोर्ब्रह्मरूपतैव श्रूयते ॥ प्रजापतिः परमात्मा । समश्लिष्यन् रूपनामविभागाभावादेकरूपा अव्यवहार्या आसन्। परब्रह्मणो रूपांशेन नामांशेन च प्रवेशे व्यवहार्यता तयोर्ब्रह्मरूपता चोक्ता ॥ नामरूपविभेदः श्रुत्यन्तरेपि "सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाभिवदन्यदास्ते" इत्यादाववधेयः ॥ ब्रह्मवल्ल्यां "तदात्मानं स्वयमकुरुत" इति । पुरुषविधब्राह्मणे "सहैतावानास" इति श्रावणाद् यो जगत् यः स्वयं जगद्रूपो भवतीति युक्तम् ॥ अनेनेति स्वयं स्वेच्छयानेकधा सर्गकरणकथनेन ॥ एवं सति स्थितिप्रलयावपि तदधीनौ सिध्यत इति सौत्रलक्षणसमन्वयः ॥ ननु पक्षद्वयेनैव क्रमादभिन्ननिमित्तोपादानतासिद्ध्या तृतीयस्य किं प्रयोजनमतस्तदाहुः निर्लेपत्वायेति "क्रियार्थोपपदस्य च कर्मणि स्थानिन" इति चतुर्थी । तद्बोधयितुमाहेत्यर्थः ॥ एतादृशमिति ॥ तद्रूपं जगत् गच्छतीति जगत् "दृषद्वृहन्महज्जगच्छतृवच्चे"ति निपातितः । यतः सर्वं गतिमद्भवति तटस्थाधतः प्रवर्त्तेत इत्यर्थः । क्षेत्रज्ञात्मना तत्प्रवेशोत्तरमेव विराज उत्थानस्मरणात् ॥ स्वयमंशिभूतस्तु तटस्थ एवेति निर्लेपः ॥ "विष्टपं भुवनं जगदि" त्यमरः । "जगत्स्याद्विष्टपे क्लीवं वायौ ना जङ्गमे त्रिष्विति" मेदिनी । अतः केवलयौगिकार्थोपि संगत एव अथवा "पुरुष एवेदं सर्वं । सर्वं खल्विदं ब्रह्म" इत्यादिश्रुत्युक्तं सर्वपदं विहाय अन्तरासर्गसंग्रहायात्र जगत्पदमेवोक्तं तथा च एतादृशं यास्त्वजगत्सदृशं वस्तुतो मायिकमस्त्यादिशून्यं प्रातीतिककेवलनामरूपात्मकं स्वप्नविवर्त्तादिरूपं जगद्यतः यत्संनिधिवशाद्भवति न तु स स्वयं तत्रान्वेति ॥ यच्छब्दत्रयस्य तस्मा इति पूर्वेणान्वयः । न चैवं लोकवेदप्रसिध्यर्थकत्वबाधः शंक्यः गायत्रीतृतीयपादस्थयच्छब्दसमानाधिकरणस्याप्यारम्भस्थतच्छब्दस्य तथार्थवदत्राप्यबाधात् ॥ अन्तरासर्गस्तु ( कारि० ४२ ) महेन्द्रजालवत्सर्वमित्यत्र वक्ष्यते ॥ स्वयं तु तद्धर्मस्तत्कृतबन्धेन च रहितत्वान्निर्लेपः ॥ अत्रावरणभङ्गे "भगवति षष्ठोपि गुणः पूर्ण एवेतिज्ञापनाय तथोक्ति" रित्युक्तम् । तस्यायमाशयः । भगवत इति षड्गुणवत्ता प्रतिज्ञाता । ते च गुणाः "ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः । ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा" इति विष्णु-

राणादिपूक्ताः ॥ तत्र तसा इति सर्वतः परत्वाल्लोकवेदप्रसिद्धमैश्वर्यम् । कृष्णपदेन देवकृतमुक्तिविघ्न-विफलीकरणपुरःसरसर्वोद्धरणसामर्थ्यात्प्रादुर्भावेप्यखण्डत्वादितश्च वीर्यम् । अद्भुतकर्मपदेन यशः । यः क्रीडतीति श्रीः वेणुगीतसुबोधिन्यां "श्रियोहि परमा काष्ठा सेवकास्तादृशा यदि" इत्युक्तेः ।

स० भा० यो जगदिति सर्वोपादानत्वात्सर्वज्ञत्वम् । स्वसन्निधिमात्रेण जीवभोगार्थं नानासर्गनिर्माणेऽपि स्वस्य तत्संबन्धाभावाद्वैराग्यमिति ॥ एवं चात्र तृतीयप्रकरणे दशमसुबोधिन्यां च विशेषतो गुणानां कथनात्तेप्यत्र शास्त्रार्थोपनिबन्धने संगृहीता ज्ञेयाः ॥ निर्लेपत्वं तु "न च मां तानि कर्माणि निबध्नन्ति धनञ्जय । उदासीनवदासीनमसक्तं तेषु कर्मसु" इत्येवमादौ सुप्रसिद्धम् ॥ "एतादृशं जगद् इति" इति पाठे तु ( कारि० ८० ) "आत्मसृष्टेर्न वैषम्यम्" इति वक्ष्यमाणन्यायेन भगवतो निर्लेपता ॥ श्रीकल्याणरायास्त्विह निर्लेपत्वं प्रपञ्चस्यामायिकत्वमिति मन्यन्ते ॥ भगवतो निर्लेपत्वमित्यन्ये । तथा ज्ञानस्य फलमाहुः ॥ एवमिति ॥ "न मां कर्माणि लिम्पन्ति न मे कर्मफले स्पृहा । इति मां योऽभिजानाति कर्मभिर्न स बध्यते । एवं ज्ञात्वा कृतं कर्म पूर्वैरपि मुमुक्षुभिः" इति भगवद्वाक्यात्तस्य निर्लेपतया ज्ञानेन मुमुक्षवः कर्माणि कुर्वाणा अपि कर्मतः संसारतश्च मुच्यन्त इत्यर्थः ॥ अथवा शास्त्रार्थसंग्रहोऽत्र यथा दर्शितस्तथा ज्ञानेन मुच्यन्त इत्यर्थः । इयं च मुक्तिर्मर्कटः परमफलस्य पूर्वंदशारूपेति नाग्रिमग्रन्थविरोधः ॥ एतावता प्रमेयं संगृहीतमिति वैयासदर्शनानुसारि प्रमाणादिचतुष्टयं सिद्धम् । अत्रत्यं पूर्वार्द्धं दशमे ( अ० ५७ श्लो० १७ ) "नमस्तस्मै भगवते कृष्णायाद्भुतकर्मणे । अनन्तायादिभूताय कूटस्थायात्मने नमः" इत्यक्रूरवचने किञ्चिद्भिन्नपाठमस्ति प्रमाणत्वलाभाय विशिष्टमङ्गलसिद्धये च तदेवात्र यथोपयोगं भिन्नोत्तरार्द्धमुपनिबद्धम् ॥ तत्राप्यनन्तपदेनान्यूनैर्बहुरूपैः क्रीडनम् । आदिभूतपदेन तस्यैव सर्वजगद्रूपत्वम् । कूटस्थपदेन सर्वस्य हेतुत्वं प्रवर्तकत्वम् । आत्मपदेन निर्लेपत्वं स्वातन्त्र्यं चोक्तमिति तदप्यत्रोत्तरार्द्धेऽर्थतः संगृहीतम् ॥ एवमनेकश्रुतिस्मृतिसूत्रपुराणवचनानुकूल्यमिह बोध्यमिति दिक् ॥ १ ॥

**त० दि० सात्त्विका भगवद्भक्ता ये मुक्तावधिकारिणः ।**
**भवान्तसंभवा दैवात्तेषामर्थे निरूप्यते ॥ २ ॥**

त० प्र० विस्तरेण वक्तुं प्रथमतोऽधिकारिणमाह ॥ सात्त्विका इति ॥ स्वभावमकृत्यपेक्षया अधिकं विहितमलौकिकं ये कुर्वन्ति ते सात्त्विकाः ॥ तत्रापि भगवत्सेवकाः सेवापराः तत्रापि ये निष्कामास्त एव मुक्तावधिकारिणस्तत्रापीश्वरेच्छया अन्तिमजन्मनि जाताः शरीरं गृहीतवन्तस्तेषां यथान्तिमत्वं सिध्यति तथोपायो निरूप्यत इत्यर्थः ॥

क० रा० टि० स्वभावेति स्वस्य भावो धर्मः प्रकृतिस्तदपेक्षया । यद्वा । स्वस्य भावो धर्मो ब्राह्मणत्वादिः प्रकृतिः सात्त्विक्यादिस्तदपेक्षयाऽधिकं तीर्थसेवनादिकमित्यर्थः ॥ २ ॥

द्वितीयकारिकामवतारयन्ति ॥ विस्तरेणेत्यादि ॥ एतावतैव सर्वेषां बोधानुदयात् विस्तरेण प्रमाणदर्शनपूर्वकमसंभावनाविपरीतभावनानिवर्त्तकेन शब्दप्रपञ्चेन शास्त्रं वक्तुम् । अनधिकारिणां पुरतः सविस्तरमुक्तमपि कासरस्य पुरः सरसवल्लकीवादनसगन्धं सम्पद्यत इति वैयर्थ्यवारणाय उपपादयिष्यमाणविषयज्ञानेधिकारिणं प्रथमत एवाहेत्यर्थः ॥ यद्यपि प्रयोजनमप्यग्रोच्यते तथापि कारिकायां प्राधान्येन प्रथमं त एवोक्ता इत्यवतरणे तेषामेव निर्देशः । अथवाधिकारिपदं प्रयोजनस्याप्युपलक्षकम्

"सिद्धिः श्रोतृप्रवृत्तीनां संबन्धकथनाद्यतः । तस्मात्सर्वेषु शास्त्रेषु संबन्धः पूर्वमुच्यते ॥ किमेवात्राभिधेयं स्यादिति पृष्टस्तु केनचित् । यदि न प्रोच्यते तस्मै फलशून्यं तु तद्भवेत् ॥ सर्वस्यैव हि शास्त्रस्य कर्मणो वापि कस्यचित् । यावत्प्रयोजनं नोक्तं तावत्तत्केन गृह्यते" इति गणेशदैवज्ञकृतायां मुहूर्त्ततत्त्वटीकायां तादृशप्रामाणिकव्याख्यान्तरेषु च धूर्तैर्वचनैरधिकारिण इव तस्याप्यवश्यकथनीयताया बोधनात् व्यासचरणैः प्रथमाधिकरण एव ब्रह्मजिज्ञासापदेन गीतायां चादावेव "कुतस्त्वा कश्मलम्" इत्यत्रार्जुनपार्थादिपदैः श्रीशुकैश्च श्लोक्यारम्भ एव (स्कं० २ अ० १ श्लो० ५) "तस्माद्भारत सर्वात्मा" इति भारतपदेन चाधिकारी दर्शित इतीहापि प्रथमतस्तदुक्तिरुक्ता ॥ कारिकायाम् । अधिकारिण इति स्वरूपयोग्याः । अर्थ इति चर्मणि द्वीपिनमित्यादिवत्सप्तमी । तेषां प्रयोजननिमित्तं मोक्षपुरुषार्थनिमित्तं वेत्यर्थः ॥ इह च श्रीभागवततत्त्वज्ञानद्वारा मोक्षफलाधिकारिण एवोच्यन्ते । ननु भजनाधिकारिणो भगवद्भक्तपदेन भक्तेरधिकारिविशेषणतया निर्देशात् ॥ भक्तौ तु भगवत्कृपापात्रमात्रस्याधिकारः । कृपापरिज्ञानं च भक्तिमार्गरुच्या ॥ एतत्सर्वार्थनिर्णये भक्तिप्रकरणे सेत्स्यति ॥ इह सात्त्विकपदेन सात्त्विकविशेषा एव भगवद्भक्तपदेन च तद्विशेषा एव विवक्ष्यन्त इत्याशयेन व्याचक्षते ॥ स्वभावेत्यादि ॥ अत्र चित्तस्य सात्त्विकपरिणामरूपात्स्वभावाज्जन्या प्रकृष्टा या कृतिरित्यावरणभङ्गकाराः ॥ "स्वस्य भावो धर्मः प्रकृतिस्तदपेक्षया । यद्वा "स्वस्य भावो धर्मो ब्राह्मणत्वादिः प्रकृतिः सात्त्विक्यादिस्तदपेक्षया अधिकं तीर्थसेवादिकमित्यर्थः" इति श्रीकल्याणरायाः ॥ मम त्वेवं भाति । तृतीयस्कन्धे (अ० २९ श्लो० ७) "स्वभावगुणमार्गेण पुंसां भावो विभिद्यते" इत्यत्र सुबोधिन्यां "स्वभावो जीवभेदनिमित्तः जीवा ह्यनेकविधाः नानास्वभावाः । गुणा अपि भेदकाः अन्तःकरणस्वभावहेतवः" "अन्यथा श्रुत्वा स्वभाववशादन्यथार्थं कल्पयति तदनुसारिणश्च तथैव वर्तन्ते" इत्युक्तम् । अत्र स्वभावादन्यथाकल्पको जीवः तदनुसारिणश्च जीवानुसारिणोऽन्तःकरणेन्द्रियादय इति ज्ञेयम् । तेन "त्रिविधा जीवसंघास्तु" इति सर्वार्थनिर्णये वक्ष्यमाणपञ्चरात्रवचनादिभिर्जीवानां नानात्वात्पुष्टिप्रवाहमर्यादाभेदादिष्वनेकत्र तन्नानात्वस्योपपादनाच्चात्र स्वभावो जीववैविध्यहेतुस्तन्निष्ठासाधारणधर्मो दैवाऽसुरत्वादिर्विवक्ष्यते ॥ अन्तःकरणादिस्वभावहेतवो ये गुणा उक्तास्ते वा तज्जन्या अन्तःकरणादिपरिणामा वात्र प्रकृतिशब्देनाभिप्रेयन्ते । इमा एव प्रकृतयः श्रुतानां वेदादिवाचामन्यथाधर्माहिका एकादश उक्ताः (अ० १४ श्लो० ६ । ७ । ८) "बह्व्यस्तेषां प्रकृतयो रजःसत्त्वतमोभुवः । याभिर्भूतानि भिद्यन्ते भूतानां मतयस्तथा । यथाप्रकृति सर्वेषां चित्रा वाचः स्रवन्ति हि । एवं प्रकृतिवैचित्र्याद्भिद्यन्ते मतयो नृणाम् ॥ पारम्पर्येण केषाचित्पाखण्डमतयोऽपरे" इत्यादिना इमा एव च गीतायां "राक्षसीमासुरीं चैव प्रकृतिं मोहिनीं श्रिता." ॥ "दैवीं प्रकृतिमाश्रिताः" इत्यत्र भान्ति । तथा च जीवानां सात्त्विकानां यः स्वभावः या च सात्त्विकान्तःकरणादिप्रकृतिस्तज्जन्यं कर्म देवयजनादिकमेव संभवति "यजन्ते सात्त्विका देवान्" इत्यादिस्मरणेभ्यः तच्च प्रवृत्तं निवृत्तं चेत्युभयविधमपि संभवति । प्रकृते तूक्तस्वभावप्रकृतिजन्यकर्मापेक्षयाधिकं बहुलमुत्कृष्टं वा निवृत्तमिति यावत् । विहितं वेदादिभिः कर्तव्यतया चोदितम् । अलौकिकमेतल्लोकमरमात्रफलकभिन्नम् ये कुर्वन्ति ते सात्त्विका विवक्षिता इत्यर्थः ॥ जीवस्वभावो हि तत्तद्गुणस्यैव विशेषत उल्लासे हेतुः "गुणैः स्वाभाविकैर्बलात्" "स्वभावप्रभवैर्गुणैः" इत्यादिवचोभ्यः "पुंसां भावो विभिद्यते" इत्यादौ भावादिपदैः प्रसिद्धा प्रकृतिश्चान्तःकरणादिस्वभावरूपा गुणजन्या "रजःसत्त्वतमोभुवः" इत्युक्तेः । अतो न पौनरुक्त्यम् ॥ ब्राह्मणत्वादिरपि ब्राह्मण्यादिदेवतानां देहादौ प्रवेशात्प्रकटनिर्माणि धर्मभावं विपरीकृत्य "प्रकृतिस्त्वां

नियोक्ष्यति " इत्युक्तेः । जीवधर्मस्यात्यन्तरङ्गत्वात्प्राङ्निर्देशः । जीवेष्वपि प्रवेशसंभवाद्ब्राह्मणत्वादिस्तद्धर्मोऽपीति तु श्रीकल्याणरायाशयो भाति । प्रकृतिपदस्य केवलयौगिकार्थादरे " रूढिर्योगाद्बलीयसी" इति न्यायविरोधोऽप्येतावता परिहृतः । उक्तव्याख्यानेऽप्यार्थिकी कृतिर्ग्राह्यैवातः स्वभावपदेनैव जीवादिधर्मान्संगृह्य स्पष्टप्रतिपत्तये प्रकृष्टाकृतिरिति व्याख्यायि । अतो मदुक्तिस्तदुक्तिष्वेवान्तर्भवति ॥ अत्रायुर्वृद्धकादिगीतोक्तसात्त्विकाहारापेक्षयाधिकं विहितं सत्त्वशोधकभगवत्प्रसादादिभोजनमेव कुर्वतामतिरिक्तमकुर्वतामविवक्षितत्वबोधनायालौकिकमिति । दम्भाहंकारहीनमप्यशास्त्रविहितघोरतपश्चरणं विधिविरुद्धदेवयजनरात्रिश्राद्धादिकं च व्यावर्त्तयितुं विहितमिति । स्वर्गाद्यभिलाषेण कृतयजनादिकं विहितालौकिकमपि व्यवच्छेत्तुमधिकमिति । भगवत्तोषार्थमेव करणबोधनाय परस्मैपदं चोक्तम् ॥ तेन पापपरिहारं भगवदर्पणं तदाज्ञापालनं वानुसन्धाय लौकिकफलानि चाननुसंधाय ब्रह्मार्पणमितिन्यायेन देवयजनादिकं महत्सेवापुण्यतीर्थनिषेवणादिकं च केवलं भगवत्प्रीतये कुर्वन्तः पापभीरवो विवक्ष्यन्ते । ( स्कं० ११ अ० १० श्लो० ४ ) " निवृत्तं कर्म सेवेत प्रवृत्तं मत्परस्त्यजेत् " इत्यन्तैः ( स्कं० १ अ० १ श्लो० १६ ) " शुश्रूषोः श्रद्दधानस्य वासुदेवकथारुचिः । स्यान्महत्सेवया विप्राः पुण्यतीर्थनिषेवणात् " इति ( स्कं० ३ अ० २५ श्लो २५ ) " सतां प्रसंगान्मम वीर्यसंविदः " इत्यादिसंदर्भेण ( स्कं० ३ अ० २९ श्लो० १० ) "कर्मनिर्हारमुद्दिश्य परस्मिन्वा तदर्पणम् । यजेद्यष्टव्यमिति वा पृथग्भावः स सात्त्विकः " इत्येवमादिभिस्तथावसायात् ॥ अनिषिद्धियोगपरा अपि निवृत्तं कर्म सेवन्ते तान्व्यावर्त्तयितुमुक्तं मूले भगवद्भक्ताइति पदं व्याचक्षते तत्रापीति उक्तसात्त्विकेष्वपि । तत्र भगवत्पदकृत्यमाहुः । भगवत्सेवका इति । एतेनाक्षरपर्यन्तोपासका व्यावर्तिताः गुरुशास्त्रादितः पुरुषोत्तमस्वरूपं ज्ञात्वा तमेव सेवमानाः देवान्तराणि तस्यैव रूपाणि मत्वा सत्कुर्वन्तः ( स्कं० ४ अ० ३ श्लो० २२ ) " गुहाशयायैव न देहमानिने " इति न्यायेन सर्वात्मना तमेव परिचरन्त इत्यर्थः ॥ पूजकादिपदानि विहायोपात्तभक्तपदकृत्यमाहुः सेवापरा इति एकादशस्कन्धोक्ता तनुजा वित्तजा सेवैव परं सर्वोत्तमकर्त्तव्यं येषां तथा । एवं चात्र भक्तपदं न मुख्यभक्तिमत्परं तेषां साधनानुपयोगात् । किन्तु " भज इत्येष वै धातुः सेवायां परिकीर्त्तितः । तस्मात्सेवा बुधैः प्रोक्ता भक्तिः साधनभूयसी " इति गारुडाच्छ्रवणकीर्त्तनादि साधनभक्तिमत्परम् ॥ उक्तविधाः सुकृतिनो भक्ता अपि चतुर्विधा भजन्ते माम्" इत्यत्र भगवता चतुर्विधा उक्तास्तत्रार्तार्थार्थिनावनिष्टनिवृत्तीष्टप्राप्तिकामौ व्यावर्त्तयितुमाहुः । तत्रापीति । परस्य साधनभक्तिमत्त्वेपि निष्कामाः भगवद्व्यतिरिक्तैहिकामुत्रिककामनारहिताः । नन्वयमर्थः कारिकायां कथं लभ्येत आहुः । तएवेति । मुक्तिपदं प्रकृते सायुज्यपरम् । इदमग्रे ( कारि० १४ ) "सेव्यः सायुज्यकाम्यया" इत्यादौ स्फुटीभविष्यति । एवकारः सकामानां मोक्षव्यावर्त्तकः । बृहदारण्यके ( अ० ६ ब्रा० ४ मं० ७ ) "यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः । अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते " इति तेषामेव मुक्तिः श्रूयते । कठवल्लीष्वपि ( वल्ली० ६ मं० १४ ) इदमेव पठ्यते । एकादशे च ( अ० १४ श्लो० १७ ) "निष्किञ्चना अप्यनुरक्तचेतसः शान्ता महान्तोऽखिलजीववत्सलाः । कामैरनालब्धधियो जुषन्ति यत्तन्नैरपेक्ष्यं न विदुः सुखं मम " तथा तत्रैव ( अ० २० श्लो० ८ ) " यदृच्छया मत्कथादौ " इत्यादिना ( श्लो० २९ ) "प्रोक्तेन भक्तियोगेन भजतो माऽसकृन्मुनेः । कामा हृदय्या नश्यन्ति सर्वे मयि हृदि स्थिते " इत्यन्तेनैतत्सर्वं सप्रपञ्चं दर्शितम् सप्तमस्कन्धे दशमाध्याये आरम्भात्प्रभृति ( श्लो० ८ ) विमुञ्चति यदा कामान् मानवो मनसि स्थितान् । तर्ह्येव पुण्डरीकाक्ष

भगवत्त्वाय कल्पते" इत्यन्तेन भक्तावपि कामाभावावश्यंकतोक्ता । पूर्वं तु कर्मणि कामाभावोधिकपदेनोक्त इह तु भक्तौ भगवचोपि तदतिरिक्तकामाभावो बोधित इति ध्येयम् ॥ (स्कं० ११ अ० २० श्लो १७) नृदेहमाद्यं सुलभं सुदुर्लभं प्लवं सुकल्पं गुरुकर्णधारम् । मयानुकूलेन नभस्वतेरितं पुमान्भवाब्धिं न तरेत्स आत्महा" इति भगवदानुकूल्यमप्यावश्यकमुक्तम् । तदाहुः । तत्रापीति । मूले देवस्य स्वतन्त्रतया क्रीडादिकर्तुः पुरुषोत्तमस्येदं दैवं अर्थादिच्छा । प्रारब्धमपीच्छैकतन्त्रत्वादिच्छारूपमेव । तदभिप्रेत्याहुः । ईश्वरेच्छयेति । मूले भवानां जन्मपरम्पराणामन्ते संभवो जन्म येषामिति भवस्य संसारस्य अन्तो नाशो यस्मिंस्तादृशः संभवः संभवतीति संभवो देहो येषामिति चार्थो विवक्षितस्तदाहुः । अन्तिमेत्यादि । शरीरमिति । व्यासचरणैस्तृतीयस्य प्रथमे (सू० १) "तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः प्रश्ननिरूपणाभ्याम्" . इत्यादिभिः (सू० २७) "योनेः शरीरम्" इत्यन्तैर्निर्णीय दर्शितम् छान्दोग्यबृहदारण्यकयोः पञ्चाग्निविद्यायां प्रसिद्धं मोक्षाधिकारिदेहम् । सूत्रोपस्थापनायैव सौत्रशरीरपदोपादानम् । अग्रिमदेहानुत्पादकत्तयामुख्यं विशरणमिहैवेति सूत्रेपि शरीरपदम् । तेन जाता इत्यन्तेन प्रथमोर्थः । शरीरं गृहीतवन्त इत्यनेन द्वितीयश्च स दर्शितः । अन्यथा जाता इत्यन्तेनैवालं स्यात् ॥ सपरिकरमधिकारिणमुक्त्वा प्रकृते कर्तव्यमाहुः । तेषामिति । यथेति भरतादिवत्कादाचित्कान्यासक्त्या विलम्बो यथा न स्यात्तथेत्यर्थः ॥ नच शरीरस्येश्वरेच्छयान्तिमत्वे किं साधनैरिति शङ्क्यम् । अन्तिमत्वेपि सृष्ट्यारम्भे कृतस्तत्पतोऽनुरोधेन साधनद्वारैव फलानां भगवतादीयमानत्वात् । अन्यथा साधनाध्यायस्य ।

स० भा० द्वितीयादिपादत्रयं तत्तत्साधनबोधिकाः श्रुतयश्च वैयर्थ्यमापद्येरन् । परंतु साधनतस्त्वरितं मुख्यफलसिद्धयेऽन्तिमजन्मापेक्षितम् (स्कं० ३ अ० ३ श्लो० १२) "स एष साधो चरमो भवानामासादितस्ते मदनुग्रहो यत्" इत्यादिवचोभ्यः । अनुग्रहबलं त्वनियम्यम् ॥ तथोपाय इति । तेन सुगमप्रकारेणोपायः कर्मज्ञानभक्तिरूपं साधनम् । मूलस्यार्थपदादर्थलभ्यमिदम् । नैरन्तर्येण रूप्यते ॥ एवं च (स्कं० ११ अ० २ श्लो ३६) "भक्त्यैकयेशं गुरुदेवतात्मा" (अ० ३ श्लो० २१) "तस्माद्गुरुं प्रपद्येत जिज्ञासुः श्रेय उत्तमम् । शाब्दे परे च निष्णातं ब्रह्मण्युपशमाश्रयम्" (अ० ३ श्लो० ४८) "लब्धानुग्रह आचार्यात्तेन संदर्शितागमः" (अ० १० श्लो० ५) "मदभिज्ञं गुरुं शान्तमुपासीत मदात्मकम्" (अ० १८ श्लो० ३८) "अजिज्ञासितमद्धर्मो गुरुं मुनिमुपाव्रजेत्" (अ० २० श्लो० १७) "गुरुकर्णधारम्" (अ० २९ श्लो० ६) "आचार्यचैत्य वपुषा स्वगतिं व्यनक्ति" इत्यादि वचोभ्यः । मुण्डके "तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्" सत्यकामब्राह्मणे "आचार्याद्धैव विद्या विदिता साधिष्ठं प्रापयति" श्वेतकेतुविद्यायां (खं० १४) "आचार्यवान्पुरुषो वेद" इत्यादिश्रुतिभ्यश्च गुरुद्वारोपायकलनमावश्यकम् ॥ श्रुतिगीतादिदृष्टदृश एवाधिकारी मुख्यस्तद्वचनैरावरणभङ्गोक्तदिशा निश्चीयते ॥ २ ॥

त० दि० भगवच्छास्त्रमाज्ञाय विचार्य च पुनः पुनः ।
यदुक्तं हरिणा पश्चात्संदेहविनिवृत्तये ॥ ३ ॥

त० प्र० वक्ता स्वस्य तादृशज्ञानमार्गं प्रकारमाह ॥ भगवच्छास्त्रमाज्ञायेति ॥ अन्यथाऽनाप्तत्वं स्यात् ॥ भगवच्छास्त्रं भागवतं गीतापञ्चरात्रं चेति ॥ तस्य सर्वतो ज्ञानं भगवत्कृपादिनेति शेषः ॥ तथाप्यापाततः प्रतिपन्नं न प्रमाणमिति विचारमाह ॥ पुनः पुनर्निश्चयानन्तर-

मपि । ननु शतशोपि विचारितं जीवबुद्ध्या अप्रमाणं कदाचिद्भवतीति तदर्थमाह ॥ यदुक्तमिति ॥ हरिणा सर्वदुःखहर्त्रा श्रीजगन्नाथेन पुरुषोत्तमस्थितेन मोहकसर्वशास्त्रोत्पत्त्यनन्तरं यन्निर्धारकवाक्यमुक्तं तदपि ज्ञात्वेति ॥ ३ ॥

ननु स उपायो भवता कथं ज्ञात इत्याकाङ्क्षायां तृतीयकारिकामवतारयन्ति वक्तेत्यादि अयं भावः केषुचिन्मार्गेषु कदाचित्स्वयमबुधा अपि वेदादितत्त्वज्ञानशुद्धभक्त्यादिरहिता अपि गुरुपदमारोहन्ति ते च पातहेतव एव ( स्कं० ८ अ० २४ श्लो० ५० ) "अचक्षुरन्धस्य यथाग्रणीः कृतस्तथा जनस्याविदुषो बुधो गुरुः । त्वमर्कदृक् सर्वदृशां समीक्षणो वृतो गुरुर्नः स्वगतिं बुभुत्सताम्" इत्यादि वचोभ्यः । अतस्तत्त्वबुभुत्सापूरकः वेदगीतासूत्रश्रीभागवततत्त्वसमीक्षणो भगवद्भक्तो दम्भादिदोषरहित एव गुरुः फलाय भवति । इदं सर्वार्थनिर्णये "कृष्णसेवापरं वीक्ष्य" इत्यत्र स्फुटीभविष्यति अन्यथा "उभावप्यकृतप्रज्ञावुभावप्यश्रुतागमौ । अहो मोहस्य माहात्म्यं तत्रैकः शिष्यतां गतः ॥ विकर्षन्स्वयमन्धोन्धान्कूपादौ तैः समं पतेत् । तथा वक्ता हर्यभक्तो दुराचारी निरक्षरः" इत्यभियुक्तोक्तं फलेत् एतदेवाभिप्रेत्य कठगुण्डकादौ "अन्धेनैव नीयमाना यथान्धाः" इत्याद्याम्नायते अतः शास्त्रोक्तलक्षणवत्सु गृहमेधिष्वेव व्यासादिवदाचार्यभावो धर्मशास्त्रादिविचाराद्विशेषतो युक्तो भाति न तु स्वधर्मविमुखेष्वबुधेषु यत्यादिषु । अधिकं तु मारुतशक्तौ सहस्राक्षप्रस्तावनाखण्डने सत्सिद्धान्तमार्तण्डादिषु च मया दर्शितमिति ततोवधेयम् । श्रीमदाचार्यचरणास्तु तत्रैव ( स्कं० ८ अ० २४ श्लो० ४६ ) "अनाद्यविद्योपहतात्मसंविदः" इत्यादिना ( श्लो० ५२ ) "ह्यात्मा गुरुर्ज्ञानमभीष्टसिद्धिः" इत्यन्तेन दर्शितधर्मवन्तो भगवद्रूपाः सर्वथा निर्दोषाः सर्वैरेवाचार्यलक्षणैरुपेता गुरवः । एतदपि सर्वोत्तमस्तोत्रे "सर्वलक्षणसंपन्नः श्रीकृष्णज्ञानदो गुरुः" इत्यत्र व्याख्याने सूपपादितम् । तथापि प्रतारकायुधगुरवश्चस्त्रिव पूर्वोक्तिप्रौढिवादत्वस्य भ्रमं वारयितुं वास्तवं तत्त्वनिश्चयप्रकारं वक्तुं प्रतिजानते । वक्ता अन्यादिरूपया भक्तवाचोपदेष्टाऽऽचार्यः स्वस्यात्मनः तादृशेति अव्यभिचारेण मोक्षजनकानामुपायानां कथनानुकूलस्य प्रथमकारिकाविवरणे मुक्तिहेतुतयोक्तस्य च ज्ञानस्य प्राप्तौ प्रकर्षेण लाभे संबन्धे च प्रकारं इदमित्थं श्रमेण प्राप्तमित्येवंरूपम् आहेत्यर्थः । प्रकारकथनस्य आवश्यकतां बोधयन्ति । अन्यथेति । स्वानुभूतज्ञानप्रकारस्याकथने अनाप्तत्वं अविश्वास्यत्वमसत्यत्वमसम्यत्वं च स्यादित्यर्थः । "आप्तप्रत्ययितौ समौ" इत्यमरः । "आप्तो लब्धे च सत्ये चाप्तिः संबन्धलाभयोः" इति हैमः । "आप्तः सत्येनलब्धे च" इति विश्वः ॥ मूले भगवदित्यादि । भगवच्छास्त्रमासमन्तात्ज्ञात्वा पुनः पुनर्विचार्य । तथा हरिणा सन्देहजनकशास्त्रोत्पत्त्यनन्तरं तज्जनितसंदेहानां यथा पुनरुद्भवो न स्यात्तथा प्रत्यक्षचमत्कारदर्शनाद्विशेषतो निवृत्तये यदुक्तं तदप्याशय विचार्य च तेषामर्थं निरूप्यत इति पूर्वेणान्वयः । अथवा अयं वक्ष्यमाणक्रमेण पञ्चमकारिकास्थेनान्वयः ॥ व्याख्यायां भगवच्छास्त्रमिति । भगवत इति शेषषष्ठ्या समासः । प्रकृते च्यभावः प्रतिपाद्यप्रतिपादकभावश्च सम्बन्धः । भगवदुक्तं भगवत्प्रतिपादकं च शास्त्रमित्यर्थः । इदं गीतायाम् "भगवद्गीतासूपनिषत्सु" इत्यादिष्वध्यायान्तेषु स्फुटम् । उपनिषत्त्वात्तत्प्रतिपादकत्वम् । ( का० ७ ) वेदाः श्रीकृष्णवाक्यानि व्याससूत्राणि चैवहि । समाधिभाषा व्यासस्य प्रमाणं तच्चतुष्टयम् भगवत्त्वं वक्ष्यते ॥ भागवते तु भगवत इदमिति नामन्युत्पत्त्यैवोक्तसंबन्धद्वयं स्पष्टं ( स्कं० १ अ० १ श्लो० २ ) "धर्मः प्रोज्झितकैतवः" ( स्कं० १२ अ० १३ श्लो० १८ ) "श्रीमद्भागवतं पुराणममलम्" ( श्लो० १० ) "कस्मै येन विभासितोऽयमतुलो ज्ञानप्रदीपः पुरा" ( श्लो० ९ ) "इदं भगवता पूर्वं ब्रह्मणे नाभिपङ्कजे । स्थिताय भवभीताय

कारुण्यात् संप्रकाशितम्" इत्यादिवचनकदम्बाच्च ॥ पञ्चरात्रमपि भगवतैवोक्तम् ( स्कं० १ अ० ३ श्लो० ८ ) "तृतीयमृषिसर्गं च देवर्षित्वमुपेत्य सः । तन्त्रं सात्वतमाचष्ट नैष्कर्म्यं कर्मणां यतः" इत्युक्तेः । शान्तिपर्वणि मोक्षधर्मेष्वतिप्रशस्तत्वाच्च ॥ तदेतदाहुः **गीतेत्यादिना** चकाराच्चतत्परिकरो महाभारतरामायणपुराणान्तरादिरूपः समुच्चीयते । एतदस्य प्रकरणस्यान्तिमश्लोकेपि स्फुटीभविष्यति ॥ या तु क्वचित्स्मृतिषु पाञ्चरात्रिकाणां स्पर्शप्रतिषेधादिरूपा निन्दा सा नारदपञ्चरात्रव्यतिरिक्तपञ्चरात्रनिष्ठानामेव न चात्र मानाभावः । उक्तश्रीभागवतवाक्यादेर्मानत्वात् । स्पष्टं चेदं तत्रापि प्रथमरात्रप्रथमाध्याये ( श्लो० ३४ ) "श्रूयतां पञ्चरात्रं च वेदसारमभीप्सितम् । पञ्चसंवादमिष्टं च भक्तानामभिवाञ्छितम् ॥ प्राणाधिकं प्रियं शुद्धं परं ज्ञानामृतं शुभम् । पुरा कृष्णो हि गोलोके शतशृङ्गे च पर्वते" इत्यादिना साक्षाद्भगवत्कृतत्वमुक्त्वा ( श्लो० ४२ ) "शम्भुश्च कथयामास स्वशिष्यं नारदं मुनिम् । नारदः कथयामास पुष्करे सूर्यपर्वणि ॥ मां भक्तमनुरक्तं च पुण्याहे मुनिसंसदि । पञ्चरात्रमिदं शुद्धं भ्रमान्धध्वंसदीपकम् ४३ रात्रं च ज्ञानवचनं ज्ञानं पञ्चविधं स्मृतम् ॥ तेनेदं पञ्चरात्रं च प्रवदन्ति मनीषिणः ४४ ज्ञानं परमतत्त्वं च जन्ममृत्युजरापहम् ॥ ततो मृत्युञ्जयः शम्भुः सम्प्राप कृष्णवक्त्रतः ४५ ज्ञानं द्वितीयं परमं मुमुक्षूणां च वाञ्छितम् ॥ परं मुक्तिप्रदं शुद्धं यतो लीनं हरेः पदे ४६ ज्ञानं शुद्धं तृतीयं च मङ्गलं कृष्णभक्तिदम् ॥ तद्दास्यदमभीष्टं च यतो दास्यं लभेद्धरेः ४७ चतुर्थं यौगिकं ज्ञानं सर्वसिद्धिप्रदं परम् ॥ सर्वस्वं योगिनां पुत्र सिद्धानां च सुखप्रदम् ४८ अणिमा लघिमा व्याप्तिः प्राकाम्यं महिमा तथा ॥ ईशित्वं च वशित्वं च तथा कामावसायिता ४९ सार्वज्ञं दूरश्रवणं परकायप्रवेशनम् ॥ कायव्यूहं जीवदानं परजीवहरं परम् ५० सर्गकर्तृत्वशिल्पं च सर्गसंहारकारणम् ॥ सिद्धं च षोडशविधं ज्ञानिनां च यतो भवेत् ५१ ज्ञानं च परमं प्रोक्तं तद्वै वैषयिकं नृणाम् ॥ यदीष्टदेवी माया सा परं सम्मोहकारणम् ५२ विषये बद्धचित्तं च सर्वमिन्द्रियसेवनम् ॥ पोषणं स्वकुटुम्बानां स्वात्मनश्च निरन्तरम् ५३ प्रथमं सात्त्विकं ज्ञानं द्वितीयं च तदेव च ॥ नैर्गुण्यं च तृतीयं च ज्ञानं च सर्वतः परम् ५४ चतुर्थं च राजसिकं भक्तस्तन्नाभिवाञ्छति ॥ पञ्चमं तामसं ज्ञानं विद्वांस्तन्नाभिवाञ्छति ५५ ज्ञानं पञ्चविधं प्रोक्तं पञ्चरात्रं विदुर्बुधाः ॥ पञ्चरात्रं सप्तविधं ज्ञानिनां ज्ञानदं परम् ५६ ब्राह्मं शैवं च कौमारं वासिष्ठं कापिलं परम् ॥ गौतमीयं नारदीयमिदं सप्तविधं स्मृतम् ५७ षड् पञ्चरात्रं वेदांश्च पुराणानि च सर्वशः ॥ इतिहासं धर्मशास्त्रं शास्त्रं च सिद्धियोगजम् ५८ दृष्ट्वा सर्वं समालोक्य ज्ञानं संप्राप्य शङ्करात् ॥ ज्ञानामृतं पञ्चरात्रं चकार नारदो मुनिः ५९ पुण्यं च पापविघ्नं भक्तिदास्यप्रदं हरेः ॥ सर्वस्वं वैष्णवानां च प्रियं प्राणाधिकं सुत ६० सारभूतं च सर्वेषां वेदानां परमाद्भुतम् ॥ नारदीयं पञ्चरात्रं पुराणेषु सुदुर्लभम् ६१" इति । अत्र पञ्चरात्रशब्दार्थस्तस्य वेदानुयायित्वं तदतिरिक्तानि कापिलादिपञ्चरात्राणि च दर्शितानि ॥ महाभारतेपि शान्तिपर्वणि मोक्षधर्मेषु पञ्चाशदधिकत्रिशततमाध्याये ( श्लो० १ ) "सांख्यं योगः पाञ्चरात्रं वेदारण्यकमेव च । ज्ञानान्येतानि ब्रह्मर्षे लोकेषु प्रचरन्ति ह ॥ किमेतान्येकनिष्ठानि पृथङ्निष्ठानि वा मुने । प्रब्रूहि वै मया पृष्टः प्रवृत्तिं च यथाक्रमम्" प्रवृत्तिं किं शास्त्रं केन प्रवर्तितमिति तेषां प्रभवम् । इति जनमेजयप्रश्ने ( श्लो० ३ ) "जज्ञे बहुज्ञं परमत्युदारम्" इत्यादिना व्यासं नमस्कृत्य वैशम्पायनः प्राग्जन्मनि तस्य नारायणपुत्रत्वादिकमुक्त्वा ( श्लो० ६४ ) "साङ्ख्यं योगः पाञ्चरात्रं वेदाः पाशुपतं तथा । ज्ञानान्येतानि राजर्षे विद्धि नानामतानि वै" नानामतानि भिन्नानि प्रस्थानानि ॥ "साङ्ख्यस्य वक्ता कपिलः परमर्षिः स उच्यते ॥ हिरण्यगर्भो योगस्य वेत्ता नान्यः पुरातनः

६५ अपान्तरतमाश्चैव वेदाचार्यः स उच्यते ॥ प्राचीनगर्भं तमृषिं प्रवदन्तीह केचन ६६ " अपान्तरतमा अपि योगाचार्याः ॥ " उमापतिर्भूतपतिः श्रीकण्ठो ब्रह्मणः सुतः ॥ उक्तवानिदमव्यग्रो ज्ञानं पाशुपतं शिवः ६७ " पाशुपतं पञ्चाध्यायीरूपं शास्त्रम् ॥ " पाञ्चरात्रस्य कृत्स्नस्य वेत्ता तु भगवान् स्वयम् ॥ सर्वेषु च नृपश्रेष्ठ ज्ञानेष्वेतेषु दृश्यते ६८ यथागमं यथा ज्ञानं निष्ठा नारायणः प्रभुः ॥ नचैनमेवं जानन्ति तमोभूता विशाम्पते ६९ " एतेषु साङ्ख्यादिषु ज्ञानेषु ज्ञप्तिसाधनदर्शनेषु यथागमं आगमं वेदं ज्ञानं तत्तदधिकृतजीवानुभवं चानतिक्रम्य नारायण एव निष्ठा परमतात्पर्यविषयोऽर्थ इत्यर्थः तमसाभिभूतास्तु शास्त्रतात्पर्यमेवं न जानन्ति ॥ "तमेव शास्त्रकर्तारः प्रवदन्ति मनीषिणः । निष्ठां नारायणमृषिं नान्योऽस्तीति वचो मम ७०" भिन्नशास्त्रकर्तारोऽनेकधा नारायणमेव तत्त्वतो वर्णयन्तीति मे मतमित्यर्थः ॥ "निःसंशयेषु सर्वेषु नित्यं वसति वै हरिः ॥ स संशयान्हेतुबलान्नाध्यावसति माधवः ७१" श्रुत्यैकवाक्यतया परस्परैकवाक्यतया च निःसंशयेषु शास्त्रेषु हरिरस्ति हेतुबलात्कुतर्कबलात्ससंशयांस्तु नाधिवसति ॥ "पाञ्चरात्रविदो ये तु यथाक्रमपरा नृप ॥ एकान्तभावोपगतास्ते हरिं प्रविशन्ति वै ७२ साङ्ख्यं च योगं च सनातने द्वे वेदाश्च सर्वे निखिलेन राजन् ॥ सर्वैः समस्तैर्ऋषिभिर्निरुक्तो नारायणो विश्वमिदं पुराणम् ७३ " पाञ्चरात्रेति श्लोकद्वयं नारदपञ्चरात्रस्य वास्तवप्रशंसापरम् । सनातने अनादिपुरुषप्रयुक्तत्वात्तथाविधे शैववैष्णवशास्त्रे । तस्माद्वेदाविरुद्धस्य पञ्चरात्रस्योपादेयत्वं भगवच्छास्त्रत्वं च निर्बाधम् ॥ यद्यपि वेदा वैयासदर्शनं च भगवच्छास्त्रमेव श्रीमदाचार्यैश्च तदपि सर्वं सर्वांशतो ज्ञात्वा विचारितम् निश्चीयत एव परैरपि तथा तद्ग्रन्थदर्शनात् तथापि विधासार्थमाधुनिकैर्यथा गीतादिकं स्वयमालोच्य सर्वथा तदनुसारित्वमाचार्यवाचि यथामति निश्चेतुं शक्यं तथा न वेदान्सूत्राणि च स्वयमालोच्य वेदानामानन्त्यात् बहुशाखानां लोपात् अलुप्तानामपि सर्वासां सर्वैरपाठात् कैश्चिदेवैकैकस्याः शब्दतो धारणेपि प्रायस्तेषां तदर्थावबोधात् कथंचिदेकदेशार्थज्ञानेपि प्रकृतिवैचित्र्यमतभेदकृतवैविध्येन तत्र प्रमात्वानत्रुव्यवसायाच्च सूत्रेष्वपि बहुभिर्बहुधैव व्यालोडिततया सहसैव संशयापायस्याभावात्तत्र तदपायस्यापि गीतादिसंवादसाध्यत्वाच्च अतो वेदाद्यर्थस्यापि यतो निश्चयस्तत्त्रितयमेव शुद्धसात्त्विकर्षिभिः प्रमाणभूतैराचार्यैरिह निर्दिष्टं मुख्यतया विचारितं च ॥ यद्यथा विचारितं तदेव च तथोक्तं ननु निश्चीयमानसर्वज्ञभावैरपि "वाणीं काणभुजीमजीगणदवाशासीच्च वैयासकीम्" इत्यादिवच्छ्लाघावादाः ॥ अन्यथा सांप्रतिकैः पण्डितंमन्यैः पौराणिकग्रन्थतयाऽवगण्यमाने गीतादिक एव स्वपरिश्रमो नोक्तः स्यात् ॥ इतिशब्दः प्रकारे । तेनैवंप्रकाराणां चतुर्लक्षण्यादीनामपि भगवच्छास्त्रत्वं सर्वतोज्ञानं विचारश्च द्योत्यते ॥ मूलस्थस्याङ्कोऽर्थमाहुः सर्वत इति । शब्दार्थानुष्ठानेषु भ्रमसंशयविरहितं ज्ञानमित्यर्थः । पक्षावलम्बने स्वाध्यायविधिवाक्यार्थे " आ सर्वतः पुनस्तत्र यथा शङ्का न जायते । शब्दे ह्यर्थे ह्यनुष्ठाने तथाऽध्येयो हि वैदिकैः" इति श्रीमदाचार्यैः स्वयमेव कथनादिहापि तथैवाशयोऽवसीयते ॥ एतावत्कथनेपि गर्वसंभावनां वारयन्ति भगवदिति । दोषकथनात् भगवत्कृपादिना भगवच्छास्त्रमाज्ञायेत्यादिर्मूलयोजना बोधिता आदिपदाद्गुरुकृपादिकम् । तेन शास्त्राणां संप्रदायशुद्धागमत्वं ध्वनितम् । यद्यपि श्रीमदाचार्याः स्वयमीश्वरास्तथापि श्रीकृष्णवद्गुरुशुश्रूषणम् । स्पष्टं चेदं सुबोधिनीतृतीयश्लोकादौ । इहापि वक्ष्यन्ति "व्यासोऽस्माकं गुरुः" इति । समासावपि श्रीवेदव्यासविष्णुस्वामिमतरक्षितं स्वस्य वक्ष्यन्ति । "दत्त्वाज्ञां च कृपावलोकनपटुः" इत्यादिकथनाद्भगवदाज्ञापीहादिपदेन संगृह्यते उक्तमर्थसंप्रदायैव भगवदादीत्यनुक्त्वान्त आदिपदमुक्तम् ॥ ननु सरलग्रन्थेषु गुरुर्विचारो व्यर्थ इत्याशङ्कां वारयन्ति तथापीति । एवं च सरल्वे भासमानापि

तेनैतद्वाक्यं विरुद्धमित्याशङ्क्याहुः वेदानामिति बहुवचनात्सर्वेषाम् । तदुक्तेति (अ० १५) "वेदान्तकृद्वेदविदेव चाहम्" (स्कं० ११ अ० २१ श्लो० ४२) "इत्यस्या हृदयं लोके नान्यो मद्वेद कश्चन" इत्यादिवचोभ्यो भगवद्गीतोक्तप्रकारेणैव संदिग्धानामर्थानां अभिधेयानां प्रयोजनानां च निर्द्धार इत्यर्थः । यथा "तथाऽक्षरात्संभवतीह विश्वम्" "अव्यक्तात्पुरुषः परः" इत्यादौ माया ब्रह्म वेत्यादि संदेहे "यदक्षरं वेदविदः" "अव्यक्तोऽक्षर इत्युक्तः" इत्यादिनाभिधेयनिर्णयः । यथावा "स्वर्गकामः" इत्यादौ "यामिमां पुष्पितां वाचम्" इत्यादिना प्रयोजननिर्णयः ॥ एवं च यद्यपि वेदा अपि शास्त्रमेव तथाप्याधुनिकानां मन्दानामनन्तैर्दुर्ज्ञेयैस्तैः शासनस्याशक्यत्वाद्यत्वे वेदादिसर्वसंदेहवारकं सर्वोपकारकं तदेव मुख्यं शास्त्रमिति युक्तमिति भावः ॥ सर्वशास्त्राणामत्रैवान्तर्भाव इत्यर्थकमेकपदम् ॥ उपास्येति वेदाद्यविन्द्रसूर्यादीनां बहूनामुपास्यानां प्रत्ययान्मतभेदेन तस्य तस्यैव परतादरणाच्च परतमोपास्यः क इत्याकाङ्क्षायां तन्निर्धारमाहेत्यर्थः ॥ मूल एवकारोन्ययोगव्यवच्छेदकः । तर्हि किमितरेषां देवत्वमेव प्रतिषिध्यत इति चेत्तेत्याशयेन व्याचक्षते । मूलभूतोयमिति "चन्द्रमा मनसो जातः" (ऋ० सं० अ० २ अ० ३ व० २२ मं० ६) "इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गरुत्मान् । एकं सद् विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुः" इत्यादिश्रुतिभ्यः "यो यो यां यां तनुं भक्तः" "पश्यामि देवांस्तव देव देहे" इत्यादिस्मृतिभ्यः (स्कं० २ अ० ५ श्लो० १५) "देवा नारायणाङ्गजाः" इत्यादिपुराणवचोभ्यश्च एकः यत्राशेषदेवानामन्तर्भावस्तादृशो मुख्यः सर्वात्मा देवः स एवेत्यर्थः । अतः कर्मस्विन्द्रादीनामाराधनेपि भगवतस्तत्तदवयवेष्वेव ते ते देवा भावनीयास्तेनापि स एवोपासितो भवति । स्पष्टं चेदं पञ्चमस्कन्धे नाभिभरतादियज्ञस्थले ॥ मूले मन्त्रोप्येक इत्युक्त्वा किं वैदिकमन्त्राणामपि तत्त्वं प्रतिषिध्यते । दीक्षादिमन्त्राणां नियतकालजप्यानामपि तत्त्वं च किं वार्यत इत्याशङ्कां परिहरन्ति सर्वेति । मन्त्र्यत इति मन्त्रः 'मत्रि गुप्तभाषणे' घञ् । अथवा मन्यते स्मर्यत इति मन्त्रः । मनोतेः (उ० पा० ४ सू० १५८) "सर्वधातुभ्यः ष्ट्रन्" इति ष्ट्रन् ॥ तस्य कृष्णस्य नामान्येव एको मन्त्रः । तेन वेदेपि यथा द्रव्यदेवतास्मारको भागो मन्त्रस्तथा नामान्येवोच्चारितानि भगवतः सदा स्मारकाणि भवन्ति । भगवत्स्मरणार्थत्वेन वैदिकमन्त्राः सर्वदेत्यनेन दीक्षादिमन्त्राश्च व्यावर्त्यन्त इति नोक्तशङ्कावकाशः "वेदाक्षराणि यावन्ति पठितानि द्विजोत्तमैः । तावन्ति हरिनामानि कीर्तितानि न संशयः" इत्यादि वाक्योक्ततत्त्वबुद्धौ तु नामत्वाविशेषादन्तर्भावः । तथापि सर्वमनुष्याणां सर्वदा स्मरणार्हाणि साधारणान्यत्र ॥ नामानीति ॥ बहुवचनादविशेषात्सर्वेषां नाम्नां प्रत्येकं मन्त्रत्वम् । तेन यो यावन्त्युच्चारयितुं प्रभवेत्तस्य तावद्भिरेव फलं प्रत्यायितम् ॥ विविधफलजनकनानामन्त्राणामत्रैकीभावबोधनार्थैकपदम् । नाममाहात्म्यं नामकौमुद्यादिषु द्रष्टव्यम् ॥ "मन्त्रो वेदविशेषे स्याद्देवादीनां च साधने गुह्यवादेऽपि च पुमान्" इतिमेदिनी ॥ एवं देवं तत्स्मारकमन्त्रं चोक्त्वा तत्र तद्द्वारा सर्वद्रव्याणां यथोचितं संबन्धः कार्यः इतिबोधकं तुर्यपादमवतारयन्ति ॥ कर्तव्यमादेति ॥ पूर्वेण देवस्य उक्तेपि पुनर्देवपदोपादानस्य प्रयोजनमाहुः । न मनुष्यत्वेनेति । अवतारे तथा भ्रमसंभवादेतत् । तथा ज्ञाने तु "अवजानन्ति मां मूढाः" इत्यादिस्मरणान्मोक्षो न स्यात् ॥ दीव्यति स्यात्मनेष क्रीडादि करोतीति देवः पचादिषु पाठादच् । तस्मान्मनुष्यनाट्यं क्रीडैवेत । एवं देवत्वबुद्धिपूर्विकैव नामोच्चारणमत्कृता तत्र यथायोग्यं सर्वद्रव्यार्पणकृतिः सेवा ननु केवलशारीरकृतिरिति भावः "न कर्ता सर्वपुण्यानाम्" "न यातः सर्वतीर्थेषु सर्वयज्ञेषु दीक्षितः" इत्यादिवचोभ्योऽन्यथैव सर्वस्व-

